आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ७५

सुब्रह्मण्यविरचिता

ब्रह्मसूत्रशांकर-

# भाष्यार्थरत्नमाला ।

एतत्पुस्तकं

वे० शा० रा० गोखले इत्युपाह्वैर्गणेशशास्त्रिभिः

संशोधितम् ।

तच्च

हरि नारायण आपटे

इत्येतैः

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १८३६

खिस्ताब्दाः १९१५



मूल्यं सपादरूपकचतुष्टयम् ( ४।४ ) ।

अस्या भाष्यार्थरत्नमालायाः पुस्तकं परहितैषिभिः
रा० रा० बाबासाहेबगर्दे इत्येतैर्दत्तम् ।

ॐ तत्सद्ब्रह्मणे नमः ।

सुब्रह्मण्यविरचिता ब्रह्मसूत्रशांकर–

# भाष्यार्थरत्नमाला ।

प्रथमाध्यायस्य प्रथम. पादः ।

सुचरितपरिपाकैः शुद्धसत्त्वप्रधानैः
प्रशमितभवभेदैर्मुक्तसंघैरुपास्यम् ।
श्रुतिशतनुतकीर्तिं सच्चिदानन्दमूर्तिं
परमपुरुषमाद्यं भावयेऽभीष्टसिद्ध्यै ॥ १ ॥
आत्मावबोधविधुरं प्रसमीक्ष्य लोक-
मुद्धर्तुमाहृतमना निगमार्थसारम् ।
निश्चित्य सूत्रनिचयं रचयांचकार
श्रीबादरायणमुनिर्भुवनैकमान्यः ॥ २ ॥
दुर्युक्तिप्रथनप्रशस्तविभवैर्बौद्धाद्यसद्वादिभिः
प्रक्षुभ्यत्परमात्मनिर्मलधियामात्मावबोधाप्तये ।
यः शारीरकसूत्रभाष्यमनघं चक्रे कृपासागरः
सोऽयं सर्वयतिप्रभुर्विजयते श्रीशंकरार्यो गुरुः ॥ ३ ॥

भुवनैकमान्यचरितं सूत्रकृतं च प्रणम्य भाष्यकृतम् ।
रचयति सुब्रह्मण्यो रम्यां भाष्यार्थरत्नसन्मालाम् ॥ ४ ॥
सत्यज्ञानसुखात्मा केनायं शोकसागरे मग्नः ।
इत्यालोच्य यतीन्द्रः प्रागध्यासं प्रदर्शयामास ॥ ५ ॥
आत्मानात्माध्यासे विवेकविज्ञानमर्थवद्भवति ।
रजतेदमंशयोरिव स युज्यते स्याद्यदा तयोरैक्यम् ॥ ६ ॥
ख्यातोऽपि युष्मदस्मत्प्रतीतिगौ विषयविषयिणौ लोके ।
तिमिरप्रकाशयोरिव विरुद्धयोः स्यात्कथं तयोरैक्यम् ॥ ७ ॥
अध्यासमूलमैक्यप्रमोत्थसंस्कारमामनन्ति यतः ।
तद्भावान्नाध्यासो न च विषयो न प्रयोजनं वाऽपि ॥ ८ ॥

तदनुग्रहप्रवृत्तोऽप्यधिकारी दुर्लभोऽपि तदसत्त्वम् ।
तस्मादध्यासकथा शास्त्रारम्भो वृथेति चेन्मैवम् ॥ ९ ॥
ऐक्यानुभूतिजनितः संस्कारोऽध्यासकारणं नान्यः ।
कथमन्यथाऽपि लोके नीलं व्योमेति विभ्रमो भवति ॥ १० ॥
युष्मत्प्रत्ययगोचरविषयस्य च विषयवृत्तिधर्माणाम् ।
विषयिणि चिदात्मकेऽस्मत्प्रत्ययगम्येऽपि योऽयमध्यासः ॥ ११ ॥
यश्चापि विषयितद्धर्माणां च विपर्ययेण विषयेऽस्मिन् ।
अध्यासः किल यद्यपि मिथ्यैव न चैष भवति परमार्थः ॥ १२ ॥
इति सत्यमिह तथाऽपि ह्यन्योन्यस्मिन्परस्परात्मत्वम् ।
इतरेतराविवेकेनाध्यस्य विविक्तयोर्द्वयोरनयोः ॥ १३ ॥
स्याद्धर्मधर्मिणोः किल मिथ्याज्ञानावलम्बनायत्तः ।
सत्यानृते ह मिथुनीकृत्याहमिदं ममेदमित्येषः ॥ १४ ॥
नैसर्गिको हि लोकव्यवहारः प्रथित एव सर्वेषाम् ।
अध्यासस्यैतस्य च लक्षणमेवंविधं हि कथयन्ति ॥ १५ ॥
यः पूर्वदर्शनाहितसंस्कारकृतावलम्बनोऽन्यत्र ।
अवभास्योऽवगतानां धर्माणां लक्षणं भवेत्तत्त्वम् ॥ १६ ॥
कार्याध्यासस्यैव हि लक्षणमत्रोपवर्णितं भाष्ये ।
यस्मादनर्थहेतुः कार्याध्यासेन कारणाध्यासः ॥ १७ ॥
उभयानुगतं लक्षणमन्यत्रान्यावभास एव स्यात् ।
एतच्च सर्वथाऽपि त्वन्यस्येत्यत्र दर्शितं भाष्ये ॥ १८ ॥
अर्थाध्यास इतीमं ज्ञानाध्यास इति वर्णयन्त्यार्याः ।
रजतं हि शुक्त्यविद्यापरिणामः शुक्तिका तले भवति ॥ १९ ॥
विज्ञायते हि तच्चाविद्यावृत्त्यैव न पुनरन्येन ।
अर्थाध्यासो यच्चाविद्यापरिणामभूतमिह रजतम् ॥ २० ॥
ज्ञानाध्यासस्तस्यावभासकाज्ञानवृत्तिरेव स्यात् ।
तामिममनिर्वचनीयख्यातिं वेदान्तिनो हि कथयन्ति ॥ २१ ॥
सत्त्वे बाधायोगात्तस्यासत्त्वे प्रतीत्ययोगाच्च ।
अन्यत्र तस्य सत्त्वे त्वपरोक्षत्वं च संनिकृष्टत्वम् ॥ २२ ॥
तत्रानुपपन्नं स्यात्तेनानिर्वाच्यताऽस्य युक्तैव ।
एके चिदन्यथात्मख्यातौ किल वर्णयन्ति काणादाः ॥ २३ ॥

बौद्धाश्च तत्प्रदर्शितलक्षणमेवं प्रदर्शितं भाष्ये ।
तं केचिदन्यधर्माध्यासोऽन्यत्रेति तस्य चार्थोऽयम् ॥ २४ ॥
सादृश्यादिनिमित्ताच्छुक्त्यादौ यत्प्रतीयते रजतम् ।
स्वावयवधर्मभूतं शुक्तावारोप्य तेन चान्यदिति ॥ २५ ॥
यो बुद्धिरूप आत्मा रजतत्वाद्या भवन्ति तद्धर्माः ।
बाह्यार्थे शुक्त्यादावारोप्यन्ते त एव नान्य इति ॥ २६ ॥
अपरोक्षसंनिकृष्टत्वाभ्यां पक्षद्वयं च युक्तिसहम् ।
अख्यातिवादिनः किल गुरवोऽध्यासं हि वर्णयन्त्येवम् ॥ २७ ॥
यत्र यदध्यास इति प्रवाद उपलभ्यते हि लोकेऽस्मिन् ।
न च वस्तुनोर्विवेकाग्रहणनिमित्तो हि तद्धियोरपि च ॥ २८ ॥
तन्मूलको विशिष्टव्यवहारो रजतमिदमिहास्तीति ।
सोऽयमिहाध्यासः स्यादित्यध्यासं हि वर्णयन्त्येतम् ॥ २९ ॥
तत्र विशिष्टव्यवहारादध्यासो विशिष्टविषयः स्यात् ।
यदि न विशिष्टाध्यासो व्यवहारश्चेदृशो विलुप्येत ॥ ३० ॥
जगदेतदखिलमसदिति वदन्त्यसत्ख्यातिवादिमाध्यमिकाः ।
अध्यासस्यास्य पुनस्तदनुमतं लक्षणं भवेदित्थम् ॥ ३१ ॥
यत्र यदध्यास इति प्रवदन्ति जनास्तमेतमध्यासम् ।
विपरीतधर्मकल्पनरूपत्वं वर्णयन्ति ते तस्य ॥ ३२ ॥
अत्यन्तासत एव हि जगतः सद्रूपकल्पना सेति ।
सर्वप्रमाणबाधितमसारतरतर्कजालसंरम्भम् ॥ ३३ ॥
यद्यप्येतदथापि च न बाधकं कथमपीह तद्भवति ।
अन्यस्य चान्यधर्मावभासतारूपलक्षणं हीदम् ॥ ३४ ॥
स्यात्सर्ववादिसंप्रतिपन्नमवान्तरमतप्रभेदेऽपि ।
तस्माल्लक्षणसत्त्वादध्यासे नेह बाधकं किमपि ॥ ३५ ॥
लोके हि शुक्तिकेयं रजतवदवभासते तथा चन्द्रः ।
एकोऽपि सद्वितीयवदवभासत इति तु नु प्रसिद्धमिदम् ॥ ३६ ॥
ननु विषयस्य च तद्गतधर्माणां यश्च वर्णितोऽध्यासः ।
न च कथमविषयभूते प्रत्यग्वस्तुनि समञ्जसो भवति ॥ ३७ ॥
लोको हि संनिकृष्टे विषयेऽध्यस्यति किलापरं विषयम् ।
आत्मा न संनिकृष्टो न च युष्मत्प्रत्ययस्य विषयोऽपि ॥ ३८ ॥
शुक्त्यादयो हि युष्मत्प्रत्ययविषयाश्च संनिकृष्टाश्च ।
तत्र च रजतादीनामध्यासो युक्त एव नेह तथा ॥ ३९ ॥

युष्मत्प्रतीत्यपेते प्रत्यग्रूपे भवेन्न विषयत्वम् ।
तस्मादध्यासोऽयं तत्रानुपपन्न इति तु नाऽऽशङ्क्यम् ॥ ४० ॥
यस्मादिहायमात्मा न तावदत्यन्तमविषयो भवति ।
अस्मत्प्रत्ययविषयस्तथाऽपरोक्षश्च दृश्यते सोऽयम् ॥ ४१ ॥
अस्मत्प्रतीतिजनिताविद्यासंशयवृत्तिफलभाक्त्वात् ।
विषयत्वमौपचारिकमाश्रितमध्यासकारणं तत्स्यात् ॥ ४२ ॥
अध्यसितव्यं विषयान्तरमिन्द्रियसंनिकृष्टविषय इति ।
भवति न कश्चिन्नियमो यस्मादत्र हि विपर्ययो दृष्टः ॥ ४३ ॥
तलमलिनतादिधर्मानध्यस्यन्त्यम्बरेऽप्यनध्यक्षे ।
बाला न तच्च विषयो न चेन्द्रियेणापि संनिकृष्टं स्यात् ॥ ४४ ॥
अविरुद्धस्तद्वदसावध्यासः प्रत्यगात्मचैतन्ये ।
अध्यासमुक्तलक्षणमेवाविद्यां वदन्ति विद्वांसः ॥४५ ॥
विद्यामाहुर्यत्तु स्वरूपनिर्धारणं विवेकेन ।
यत्र यदध्यासः स्याद्दोषेण गुणेन तत्कृतेन पुनः ॥ ४६ ॥
वस्त्वणुमात्रेणापि च न हि संबध्येत कल्पितत्वेन ।
एतमविद्यासंज्ञं चिज्जडयोः किल परस्पराध्यासम् ॥ ४७ ॥
आलम्ब्यमानमेव व्यवहाराः सर्व एव संवृत्ताः ।
तद्वच्छास्त्राणि विधिप्रतिषेधविमोक्षतत्पराणि स्युः ॥ ४८ ॥
ननु कथमत्राविद्यावद्विषयाण्येव हि प्रमाणानि ।
प्रत्यक्षादीनि तथा शास्त्राणि स्युरिति न पुनराशङ्क्यम् ॥ ४९ ॥
देहे चेन्द्रियादावहंममाध्यासवर्जितस्य पुनः ।
नैवोपपद्यते हि प्रमातृता संप्रसादसमय इव ॥ ५० ॥
यदि न प्रमातृता स्यात्तदा प्रमाणप्रवृत्तिरपि न स्यात् ।
भवति प्रत्यक्षादिव्यवहारो नेन्द्रियाण्यनादाय ॥ ५१ ॥
नैव विनाऽधिष्ठानं व्यापारः क्वाचिदपीन्द्रियाणां स्यात् ।
व्याप्रियते न हि कश्चिद्देहेनाऽऽत्माभिमानरहितेन ॥ ५२ ॥
नैतस्मिन्सर्वस्मिन्नसत्यसङ्गात्मनः प्रमातृत्वम् ।
नैव प्रमातृभावं विना प्रमाणप्रवृत्तिरिह दृष्टा ॥ ५३ ॥
तस्मात्प्रत्यक्षादिप्रमाणजालानि यानि शास्त्राणि ।
सर्वाण्येवाविद्यावद्विषयाणीति युक्तमेवैतत् ॥ ५४ ॥
पश्वादीनां हि यथा व्यवहारोऽध्यासमूलको दृष्टः ।
विदुषामपि भवति तथा व्यवहारोऽध्यासमूलकः सकलः ॥ ५५ ॥

दण्डोद्यतकरमभिमुखमायान्तं पुरुषमेकमालक्ष्य ।
इच्छति हन्तुमसाविति भीताः पशवो द्रुतं पलायन्ते ॥ ५६ ॥
करविनिहतहरिततृणं पुरुषं दृष्ट्वाऽतिनिकटमायान्ति ।
व्युत्पन्नचेतसोऽपि ह पुरुषा लोके तथोपलभ्यन्ते ॥ ५७ ॥
आक्रोशतो नितान्तं खड्गधरान्क्रूरदृष्टिसंवलितान् ।
बलवत उपलभ्य ततो भीता एव हि पुनर्निवर्तन्ते ॥ ५८ ॥
तद्विपरीतान्पुरुषानालक्ष्य च तान्प्रति प्रवर्तन्ते ।
तस्माद्व्यवहारोऽसौ सर्वोऽप्यध्यासमूल इति युक्तम् ॥ ५९ ॥
पश्वादयोऽपि यद्यप्यध्यासं प्रकटयन्ति न परेषु ।
वागाद्यपाटवेनाथापि समं भवति कार्यमुभयत्र ॥ ६० ॥
अध्यासकार्यभूतो व्यवहारो यादृशः पशूनां स्यात् ।
व्युत्पत्तिमतां पुंसां व्यवहारस्तादृशो हि तत्काले ॥ ६१ ॥
निर्णीयते स चायं व्यवहारोऽध्यासजनित एवेति ।
व्यवहारे शास्त्रीये यद्यपि यो बुद्धिपूर्वकारी स्यात् ॥ ६२ ॥
न हि नाधिक्रियते परलोकगतिं स्वात्मनोऽपरिज्ञाय ।
परलोकगतिपरिज्ञानं देहान्यात्मविषयविज्ञानात् ॥ ६३ ॥
तेन च देहाविविक्तात्मज्ञानं कर्महेतुरिति वाच्यम् ।
तद्व्यवहारस्याऽऽध्यानाधीनत्वं कथं भवेदिति चेत् ॥ ६४ ॥
कर्मणि देहाविभिन्नात्मज्ञानं केवलं भवेज्जनकम् ।
नैवाऽऽत्मतत्त्वगोचरमपि विज्ञानं हि तत्र जनकं स्यात् ॥ ६५ ॥
अशनायादिविवर्जितमपि वेदान्तैकसमधिगम्यं च ।
ब्रह्मक्षत्रविभेदापेतमसंसारि चाऽऽत्मतत्त्वं हि ॥ ६६ ॥
तद्विज्ञानं यदिदं कर्मस्वधिकारकारणं न भवेत् ।
कर्मस्वधिकारे न हि यथोक्ततत्त्वावगत्यपेक्षाऽस्ति ॥ ६७ ॥
प्रत्युत यथोक्ततत्त्वज्ञानात्कर्माधिकारभङ्गः स्यात् ।
प्रागात्मतत्त्वबोधात्प्रवर्तमानं हि शास्त्रमखिलमपि ॥ ६८ ॥
यदिदमविद्यावद्विषयत्वं तन्नातिवर्तते तद्धीः ।
यानि च कर्मपराणि ह शास्त्राणि ब्राह्मणो यजेतेति ॥ ६९ ॥
तान्यात्मनि वर्णाश्रमवयोविशेषादिविषयमध्यासम् ।
आश्रित्य हि प्रथन्ते न कदाचिदिमानि वैपरीत्येन ॥ ७० ॥

तस्माद्यवहारोऽयं सकलोऽप्यध्यासजनित इति सिद्धम् ।
अध्यासोऽयमतस्मिंस्तद्बुद्धिरिति प्रपञ्चितं पूर्वम् ॥ ७१ ॥
सोऽयं हि पुत्रभार्यादिषु विकलेषु च तथैव सकलेषु ।
दृष्टो हि बाह्यधर्माध्यासो विकलोऽहमिति सकल इति च ॥ ७२ ॥
एवं हि देहधर्माध्यासः कृष्णः कृशोऽहमिति दृष्टः ।
इन्द्रियधर्माध्यासो मूकः क्लीबोऽहमिति च काण इति ॥ ७३ ॥
बधिरोऽहमन्ध इत्यप्यन्तःकरणस्थकर्मजातमपि ।
कामादिकं तथैवाध्यस्यति हि प्रत्यगात्मचैतन्ये ॥ ७४ ॥
एवमहंप्रत्ययिनं तदाश्रयं स्वप्रचारसाक्षिणि च ।
प्रत्यग्रूपेऽध्यस्य प्रत्यग्रूपं तमेतमात्मानम् ॥ ७५ ॥
अन्तःकरणादिष्वध्यस्यति किल तद्विपर्ययेणापि ।
इति सिद्धोऽध्यासोऽयं लक्षणसंभावनाप्रमाणान्तैः ॥ ७६ ॥
सकलानुभूतसिद्धः सामग्रीसहकृतोऽयमध्यासः ।
विषयफलसिद्धिहेतुः शास्त्रारम्भेऽस्य वर्णनं न वृथा ॥ ७७ ॥
चिरकालसंप्रवृत्तः सर्वानर्थैकसाधनं हि परम् ।
सोऽयमनन्तोऽध्यासः पुंसामात्मैक्यविस्मृतौ हेतुः ॥ ७८ ॥
तस्य च मूलोच्छेदे विशुद्धमात्मैक्यमन्तिके भाति ।
वेदान्तार्थविचारस्तत्सिद्धौ कारणं परं भवति ॥ ७९ ॥
इति मनसि सकलमर्थं सम्यङ्निश्चित्य सूत्रकारोऽसौ ।
चक्रे शास्त्रारम्भे विचारकर्तव्यतापरं सूत्रम् ॥ ८० ॥

इत्यध्यासः समाप्तः ।

## अथातो ब्रह्मजिज्ञासा ॥ १ ॥

विषयफलयोः सतोरप्यधिकारी नास्ति चेद्वृथा शास्त्रम् ।
तत्राथातःशब्दावधिकार्यर्थौ प्रदर्शितौ मुनिना ॥ ८१ ॥
आनन्तर्यार्थोऽसावथशब्दो नान्यमर्थमाचष्टे ।
अथइतिशब्दो हेतुं कर्मफलानित्यतां प्रसञ्जयति ॥ ८२ ॥
मिलितौ द्वावप्येतौ साधनसंपन्नमर्थिनं ब्रूतः ।
नित्यानित्यविवेकश्चेहामुत्रार्थभोगवैराग्यम् ॥ ८३ ॥
षट्कं शमादिकानां मुमुक्षुता चेति सुप्रसिद्धानि ।
चत्वारि साधनानि ह्यानन्तर्यावधिं वदन्त्यार्याः ॥ ८४ ॥

कर्मफलानित्यत्वप्रतिपत्तिः प्रथमसाधने हेतुः।
प्रथमं साधनमुत्तरसाधनसिद्धावपेक्षितो हेतुः॥ ८५॥
आरम्भार्थो नासावथशब्दो भवति सूत्रनिर्दिष्टः।
जिज्ञासापदमुख्यो नैवाऽऽरभ्येत कुत्रचित्क्वापि॥ ८६॥
लक्ष्यार्थे चाऽऽरम्भो लक्ष्यस्मारकपदान्तराल्लभ्यः।
तेनैव कार्यसिद्धावथशब्दोऽनर्थकः प्रसज्येत॥ ८७॥
अथशब्दः क्रमवचनः स्याद्वदानार्थवाक्यपठित इव।
कर्मब्रह्मविचारौ स्यातां यद्येककर्तृकौ लोके॥ ८८॥
धर्मविचारं साधकमानन्तर्यावधिं वदन्त्यन्ये।
धर्मविचारः सोऽयं ब्रह्मविचारैकसाधनं चेत्स्यात्॥ ८९॥
प्रथमाश्रमे विरक्तो विशुद्धविज्ञानसाधनोपचितः।
कर्मविचारास्पृष्टो ब्रह्मविचारे कथं प्रवर्तेत॥ ९०॥
जिज्ञास्यमपि च भिन्नं फलमपि भिन्नं हि दृश्यते शास्त्रे।
तस्माद्धर्मविचारो ह्यानन्तर्यावधिः कथं भवति॥ ९१॥
अर्थान्तरत्वबोधकमथशब्दं वर्णयन्ति केचिदिह।
अर्थान्तरत्वमेतद्यतः कुतश्चित्प्रसिद्धमफलं हि॥ ९२॥
हेतुफलभावसिद्धिप्रापकमर्थान्तरत्वमिह वाच्यम्।
तादृश्यर्थान्तरताऽप्यानन्तर्यैकरूपतामेति॥ ९३॥
सूत्रावयवश्चरमः कर्मणिषष्ठीसमासनिष्पन्नः।
शेषेषष्ठीपक्षं वारयति परं सकर्मको धातुः॥ ९४॥
तस्माद्दर्शितसाधनसंपदनन्तरमिहोक्ताजिज्ञासा।
कर्तव्येति प्रथयति वाक्यार्थं प्रथमसूत्रसंदर्भः॥ ९५॥
जिज्ञास्यं ब्रह्मोक्तं तत्किं लोकप्रसिद्धमितरद्वा।
यदि लोकसुप्रसिद्धं निःसंदेहं तदा न जिज्ञास्यम्॥ ९६॥
यदि चाप्रसिद्धमेतत्तज्जिज्ञास्यं कथमितीह नाऽऽशङ्क्यम्।
सत्यं ज्ञानमनन्तं श्रुतिवचनेषूपलभ्यते ब्रह्म॥ ९७॥
वैनाशिकादिसमयेष्वतथाभूतो निरूप्यते ह्यात्मा।
अत उपपन्नः संशय इति मत्वा शास्त्रमेतदारब्धम्॥ ९८॥
वेदान्तवाक्यनिचयैर्न्यायोपेतैर्विचारिते तत्त्वे।
वादिविवादोपचितः संदेहो नाशमि(मे)ति निर्लेपम्॥ ९९॥

ब्रह्मविचारे कार्ये लक्षणमादावपेक्षितं भवति ।
इति लक्षणबोधार्थं द्वितीयसूत्रं चकार मुनिवर्यः ॥ १०० ॥

जन्माद्यस्य यतः ॥ २ ॥

प्रथमं जन्मादिपदं जन्मस्थितिनाशसंघमभिधत्ते ।
प्रत्यक्षसिद्धमेतज्जगदखिलं प्रथयतीह षष्ठ्यन्तम् ॥ १०१ ॥
षष्ठी संबन्धार्था यत इति शब्दोऽपि कारणं वक्ति ।
जगदनुबन्धी जन्मस्थितिलयसंघो हि यन्निदान इति ॥ १०२ ॥
सूत्रार्थे निष्पन्ने लक्षणलाभः कथं भवेन्नृणाम् ।
इत्याकलय्य भगवांस्तद्ब्रह्मेति प्रपूरयामास ॥ १०३ ॥
यवमयचरुवाक्यादौ लक्षणबोधो हि वाक्यशेषात्स्यात् ।
तद्वदिति नात्र शङ्का यत्तच्छब्दौ हि नियतसाकाङ्क्षौ ॥ १०४ ॥
जगदनुबन्धिकजन्मस्थितिलयसंघातकारणं ब्रह्म ।
इति सूत्रार्थे लब्धे लक्षणशङ्का निवर्तिता भवति ॥ १०५ ॥
यास्कमुनिसूत्रदर्शितविकारषट्कं न वक्ति जन्मादि ।
लक्षणमेवंभूतं भूम्यादीनामिहोपदिष्टं स्यात् ॥ १०६ ॥
श्रुत्यर्थनिर्णयार्थं लब्धोत्साहोऽत्र सूत्रसंदर्भः ।
आश्रित्य पिशुनवृत्तिं श्रुत्यर्थं हातुमुत्सहेत कथम् ॥ १०७ ॥
लक्षणवाक्यसमन्वयबोधे हेतुर्विलक्षविज्ञानम् ।
लक्ष्यस्वरूपबोधे स्वरूपलक्षणमपेक्षितं भवति ॥ १०८ ॥
जगदेकदेशभूतो वेदो नित्य इति विश्रुतो यस्मात् ।
जगदुत्पत्तिस्थितिलयकारणतारूपलक्षणं च कथम् ॥ १०९ ॥
इत्याक्षिपन्निरासितमादौ षष्ठीसमासमाश्रित्य ।
निश्वसितवाक्यनिचयात्सूत्रार्थो वर्ण्यते तृतीयोऽसौ ॥ ११० ॥

शास्त्रयोनित्वात् ॥ ३ ॥

षष्ठीसमासपक्षे तटस्थसंज्ञं स्वरूपसंज्ञं च ।
श्रुतिनिवहकर्तृतायां सिद्धायामुक्तलक्षणं सिध्येत् ॥ १११ ॥
यन्निश्वासितप्रायो वेदः सर्वार्थबोधको दृष्टः ।
तस्य च सर्वज्ञत्वं लक्षणमित्यत्र केयमाशङ्का ॥ ११२ ॥
श्रुतिकर्तृत्वे सिद्धे वेदे कार्यत्वसिद्धिरवतरति ।
तत्सिद्धौ सिद्धं स्याज्जगज्जनिप्रभृतिकारणत्वमपि ॥ ११३ ॥

यदि जनिकर्ता चेत्स्याद्वेदोऽयं पौरुषेयतां गच्छेत् ।
इति शङ्काऽत्र न कार्या न पौरुषेयो निरूप्यते वेदः ॥ ११४ ॥
अर्थावबोधपूर्वकयत्नो यस्य प्रसाधको भवति ।
तत्र व्याकरणादौ भवति परं पौरुषेयता लोके ॥ ११५ ॥
अर्थावबोधकृत्या समकालिकता प्रतीयते ह्यत्र ।
निश्वसितवाक्यनिचये तस्माद्वेदे न पौरुषेयत्वम् ॥ ११६ ॥
निश्वसितवाक्यमेतन्निश्वासन्यायमेव बोधयति ।
तस्मादपौरुषेयो वेदोऽत्रार्थे न बाधकं किंचित् ॥ ११७ ॥
नियतानुपूर्विकत्वाद्वेदो नित्य इति गौणवादोऽसौ ।
तस्माज्जगदुत्पत्तिस्थितिलयकारित्वलक्षणं सिद्धम् ॥ ११८ ॥
लक्षणपरमेतच्चेत्स्यादाशङ्का प्रमाणमिह किमिति ।
तस्मात्प्रमाणपरमप्येतत्सूत्रमिति वर्ण्यते सपदि ॥ ११९ ॥
कारणवचन इदानीं प्रमाणवचनो हि योनिशब्दोऽसौ ।
शास्त्रं योनिर्यस्येत्यत्र समासः परं बहुव्रीहिः ॥ १२० ॥
शास्त्रप्रमाणकत्वाज्जगज्जनिप्रभृतिकारणत्वाच्च ।
साधनसंपत्तिमता ब्रह्म विचार्यमिति निश्चितं भवति ॥ १२१ ॥
शास्त्रप्रमाणकत्वं न शक्यते ब्रह्मणि प्रतिज्ञातुम् ।
कृत्स्नस्य वेदराशेः कर्मपरत्वं हि जैमिनिः प्राह ॥ १२२ ॥
कर्मपरत्वे सिद्धे सफलार्थकता हि वेदभागे स्यात् ।
अतदर्थकवाक्यानामानर्थक्यं प्रपञ्चितं हि यतः ॥ १२३ ॥
अध्ययनविध्युपात्ते वेदे चानर्थकत्वमन्याय्यम् ।
इति शङ्कावसरः स्यादाम्नायस्येति सूत्र इति मत्वा ॥ १२४ ॥
विध्येकवाक्यभावाद्विधिसंनिहितार्थवादवाक्येषु ।
स्तुत्यर्थबोधकतया क्रियापरत्वं समर्थितं भवति ॥ १२५ ॥
सोऽरोदीदित्यादौ निषेधवाक्यैकवाक्यभावेन ।
राजतनिन्दारूपक्रियापरत्वं समाश्रितं भवति ॥ १२६ ॥
मन्त्र इषे त्वेत्यादौ छिनद्मियोगेन कर्मपरता स्यात् ।
तद्वद्वेदान्तानां कर्त्रादिस्तावकत्वमालम्ब्य ॥ १२७ ॥
कर्मपरत्वे सिद्धे ब्रह्मपरत्वं कथं भवेत्तेषाम् ।
विधिविप्रकृष्टदेशा वेदान्ताः स्युः कथं हि कर्मपराः ॥ १२८ ॥

इति चेत्तथाऽपि न क्षतिरुपासनादिक्रियापरत्वेन ।
इत्याक्षेपनिवृत्त्यै चकार भगवांश्चतुर्थसूत्रमिदम् ॥ १२९ ॥

तत्तु समन्वयात् ॥ ४ ॥

तत्पदमस्मिन्सूत्रे पक्षतया ब्रह्मबोधकं भवति ।
शास्त्रप्रमाणकत्वं विधेयमिह पूर्वसूत्रलभ्यं स्यात् ॥ १३० ॥
उक्ताक्षेपं निरसितुमत्र तुशब्दो हि मध्यनिर्दिष्टः ।
पञ्चम्यन्तश्चरमः प्रथयत्युक्तार्थसाधकं हेतुम् ॥ १३१ ॥
पक्षविशेषणवाची समिति ह्यंशोऽप्यखण्डमाचष्टे ।
अन्वयशब्दो योऽसौ प्रकृते तात्पर्यवाचको भवति ॥ १३२ ॥
अत्राखण्डं ब्रह्म प्रतिपाद्यं भवति शास्त्रनिचयेन ।
श्रुतितात्पर्याद्धेतोर्नैवं कर्मेति सूत्रवाक्यार्थः ॥ १३३ ॥
शास्त्रप्रमाणकत्वे हेतुरिहोक्तो हि शास्त्रतात्पर्यम् ।
तन्निर्णयैकसाधनमुपक्रमप्रभृतिलिङ्गषट्कं स्यात् ॥ १३४ ॥
छान्दोग्यमैतरेयं मुण्डकमाण्डूक्यतैत्तिरीयाणि ।
ईशावास्यादीनि हि यानि च वेदान्तवाक्यजालानि ॥ १३५ ॥
तेषामुपक्रमादौ विमृश्यमाने विशुद्धभावेन ।
तेषां वेदान्तानां ब्रह्मणि तात्पर्यनिर्णयो भवति ॥ १३६ ॥
नन्विह वेदान्तानां ब्रह्मणि तात्पर्यमनुचितं वक्तुम् ।
ब्रह्म परिनिष्ठितं तन्मानान्तरगम्यमेव भवति यतः ॥ १३७ ॥
नैषा शङ्का कार्याऽसिद्धं मानान्तराभिगम्यमिति ।
रूपादिरहितमेतद्ब्रह्म न मानान्तराणि संस्पृशति ॥ १३८ ॥
नन्वेवं वेदान्तैर्ब्रह्मण्यावेदिते फलं किं स्यात् ।
हेयोपेयविहीने वस्तुन्यावेदितेऽपि न पुमर्थः ॥ १३९ ॥
पुरुषार्थसाधकं स्याद्धेयमुपादेयमुपदिशच्छास्त्रम् ।
हेयोपेये ज्ञाते स्यातामिष्टाप्त्यनिष्टपरिहारौ ॥ १४० ॥
इति नात्र शङ्कितव्यं यत एतच्छास्त्रमेवमुपदिशति ।
हेयोपेयविहीने ब्रह्मणि साक्षात्कृते पुमर्थः स्यात् ॥ १४१ ॥
आत्मानं चेत्पुरुषो यदाऽयमस्मीति यो विजानीयात् ।
किं फलमिच्छन्कस्य च कामाय शरीरमनु तपेत्स इति ॥ १४२ ॥
ननु न हि वेदान्तानां कर्त्रादिस्तावकत्वमाशङ्क्यम् ।
तत्केनेत्यादीनि ह्यकर्तृतामस्य बोधयन्ति यतः ॥ १४३ ॥

श्रुतितात्पर्ये सिद्धे ब्रह्मणि शास्त्रप्रमाणकत्वमपि ।
सिद्धं स्यादिति पक्षं दूषयितुं जातकौतुकाः केचित् ॥ १४४ ॥
शास्त्रप्रमाणकत्वं ब्रह्मणि यच्चोपदर्शितं सूत्रे ।
सिद्धे फलानवगमाद्विधिशेषतयैव तच्च युक्ततरम् ॥ १४५ ॥
आत्मेत्येवेत्याद्यैरात्मोपास्तौ विधीयमानायाम् ।
कोऽसावात्मा किं तद्ब्रह्मेत्येवं भवेदिहाऽऽकाङ्क्षा ॥ १४६ ॥
तस्यामाकाङ्क्षायामात्मप्रतिपादकाश्च वेदान्ताः ।
सत्यं ज्ञानमनन्तं ब्रह्मेत्याद्या इहोपयुक्ताः स्युः ॥ १४७ ॥
यूपे पशुमित्याद्यैर्यूपाश्रयके हि बन्धने विहिते ।
यूपस्वरूपबोधकवाक्यानि यथा भवन्ति सफलानि ॥ १४८ ॥
प्रतिपत्तिविषयभूतं ब्रह्मैव समर्पयन्ति वेदान्ताः ।
आम्नायस्येत्याद्यैः सूत्रैरपि नात्र कश्चन विरोधः ॥ १४९ ॥
विधिसंस्पर्शविहीनं ब्रह्म यथा बोधयन्ति वेदान्ताः ।
सप्तद्वीपा धात्री राजा यातीति वाक्यसाम्यं स्यात् ॥ १५० ॥
इति पक्षान्तरमेतन्निरस्यते सपदि भाष्यकारेण ।
यद्येवमर्थता स्याद्भूतार्थता भवति पूर्वतन्त्रेण ॥ १५१ ॥
पूर्वत्र चोपदिष्टो धर्मोऽसौ कर्मरूप एव स्यात् ।
कायिकवाचिकमानसभेदेनैतत्त्रिधोपदिष्टं हि ॥ १५२ ॥
तत्फलमपि शास्त्रोक्तं त्रिधोपभोग्यं त्रिधैव निर्दिष्टम् ।
यच्चोपासनमुक्तं मानसिकं कर्म भवति न तदन्यत् ॥ १५३ ॥
ध्यानमपि तादृशं स्याद्ध्यानोपास्त्योर्न भेदशङ्काऽत्र ।
यच्चोपासनसाध्यो मोक्षोऽयं तर्ह्यनित्य एव स्यात् ॥ १५४ ॥
कर्माधत्तफलानां शास्त्रेणानित्यतैव निर्दिष्टा ।
प्रतिपत्तिविधिपराश्चेद्वेदान्ताः प्रथमसूत्रमफलं स्यात् ॥ १५५ ॥
लक्षणसूत्रं तद्वत्प्रमाणसूत्रं समन्वयाख्यं च ।
ब्रह्म च नोत्पाद्यं स्यान्न प्राप्यं भवति नापि संस्कार्यम् ॥१५६॥
न विकार्यं वा स्यादिह विधिशेषत्वं कथं प्रसज्येत ।
स्नानाचमनादीनामविविक्तानात्ममात्रगामित्वात् ॥ १५७ ॥
नाऽऽत्मा संस्कार्योऽसौ नित्यत्वाद्भवति नो विकार्योऽपि ।
द्रष्टव्यविध्यनन्तरमपरश्रवणादिविधिपरं शास्त्रम् ॥ १५८ ॥

विधिशेषत्वं ब्रह्मणि साधयतीत्येवमपि न चाऽऽशङ्क्यम् ।
यद्यवगतमन्यस्मिन्नियुज्यते विधिपरेण वाक्येन ॥ १५९ ॥
विधिशेषता तदा स्याद्यूपाहवनीययोस्तथा दृष्टेः ।
अवगत्यर्थं ह्येतच्छ्रवणाद्यं साधनं विनिर्दिष्टम् ॥ १६० ॥
श्रवणमननादिसाधनपरिपाकादवगतिर्यथा भवति ।
संसारमूलकारणहृदयग्रन्थिप्रभेदनं भवति ॥ १६१ ॥
तेनानर्थनिवृत्त्या परमानन्दैकरूपतामेति ।
इत्येतमर्थनिकरं पश्यन्प्रतिपेद एवमादीनि ॥ १६२ ॥
प्रथयन्ति वारयन्ति च कर्तव्यविशेषमवसरप्राप्तम् ।
नेदं यदिदमुपासत इत्यादीन्यपि च वेदवाक्यानि ॥ १६३ ॥
प्रथयन्त्यनुपास्यत्वं ब्रह्मणि विधिशेषता कथं घटते ।
विधिशेषत्वाभावे चाऽऽत्मा द्रष्टव्य एवमादीनि ॥ १६४ ॥
विधिवाक्याभासानि श्रुतिवचनानीह निष्फलानि स्युः ।
नैषा कार्या शङ्का यत एतान्यर्थवत्तराणि स्युः ॥ १६५ ॥
परमपुरुषार्थवाञ्छिनमनात्मसंघातपराङ्मुखीकृत्य ।
सर्वान्तरे परात्मनि चेतोवृत्तिप्रवर्तनार्थानि ॥ १६६ ॥
तस्यां प्रवर्तितायां ब्रह्मावगतिर्हि जायते झटिति ।
सिद्धार्थबोधकत्वेनाऽऽम्नायस्येति सूत्रवैगुण्यम् ॥ १६७ ॥
नास्मिञ्शास्त्रे शङ्क्यं यतस्तयोर्भिन्नशास्त्रता भवति ।
स्तुतिपरतया विधीनां क्रियापरत्वेन सर्ववेदानाम् ॥ १६८ ॥
यच्च सफलार्थकत्वं निषेधवाक्येन दृश्यते तदिह ।
हननक्रियानिवृत्त्या ह्यौदासीन्यं प्रतीयते तत्र ॥ १६९ ॥
न च तदुभयं क्रिया स्यान्न वा क्रियायाश्च साधनं भवति ।
विध्यर्थवादयोर्वा कर्त्रादिपराणि वाक्यजालानि ॥ १७० ॥
दृश्यन्ते खलु तेषामनर्थकत्वं न कोऽपि वारयति ।
पूर्वस्मिन्नपि तन्त्रे दोषोऽयं दुर्निवार इव भाति ॥ १७१ ॥
कथमुत्तरतन्त्रेऽसौ पदं निधातुं समर्थतां गच्छेत् ।
तस्माद्वेदान्तानां सिद्धार्थपरत्वबाधकाभावात् ॥ १७२ ॥
ब्रह्मावगतौ सत्यामशरीरत्वं प्रपद्यते जीवः ।
ब्रह्मण्युपासनायाः शेषत्वं माऽस्तु विषयभावेन ॥ १७३ ॥

ब्रह्मणि तच्छेषत्वं कर्तृत्वात्स्यादितीह नाऽऽशङ्क्यम् ।
ब्रह्मणि विधिशेषत्वं कर्तृत्वेनापि नैव संभवति ॥ १७४ ॥
आविद्यकसंघाते कर्तृत्वं स्यान्न शुद्धरूपेऽपि ।
वर्णाश्रमादिकवलितसंघातः कर्तृभावमुपयाति ॥ १७५ ॥
मिथ्याप्रत्ययरूपस्तत्राहंप्रत्ययो न गौणोऽसौ ।
यक्ष्ये दास्यामीति व्यवहारस्तन्निदानको भवति ॥ १७६ ॥
समसमयिकत्वमनयोर्व्यवहाराध्यासयोर्यतो भवति ।
उपदर्शितसंघातो मिथ्यात्मेतीह दृश्यते शास्त्रे ॥ १७७ ॥
पुत्रादिर्गौणात्मा तस्य च सर्वार्थकारिताहेतोः ।
जाग्रत्स्वप्नसुषुप्तित्रितयानुगतो हि मुख्य आत्माऽसौ ॥ १७८ ॥
तस्य च न कर्तृता स्यात्सौषुप्तसमाधिबाधितत्वेन ।
देहादौ संघाते योऽयमहंप्रत्ययः स गौण इति ॥ १७९ ॥
केचन वदन्ति वृद्धास्तत्पक्षोऽयं निरस्यते सपदि ।
यत्रार्थयोर्विवेकः प्रत्यक्षेणोपलभ्यते तत्र ॥ १८० ॥
गुणयोगजा प्रतीतिर्गौणीयमिति प्रसिद्धिमनुभवति ।
माणवकः सिंह इति प्रत्यय एतादृशो ह्यतो गौणः ॥ १८१ ॥
यत्रान्धकारसमये स्थाणौ पुरुषप्रतीतिरुद्भवति ।
सा च कथं गौणी स्यात्तस्मान्मिथ्येति निश्चितं भवति ॥ १८२ ॥
मिथ्यात्मकर्तृकः स्यात्सकलो विधिवचनबोधितो ह्यर्थः ।
योऽसावात्मा शुद्धः कर्मणि कर्ता कदाऽपि न च भवति॥ १८३ ॥
तस्माद्विधिशेषत्वं कर्तृत्वेनापि नाश्नुते ब्रह्म ।
ब्रह्मावगतौ सत्यां मिथ्यागौणात्मनोरसत्त्वेन ॥ १८४ ॥
विधिवचनबोधितानि ह्यौपासनादीनि संभवन्ति कथम् ।
आत्मावगतेः पूर्वं मिथ्याज्ञानावबद्ध एवासौ ॥ १८५ ॥
आरोप्य कर्तृतादीन्कर्माणि सततं प्रवर्तते लोकः ।
विधिशेषभावरहिते ब्रह्मणि वेदान्तवाक्यतात्पर्यम् ॥ १८६ ॥
सिद्धं तस्माच्छुद्धं ब्रह्म विचार्यमिति निश्चितं भवति ।
इममर्थमसहमानाः सांख्याः स्मृतियुक्तिसाधनाः प्राहुः ॥ १८७ ॥
जगदुत्पत्तिस्थितिलयकारणमेतत्प्रधानमेवेति ।
कार्यमखिलं ह्यचेतनमचेतनं तस्य कारणं युक्तम् ॥ १८८ ॥

सत्त्वादिके हि कार्ये कारणमपि तस्य तादृशं दृष्टम् ।
तस्मात्प्रधानमेव त्रिगुणं परिणामि जगदुपादानम् ॥ १८९ ॥
भवति ह तद्विपरीतं ब्रह्मातो नैव जगदुपादानम् ।
सर्वज्ञत्वं यच्च स्वरूपलक्षणमुदाहृतं तदपि ॥ १९० ॥
अस्मिन्प्रधान एव हि सत्त्वमुपाश्रित्य भवति निरवद्यम् ।
सत्त्वोत्कर्षादेव हि विख्याता योगिनोऽपि सर्वज्ञाः ॥ १९१ ॥
सर्वज्ञशब्दयोगोऽप्यनुचित आमात्यनन्तबोधघने ।
जन्मादिकारणत्वप्रतिपत्तिपराणि यानि वाक्यानि ॥ १९२ ॥
श्रुतिनिर्दिष्टानि परं प्रधानपक्षे प्रमाणभूतानि ।
जन्मादिकारणं तत्सदादिशब्दं प्रधानमिह युक्तम् ॥ १९३ ॥
इत्याक्षेपं निरसितुमिदमधिकरणं प्रवर्तते सद्यः ।

## ईक्षतेर्नाशब्दम् ॥ ५ ॥

आद्यः सूत्रावयवः पञ्चम्यन्तोऽयमीक्षणं वक्ति ॥ १९४ ॥
बुद्धिस्थवस्तुभेदप्रदर्शनार्थकमिदं हि नेति पदम् ।
अन्तिममशब्दपदमपि सदादिपदयोगरहितमाचष्टे ॥ १९५ ॥
यस्मादशब्दमेतत्प्रधानमत एव कारणं नास्य ।
इत्येकदेशलभ्ये वाक्यार्थे स्यादिहेक्षणं हेतुः ॥ १९६ ॥
अपरोक्षमानरूपं हीक्षणमेतन्न च प्रधाने स्यात् ।
यदिदमचेतनमुक्तं प्रधानमेतच्च चेतने भवति ॥ १९७ ॥
तस्मादत्र हि चेतनमीक्षितृ जन्मादिकारणं ब्रह्म ।
छान्दोग्यवाक्यदर्शितसत्पदवाच्यं तदेव न तदन्यत् ॥ १९८ ॥
सर्वज्ञता हि युक्ता ब्रह्मणि सर्वार्थमानरूपे स्यात् ।
प्रततप्रकाशरूपे सवितरि यद्वत्प्रकाशतेशब्दः ॥ १९९ ॥
यदि चेत्प्रधानमेतत्सत्त्वमुपाश्रित्य भवति सर्वज्ञम् ।
तद्वद्रजस्तमोभ्यां किंचिज्ज्ञमपि प्रधानमुक्तं स्यात् ॥ २०० ॥

## गौणश्चेन्नाऽऽत्मशब्दात् ॥ ६ ॥

नन्वयमीक्षितृशब्दः सतिनिर्दिष्टो हि गौण एव स्यात् ।
तत्तेज ऐक्षतेति ह्यान्तरवाक्ये यथा स गौणः स्यात् ॥ २०१ ॥
गौणे तस्मिन्सोऽयं प्रधानपक्षेऽपि साधुरेव स्यात् ।
नैषा शङ्का कार्या सत्पदवाच्यं प्रधानमेवेति ॥ २०२ ॥

ईक्षितृशब्दो योऽसौ न हि गौणो येन सत्प्रधानं स्यात् ।
यदि चेद्गौणः सोऽयं तत्सहचारी कथं स आत्मेति ॥ २०३ ॥
नन्वेष आत्मशब्दोऽप्यात्मीयपदो(रो) हि दृश्यते लोके ।
आत्माखिलार्थकारिणि ममायमात्मा हि भद्रसेन इति ॥ २०४ ॥

## तन्निष्ठस्य मोक्षोपदेशात् ॥ ७ ॥

नैषा शङ्का कार्या यद्ययमात्मीयवाचको भवति ।
उपदेशः सकलोऽयं षष्ठे विहितो हि विफल एव स्यात् ॥ २०५ ॥
उपदिश्य च तन्निष्ठां तत्त्वमसीत्यादिवाक्यजातेन ।
मुक्त्युपदेशोऽसात्रथ संपत्स्य इति प्रतीयते षष्ठी ॥ २०६ ॥
आत्मीयवाचकत्वात्प्रधानवादी यदाऽऽत्मशब्दः स्यात् ।
तत्त्वमसि वाक्यलभ्या तन्निष्ठाऽपि प्रधाननिष्ठा स्यात् ॥ २०७ ॥
तन्निष्ठस्य च मोक्षस्तद्भावापत्तिरेव न तदन्यः ।
यः श्वेतकेतुरस्मिन्नुपदेशे सम्यगधिकृतः सोऽयम् ॥ २०८ ॥
सकलश्रुतिविपरीतं ह्यनात्मभाव कथं प्रपद्येत ।
ब्रह्मत्वभावरूपं मोक्षं कथयन्ति सर्ववेदान्ताः ॥ २०९ ॥
ईक्षितृशब्दो योऽसौ तथाऽऽत्मशब्दोऽपि मुख्य इह दृष्टः ।
तस्मात्सत्पदवाच्यं ब्रह्म परं स्यान्न च प्रधानमपि ॥ २१० ॥

## हेयत्वावचनाच्च ॥ ८ ॥

यदि च प्रधानपरता सदादिकानामिहोपदिश्येत ।
श्रद्धालुरावृतात्मा तन्निष्ठः स्यादिति श्रुतिर्मत्वा ॥ २११ ॥
तत्त्वमसिवाक्यपरतस्तन्नासीति श्रुतिः कथं न वदेत् ।
तस्मान्नास्मिन्वाक्ये प्रधानशङ्कावकाशलेशोऽपि ॥ २१२ ॥
परपक्षनिरसनक्षमहेतूनुपदिश्य सूत्रकारोऽयम् ।
सद्यः स्वपक्षसिद्ध्यै हेतूनन्यान्प्रदर्शयत्यनघान् ॥ २१३ ॥

## स्वाप्ययात् ॥ ९ ॥

इह खलु सत्पदवाच्यं ब्रह्म परं भवति जगदुपादानम् ।
यस्मात्सुषुप्तिकाले सति सर्वेषां लयो विनिर्दिष्टः ॥ २१४ ॥

## गतिसामान्यात् ॥ १० ॥

किं चान्यदवगतीनां सकलश्रुत्यन्तवाक्यजनितानाम् ।
चेतनकारणविषयकमार्गं सामान्यमपि च भाति यतः ॥ २१५ ॥

तद्न्यायादत्रापि ह चेतनकारणपरत्वसंसिद्धौ ।
अर्धजरतीयं न यतः प्रधानपरता कथं समर्थ्येत ॥ २१६ ॥

श्रुतत्वाच्च ॥ ११ ॥

श्वेताश्वतरप्रभृतिश्रुत्यन्तेषु श्रुतं हि यद्ब्रह्म ।
जन्मस्थितिलयकारणमस्य तदेवेति सकलमनवद्यम् ॥ २१७ ॥
ब्रह्म विचार्यमिहोक्तं लक्षणमुक्तं तथा प्रमाणमपि ।
सकलनिगमान्तवचसां ब्रह्मणि परमे समन्वयश्चोक्तः ॥ २१८ ॥
प्रतिकूलकर्मवादः प्रधानवादो निराकृतः प्रायः ।
शास्त्रं हि परिसमाप्तं सकला शङ्का निवर्तिता हि यतः ॥ २१९ ॥
उत्तरसूत्रोत्थाने निमित्तमिह नोपलभ्यते किमपि ।
इति शङ्कामपनेतुं निमित्तमत्रोपवर्ण्यते सपदि ॥ २२० ॥
यच्चोक्तलक्षणं स्याद्ब्रह्म तदेतद्द्विरूपमामाति ।
कथयन्ति हि वेदान्ताः सविशेषं निर्विशेषरूपमपि ॥ २२१ ॥
सविशेषवाक्यजातं ह्युपास्यरूपे समन्वितं भवति ।
यन्निर्विशेषवाक्यं ज्ञेये ब्रह्मणि समन्वितं सकलम् ॥ २२२ ॥
वेदान्तवाक्यविहितान्युपासनान्यपि बहुप्रपञ्चानि ।
गुणसंप्रयोगभेदात्फलभेदादपि च भिन्नरूपाणि ॥ २२३ ॥
कानिचिदुपासनानि हि कर्मसमृद्ध्यर्थकानि चान्यानि ।
क्रममुक्त्यर्थानीति हि भेदस्तेषामुपासनानां स्यात् ॥ २२४ ॥
ब्रह्म खलु पूर्णमेकं निर्भेदस्वप्रकाशचिन्मात्रम् ।
गुणसंप्रयोगभेदादभिन्नरूपेऽपि भिन्नभावोऽयम् ॥ २२५ ॥
अत्रोपास्योपासकभावो युक्तो ह्यभिन्नरूपेऽपि ।
चित्तोपाधिकृतोऽयं तरतमभावो यतोऽस्य बीजं स्यात् ॥ २२६ ॥
सद्योमुक्तिफलप्रदमात्मज्ञानं ह्युपाधिरूपेण ।
उपदिश्यमानमेतत्परविषयं वा न वेति संदेहे ॥ २२७ ॥
आलोच्य वाक्यपदवीमुपाधियोगं व्युदस्य परविषयम् ।
तदिदं निर्णेयमिति प्रवर्तते सपदि सूत्रसंदर्भः ॥ २२८ ॥
ईक्षत्याद्यैर्लिङ्गैर्ब्रह्म हि जन्मादिकारणं सदिति ।
वर्णितमेतत्पूर्वं प्रधानवादश्च निरासितः सकलः ॥ २२९ ॥
नन्वीक्षत्यधिकरणे गौणं हित्वा यदीक्षणं मुख्यम् ।
आलम्ब्य तद्बलेन हि परमात्मा सदिति वर्णितं पूर्वम् ॥ २३० ॥

इह तैत्तिरीयके खल्वानन्दमयप्रकाशकं वाक्यम् ।
तत्र च वाक्ये मयटः प्राचुर्यविकारयोश्च मुख्यत्वात् ॥ २३१ ॥
आनन्दमयो जीवः शारीरत्वादिलिङ्गयोगात्स्यात् ।
तत्र च शारीरत्वं प्रियप्रमुख्याणि चाङ्गजालानि ॥ २३२ ॥
कथितान्यानन्दमये स तादृशोऽयं कथं परात्मा स्यात् ।
इत्याशङ्कानिरसनपुरःसरोक्तार्थतत्त्वबोधाय ॥ २३३ ॥
करुणान्धुर्भगवानिदमधिकरणं स प्रदर्शयामास ।

आनन्दमयोऽभ्यासात् ॥ १२ ॥

यद्यप्येतत्सूत्रं बहुधा बहुभिः प्रपञ्चितार्थं हि ॥ २३४ ॥
तस्मादस्मात्सूत्रात्तत्त्वावगतिर्हि दुर्लभा भाति ।
नैषा शङ्का कार्या तस्मात्तत्तत्प्रदर्शितार्थेषु ॥ २३५ ॥
गुणदोषवर्णने किल तत्त्वावगतिर्न दुर्लभा भवति ।
अत्राऽऽनन्दमयोऽसावन्नमयप्रभृतिपञ्चक वक्ति ॥ २३६ ॥
इति केचिदामनन्ति हि तत्पक्षोऽयं विचार्यते सपदि ।
आनन्दमयपदार्थो ह्यन्नमयप्रभृतिपञ्चकं चेत्स्यात् ॥ २३७ ॥
स्याल्लक्षणा तदानीं श्रुतहान्यादीनि दूषणानि स्युः ।
यत्रानुपपत्तिः स्यादन्वयतात्पर्ययोस्तदा सा स्यात् ॥ २३८ ॥
घोषोऽयं गङ्गायामित्यादौ सा हि लक्षणाबीजम् ।
बीजाभावादस्य ह्यानन्दमयस्य लक्षणाऽनुचिता ॥ २३९ ॥
यदि समुदायः पक्षस्तत्राभ्यासो न दृश्यते क्वापि ।
असकृत्प्रयोगवाची ह्यभ्यासो नेह कस्यचिद्दृष्टः ॥ २४० ॥
ब्रह्म परं सकृदेव ह्यन्नमयप्रकृतिसंगतं भाति ।
तदपि मनोमयवाक्ये न प्रकृतौ दृश्यते कुतोऽभ्यासः ॥ २४१ ॥
पञ्चानां ब्रह्मत्वे न च प्रमाणं न साधको हेतुः ।
अत इह चाऽऽनन्दमयो नान्नमयादिः परं तु मुख्यः स्यात् ॥२४२॥
न हि परमात्माऽभ्यासादिति सूत्रार्थं हि वर्णयन्त्येके ।
स्वाभिमतार्थं प्रथयितुकामो भगवान्हि भाष्यकारोऽयम् ॥ २४३ ॥
तन्मतमाश्रित्यैव हि तत्सूत्रार्थान्प्रदर्शयत्यादौ ।
नन्वत्राऽऽनन्दमयः परमात्मा चेत्कथं स शारीरः ॥ २४४ ॥
तस्यैष इत्यनेन हि शारीरत्वं प्रदर्शितं चास्य ।
इति नात्र शङ्कनीयं शारीरत्वं न मुख्यमस्योक्तम् ॥ २४५ ॥

अन्नमयादिशरीरद्वारा ग्राह्यत्वरूपमेव स्यात् ।
प्रियशीर्षत्वादिकमपि पूर्वोपाधिकृतकल्पनायत्तम् ॥ २४६ ॥
स्वत एतस्मिन्नात्मनि नैवंरूपा हि कल्पना भवति ।
आनन्दपदाभ्यासो ह्युत्तरवाक्येषु दृश्यते यस्मात् ॥ २४७ ॥
अभ्यासादिति हेतुः परमात्मत्वप्रसाधको भवति ।
नन्विह मयडन्तोऽयं विकारवचनो हि दृश्यते लोके ॥ २४८ ॥
मृन्मयदारुमयादौ तस्मात्स कथं परात्मवचनः स्यात् ।
परमात्माऽसौ जगतः प्रकृतिर्न विकारभावमुपयाति ॥ २४९ ॥
इत्येतामाशङ्कां निरसितुमेतत्प्रदर्शितं सूत्रम् ।

विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥ १३ ॥

यस्माद्विकारवाची मयडन्तोऽसावतो न परमात्मा ॥ २५० ॥
आनन्दमयः स्यादिति नेयं शङ्काऽत्र कर्तुमुचिता स्यात् ।
तत्प्रकृतवचनतायां मयड्विधानं तु दृश्यते शास्त्रे ॥ २५१ ॥
प्राचुर्यपर्यवसितो मयडर्थ इतीह लभ्यते तस्मात् ।
अन्नमयो यज्ञोऽसावित्यादौ दृश्यते हि मयडर्थः ॥ २५२ ॥
अन्नगतप्राचुर्यं तस्मात्प्राचुर्यमत्र मयडर्थः ।
तस्मान्मयडन्तोऽसावानन्दप्रचुरमर्थमाचष्टे ॥ २५३ ॥
आनन्दप्रचुरत्वं निरतिशयानन्दरूपता नान्यत् ।
ब्रह्मेहोत्तरवाक्ये निरतिशयानन्दरूपमुपदिष्टम् ॥ २५४ ॥
तस्मादानन्दमयो ब्रह्मेत्यस्मिन्न दोषशङ्काऽपि ।
ब्रह्म प्रचुरानन्दं मयडन्तार्थोऽयमित्युपन्यस्तम् ॥ २५५ ॥

तद्धेतुव्यपदेशाच्च ॥ १४ ॥

प्रचुरानन्दत्वं तत्साधयितुं हेतुमपरमाचष्टे ।
अत्र हि तच्छब्दोऽसावानन्दं बुद्धिविषयमाचष्टे ॥ २५६ ॥
अत्रत्यहेतुशब्दो णिजर्थकर्तृत्ववाचको भवति ।
तद्धेतुशब्दलभ्यं ह्यानन्दयितृत्वमस्य निर्दिष्टम् ॥ २५७ ॥
एष ह्येवेत्यादावयमेवार्थः प्रपञ्चितो भवति ।
धनिकत्वापादयिता प्रचुरधनोऽसाविति प्रसिद्धो हि ॥ २५८ ॥
आनन्दयिता तद्वत्प्रचुरानन्दो भवत्यसावात्मा ।

मान्त्रवर्णिकमेव च गीयते ॥ १५ ॥

सत्यं ज्ञानमनन्तं ब्रह्मेत्यन्तेन मन्त्रवर्णेन ॥ २५९ ॥

प्रतिपादितं यदेतद्ब्रह्म गुहायामवस्थितं यदपि।
सत्यज्ञानान्मोक्षः प्रदर्शितः सर्वकामसमवाप्तिः॥ २३० ॥
तन्मन्त्रवर्णवर्णितमस्मिन्वाक्ये हि गीयते ब्रह्म।
तस्मादानन्दमयः पर एवाऽऽत्मेह दर्शितो भवति ॥ २६१ ॥
आनन्दमयो जीवः स्यादिति शङ्कां निराकरोतीह।

नेतरोऽनुपपत्तेः ॥ १६ ॥

यस्य जगत्कर्तृत्वं बहुभवनं चोत्तरत्र निर्दिष्टम् ॥ २६२ ॥
तदनुपपत्तेर्जीवो नाऽऽनन्दमयो हि किंतु परमात्मा।
योऽसावानन्दमयो रसस्वरूपः प्रदर्शितः श्लोके ॥ २६३ ॥

भेदव्यपदेशाच्च ॥ १७ ॥

रसरूपं तं लब्ध्वा स्वात्मानन्दं जगत्यसौ जीवः।
योऽसावानन्दमयो लब्धव्यः स्याद्रसस्वरूपोऽपि ॥ २६४ ॥
इत्यादिभेदजातं श्रुतिवचनेषूपदिश्यते यस्मात्।
तस्मादानन्दमयो लब्धव्यात्मा परोऽयमिति सिद्धम् ॥ २६५ ॥
ननु यद्यानन्दमयो जीवो न स्यात्तदा प्रधानं स्यात्।
भेदव्यपदेशो वा स्रष्टृत्वं वाऽपि तस्य संभवति ॥ २६६ ॥

कामाच्च नानुमानापेक्षा ॥ १८ ॥

नैषा प्रधानशङ्का कामयितृत्वान्निरस्यते सपदि।
अनुमानगम्यमेतत्प्रधानमिह वक्तुमनुचितं हि यतः ॥ २६७ ॥
सोऽकामयतेत्यस्मादानन्दमये हि दृश्यते कामः।
कामयितृत्वं ह्येतत्परात्मनि स्यान्न च प्रधानेऽपि ॥ २६८ ॥

अस्मिन्नस्य च तद्योगं शास्ति ॥ १९ ॥

अस्मिन्नानन्दमये यदाऽहमस्मीति बुध्यते लोकः।
तस्य च तदाऽऽत्मभावं तद्योगं शास्ति शास्त्रमभयमिति ॥ २६९ ॥
सूत्रार्थमन्यमेव हि वर्णयितुं जातकौतुको भगवान्।
पूर्वोक्ते सूत्रार्थे भूयो दोषान्प्रदर्शयत्यधुना ॥ २७० ॥

आनन्दमयोऽभ्यासात्।

अन्नमयादिषु पञ्चसु मयट्प्रवाहे समानरूपेऽपि।
अन्नमयवाक्यजाते विकारवाचित्वमत्र न तथेति ॥ २७१ ॥
प्राचुर्यवाचकत्वाश्रयणं मयटो न युक्तमाभाति।
यद्येतस्मिन्वाक्ये मयडन्तेनोपदिश्यते ब्रह्म ॥ २७२ ॥

प्रियशीर्षत्वादिकमिह यन्निर्दिष्टं हि धर्मजातं तत् ।
ब्रह्मणि सकलं वाच्यं तथा हि सूत्रान्तराद्विरोधः स्यात् ॥२७३॥
अध्याये च तृतीये गुणोपसंहारपादमाश्रित्य ।
प्रियशीर्षत्वादीनामप्राप्तिर्दर्शिता हि सूत्रकृता ॥ २७४ ॥
यद्यानन्दमयोऽसौ तत्पुच्छं ब्रह्म मुख्यमेव स्यात् ।
अनुचितमेकस्य स्यादवयवरूपत्वमवयवित्वं च ॥ २७५ ॥
ब्रह्मेह निर्विशेषं ह्युपक्रमे चोपसंहृतौ कथितम् ।
अत्र हि सविशेषं चेत्तथा विरोधश्च वाक्यवैरूप्यम् ॥ २७६ ॥
शारीरशब्द एष प्राणिमयप्रभृतिकोशपठितः सन् ।
उत्सृज्य कोशजातं कथं परं ब्रह्म बोधयेत्सद्यः ॥ २७७ ॥
आनन्दमयपदेन हि यदा परात्मा विवक्षितो भवति ।
अभ्यासादिति हेतुस्तत्रासिद्धः कथं हि साधयति ॥ २७८ ॥
आनन्दमयपदस्य ह्यभ्यासो नोपलभ्यते येन ।
नाऽऽनन्दमयपदार्थं निर्णेतुं शक्नुयादयं हेतुः ॥ २७९ ॥
अन्यपदस्याभ्यासे कथमन्यपदार्थनिर्णयो भवति ।
तस्मादस्मिन्पक्षे सूत्रार्थकथा कथं हि संघटते ॥ २८० ॥
प्राचुर्यवाचकोऽयं मयडिति पक्षोऽत्र नैव युक्तः स्यात् ।
प्राचुर्यं लोकेऽस्मिन्प्रतियोग्यल्पत्वसहकृतं येन ॥ २८१ ॥
विप्रमयो ग्रामोऽसावित्यादाविव यथोक्तवाक्येन ।
आनन्दप्राचुर्यं दुःखाल्पत्वाविलं प्रतीयेत ॥ २८२ ॥
तस्माद्विकारवचनो मयडिति युक्तं यथाऽन्नमयवाक्ये ।
मयडन्तप्रतिपाद्यो न हि परमात्मा परं तु कोशः स्यात् ॥ २८३ ॥
पुच्छपदसहचरं यद्ब्रह्मपदं तैत्तिरीयके दृष्टम् ।
आनन्दमयपदेन हि तद्वाक्यस्थं हि गृह्यते तदिह ॥ २८४ ॥
समुदायवाचकस्य हि तदेकदेशार्थकत्वमविरुद्धम् ।
ग्रामोऽयं जागर्तीत्यादावेवं हि दृश्यते लोके ॥ २८५ ॥
पुच्छपदसंनिकृष्टं ब्रह्मपदं किं परं प्रकाशयति ।
आनन्दमयावयवं किं वा वक्तीति संशये प्राप्ते ॥ २८६ ॥
पुच्छपदसंनिधानादवयववाचित्वमत्र युक्तमिति ।
आक्षेपस्य प्राप्ताविदमधिकरणं प्रदर्शितं सपदि ॥ २८७ ॥

ब्रह्मपदमत्र वाक्ये ब्रह्म परं स्वप्रधानमभिधत्ते ।
असन्नित्यस्मिञ्श्लोके यतोऽस्य दृष्टो हि केवलोऽभ्यासः ॥ २८८ ॥

नन्वत्र पुच्छवाक्ये परात्मनो ग्रहणमनुचितं भाति ।
यस्मादवयववाचकपुच्छपद संनिकृष्टमिह भाति ॥ २८९ ॥

विकारशब्दान्नेति चेन्न प्राचुर्यात् ।

विक्रियतेऽनेनेति हि विकारशब्दोऽयमवयवं वक्ति ।
अवयवलाक्षणिकं यत्पुच्छपदं ब्रह्मशब्दसंनिहितम् ॥ २९० ॥

सूत्रे विकारशब्दस्तस्मान्न स्वप्रधानपरमेतत् ।
इति शङ्काऽत्र न युक्ता प्राचुर्यार्थो हि पुच्छशब्दोऽसौ ॥ २९१ ॥

प्राचुर्यशब्दवाच्या प्रायापत्तिर्न चान्यदिह यस्मात् ।
मुख्यार्थस्यालाभे तत्प्रायं बुद्धिवृत्तिरनुसरति ॥ २९२ ॥

शिरआद्यवयवजाते निर्दिष्टे पुच्छशब्दनिर्देशः ।
मुख्यार्थस्यालाभात्तत्प्रायं ब्रह्म सम्यगनुसरति ॥ २९३ ॥

पादार्थिका प्रतिष्ठा परमयनं वक्ति नैव पुनरन्यत् ।
तस्मादस्मिन्वाक्ये ब्रह्मपदं स्वप्रधानपरमेव ॥ २९४ ॥

तद्धेतुव्यपदेशाच्च ।

आनन्दमयान्तस्य हि जगतो हेतुत्वमस्य निर्दिशति ।
सोऽकामयतेत्येतत्तस्मादेतत्परं समन्वेति ॥ २९५ ॥

मान्त्रवर्णिकमेव च गीयते ।

सत्यं ज्ञानमनन्तं ब्रह्मेत्यन्तेन मन्त्रभागेण ।
यद्ब्रह्म वर्णितं स्यात्तदत्र वाक्ये हि गीयते ब्रह्म ॥ २९६ ॥

नेतरोऽनुपपत्तेः ।

इह पुच्छवाक्यलभ्यो जीवः स्यादिति पुनर्न चाऽऽशङ्क्यम् ।
जीवे स्रष्टृत्वादिकमुत्तरवाक्यस्थमनुपपन्नं हि ॥ २९७ ॥

भेदव्यपदेशाच्च ।

इह पुच्छवाक्यदर्शित आत्मा लब्धव्यभावमुपयाति ।
यस्माद्रसरूपोऽसौ लब्धा जीवोऽत्र वर्णितः श्लोके ॥ २९८ ॥

लब्धव्यलब्धृभावाद्भेदो व्यपदिश्यते हि वाक्येऽस्मिन् ।
तस्माल्लब्धव्यात्मा परमात्मैवात्र दर्शितो भवति ॥ २९९ ॥

कामाश्च नानुमानापेक्षा ।
श्रुतिनिर्दिष्टो योऽसावानन्दमयः परं प्रबोधयति ।
पञ्चवाक्यस्थत्वा[दा]नन्द इवेति नैतदनुमानम् ॥ ३०० ॥
ब्रह्मपरत्वे साधकमनेकपूर्वोक्तदूषणग्रासात् ।
अस्मिन्नस्य च तद्योगं शास्ति ।
यः पुच्छवाक्यदर्शित आत्मा तस्मिन्कृतप्रबोधो यः ॥ ३०१ ॥
अथ सोऽभयमिति वाक्यं तस्य च तद्भावमेव बोधयति ।
पुच्छपदसंनिकृष्टं ब्रह्मपदं स्वप्रधानपरमेव ॥ ३०२ ॥
यदिदमुपक्रमवृष्टं ब्रह्म तदत्रोपसंहृतं भवति ।
तस्मादेतद्वाक्यं ब्रह्माणि परमे समन्वितं ज्ञेये ॥ ३०३ ॥
ननु यद्यानन्दमयः प्रियशीर्षत्वादिधर्मयोगेण ।
परमात्मा न भवति चेच्छान्दोग्येऽपि च तथा प्रसज्येत ॥ ३०४ ॥
तत्र च हिरण्मयोऽसौ पुरुषो यो दृश्यतेऽन्तरादित्ये ।
आप्रणखाच्च सुवर्णो हिरण्यकेशो हिरण्मयश्मश्रुः ॥ ३०५ ॥
आरक्ताम्बुजनेत्रोदितिनामा सर्वपापनिर्मुक्तः ।
इत्याधिदैविकोऽयं पुरुषो निर्दिष्ट एवमादिगुणः ॥ ३०६ ॥
आध्यात्मिकपुरुषोऽयं निर्दिष्टश्चान्तरक्षिणि ह्येवम् ।
ये च पराञ्चो लोका ये च स्युर्देवलोककामाश्च ॥ ३०७ ॥
तेषामीष्टे पुरुषो योऽसौ निर्दिश्यतेऽन्तरादित्ये ।
ये चार्वाञ्चो लोका ये च स्युर्मर्त्यलोककामाश्च ॥ ३०८ ॥
तेषामीष्टे पुरुषो योऽसौ निर्दिश्यतेऽन्तरक्षिणि च ।
मयडन्तशब्दयोगाद्विकारधर्मोपदेशबाहुल्यात् ॥ ३०९ ॥
प्रा[णा]दिकेश्वरत्वादिह निर्दिष्टः कथं परात्मा स्यात् ।
विद्याकर्मातिशयात्प्राप्तोत्कर्षो हि कश्चिदधिकारी ॥ ३१० ॥
किं वा योगी कश्चित्संसारी स्यादिहान्तरादित्ये ।
इति शङ्कामपनेतुं मुनिना रचितं तदेतदधिकरणम् ॥ ३११ ॥

अन्तस्तद्धर्मोपदेशात् ॥ २० ॥

परमेश्वर एवायं पुरुषो निर्दिश्यतेऽन्तरादित्ये ।
परमेश्वरधर्माणामिहोपदेशो हि दृश्यते यस्मात् ॥ ३१२ ॥
उदित उदेतीत्याद्या पापास्पृष्टत्वमामनन्तीह ।
नैवर्गित्यादीनि ह ऋगादिरूपत्वमामनन्तीह ॥ ३१३ ॥

सर्वात्मके परेशे तदेतदुक्तं समञ्जसं भवति ।
सर्वजगत्कर्तृत्वात्सर्वात्मकता हि तस्य युक्ततरा ॥ ३१४ ॥
परिमितमैश्वर्यं यद्गणितमुभयत्र तच्च न विरुद्धम् ।
अध्यात्मादिविभागापेक्षं तन्न स्वतः परे पुंसि ॥ ३१५ ॥
प्रख्यापयन्ति सर्वे वेदान्तास्तस्य निरुपमैश्वर्यम् ।
परमेश्वरवाक्येऽस्मिन्विकारधर्मैः कुतोऽस्य निर्देशः ॥ ३१६ ॥
इति शङ्का नेह स्याद्यतः परेशो ह्यकुण्ठितैश्वर्यः ।
भक्तानुकम्पयैव हि नानारूपाणि मायया सृजति ॥ ३१७ ॥
परमात्मपरमपीदं वाक्यं सविशेषपरतया योज्यम् ।
यत एतस्मिन्वाक्ये ह्युद्गीथोपासना विनिर्दिष्टा ॥ ३१८ ॥
ऋक्सामगेयताऽपि हि सर्वेशे सर्वकारणे युक्ता ।
लौकिकगानेष्वपि यैः परमेशो गीयते हि तस्मात्ते ॥ ३१९ ॥
धनसनयो लोकेऽस्मिन्प्रभूतसुखसंपदो हि विचरन्ति ।

भेदव्यपदेशाच्चान्यः ॥ २१ ॥

यो मण्डलाभिमानी देवोऽयं पुरुष एव निर्दिष्टः ॥ ३२० ॥
इति खलु नैवाऽऽशङ्क्यं यतस्तयोर्भेद एव निर्दिष्टः ।
आदित्यादन्तर इति वाक्यं ह्यादित्यभेदमुपदिशति ॥ ३२१ ॥
तस्मादेतद्वाक्यं हिरण्मयत्वादिगुणगणोपेते ।
सर्वेश्वरे परात्मन्यन्तर्यामिणि समन्वितं भवति ॥ ३२२ ॥
भवतु परमेश्वरोऽसावुपदिष्टो योऽयमन्तरादित्ये ।
उद्गीथवाक्यदर्शित आकाशोऽयं कथं परात्मा स्यात् ३२३ ॥
श्रुतिलिङ्गवाक्यसूत्रे श्रुतिर्हि लिङ्गाद्बलीयसी दृष्टा ।
निरपेक्षरूढशब्दः श्रुतिरिति कथयन्ति जैमिनिप्रमुखाः ॥ ३२४ ॥
तस्माद्भूताकाशः श्रुत्या ह्याकाशशब्दलभ्यः स्यात् ।
जन्मादिकारणत्वं यदत्र वाक्ये प्रदर्शितं तदपि ॥ ३२५ ॥
भूताकाशेऽपि स्यात्क्रमेण वाय्वादिकारणत्वेन ।
इत्याक्षेपं निरसितुमिदमाधिकरणं प्रदर्शितं भवति ॥ ३२६ ॥

आकाशस्तल्लिङ्गात् ॥ २२ ॥

जैवलिशालावत्यावुद्गीथविचारलब्धकुतुकौ हि ।
शालावत्येनोक्तं सर्गादिकमन्तवत्त्वदोषेण ॥ ३२७ ॥

उद्गीथस्य परायणमेतन्नेति ह्युदस्य तत्पक्षम् ।
लोकस्यास्य च का गतिरिति शालावत्यवचनमनुसृत्य ॥ ३२८ ॥
आकाश इतीत्याद्यं जैवलिना हि प्रदर्शितं भवति ।
तद्वाक्ये चाऽऽनन्त्यं प्रदर्शितं यत्परोवरीयस्त्वम् ॥ ३२९ ॥
उपसंहृतमाकाशे स एव इत्यादिवाक्यशेषेण ।
दर्शितमुपक्रमे यज्जन्मस्थितिनाशकारणत्वं हि ॥ ३३० ॥
तादिदं हि कारणत्वं भूताकाशेऽपि वर्णितं हि पुरा ।
वाय्वादिकारणत्वं क्रमेण तत्रेदमनुपपन्नं स्यात् ॥ ३३१ ॥
सर्वाणि ह वेत्यादौ भूतविशेषणपदं हि सर्वपदम् ।
आकाशादेवेति ह्यवधारणमनुपपन्नमेव स्यात् ॥ ३३२ ॥
भूताकाशपरत्वे श्रुतिर्हि लिङ्गाद्बलीयसीत्युक्तम् ।
बहुलतरलिङ्गयोगाच्छ्रुतेर्बलीयस्त्वमपहृतं भवति ॥ ३३३ ॥
समुदायार्थे चैकं त्यजेदिति न्याय एवमुपदिशति ।
श्रुतिबलसमाश्रयेऽपि हि न विरोधः कश्चिदत्र संभवति॥ ३३४ ॥
ज्यायस्त्वमिह यदुक्तं परायणत्वं च दर्शितं यदपि ।
आकाशो हीत्याद्यैरात्मनि परमे समञ्जसं भवति ॥ ३३५ ॥
निर्वहितेत्यन्तेऽस्मिन्ब्रह्मण्याकाशशब्द उदितः ।
ब्रह्मणि तत्पर्यायो व्योमन्नित्यादिवाक्यनिर्दिष्टः ॥ ३३६ ॥
उद्गीथवाक्यमेतत्परोवरीयस्त्वगुणगणोपेतम् ।
आकाशशब्दवाच्ये ततः परात्मनि समन्वितं भवति ॥ ३३७ ॥

## अत एव प्राणः ॥ २३ ॥

प्रस्तावदेवतायाः स्वरूपविज्ञानलब्धगुरुभावः ।
चाक्रायणमुनिरधुना प्रस्तोत्रादीन्प्रबोधयत्यस्मिन् ॥ ३३८ ॥
प्रस्तावदेवतायाः स्वरूपविज्ञानरहित एव यदि ।
प्रस्तोता प्रस्तोष्यति मूर्धा ते पतनमेष्यतीत्युक्त्वा ॥ ३३९ ॥
प्रस्तोत्रादिप्रश्नं कतमा सा देवतेति चाऽऽकर्ण्य ।
प्रस्तावदेवतायाः स्वरूपविज्ञानमुपदिदेशेत्थम् ॥ ३४० ॥
नैषेत्यन्तैर्वाक्यैः प्राणः प्रस्तावदेवतेत्युक्तः ।
वायुविकारः किंवा परमात्मा स इति संशयप्राप्तौ ॥ ३४१ ॥
वायुविकारो नायं किंतु परात्मा यदत्र तल्लिङ्गम् ।
इत्येतदभिनिगदितुं ह्ययमतिदेशः प्रदर्शितो मुनिना ॥ ३४२ ॥

इह सकलभूतराशेः संवेशश्चोद्गमश्च निर्दिष्टः ।
परमेश्वरपरतायां तदेतदखिलं समञ्जसं भवति ॥ ३४३ ॥
श्रुतिलिङ्गवाक्यदर्शितविरोधशङ्काऽपि परिहृता पूर्वम् ।
स्वापप्रबोधयोः किल संवेशनवादिवाक्यमखिलमपि ॥ ३४४ ॥
वायुविकारे प्राणे समञ्जसं स्यादितीह नाऽऽशङ्क्यम् ।
वागादीनामेव हि संवेशोद्गमनवादिवाक्यमिह ॥ ३४५ ॥
वायुविकारे प्राणे समन्वितं नैव सर्वभूतानाम् ।
प्रस्तावावाक्यमेतत्प्राणे ब्रह्मणि समन्वितं भवति ॥ ३४६ ॥
ब्रह्मपरः प्राणोऽयं प्राणस्य प्राणमिति च वाक्येऽपि ।
अन्यत्रापि च दृष्टो वाक्येऽपि प्राणबन्धनं हीति ॥ ३४७ ॥
प्रस्तावदेवतात्मक एष प्राणो हि भवति परमात्मा ।
वायुविकारो नासावित्युक्तं सकलमेतदनवद्यम् ॥ ३४८ ॥
भवतु यदिहोपदिष्टं प्राणाकाशादिवाक्यमखिलमपि ।
तल्लिङ्गसमवधानाद्ब्रह्मपरं तद्धि भवति युक्ततरम् ॥ ३४९ ॥
यदतः पर इत्याद्यैरार्यैर्यच्चोपदर्शितं ज्योतिः ।
विश्वस्मादुपरितनेष्वनूक्तमेषूत्तमेषु भातीति ॥ ३५० ॥
अन्तःपुरुषेऽपि तथा तदिदं ज्योतिः प्रदर्शितं तत्किम् ।
भौतिकमथ वा ब्रह्मेत्येतन्निर्णेतुमेतदधिकरणम् ॥ ३५१ ॥

## ज्योतिश्चरणाभिधानात् ॥ २४ ॥

ज्योतिरिह ब्रह्म स्यान्न भौतिकं किमपि शङ्कितुं शक्यम् ।
पादोऽस्येत्येतस्मिन्भूतादिपदानि दर्शितानि यतः ॥ ३५२ ॥
नन्विह पदाभिधानं ज्योतिर्वाक्ये न दृश्यते किमपि ।
तत्कथमिह हेतुः स्यात्तेन कथं ब्रह्मताऽस्य सिद्धा स्यात् ॥३५३॥
इति नात्र शङ्कनीयं यत इह वाक्ये हि यत्पदं दृष्टम् ।
बुद्धिस्थवाचकं तद्यत एतत्सर्वनामसंज्ञं स्यात् ॥ ३५४ ॥
पूर्वत्र चोपदिष्टे ब्रह्मणि यच्छब्दतः परामृष्टे ।
तत्रोपदर्शितं यत्पादचतुष्टयमिहोपदिष्टं स्यात् ॥ ३५५ ॥
नन्विह दीप्यत इति या श्रुतिरिह कार्ये समञ्जसा भवति ।
तद्यदिदमन्तरित्यपि जाठरवैश्वानरं प्रबोधयति ॥ ३५६ ॥
तस्यैषा दृष्टिः स्यात्तस्यैषा श्रुतिरिति ब्रुवाणा या ।
इदं श्रुतमित्येषा श्रुतिरस्योपासनां विधापयति ॥ ३५७ ॥

४

यच्चैतद्वेदेवं चक्षुष्यश्च श्रुतश्च भवतीति ।
अल्पफलश्रुतिरेषा कार्ये ज्योतिषि समञ्जसा भवति ॥ ३५८ ॥
यदतः पर इत्याद्यैरुपदिष्टं ज्योतिरत्र कार्यमिति ।
नैषा शङ्का यस्माद्ब्रह्मपरत्वे तदेतदनवद्यम् ॥ ३५९ ॥
दीप्यत इति निर्दिष्टा दीप्तिरथेत्यादिवाक्यदृष्टा या ।
नित्यावबोधरूपा नैषा ब्रह्मणि समञ्जसा भवति ॥ ३६० ॥
दृष्टत्वादिकमखिलं प्रतीकमूलं न हि स्वतोऽस्य स्यात् ।
अल्पफलश्रुतिरेषा ब्रह्मणि सर्वार्थदेति युक्ततमा ॥ ३६१ ॥
तस्माज्ज्योतिःशब्दे ब्रह्मेत्येतत्समञ्जसं भवति ।

छन्दोभिधानान्नेति चेन्न तथा चेतोर्प-
णनिगदात्तथा हि दर्शनम् ॥ २५ ॥

नन्वत्र पूर्ववाक्ये गायत्रीछन्द एव निर्दिष्टम् ॥ ३६२ ॥
नैषा चतुष्पदेति हि चतुष्पदत्वं च तस्य निर्दिष्टम् ।
न च तज्ज्योतिःशब्दे ब्रह्मपरत्वप्रसाधकं भवति ॥ ३६३ ॥
इति चेन्न पूर्ववाक्ये छन्दोमात्रं हि नैतदुपदिष्टम् ।
छन्दोनुगते ब्रह्मणि चित्तसमाधानमेव निर्दिष्टम् ॥ ३६४ ॥
उक्थानुगते ब्रह्मणि चित्तसमाधानवचनमन्यत्र ।
एतमिति मन्त्रभागे तदिदं दृष्टं हि तद्वदत्रापि ॥ ३६५ ॥
छन्दोभिधायकानि हि वाक्यान्यन्यानि यानि दृश्यन्त ।
तान्यप्युक्तार्थानि हि तस्मान्नेहास्ति काचिदाशङ्का ॥ ३६६ ॥

भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥ २६ ॥

भूतपृथिवीशरीराण्यपि हृदयं चेति सम्यगुपदिश्य ।
नैषा चतुष्पदेति हि निर्दिष्टा साऽपि दर्शितार्थैव ॥ ३६७ ॥
ब्रह्मेह नोपदिष्टं यद्यक्षरसंनिवेशरूपायाः ।
कथमस्या गायत्र्या भूतादिपदानि संभवन्तीह ॥ ३६८ ॥

उपदेशभेदान्नेति चेन्नोभयस्मि-
न्नप्यविरोधात् ॥ २७ ॥

नन्वत्र पूर्ववाक्ये चतुष्पदं ब्रह्म यच्च निर्दिष्टम् ।
उपदेशभेददृष्टं ज्योतिर्वाक्ये कथं परामृष्टम् ॥ ३६९ ॥
इति शङ्काऽत्र न कार्या विभक्तिभेदेऽपि भवति चार्थैक्यम् ।
सप्तम्यन्ते वाक्ये पञ्चम्यन्तेऽपि कोऽपि न विरोधः ॥ ३७० ॥

नन्वत्रोद्गीथादिप्रकरणपठितानि यानि वाक्यानि ।
तल्लिङ्गसमवधानाद्ब्रह्मपरत्वेन वर्णितानि परम् ॥ ३७१ ॥
इह कौषीतकिवाक्ये प्राणोऽस्मीत्यादिवाक्यजालेन ।
प्राणो योऽसावुक्तः स किं परं ब्रह्म पञ्चवृत्तिर्वा ॥ ३७२ ॥
इह चोभयलिङ्गानि हि दृश्यन्ते ह्युत्तरत्र भूयांसि ।
तस्माच्छ्रुत्यनुसारात्प्राणोऽयं पञ्चवृत्तिरेव स्यात् ॥ ३७३ ॥
इत्याक्षेपं सकलं निरस्य बहुलेन युक्तिजालेन ।
प्राणोऽसौ निर्दिष्टो ब्रह्मैवेति प्रदर्श्यते सपदि ॥ ३७४ ॥

प्राणस्तथाऽनुगमात् ॥ २८ ॥

यः कौषीतकिवाक्ये प्राणो निर्दिष्ट एष परमात्मा ।
पौर्वापर्यविमर्शे पदानि सकलानि तत्पराणि यतः ॥ ३७५ ॥
हिततमपदनिर्दिष्टः परमात्मा स्यान्न वायुविकृतिरसौ ।
अमृतादिशब्दयोगः परमात्मन्येव दृश्यते शास्त्रे ॥ ३७६ ॥
आनन्दोऽजर इति वा ब्रह्मणि परमे समञ्जसो भवति ।
भूतप्रज्ञामात्राद्यर्पणमपि परमकारणे युक्तम् ॥ ३७७ ॥
ज्ञानक्रियात्मनोरिह विभिन्नशब्दस्वभावयोर्यदपि ।
प्राणप्रज्ञोपाध्योरेकीकरणं परात्मलिङ्गं स्यात् ॥ ३७८ ॥
इदमित्याद्युपदिष्टं देहे स्थानं परिग्रहाद्यखिलम् ।
परमात्मन्युपपन्नं कार्यं सकलं यतस्तदायत्तम् ॥ ३७९ ॥

न वक्तुरात्मोपदेशादिति चेदध्यात्मसं-
बन्धभूमा ह्यस्मिन् ॥ २९ ॥

नन्वत्र देवतात्मा वक्ता हीन्द्रः प्रतर्दनाय किल ।
त्वाष्ट्रवधसाहसात्मकविग्रहसंबन्धिधर्मनिवहेन ॥ ३८० ॥
स्वात्मोत्कर्षं प्रथयन्योऽयमहंकारवादमाश्रित्य ।
प्राणोऽस्मि मामुपास्स्वेत्याद्यैरात्मानमुपदिदेश स यम् ॥ ३८१ ॥
स च कथमिह परमात्मा योऽसौ प्राणः स वक्तुरात्मैव ।
इत्याक्षेपः सकलो निरस्यते सपदि सूत्रशेषेण ॥ ३८२ ॥
एषा शङ्का कार्या न वक्तुरात्मोपदेशयोगेन ।
अध्यात्मसंनिकर्षः प्राचुर्येणोपलभ्यते यस्मात् ॥ ३८३ ॥
ननु वक्तारं विद्यादिति वाऽऽद्यैर्दर्शितोऽन्तरात्मैव ।
आनन्दामृतरूपः प्राणो निर्दिश्यते हि वाक्येऽस्मिन् ॥ ३८४ ॥

स्वात्मवधसाहसोक्तिर्न हि विज्ञेयस्तुतिं प्रसञ्जयति ।
न ह वै तस्येत्याद्यैर्विज्ञानस्तुतिपरा हि सा भवति ॥ ३८५ ॥
यदि परमात्मैव प्राणोऽस्मीत्यादिवाक्यनिर्दिष्टः ।
स च कथमस्मिन्वाक्ये निर्दिष्टो वक्तुरात्मभावेन ॥ ३८६ ॥

शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥ ३० ॥

शास्त्रोपदिष्टलक्षणमपरोक्षीकृत्य तत्परं ब्रह्म ।
इन्द्रस्तमुपदिदेश हि मुनिवर्यो वामदेवसंज्ञ इव ॥ ३८७ ॥
मुनिरेष वामदेवः प्रभूतविज्ञानसाधनोपचितः ।
गर्भस्थ एव बुबुधे ह्यहमित्यादिकमवाप मन्त्रमपि ॥ ३८८ ॥

जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॥ ३१ ॥

वक्तारं विद्यादिति निर्दिष्टं जीवलिङ्गमिह वाक्ये ।
परिगृह्योत्थापयतीत्यपि मुख्यप्राणलिङ्गमुपदिष्टम् ॥ ३८९ ॥
तस्माज्जीवो वा स्यान्मुख्यप्राणोऽथ वाऽयमुपदिष्टः ।
न हि परमात्मा प्राणः स्यादिति शङ्का न चात्र कर्तव्या ॥३९०॥
यत एतस्मिन्वाक्ये भूयो दृष्टं परात्मलिङ्गमपि ।
तस्मात्त्रिविधाल्लिङ्गात्त्रिविधमुपासनमिह प्रसज्येत ॥ ३९१ ॥
यज्जीवलिङ्गमुक्तं मुख्यप्राणस्य यदपि लिङ्गं वा ।
तदुभयमपि परात्मनि समञ्जसं स्यादितीरितं पूर्वम् ॥ ३९२ ॥
प्राणस्यास्य च वृत्तिर्ब्रह्मणि पूर्वं प्रदर्शिता भवति ।
तल्लिङ्गसमवधानात्प्राणोऽयमिहापि भवति परमात्मा ॥ ३९३ ॥
अथ वा त्रिविधैर्धर्मैर्ब्रह्मोपासनमिहाऽऽश्रितं भवति ।
तेन न दोषाशङ्का न चात्र काचिद्विरोधशङ्काऽपि ॥ ३९४ ॥
तस्मादिहोपदिष्टं कौषीतकिवाक्यमेतदखिलमपि ।
ब्रह्मण्युपास्यरूपे विज्ञेये वा समन्वितं भवति ॥ ३९५ ॥
शारीरकमीमांसा मुनिना व्यासेन विरचिता सेयम् ।
चतुरध्यायी तस्यां प्रथमो योऽसौ समन्वयाध्यायः ॥ ३९६ ॥
तत्र प्रथमे पादे सूत्रार्थो यश्च भाष्यकारोक्तः ।
आर्यावृत्तैरमलैः प्रकाशितो जयतु सोऽयमनवद्यः ॥ ३९७ ॥

इति प्रथमाध्यायस्य प्रथमः पादः ॥ १ ॥

---

## अथ द्वितीयपादप्रारम्भः ।

प्रथमे पादे जगतो जन्मस्थित्यादिकारणं ब्रह्म ।
वेदान्तवाक्यनिचयैः स्फुटतरलिङ्गैः प्रदर्शितं भूयः ॥ १ ॥
व्यापित्वं नित्यत्वं सर्वज्ञत्वं च दर्शितं तस्य ।
अर्थान्तररूढानामाकाशप्राणमुख्यशब्दानाम् ॥ २ ॥
आब्रह्मलिङ्गबाधनपुरःसरं ब्रह्मलिङ्गयोगेन ।
न्यायोपेतैर्वाक्यैर्ब्रह्मपरत्वं प्रसाधितं भवति ॥ ३ ॥
इह च द्वितीयपादे ह्यस्पष्टब्रह्मलिङ्गवाक्यौघैः ।
यच्चोपास्यं ब्रह्म प्रदर्शितं तदिति वर्ण्यते सपादि ॥ ४ ॥
छान्दोग्ये च तृतीये ज्योतिर्विद्याप्रधानवाक्यान्ते ।
सर्वं खल्वित्याद्यं मनोमयत्वादिवाक्यमध्यमपि ॥ ५ ॥
शाण्डिल्यपदकृतान्तं यदेतदुपदिष्टमत्र तत्किं स्यात् ।
ब्रह्मप्रधानमथ वा जीवपरं वेति संशये प्राप्ते ॥ ६ ॥
शाण्डिल्यवाक्यमेतत्पौर्वापर्येण सम्यगालोच्य ।
जीवाशङ्कां निरसितुमिदमधिकरणं चकार मुनिवर्यः ॥ ७ ॥

### सर्वत्र प्रसिद्धोपदेशात् ॥ १ ॥

सकलनिगमान्तवाक्यप्रकाशितं यच्च जगदुपादानम् ।
तदिहोपक्रमवाक्ये ह्युपदिष्टमतो न जीवशङ्काऽत्र ॥ ८ ॥
नन्विह सर्वं खल्वित्युपासनाविषयबोधकं न भवेत् ।
शान्त उपासीतेति हि विहितशमारातिरागनिर्मुक्त्यै ॥ ९ ॥
सकलस्यैकात्मकतां प्रबोध्य रागादिनिरसनं कुरुते ।
स क्रतुमितिवाक्येन हि विहितक्रतुविषय एव जीवः स्यात् ॥१०॥
तस्य च मनोमयत्वं प्राणशरीरत्वमाञ्जसं भवति ।
ब्रह्मात्मताविबोधकलिङ्गं नात्रोपलभ्यते किमपि ॥ ११ ॥
तस्मादेतद्वाक्यं जीवोपास्तिप्रधानमाभाति ।
इति खलु नैवाऽऽशङ्क्यं यदत्र वाक्ये न जीववार्ताऽपि ॥ १२ ॥
तस्मिन्निितिवाक्यस्थिततच्छब्देनैकवाक्यतापन्नम् ।
स्योनमिति वाक्यजातं यथा पुरोडाशधर्मिणं ब्रूते ॥ १३ ॥
स क्रतुमितिवाक्यस्थे क्रतौ हि नियमेन विषयसाकाङ्क्षे ।
विषयं बोधयितुमिदं ब्रह्मेत्यादिकमुदाहृतं भवति ॥ १४ ॥

तस्य विशेषणजाले मनोमयप्रभृतिवाक्यजालेन ।
भूयः प्रदर्श्यमाने जीवाशङ्का कथं प्रवर्तेत ॥ १५ ॥
यद्यपि लिङ्गविगानाद्विशेषणार्थत्वमसुलभं भाति ।
लिङ्गस्य विपरिणामे तथाऽपि नैवात्र बाधकं किमपि ॥ १६ ॥
ब्रह्मणि मनोमयत्वं प्राणशरीरत्वमनुपपन्नमिति ।
नैवाऽऽशङ्का कार्या ब्रह्मण्यखिलात्मके हि तद्युक्तम् ॥ १७ ॥
सामानाधिकरण्यं विवक्षितं ब्रह्मणा यदा कार्ये ।
बाधायां तच्च स्यादत्र हि कार्येण कारणेन स्यात् ॥ १८ ॥
तेन च सर्वात्मकता ब्रह्मणि परमे प्रदर्शिता भवति ।
इदमिति पदमप्यत्र ब्रह्मविशेषणपरं हि कर्तव्यम् ॥ १९ ॥
यदिदं ब्रह्मपरं स्यात्सर्वं खलु तदिति योजना कार्या ।
तेन च सर्वात्मकता ब्रह्मणि परमे समर्थिता भवति ॥ २० ॥
ब्रह्मण्युपास्यरूपे सर्वोत्कर्षश्च वर्णितः प्रायः ।
तज्जत्वादिकमखिलं यदुत्तरस्मिन्प्रदर्शितं तदपि ॥ २१ ॥
तस्य च सर्वात्मकताप्रतिपत्त्यर्थं च शमविधानार्थम् ।
तस्माच्छ्रुतिशतगेये सर्वात्मनि सकलजगदुपादाने ॥ २२ ॥
ब्रह्मणि मनोमयत्वं प्राणशरीरत्वमेतदुपपन्नम् ।

विवक्षितगुणोपपत्तेश्च ॥ २ ॥

अत्र च विधिविहितायामुपासनायामपेक्षिता ये स्युः ॥ २३ ॥
ते सत्यकामताद्या ह्युपपन्नाः स्युर्गुणाः परे पुंसि ।
अत्र च विवक्षितत्वं ह्युपासनायामपेक्षणीयत्वम् ॥ २४ ॥
इह सत्यकामतामुखगुणजाते भवति तच्च निरवद्यम् ।

अनुपपत्तेस्तु न शारीरः ॥ ३ ॥

योऽयं शारीरः स्यात्स चोक्तगुणजातभाजनं न भवेत् ॥ २५ ॥
यत एतस्मिन्वाक्ये ह्यवाक्यवादरत इतीरितं भवति ।
देहेन्द्रियादियोगिनि शारीरे कथमवाक्यतावार्ता ॥ २६ ॥
नियतविषयाभिलाषिण्यनादरत्वं च तत्र न हि भवति ।

कर्मकर्तृव्यपदेशाच्च ॥ ४ ॥

किं चात्र वाक्यशेषे मनोमयत्वादिगुणगणोपेतः ॥ २७ ॥
एतमिति कर्मभावादुपदिष्टोऽयं परः पुमानेव ।
अभिसंभवितास्मीति च शारीरः कर्तृभावमापन्नः ॥ २८ ॥

निर्दिष्टो यः स कथं ह्युपासनाविषयभावमुपगच्छेत् ।

शब्दविशेषात् ॥ ५ ॥

एवमयमन्तरात्मन्निति सप्तम्यन्तशब्दनिर्देशः ॥ २९ ॥
शारीरोऽसौ कर्ता ह्युपास्यरूपो हिरण्मयः पुरुषः ।
प्रथमान्तशब्दबोध्यः स कथं शारीरभावमुपगच्छेत् ॥ ३० ॥
देहेन्द्रियवशवर्ती शारीरो न च परः पुमान्भवति ।

स्मृतेश्च ॥ ६ ॥

स्मृतिरेषा भागवती शारीरपरात्मभेदमाचष्टे ॥ ३१ ॥
शारीरं च नियम्यं नियामकं हृदयदेशमीशमपि ।

अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न
निचाय्यत्वादेवं व्योमवच्च ॥ ७ ॥

नन्विह वाक्ये योऽसावुपास्यरूपः कथं स परमात्मा ॥ ३२ ॥
अर्भकमस्याऽऽयतनं निर्दिष्टं स्यात्तदाऽर्भकत्वमपि ।
यस्माद्धृदि निर्दिष्टः श्यामाकादपि च दर्शितोऽणीयान् ॥ ३३ ॥
स च कथमिह परमात्मा योऽसौ व्यापीति दर्शितः शास्त्रे ।
इति चेन्नायं दोषो निचाय्यभावेन दर्शितो योऽसौ ॥ ३४ ॥
ब्रह्मण्यपरिच्छिन्ने मनो विधातुं न शक्नुयाज्जीवः ।
इति करुणापरतन्त्रा श्रुतिः परिच्छेदमस्य निर्दिशति ॥ ३५ ॥
व्योम्न इवास्यापि स्यादुपाधियोगादयं परिच्छेदः ।

संभोगप्राप्तिरिति चेन्न वैशेष्यात् ॥ ८ ॥

शारीरः परमात्मा यद्येतौ हृदयदेशसंनिहितौ ॥ ३६ ॥
शारीरस्य च भोगे कथं परात्मा न भोगमाप्नोति ।
इति शङ्कामपनेतुं प्रवर्तते सपदि सूत्रशेषोऽयम् ॥ ३७ ॥
धर्मादिसाधनोऽन्यस्तद्विपरीतश्च भवति परमात्मा ।
अपहतपाप्मा योऽसौ स धर्मफलभोगमातनोति कथम् ॥ ३८ ॥
धर्मादिसाधनस्य हि शारीरस्योक्तभोगसंबन्धः ।
आविद्यकदेहादावभिमानेनास्य भोगसंबन्धः ॥ ३९ ॥
सर्वज्ञस्य परस्य हि न चास्त्यविद्या न भोगवार्ता वा ।
अद्वैतवादलोपो नैवाऽऽशङ्क्योऽत्र भेदनिर्देशात् ॥ ४० ॥

भेद उपाधिकृतोऽसावुक्तश्चोपासनाङ्गभावेन ।
तस्मादेतत्सकलं शाण्डिल्यमुनीन्द्रदर्शितं वाक्यम् ॥ ४१ ॥
ब्रह्मण्युपास्यरूपे समन्वितं ह्यत्र कोऽपि न विरोधः ।
ननु यदि परमात्माऽसावपहतपाप्मा ततो न भोक्ता स्यात् ॥४२॥
कठवल्लीवाक्येऽस्मिन्भोक्ता जीवो भवेन्न परमात्मा ।
यस्य ब्रह्म क्षत्रं चोभयमोदन इतीह निर्दिष्टम् ॥ ४३ ॥
उपसेचनमिह मृत्युः प्रदर्शितस्तेन चात्तृता लब्धा ।
आत्मा चाग्निर्वाह्याज्जीवो वा भवति नैव परमात्मा ॥ ४४ ॥
कठवल्ल्यामेतस्या यतोऽग्निजीवौ प्रदर्शितौ पूर्वम् ।
अन्नादोऽग्निरयं स्यादिति श्रुतिश्चात्तृता प्रसञ्जयति ॥ ४५ ॥
स्वाद्वत्तीति श्रुतिरपि जीवे तामत्तृता प्रसञ्जयति ।
यदि च प्रकरणभेदान्नाग्निः प्रतिगृह्यतेऽत्तृभावेन ॥ ४६ ॥
तर्ह्यत्ता जीवः स्यान्न तु परमात्मा यतः स नाश्नाति ।
इत्याक्षेपप्राप्तावत्तृपदे गौणवृत्तिमाश्रित्य ॥ ४७ ॥
निरसितुमिममाक्षेपं चकार मुनिवर्य एतदधिकरणम् ।

अत्ता चराचरग्रहणात् ॥ ९ ॥

तत्र चराचरमेतन्मृत्युर्यस्येतिवाक्यनिर्दिष्टम् ॥ ४८ ॥
तस्यात्ता कथमन्यस्तस्मादत्ता परः पुमानेव ।
संहारकत्वयोगादत्तृत्वं तस्य गौणमेव स्यात् ॥ ४९ ॥
कर्मफलभोक्तृतैव हि जीवे दृष्टा न सा परे पुंसि ।

प्रकरणाच्च ॥ १० ॥

प्रकरणमपि यच्चैतत्परात्मनो दृश्यते न चान्यस्य ॥ ५० ॥
प्रश्नप्रतिवचनाभ्यां परमात्मैवात्र दर्शितो येन ।
इत्था को वेदेति हि दुर्विज्ञेयत्वमस्य निर्दिष्टम् ॥ ५१ ॥
परमात्मलिङ्गमेतत्तस्मादत्ता परः पुमानेव ।
भवतु परात्मैवायं यस्य ब्रह्मेतिवाक्यनिर्दिष्टः ॥ ५२ ॥
ऋतमित्युत्तरवाक्ये गुहाहितत्वेन दर्शितौ तौ कौ ।
ऋतपौ गुहां प्रविष्टौ छायातपवद्विलक्षणावुक्तौ ॥ ५३ ॥
किमु तत्र बुद्धिजीवौ जीवपरेशाववितीह संदेहः ।
तौ यदि च बुद्धिजीवौ बुद्ध्या जीवः पृथङ्निरुक्तः स्यात् ॥५४॥

यदि वा जीवपरेशौ जीवादीशः पृथग्गृहीतः स्यात् ।
यदि जीवेशौ स्यातां गुहाहितत्वं तयोरयुक्तं स्यात् ॥ ५५ ॥
तस्मादिह निर्दिष्टावुक्तविशेषौ हि बुद्धिजीवौ तौ ।
इत्याक्षेपं निरसितुमेतद्वाक्यार्थनिर्णयार्थमपि ॥ ५ ॥
भगवान्मुनिवर्योऽसाविदमधिकरणं चकार नु गृहीत्यै ।

गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ ११ ॥

अत्र च गुहां प्रविष्टावात्मानौ तौ च जीवपरमेशौ ॥ ५७ ॥
निर्दिश्यते हि लोके संख्या तुल्यस्वभावयोरुभयोः ।
अस्य द्वैतीयिको गौरन्वेष्टव्य एवमभिधाने ॥ ५८ ॥
गौरेव हि द्वितीयस्तत्रान्विष्येत नाश्व इतरो वा ।
ऋतुपानाल्लिङ्गादिह जीवे निर्धारिते हि तस्य यदि ॥ ५९ ॥
अन्विष्यते द्वितीयश्चेतनभावादसौ परात्मा स्यात् ।
अत्र पिबन्ताविति या श्रुतिर्हि पानं प्रदर्शयत्युभयोः ॥ ६० ॥
तच्च कथं परमात्मनि परितृप्ते स्यादितीह नाऽऽशङ्क्यम् ।
जीवस्तावत्पिबति हि परमात्माऽसौ हि तं च पाययति ॥ ६१ ॥
पाचयिता पक्तेति हि दृष्टा लोकप्रसिद्धिरिह तद्वत् ।
नन्विह जीवपरेशौ गृह्येते चेत्कथं गुहावेशः ॥ ६२ ॥
सर्वगते परमात्मनि देशपरिच्छेद एष यदयुक्तम् ।
इति नाऽऽशङ्क्यं योऽसौ सर्वगतो यदि तदैकदेशगतः ॥ ६३ ॥
सकलवसुधाधिनाथो रामः साकेतनगरनाथ इव ।
श्रुतिसिद्धो न्यायः स्याच्छ्रुत्यनुकूलश्रुतिर्न चेहास्ति ॥ ६४ ॥
नेयं शङ्का श्रुतिषु हि गुहाहितत्वं परात्मनो दृष्टम् ।
श्रुतिवाक्ये निर्दिष्टं गुहाहितं गह्वरेष्ठमित्यादौ ॥ ६५ ॥
यो वेदेति च वाक्येऽप्यन्विच्छ गुहां प्रविष्टमित्यादौ ।
छायातपसाम्यं यद्विलक्षणत्वेन तत्तयोर्युक्तम् ॥ ६६ ॥
जीवोऽयं संसारी तद्विपरीतो यतो हि परमात्मा ।
तस्मादृतं पिबन्तौ गुहां प्रविष्टौ च दर्शितावेतौ ॥ ६७ ॥
छायातपसदृशावपि जीवपरेशौ न बुद्धिजीवौ हि ।

विशेषणाच्च ॥ १२ ॥

यदपि विशेषणमेतद्वाक्ये निर्दिष्टमेतयोर्भवति ॥ ६८ ॥

रथिनं विद्धीत्यस्मिन्वाक्ये जीवो रथी विनिर्दिष्टः।
विज्ञानसारथिः स्याद्रथी यदाऽयं स पारमाप्नोति ॥ ६९ ॥
गमिकर्तृकर्मभावावित्युपदिष्टौ हि जीवपरमेशौ।
दुर्दर्शमिति च मन्त्रे मनधातोः कर्तृकर्मभावेन ॥ ७० ॥
तावेतौ निर्दिष्टौ जीवपरेशौ न चेतरौ भवतः।
इहलोकसिद्धमेनं जीवं निर्दिश्य तदनुवादेन ॥ ७१ ॥
तस्माद्विलक्षणोऽसौ परमात्माऽत्र प्रदर्श्यते वाक्ये।
यो हि सुपर्णा सयुजेत्येवं दृष्टो हि मुण्डके मन्त्रः ॥ ७२ ॥
कठवल्लीवाक्यगतैर्मन्त्रैरुक्तैः समार्थको भवति।
इह केचिदाहुरार्यां मन्त्रो यो द्वेति मुण्डके कथितः ॥ ७३ ॥
अधिकरणस्यैतस्य हि भवति न सिद्धान्तमुक्तवाक्यार्थम्।
पैङ्ग्युपनिषदि यतोऽयं सर्वक्षेत्रज्ञपरतया नीतः ॥ ७४ ॥
न च भवति पूर्वपक्षं स्याद्वदनं येन सत्त्व उपदिष्टम्।
औदासीन्येनायं क्षेत्रज्ञो दर्शितश्च तत्रैव ॥ ७५ ॥
सत्त्वस्य भोक्तृतोक्तिः क्षेत्रज्ञे ब्रह्मभावमभिधातुम्।
कठवल्ल्युक्तावेतौ जीवप्राज्ञौ न चेह संभवतः ॥ ७६ ॥
तस्मादन्यार्थोऽयं मुण्डकदृष्टो हि मन्त्रभाग इति।
ननु कठवल्ल्यामस्यामृतपानं प्रथमतः श्रुतं भवति ॥ ७७ ॥
प्रथमश्रुतयोगेन हि तत्राधिकृतं तु जीवमालम्ब्य।
तत्समभावो योऽसौ परमात्मा तद्द्वितीय उपदिष्टः ॥ ७८ ॥
उपकोसलविद्यायामेष य इत्यादिवाक्यमुपदिष्टम्।
पुरुषो दृश्यत इति किल दृश्यत्वं प्रथमतः श्रुतं तस्य ॥ ७९ ॥
चाक्षुषधीविषयत्वं दृश्यत्वं जगति सुप्रसिद्धं हि।
तद्योगी पुरुषोऽसौ छायात्मा वाऽथ वा भवेज्जीवः ॥ ८० ॥
किंवा स देवतात्मा न खलु परात्मा न दृश्यते स यतः।
यदि च च्छायात्माऽसावमृताभयलक्षणः पुमान्न भवेत् ॥ ८१ ॥
भवतु तदा जीवो वा देवो वा स्यान्न चैव परमात्मा।
धर्मादिसाधनोऽसौ जीवोऽप्यमृतादिलक्षणो भवति ॥ ८२ ॥
योऽसौ हि देवतात्मा स चापि निर्दिष्टलक्षणो दृष्टः।
सत्या गतौ परस्य हि विशिष्टदेशत्वकल्पनाऽनुचिता ॥ ८३ ॥

दृश्यत्वकल्पना वा तस्याऽनुचिता ह्यनामरूपत्वात् ।
इति शङ्कायां सत्यामुपकोसलवाक्यमेतदखिलमपि ॥ ८४ ॥
सम्यग्विचार्य भगवानिदमधिकरणं चकार मुनिवर्यः ।

## अन्तर उपपत्तेः ॥ १३ ॥

ब्रह्मविदो मुखमिव ते मुखं विभातीति तं प्रशस्याऽऽदौ ॥ ८५ ।
तस्मा उपदेशमिमं चकार जाबालमुनिवरो यस्मात् ।
तेनोपदिश्यमानो य एष इत्यादिवाक्यनिर्दिष्टः ॥ ८६ ॥
स च परमात्मैव स्यान्न चेतरः कोऽपि शङ्कितुं शक्यः ।
आत्मत्वममृतभावो ब्रह्मात्मकताऽभयं च सर्वमिदम् ॥ ८७ ॥
गुणजातं परमात्मन्युपपन्नं स्यान्न चेतरत्रापि ।
पापं कर्मैवंविदि न श्लिष्यत इति हि यच्च निर्दिष्टम् ॥ ८८ ॥
तद्विदि पापास्पर्शनमस्मिन्पक्षे समञ्जसं भवति ।
अक्षिस्थानं यदिदं प्रदर्शितं सर्वलेपरहितमिति ॥ ८९ ॥
तद्यदितिमन्त्रभागे तस्मात्स्यादिह परः पुमानेव ।
यच्चेह वामनीत्वं संयद्वामत्वमपि च यच्चोक्तम् ॥ ९० ॥
यच्चेह भामनीत्वं परमात्मनि युक्तमेतदखिलमपि ।
संयद्वामत्वादिकमखिलं विवृतं हि मन्त्रभागेण ॥ ९१ ॥
कर्मफलोत्पादकता संयद्वामत्वशब्दलभ्योऽर्थः ।
कर्मफलप्रापकता भवति तथा वामनीत्वशब्दार्थः ॥ ९२ ॥
सर्वार्थभानदत्वात्तथैव सर्वत्र भासमानत्वात् ।
उक्तं हि भामनीत्वं तदेतदखिलं परात्मनि प्रथितम् ॥ ९३ ॥
तस्मादिह परमात्मा निर्दिष्टो भवति नेतरः कश्चित् ।

## स्थानादिव्यपदेशाच्च ॥ १४ ॥

यदि परमात्माऽयं स्यादक्षिस्थानत्वमनुपपन्नमिति ॥ ९४ ॥
नेयं शङ्का यस्मात्तस्य स्थानानि दर्शितान्येव ।
अन्तर्यामिनिरुक्तस्थानानि बहूनि दर्शितान्यस्य ॥ ९५ ॥
चक्षुरपि तत्र दृष्टं तस्मादयमिह परः पुमानेव ।
सूत्रस्थादिपदेन हि नाम च रूपं च वर्णितं यदपि ॥ ९६ ॥
ब्रह्मण्युपास्यरूपे तदेतदखिलं समञ्जसं भवति ।

सुखविशिष्टाभिधानादेव च ॥ १५ ॥

उपकोसलपरिचर्यापरितुष्टैरग्निभिर्यदादिष्टम् ॥ ९७ ॥
कं ब्रह्मेत्यादिकमपि सुखात्मकं ब्रह्म बोधयत्याशु ।
खण्डशब्दसाहचर्याद्ब्रह्मण्यल्पत्वबोधपरिहारे ॥ ९८ ॥
ब्रह्मपदसाहचर्यात्कंशब्दोऽनन्तसुखपरो भवति ।
तेनानन्तसुखात्मकमुपादिष्टं ब्रह्म पूर्ववाक्येण ॥ ९९ ॥
न ह्येतादृशरूपो जीवो देवोऽथ वा भवत्यन्यः ।

श्रुतोपनिषत्कगत्यभिधानाच्च ॥ १६ ॥

विदितश्रुत्यन्तस्य च या गतिरुपदिश्यते हि वेदान्ते ॥ १०० ॥
अर्चिष्प्रमुखा सेहाप्युपदिष्टाऽतोऽयमत्र परमात्मा ।
अथ यदि चैवेत्यस्मिन्मन्त्रे गतिरियमुदाहृता भवति ॥ १०१ ॥
तस्मादक्षिस्थाने प्रदर्शितोऽयं हि भवति परमात्मा ।

अनवस्थितेरसंभवाच्च नेतरः ॥ १७ ॥

इतरश्चाप्यात्मादिर्न चेह निर्दिश्यतेऽन्तरक्षिणि हि ॥ १०२ ॥
अनवस्थितो यतोऽसौ छायात्मा किं च भवति नाऽऽत्माऽपि ।
चक्षुःसमीपवर्ती पुरुषो यदि भवति चक्षुषि च्छाया ॥ १०३ ॥
अपयाते तस्मिन्निह पुरुषच्छाया न दृश्यते काऽपि ।
जीवो यद्यप्यात्मा तथाऽपि चक्षुष्यवस्थितो नायम् ॥ १०४ ॥
चित्तोपाधिर्योऽसौ चित्तं प्रायेण हृदयदेशगतम् ।
अमृतत्वमस्य दुर्घटमभयं चाप्यस्य दुर्घटं भवति ॥ १०५ ॥
सर्वगतस्य परात्मन इदं हि सकलं समञ्जसं भवति ।
यद्यपि च देवतात्मा नित्यं चक्षुष्यवस्थितो भवति ॥ १०६ ॥
अमृतादिशब्दयोगी तथाऽपि नैवाऽऽत्मशब्दयोगः स्यात् ।
अमरत्वं देवानां चिरकालावस्थितत्वसापेक्षम् ॥ १०७ ॥
ऐश्वर्यमीशतन्त्रं न च स्वतोऽस्याभयं च नो भवति ।
दृश्यत इति येयं श्रुतिरुदाहृता सा न चाक्षुषत्वपरा ॥ १०८ ॥
विद्वदनुभूतिविषयप्रदर्शनार्था प्ररोचनार्थैव ।
तस्मात्परमात्माऽयं योऽसावक्षिणि निरूपितो ह्यात्मा ॥ १०९ ॥
उपकोसलवाक्यमिदं तत्र परात्मनि समन्वितं भवति ।
नन्वयमक्षिस्थाने प्रदर्शितो भवति नैव परमात्मा ॥ ११० ॥

स्थानव्यपदेशादिति शङ्कां वारयितुमेष दृष्टान्तः ।
अन्तर्यामिब्राह्मणवाक्ये यश्चक्षुषीति निर्दिष्टः ॥ १११ ॥
स्थानादिव्यपदेशादिति सूत्रेणोपदर्शितः पूर्वम् ।
स च दृष्टान्तोऽसिद्धो यतः परात्माऽशरीर उपदिष्टः ॥ ११२ ॥
अशरीरस्य क्वापि हि यमयितृभावो न दृश्यते लोके ।
इह खल्वन्तस्तिष्ठन्यमयत्ययमिति हि दर्शितो योऽसौ ॥ ११३ ॥
अन्तर्यामी योगी किंवा स्यात्तदभिमानिदेवो वा ।
न तु परमात्मा योऽसावकार्यकरणो निरूपितः शास्त्रे ॥ ११४ ॥
इति शङ्कां वारयितुं चकार मुनिवर्य एतदधिकरणम् ।

## अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॥ १८ ॥

अधिदैवादिविभिन्नं जगत्समग्रं हि योऽन्तरवतिष्ठन् ॥ ११५ ॥
यमयति स च परमात्मा न हि योगी नापि देवतात्मा वा ।
योऽसौ परमात्मा स्याज्जगतः सृष्ट्यादिकारणं भवति ॥ ११६ ॥
जगदीशः कृत्स्नमिदं जगन्नियन्तुं स एव शक्नोति ।
आत्मत्वममृतभावस्तस्यैव हि युज्यते न चान्यस्य ॥ ११७ ॥
अतथाभूतो योगी देवो वाऽऽत्माऽमृतः कथं भवति ।
यं पृथिवी नेत्येषा श्रुतिः पृथिव्यादिदेवतादीनाम् ॥ ११८ ॥
अन्तर्यामिणमविदितमाचष्टे स न कथं परात्मा स्यात् ।
यो देवतात्मनामप्यन्तर्यामी कथं स देवः स्यात् ॥ ११९ ॥
स्वस्यैव यमयितृत्वं नियम्यता चेति बाधितं तत्स्यात् ।
यच्चोक्तमस्य बाधितमकार्यकरणस्य यमयितृत्वमिति ॥ १२० ॥
तदपि च दूषणमस्मिन्नचिन्त्यशक्तौ परापरे न भवेत् ।
यानिह यमयति भगवान्कर्मफलासक्तचेतसो लोकान् ॥ १२१ ॥
तत्कार्यकरणजालैः सकार्यकरणो ह्यकार्यकरणोऽपि ।
एवमदृष्टत्वादिव्यपदेशोऽप्यत्र दर्शितो योऽसौ ॥ १२२ ॥
स च परमात्मनि युक्तो न योगिनि स्यान्न देवतात्मनि वा ।

## न च स्मार्तमतद्धर्माभिलापात् ॥ १९ ॥

ननु चादृष्टत्वादिव्यपदेशः स्यात्प्रधानपक्षेऽपि ॥ १२३ ॥
जगतः कारणभावादन्तर्यामि प्रधानमेव स्यात् ।
इति चेन्नेयं शङ्का द्रष्टृत्वादिकमुदाहृतं येन ॥ १२४ ॥

तस्मात्प्रधानधर्मो ह्यन्तर्यामी ततः परात्मैव ।
द्रष्टृत्वादृष्टत्वव्यपदेशादिह स न प्रधानं चेत् ॥ १२५ ॥
शारीरो भवतु तथाऽप्यन्तर्यामी यतः स हि द्रष्टा ।
श्रोता मन्ता चाऽऽत्मा चेतनभावाददृष्टरूपश्च ॥ १२६ ॥
देहादियमयितृत्वादित्याशङ्का निरस्यते सपदि ।

शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ॥ २० ॥

यश्चायं शारीरो नान्तर्यामी भवेद्यतश्चैनम् ॥ १२७ ॥
शारीराद्भेदेन हि काण्वा माध्यंदिनाश्च कथयन्ति ।
यो विज्ञाने तिष्ठन्नित्यन्ये वर्णयन्ति चान्येऽपि ॥ १२८ ॥
योऽसावात्मनि तिष्ठन्नित्यपि कथयन्ति चोभयत्रापि ।
विज्ञानशब्द एकस्तथाऽऽत्मशब्दोऽपि जीववचनः स्यात् ॥१२९॥
विज्ञानमयो यस्माज्जीवो निर्दिश्यते हि सर्वत्र ।
जीवस्यान्तर्यामी योऽसौ स कथं हि जीवतां गच्छेत् ॥ १३० ॥
तस्मादन्तर्यामिणि परमात्मनि वाक्यमेतदुपपन्नम् ।
ब्रह्मण एकस्यापि हि नियामकत्वं नियम्यरूपत्वम् ॥ १३१ ॥
औपाधिकभेदेन हि तदेतदखिलं समञ्जस भवति ।
नन्वत्रान्तर्यामी द्रष्टृत्वात्मत्वधर्मयोगेण ॥ १३२ ॥
स्मार्तं प्रधानमेतन्न भवति चेद्भवतु तावताऽपीह ।
मुण्डकवाक्ये भूयो निरुक्तमद्रेश्यतादिगुणयोगि ॥ १३३ ॥
अक्षरमिति यत्प्रथितं तदिदं स्मार्तं प्रधानमेव स्यात् ।
शब्दादिरहितमेतद्यत एतस्य ह्यदृश्यता युक्ता ॥ १३४ ॥
अग्राह्यत्वादिकमपि सूक्ष्मत्वादस्य युक्तमाभाति ।
महदादिकारणत्वात्त्रिगुणत्वादस्य भूतयोनित्वम् ॥ १३५ ॥
तस्मादेतद्वाक्यप्रदर्शितं यत्प्रधानमेव स्यात् ।
यद्यत्र योनिशब्दो निमित्तवाची तदा तु शारीरः ॥ १३६ ॥
न हि भवति भूतयोनिर्यतश्च धर्मादिसाधनोपचितः ।
नन्विह मुण्डकवाक्ये प्रधानमद्रेश्यतादिगुणयोगि ॥ १३७ ॥
इति यद्युच्येत तदा भवति विरोधोऽत्र वाक्यशेषेण ।
यः सर्वज्ञः सर्वविदित्येवं वाक्यशेष इह दृष्टः ॥ १३८ ॥
तद्वाक्यशेषदर्शितसर्वज्ञत्वं कथं प्रधाने स्यात् ।
इति नात्र शङ्कनीयं सर्वज्ञत्वं यदेतदुपदिष्टम् ॥ १३९ ॥

अक्षरपदाभिधेयात्परस्य परमात्मनो हि निर्दिष्टम् ।
तस्मादस्मिन्वाक्ये प्रधानमिह भूतयोनिरित्युक्तम् ॥ १४० ॥
अथवाऽयं शारीरो न हि परमात्माऽत्र भूतयोनिः स्यात् ।
दृष्टान्तबोधकानि हि यथोर्णनाभिरितिवाक्यजालानि ॥ १४१ ॥
दृष्टान्तभावमेषामचेतनानां यतश्च कथयन्ति ।
इत्याशङ्कां सकलां निरस्य वाक्यार्थतत्त्वबोधार्थम् ॥ १४२ ॥
भगवान्करुणासिन्धुश्चकार मुनिवर्य एतदधिकरणम् ।

अदृश्यत्वादिगुणको धर्मोक्तेः ॥ २१ ॥

मुण्डकवाक्ये योऽसावदृश्यत्वादिगुणक उपदिष्टः ॥ १४३ ॥
स च परमात्मा यस्मात्सर्वज्ञत्वादिधर्मनिर्देशः ।
भूतप्रकृतित्वेन हि यदक्षरं पूर्ववाक्यनिर्दिष्टम् ॥ १४४ ॥
तत्रैवोत्तरवाक्ये सर्वज्ञत्वं च दर्शितं येन ।
अक्षरविद्या येयं परविद्या नेति वर्णितं पूर्वम् ॥ १४५ ॥
यद्यक्षरं प्रधानं तद्विद्या सा कथं परा विद्या ।
कस्मिन्भगवो ज्ञाते सर्वमिदं ज्ञातमिति च यच्चोक्तम् ॥ १४६ ॥
एकस्य च विज्ञाने सर्वज्ञानं परात्मपक्षे स्यात् ।
या कर्मगोचरा स्यादपरा विद्येति तां हि निन्दित्वा ॥ १४७ ॥
निःश्रेयसफलकतयाऽपरविद्या नेति वर्णितं भूयः ।
निन्दित्वाऽपरविद्यां ततो विरक्तस्य साधनं कथयन् ॥ १४८ ॥
परविद्यायामस्यां श्रुतिरधिकारं हि तस्य बोधयति ।
परतः पर इत्यन्ते मन्त्रे निर्दिष्टमक्षरं यत्स्यात् ॥ १४९ ॥
तच्चोत्तरसूत्रार्थव्याख्याने दर्शयिष्यते भूयः ।
तस्मात्स हि परमात्मा यदक्षरं स्याददृश्यतादिगुणम् ॥ १५० ॥
सर्वज्ञत्वाद्यखिलं तस्मिन्नात्मनि समञ्जसं भवति ।
यस्मादचेतनानां दृष्टान्तत्वं प्रदर्शितं भूयः ॥ १५१ ॥
तस्मादक्षरशब्दं प्रधानमिह भूतयोनिरेवेति ।
यद्दूषणमेतस्मिन्परात्मपक्षे न किंचिदपि भवति ॥ १५२ ॥
न हि दृष्टान्ते धर्मिणि सकलं साम्यं विवक्षितं भवति ।

विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॥ २२ ॥

यद्यक्षरशब्दः स्याच्छारीरेऽसौ विशेषणं चैतत् ॥ १५३ ॥

दिव्यो हीत्युपदिष्टं दिव्यत्वाद्यनुपपन्नमेव स्यात् ।
आविद्यकदेहादावहमभिमानेन विस्मृतस्वात्मा ॥ १५४ ॥
यः शारीरः सोऽयं दिव्यत्वाद्यैः कथ विशिष्येत ।
अद्रेश्यत्वादिगुणं यदक्षरं भूतयोनिरित्युक्तम् ॥ १५५ ॥
उपदिश्यते प्रधानाद्भिन्नं तस्माच्च तत्परात्मैव ।
अप्राणो हीत्यस्मिन्मन्त्रे पुंलिङ्गशब्दनिर्दिष्टः ॥ १५६ ॥
योऽयं परमात्मा स्यात्स चाक्षरात्पर इहोपदिष्टः स्यात् ।
तत्राक्षरशब्दोऽसावव्याकृतमूतसूक्ष्मपर एव ॥ १५७ ॥
न हि तद्विना परात्मा सृष्टिस्थितिनाशकारणो भवति ।

## रूपोपन्यासाच्च ॥ २३ ॥

अग्निर्मूर्धेतीयं श्रुतिरस्यैवाक्षरस्य रूपमिदम् ॥ १५८ ॥
त्रैलोक्यावयवात्मकमुपदिशति हि तस्य चान्तरात्मत्वम् ।
न ह्येतादृशरूपं शारीरे स्याच्छरीरपरतन्त्रे ॥ १५९ ॥
सर्वान्तरात्मताऽपि च न च प्रधाने ह्यचेतने भवति ।

प्रकरणात् ।

प्रकृतानुकर्षणं हि प्रकरणशब्दार्थ एष उपदिष्टः ॥ १६० ॥
सर्वस्य चान्तरात्मा यस्तं ह्येष इति निर्दिशन्पूर्वम् ।
पुनरप्येतस्मादिति तमेव भूयः परामृशन्नस्य ॥ १६१ ॥
प्राणादिकारणत्वं प्रपञ्चितं येन स खलु परमात्मा ।
केचिदिहाऽऽहुः सुधियस्त्वग्निर्मूर्धेतिवाक्यनिर्दिष्टम् ॥ १६२ ॥
रूपं यदेतदखिलं नाद्रेश्यत्वादिगुणक उचितमिति ।
अन्नादीनामेषां निर्दिष्टा जायमानता यस्मात् ॥ १६३ ॥
तस्मात्तदिदं रूपं हिरण्यगर्भस्य युक्तमाभाति ।
पुरुष इति वाक्यशेषप्रदर्शितं रूपमत्र सूत्रोक्तम् ॥ १६४ ॥
तस्योपन्यासोऽयं तत्प्रतिपत्तिप्रजननो भवति ।
ननु वाक्यशेषदर्शितसर्वज्ञत्वादिधर्मयोगेण ॥ १६५ ॥
यद्यक्षरं प्रधानं न भवति चेद्भवतु तर्हि तत्रैवम् ।
वैश्वानर इति रूढश्छान्दोग्ये हि प्रदर्शितो योऽसौ ॥ १६६ ॥
होमाधिकरणभावाच्चात्रोक्ताज्जाठराग्निरेव स्यात् ।
अयमग्निरिति च वाक्ये यदयंशब्दोऽपि जाठरे दृष्टः ॥ १६७ ॥

यद्वयं भूताग्निर्वा वैश्वानरशब्दवाच्यतां गच्छेत् ।
विश्वस्मा इति वाक्ये वैश्वानरशब्द एष भूताग्नौ ॥ १६८ ॥
दृष्टस्तस्मादथ वा भवेदसौ तदभिमानिदेवो वा ।
वैश्वानरस्य सुमताविति श्रुतिर्ह्यत्र साधिका भवति ॥ १६९ ॥
यद्यात्मशब्दयोगान्नैते वैश्वानरा भवन्ति तदा ।
जीवो वा स्याद्यदयं जाठरवैश्वानरेण संनिहितः ॥ १७० ॥
प्रादेशमात्रमिति च श्रुतिरप्यस्मिन्समञ्जसा भवति ।
तस्मादिह जीवो वा जठराग्निर्वाऽथ वाऽपि भूताग्निः ॥ १७१ ॥
वैश्वानरशब्दः स्यात्किंवाऽसौ तदभिमानिदेवो वा ।
न तु परमात्मेत्येवं निरसितुमुक्तप्रकारमाक्षेपम् ॥ १७२ ॥
सर्वज्ञोऽसौ भगवानिदमधिकरणं चकार मुनिवर्यः ।

वैश्वानरः साधारणशब्दविशेषात् ॥ २४ ॥

उद्दालकावसाना ये च प्राचीनशालमुनिमुख्याः ॥ १७३ ॥
को नु इति ते च सर्वे मीमांसां चक्रुरेवमन्योन्यम् ।
मतिवैरूप्यादेते परिनिष्ठां तत्र लब्धुमसमर्थाः ॥ १७४ ॥
वैश्वानरविद्यां तां ग्रहीतुकामाः शुचिव्रता मुनयः ।
एतद्विद्याकुशलं केकयमश्वपतिमेत आजग्मुः ॥ १७५ ॥
राजानं पप्रच्छुर्ब्रूहीत्यन्तेन वाक्यजालेन ।
राजाऽपि परमकृपया तदभिप्रायं च सकलमाकर्ण्य ॥ १७६ ॥
व्यस्तोपासनपक्षं निन्दित्वाऽऽत्मानमुपदिदेशेत्थम् ।
यस्त्वेतमिति च वाक्यैर्द्युमूर्धताद्यङ्गषट्कसंवलितम् ॥ १७७ ॥
वैश्वानरं वदिष्यंस्तदुपास्तिफलं च वर्णयामास ।
अत्र च वाक्ये सकले योऽसौ वैश्वानरो विनिर्दिष्टः ॥ १७८ ॥
स च परमात्मैव स्यान्न जाठराग्न्यादिरथ च जीवो वा ।
न ह्यस्य जाठराग्नेर्द्युमूर्धता स्याद्यतः परिच्छिन्नः ॥ १७९ ॥
यद्यपि भूताग्निरसावपरिच्छिन्नस्तथाऽपि नेयं स्यात् ।
यो हि विकारो लोके नैव विकारान्तरात्मको दृष्टः ॥ १८० ॥
नायं जीवोऽपि तथा यतः परिच्छिन्न एष निर्दिष्टः ।
जगतोऽस्य कारणत्वात्परमात्मन एतदखिलमुपपन्नम् ॥ १८१ ॥
कार्यगता ये धर्मा निर्दिश्यन्ते हि कारणे लोके ।
फलगतमपि माधुर्यं चूतादौ मन्यते यतो लोकः ॥ १८२ ॥

तस्मादसौ परात्मा द्युमूर्धतादिभिरिहोपदिष्टो यः ।
यदि परमात्मा न स्याद्योऽसौ वैश्वानरोऽत्र निर्दिष्टः ॥ १८३ ॥
तदुपासकस्य भोग्यं सर्वत्रेत्येतदनुपपन्नं स्यात् ।
तद्यदिषीकातूलं ह्यग्नौ प्रोतं प्रदूयते यद्वत् ॥ १८४ ॥
तद्वद्वैश्वानरविदि पापं कर्मेति चाप्ययुक्तं स्यात् ।
आत्मब्रह्मपदाभ्यामुपक्रमश्चाऽऽत्मशब्दयोगश्च ॥ १८५ ॥
लोकादिषु फलभोगव्यपदेशः पापकर्मनाशोक्तिः ।
वैश्वानरशब्दोऽयं हेतुभिरेतैः परात्मपर एव ॥ १८६ ॥
इममर्थं बोधयितुं पञ्चम्यन्तोऽत्र सूत्रनिर्दिष्टः ।
व्यवधानं गमितौ तौ द्वयोस्त्रयाणां च बोधकौ भवतः ॥ १८७ ॥
तावेतौ संनिहितौ परमेश्वरमेनमेव बोधयतः ।
माणवकमग्निमेनं पश्येत्येवंविधेषु वाक्येषु ॥ १८८ ॥
माणवकशब्दयोगादुत्कृष्टपरो यथाऽग्निशब्दः स्यात् ।
इह वैश्वानरशब्दोऽप्यत्रत्येनाऽऽत्मशब्दयोगेन ॥ १८९ ॥
परमेश्वरमेवैनं वैश्वानरमीदृशं प्रबोधयति ।

स्मर्यमाणमनुमानं स्यादिति ॥ २५ ॥

द्यां मूर्धानमितीयं स्मृतिरपि वैश्वानरस्य रूपमिदम् ॥ १९० ॥
दर्शयति तच्च रूपं श्रुतिनिर्दिष्टत्वसाधकं भवति ।
श्रुतिमूलं स्मृतिवाक्यं वदन्ति वेदार्थपारगा वृद्धाः ॥ १९१ ॥
यच्च स्मृतिनिर्दिष्टं तच्छ्रुतिवाक्येन दर्शितं भवति ।
एतच्च पारमेश्वररूपमिति स्मृतिरियं हि दर्शयति ॥ १९२ ॥
छान्दोग्येऽपि हि तदिदं प्रदर्शितं येन भवति परमात्मा ।
इतिशब्दो हेत्वर्थः सूत्रोक्तः पारमेश्वरं रूपम् ॥ १९३ ॥
श्रुतिनिर्दिष्टं यस्मात्सोऽचिन्त्यात्मेति दर्शितं स्मृत्या ।

शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेति चेन्न तथा दृष्ट्युपदेशादसंभवात्पुरुषमपि चैनमधीयते ॥ २६ ॥

नन्विह वैश्वानर इति निर्दिष्टो भवति नैव परमात्मा ॥ १९४ ॥
शब्दादिभ्योऽपि तथा तथैव चान्तःप्रतिष्ठितत्वेन ।
वैश्वानरशब्दोऽसौ तथाऽग्निशब्दोऽपि योऽत्र निर्दिष्टः ॥ १९५ ॥
तावेतावग्निपरौ स एष इत्यादिवाक्यनिर्दिष्टौ ।
आदिपदादत्रत्यादग्नित्रेताप्रकल्पनं ग्राह्यम् ॥ १९६ ॥

प्राणाहुत्याश्रयता ग्राह्या या वाक्यशेषनिर्दिष्टा ।
अन्तःप्रतिष्ठितत्वव्यपदेशोऽप्यत्र दर्शितो भवति ॥ १९७ ॥
एतेभ्यो हेतुभ्यो वैश्वानर एव जाठराग्निः स्यात् ।
इति शङ्काऽत्र न कार्या नाग्निर्जाठर इहोपदिष्टः स्यात् ॥ १९८ ॥
अपि तु तदुपाधिकेऽस्मिन्परमात्मनि दृष्टिरत्र निर्दिष्टा ।
शब्दादिहेतवो ये पूर्वोक्ता नात्र बाधकास्ते स्युः ॥ १९९ ॥
यदि जाठर एवाग्निर्वैश्वानर इति निरूप्यते तत्र ।
आत्मत्वमनुपपन्नं द्युमूर्धतादिकमपीह निर्दिष्टम् ॥ २०० ॥
किं चात्र दर्शितं यत्पुरुषत्वं तदपि बाधितं तत्र ।
यत्पुरुष इति च वाक्ये पुरुषो वैश्वानरो विनिर्दिष्टः ॥ २०१ ॥
पुरुषविधमित्यपीमं सूत्रावयवं पठन्ति केचिदिह ।
तत्र च पुरुषविधत्वं यदुक्तमधिदैवतं यदध्यात्मम् ॥ २०२ ॥
द्युप्रभृतिष्वधिदैवं मूर्धादिष्ववयवेषु चाध्यात्मम् ।
तदभिप्रायं तच्च हि न जाठरे भवति किंतु परमेशे ॥ २०३ ॥

अत एव न देवता भूतं च ॥ २७ ॥

उक्तेभ्यो हेतुभ्यो भूताग्निर्वाऽथ देवतात्मा वा ।
वैश्वानरो न हि स्याद्यतः स नाऽऽत्मा न चापि पुरुषो वा ॥२०४॥
लिङ्गानि बाधकानि हि यानि स्युर्भूतदेवतापक्षे ।
तानि प्रदर्शितानि हि तस्माद्वैश्वानरः परात्मैव ॥ २०५ ॥

साक्षादप्यविरोधं जैमिनिः ॥ २८ ॥

पूर्वं हि जाठराग्नेः प्रतीकभावं ह्युपाधिभावं च ।
आश्रित्यैव हि दर्शितमेतस्यान्तःप्रतिष्ठितत्वमपि ॥ २०६ ॥
योऽसौ द्युमूर्धतादिभिरुदाहृतः परमपुरुष इह वाक्ये ।
अन्तःप्रतिष्ठितत्वं तस्यान्तर्यामिभावयोगेन ॥ २०७ ॥
अथ वा चिबुकान्तेषु हि पुरुषावयवेषु मूर्धता ह्युक्ता ।
अन्तःप्रतिष्ठितत्वं साक्षादेवेति जैमिनिः प्राह ॥ २०८ ॥
तस्मादस्मिन्वाक्ये परमात्मैव प्रदर्शितो नान्यः ।
वैश्वानरशब्दोऽयं योगेन तमर्थमेव बोधयति ॥ २०९ ॥
विश्वेषां वा नर इति विश्वे वाऽस्येति योग इह भवति ।
सर्वजगत्कर्तृत्वात्सर्वान्तर्यामिभावनिर्देशात् ॥ २१० ॥

वैश्वानरः परात्मा भवति ह्यत्राग्निशब्दबोध्योऽपि ।
अग्रफलनेतृभावाद्या च त्रेताग्निकल्पना साऽपि ॥ २११ ॥
सर्वात्मके परात्मनि सकलं चैतत्समञ्जसं भवति ।
अस्य प्रादेशत्वं संप्रति सम्यङ्निरूप्यते सूत्रैः ॥ २१२ ॥

अभिव्यक्तेरित्याश्मरथ्यः ॥ २९ ॥

परिदृश्यते परात्मा योऽसौ प्रादेशिकत्वमात्रेण ।
भक्तानुकम्पयाऽयं तस्मात्प्रादेशिकः परात्मा स्यात् ॥ २१३ ॥
हृदयादिषु प्रदेशेष्वयं परात्मोपलभ्यते येन ।
प्रादेशिकः परात्मा तस्मादित्याश्मरथ्य आचार्यः ॥ २२४ ॥

अनुस्मृतेर्बादरिः ॥ ३० ॥

प्रादेशमात्रहृदये प्रतिष्ठितं मन इति प्रसिद्धं हि ।
तेनानुस्मरणीयः कथितः प्रादेशमात्र एष इति ॥ २१५ ॥
प्रस्थमिताः प्रस्था इति निर्देशोऽयं यथा तथेहापि ।
इति बादरिराचार्यो वदति प्रादेशमात्रतामस्य ॥ २१६ ॥

संपत्तेरिति जैमिनिस्तथा हि दर्शयति ॥ ३१ ॥

यान्याधिदैविकानि ह्यङ्गान्यत्रोपदर्शितान्यस्य ।
प्रादेशिकमूर्धादौ यदत्र संपादितानि चैष इति ॥ २१७ ॥
प्रादेशिकसंपत्त्या सेयं प्रादेशमात्रता तस्य ।
इति जैमिनिराचार्यस्तस्य प्रादेशमात्रतां ब्रूते ॥ २१८ ॥

आमनन्ति चैनमस्मिन् ॥ ३२ ॥

मूर्धादिचुबुकमध्ये यदेनमिह वर्णयन्ति जाबालाः ।
वैश्वानरं परेशं य एष इत्यादिमन्त्रभागेण ॥ २१९ ॥
तस्मादसौ परात्मा प्रादेशिकशब्दभाजनं भवति ।
शब्दोऽयमभिविहितस्तत्र परात्मनि समञ्जसो भवति ॥ २२० ॥
सर्वत्राभिगतोऽयं परिमितिहीनो यतोऽयमात्मा स्यात् ।
जगदेतदभिविमीते विमीयते वा य आभिमुख्येन ॥ २२१ ॥
तस्मादेतद्वाक्यं द्युमूर्धताद्यङ्गजालसंवलिते ।
वैश्वानरे परात्मन्युपास्यरूपे समन्वितं भवति ॥ २२२ ॥

शारीरकमीमांसा मुनिना व्यासेन विरचिता सेयम्।
चतुरध्यायी तस्यां प्रथमो योऽसौ समन्वयाध्यायः॥ २२३॥
तत्र द्वितीयपादे सूत्रार्थो यश्च भाष्यकारोक्तः।
आर्यावृत्तैरमलैः प्रकाशितो जयतु सोऽयमनवद्यः॥ २२४॥
इति प्रथमाध्याये द्वितीयः पादः॥ २॥

अथ तृतीयपादप्रारम्भः।

इह च द्वितीयपादे यानि च वाक्यान्युपास्यबहुलानि।
तानि ह्युपास्यरूपे समन्वितानीति दर्शितं पूर्वम्॥ १॥
अत्र च तृतीयपादे यानि ज्ञेयप्रधानवाक्यानि।
तेषां समन्वयश्च ज्ञेये ब्रह्मणि निरूप्यते सद्यः॥ २॥
ननु वाक्यशेषदृष्टो द्युमूर्धताद्यन्वयानुरोधेन।
वैश्वानरशब्दोऽसावुपक्रमस्थो यदा परात्मपरः॥ ३॥
द्युभ्वाद्यायतनं यन्मुण्डकवाक्ये निरूपितं चाऽऽदौ।
तदिदं प्रधानमेव स्यादन्ते सेतुशब्दनिर्देशात्॥ ४॥
द्युप्रभृतिप्राणान्तं यस्मिन्नोतमिति दर्शितो योऽसौ।
अन्ते सेतुत्वेनाप्यमृतस्येत्यादिवाक्यशेषेण॥ ५॥
अत्रामृतशब्दोऽसौ ब्रह्मण्येव प्रयुज्यते शास्त्रे।
षष्ठी संबन्धार्था सेतुर्दृष्टो हि पारवाँल्लोके॥ ६॥
तस्मादेतद्वाक्यं यदमृतसंबन्धिपारवत्त्वगुणम्।
बोधयति हि प्रधानं यतिः(तः) परात्मा न पारवान्भवति॥ ७॥
अथ वा द्युप्रभृतीनां विधारकत्वेन निश्चितो योऽसौ।
वायुर्वा स्यादथ वा शारीरो वाऽऽत्मशब्दयोगेन॥ ८॥
तस्मान्मुण्डकवाक्ये द्युभ्वाद्यायतनभावमापन्नः।
न परात्मेत्याशङ्कां निरसितुमधिकरणमेतदाह मुनिः॥ ९॥

द्युभ्वाद्यायतनं स्वशब्दात्॥ १॥

द्युप्रभृतीनामेषामायतनत्वेन वर्णितो योऽसौ।
न च परमात्मैव स्यान्न च प्रधानं न चेतरः कश्चित्॥ १०॥
यस्मिन्नोतं सकलं तमेकमात्मानमेव जानीथ।
इत्यर्थके हि वाक्ये तस्मिन्दृष्टो य आत्मशब्दो हि॥ ११॥

चेतनवाची सोऽयं दृष्टः सर्वत्र चेतनार्थपरः ।
द्युभ्वाद्यायतनत्वं न च प्रधाने श्रुतौ क्वचिद्दृष्टम् ॥ १२ ॥
सन्मूला इति मन्त्रे सर्वायतनत्वमात्मनो दृष्टम् ।
यद्वाग्विमोकपूर्वकविज्ञेयत्वं प्रदर्शितं ह्यत्र ॥ १३ ॥
तदपि च परात्मनः स्यान्न च प्रधानस्य कुत्रचिद्दृष्टम् ।
श्रुत्यन्तरे तमेवेत्यस्मिन्दृष्टं परात्मनस्तदिदम् ॥ १४ ॥
पूर्वोपदर्शितं वा सर्वज्ञत्वं यदेकविज्ञानात् ।
तस्मिन्निितिमन्त्रोक्तं परात्मपक्षे समञ्जसं भवति ॥ १५ ॥
यच्छब्दसहकृतोऽयं तच्छब्दश्चाऽऽत्मशब्दसहचरितः ।
परमात्मानं ब्रूते विज्ञेयत्वं च तस्य निर्दिष्टम् ॥ १६ ॥
अतदर्थकवाक्यानां त्यागं वक्तीह मन्त्रशेषोऽयम् ।
मन्त्रो हि पुरुष एवेत्यपि सर्वस्यैव पुरुषतां ब्रूते ॥ १७ ॥
सामानाधिकरण्यं यदत्र दृष्टं विलापनार्थं स्यात् ।
दृष्टं विलयार्थत्वं चोरोऽयं स्थाणुरिति च वाक्ये हि ॥ १८ ॥
तद्वत्प्रपञ्चमखिलं विलाप्य शुद्धं यदेतदायतनम् ।
ब्रह्म ब्रूते मन्त्रो न सप्रपञ्चं न च प्रधानं वा ॥ १९ ॥
सेतुत्वमभिहितं यद्यमृतस्यैष इति मन्त्रभागेण ।
तदपि च विधारकत्वात्परात्मनो युक्तमेव सेतुत्वम् ॥ २० ॥
राहोः शिर इति वाक्ये षष्ठी चाभेदबोधिका दृष्टा ।
ब्रह्म यदाऽमृतशब्दं तदा त्वभेदार्थिका हि षष्ठीयम् ॥ २१ ॥
मोक्षो यदाऽमृतः स्यात्संबन्धार्थैव भवति षष्ठीयम् ।
यो वाग्विमोकपूर्वकसाक्षात्कारस्तदा स मन्त्रोक्तः ॥ २२ ॥
एतत्पदाभिधेयः प्रापकभावेन तस्य हेतुत्वम् ।
तस्माद्ब्रह्मैवेदं द्युभ्वाद्यायतनमत्र निर्दिष्टम् ॥ २३ ॥

मुक्तोपसृप्यव्यपदेशात् ॥ २ ॥

रागादिदोषमुक्ता ये च स्युस्ते हि मुक्तपदवाच्याः ।
मुक्तोपसृप्यता खलु निर्दिष्टा ह्यस्य चोत्तरत्र यतः ॥ २४ ॥
भिद्यत इति मन्त्रेरितसाक्षात्कारेण दोषमुक्तानाम् ।
पुरुषमुपैतीत्यन्तो मन्त्रोऽयं तदुपसृप्यतां ब्रूते ॥ २५ ॥
मन्त्रान्तरं यदेति हि कथयति कामादिदोषमुक्तानाम् ।
अत्र ब्रह्म समश्नुत इत्यन्ते तदुपसृप्यतामस्य ॥ २६ ॥

## नानुमानमतच्छब्दात् ॥ ३ ॥

द्युभ्वाद्यायतनं न प्रधानमनुमानगम्यमत्र स्यात् ।
अत्र च तत्परशब्दो यतो न दृष्टः कथं प्रधानं स्यात् ॥ २७ ॥
यः सर्वज्ञः सर्वविदित्यादौ चेतनार्थशब्दो यः ।
सर्वत्र दृश्यतेऽसौ तस्माद्यादिदं कथं प्रधानं स्यात् ॥ २८ ॥
अत इह योऽयं वायुर्द्युभ्वाद्यायतनतां स नोपैति ।
यच्च प्रधानपक्षे दूषणजालं तदेतदत्रापि ॥ २९ ॥

## प्राणभृच्च ॥ ४ ॥

प्राणभृदपि शारीरो नैषामायतनभावमुपयाति ।
यदयमसर्वज्ञः स्याद्यस्माद्बुद्ध्यादिभिः परिच्छिन्नः ॥ ३० ॥

## भेदव्यपदेशाच्च ॥ ५ ॥

भेदव्यपदेशाच्च द्युभ्वाद्यायतनमत्र न हि जीवः ।
ज्ञातृत्वेन नियुक्तः स कथं विज्ञेयभावमुपयाति ॥ ३१ ॥
द्युभ्वाद्यायतनं यद्विज्ञेयत्वेन दर्शितं पूर्वम् ।
जानीथेति हि वाक्याज्ज्ञातृत्वेनोपदर्शितो योऽसौ ॥ ३२ ॥
तस्मादिह परमात्मा विज्ञेयत्वेन दर्शितः सोऽसौ ।
द्युभ्वाद्यायतनं स्यान्न च प्रधानं न कश्चिदन्यो वा ॥ ३३ ॥

## प्रकरणात् ॥ ६ ॥

प्रकरणमपि यच्चैतत्परमात्मपरं हि दृश्यते विपुलम् ।
कस्मिन्नित्यारभ्य हि यतः परात्माऽत्र वर्णितो भूयः ॥ ३४ ॥

## स्थित्यदनाभ्यां च ॥ ७ ॥

अन्योऽभिचाकशीतीत्यस्मिन्वाक्ये स्थितिर्विनिर्दिष्टा ।
स्वाद्वत्तीति च वाक्ये कर्मफलादनमपीह निर्दिष्टम् ॥ ३५ ॥
ताभ्यां स्थित्यदनाभ्यामीशक्षेत्रज्ञलक्षणं कथितम् ।
क्षेत्रज्ञात्पृथगीशं यथोक्तलक्षणमिहोपपादयितुम् ॥ ३६ ॥
इह लोकसिद्धमेनं क्षेत्रज्ञ न श्रुतिर्हि बोधयति ।
ईशो न लोकसिद्धो ह्यस्मात्तमिम श्रुतिः प्रबोधयति ॥ ३७ ॥
पैङ्गिव्याख्यानेऽपि हि योऽसौ क्षेत्रज्ञ इत्युपन्यस्तः ।
सत्त्वोपाधिविवर्जितपरमात्मैवेति तेन न विरोधः ॥ ३८ ॥

तस्मादेतद्वाक्यं यथोक्तलक्षणसमन्विते शुद्धे ।
ब्रह्मणि परमे ज्ञेये समन्वितं तेन सकलमनवद्यम् ॥ ३९ ॥
नन्विह मुण्डकवाक्ये द्युप्रभृतीनां यदेतदायतनम् ।
तच्चाऽऽत्मशब्दयोगात्परमात्मैवेति दर्शितं पूर्वम् ॥ ४० ॥
तत्रेदमनुपपन्नं यदात्मशब्दो ह्यचेतनेऽपि स्यात् ।
छान्दोग्ये भूमवाक्ये ह्युपक्रमे पठित आत्मशब्दो यः ॥ ४१ ॥
उपसंहारे सोऽयं शब्दो दृष्टो ह्यचेतने प्राणे ।
तच्चोपक्रमवाक्ये सनत्कुमारं हि नारदोऽभ्येत्य ॥ ४२ ॥
श्रुतमित्याद्यैर्ना(रा)त्मविद्य(द)न्तैरात्मविविदिषां चक्रे ।
तत्र च सनत्कुमारोऽप्यृगादिपारगमृषिप्रवीरं तम् ॥ ४३ ॥
नाम ब्रह्मेत्यादीन्युपासनानि प्रदर्शयामास ।
प्रश्नप्रतिवचनाभ्यां प्राणान्तं सम्यगेनमुपदिश्य ॥ ४४ ॥
प्रश्नादिकं विनैव हि भूयः प्राणं प्रसञ्जयामास ।
प्राणो ह्येति हि वाक्यैः प्राणे सर्वात्मकत्वमुपदिष्टम् ॥ ४५ ॥
सर्वात्मकत्वसिद्धौ तस्याऽऽत्मत्व च दर्शितप्रायम् ।
सर्वसमर्पणमुक्तं तस्मिन्प्राणे यथेति मन्त्रेण ॥ ४६ ॥
प्राणविदो निर्दिष्टा ह्यतिवाद्यस्मीति मन्त्रभागेण ।
अतिवादिता तथोक्ता ह्यतिवादित्वापवादनिन्दा च ॥ ४७ ॥
सर्वसमर्पणकथनाद्भूमत्वं प्राण एव संभवति ।
यद्भूमलक्षणं स्याद्यत्रेत्यादौ प्रदर्शितं तदपि ॥ ४८ ॥
सौषुप्तावस्थायां प्राणे सर्वं समञ्जसं भवति ।
यच्च सुखत्वं भूम्नो दर्शितममृतत्वमपि च यच्चोक्तम् ॥ ४९ ॥
प्राणेऽपि तदुभयं स्याद्यतो हि मन्त्रान्तरे तथा दृष्टम् ।
यत्रैष इति च मन्त्रे सुखरूपः प्राण एव निर्दिष्टः ॥ ५० ॥
अमृतत्वमपि च तस्मिन्निर्दिष्टं प्राणवाक्यशेषे हि ।
तस्माद्योऽसौ भूमा प्राणोऽयं भवति नैव परमात्मा ॥ ५१ ॥
इममाक्षेपं निरसितुमिदमधिकरणं चकार मुनिमान्यः ।

भूमा संप्रसादादध्युपदेशात् ॥ ८ ॥

नायं भूमा प्राणः प्राणादूर्ध्वं यतोऽयमुपदिष्टः ॥ ५२ ॥
परमात्मैवायं स्याल्लक्षणभेदात्प्रमाणभेदाच्च ।
श्रुतमित्यादौ वाक्ये ह्युपक्रमे चाऽऽत्मविविदिषा दृष्टा ॥ ५३ ॥

शोकं तरतीत्यस्मात्फलमपि निर्दिष्टमात्मबोधस्य ।
प्राणोऽयं यदि भूमा कथं स आत्मा कथं फलं चैतत् ॥ ५४ ॥
एतत्प्राणं ज्ञात्वा सोऽयं शोकं कथं तरेल्लोकः ।
नामादिप्राणान्तं प्रतीतभावेन वर्णितं ह्यत्र ॥ ५५ ॥
तच्च यदि ब्रह्म स्यादात्मा वा शास्त्रदृष्टविपरीतम् ।
वागादिप्राणान्ते भूयःशब्दः प्रदर्शितो योऽसौ ॥ ५६ ॥
सावधिकबहुलभाव पूर्वस्मादुत्तरस्य दर्शयति ।
निरवधिकबहुलभावं भूमञ्शब्दोऽथ एष वर्णयति ॥ ५७ ॥
यस्मात्पञ्चम्यन्तं पदान्तरं नेह सनिधो दृष्टम् ।
निरवधिकं च बहुत्वं परात्मनोऽन्यत्र न क्वचिद्दृष्टम् ॥ ५८ ॥
यो धर्मवाचकः स्याच्छब्दो नियमेन धर्मिसाकाङ्क्षः ।
भूमञ्शब्दः सोऽयं धर्मपरो नियतधर्मिसाकाङ्क्षी(क्षः)॥ ५९ ॥
आकाङ्क्षतेऽनुरूपं धर्मिणमानन्दबोधपरिपूर्णम् ।
तस्माद्भूमञ्शब्दः सर्वगतं ब्रह्म सच्चिदानन्दम् ॥ ६० ॥
बोधयति नान्यमर्थं तेन प्राणः कथं स भूमा स्यात् ।
सर्वसमर्पणमेतत्सर्वात्मत्वं च यच्च पूर्वोक्तम् ॥ ६१ ॥
तत्र च सर्वपदं स्याद्वागादिपरं न चाखिलार्थपरम् ।
उक्तं हि सुप्तिवाक्ये वागादीनां समर्पण प्राणे ॥ ६२ ॥
प्राणावस्थात्मकतां पित्रादीनां प्रबोधयत्येषाम् ।
प्राणो हीति प्रथिता श्रुतिर्न सर्वात्मतां ब्रवीत्यस्य ॥ ६३ ॥
अतिवादित्वं यदपि प्राणविदो दर्शितं हि पूर्वत्र ।
अतिवादित्वं तदपि प्राणविदः श्रुतिरपोह्य भूयोऽपि ॥ ६४ ॥
सत्यविदो दर्शयति ह्येष तु वेत्यादिवाक्यशेषेण ।
अत्र तुशब्दो योऽसावुत्तरभाङ्नैव पूर्वभाग्भवति ॥ ६५ ॥
सत्यपदं ब्रह्मपरं सत्यं ज्ञानमितिमन्त्रनिर्देशात् ।
सत्यज्ञानेनैव ह्यतिवादित्वं न चेतरज्ञानात् ॥ ६६ ॥
इति मन्त्रार्थे सिद्धे ब्रह्मविदश्चातिवादिता सिद्धा ।
अत्रत्यमेव सत्यं विज्ञानादीनि साधनान्युक्त्वा ॥ ६७ ॥
आकृष्य भूमवाक्ये बहुप्रपञ्चं निरूपितं ब्रह्म ।
प्राणो यदि भूमा स्यादात्मा वा यदि तदाऽऽत्मतः प्राणः ॥ ६८ ॥

इति मन्त्रबाधनं स्याद्यदात्मजस्याऽऽत्मता विरुद्धा हि ।
देहैकदेशसंस्थो योऽसौ प्राणः कथं भवेद्भूमा ॥ ६९ ॥
तस्मादिह परमात्मा भूमा नान्य इति निश्चितं भवति ।

धर्मोपपत्तेश्च ॥ ९ ॥

ये चेह भूम्नि धर्माः श्रूयन्ते वाक्यशेषभागेषु ॥ ७० ॥
ते सर्वे परमात्मन्युपपन्ना न ह्यतादृशे प्राणे ।
यत्रेतिवाक्यदर्शितलक्षणमस्यैव सम्यगुपपन्नम् ॥ ७१ ॥
यस्मिन्दृष्टे नान्यत्पश्यति नान्यच्छृणोति लोकोऽयम् ।
न हि भूमेति च लक्षणमस्यैव स्यान्न चेतरस्यापि ॥ ७२ ॥
यो वै भूमा तदमृतमितिमन्त्रोक्तं यदेतदमृतत्वम् ।
तदपि परात्मन एव ह्युपदिष्टं सर्ववेदवाक्येषु ॥ ७३ ॥
तत्सकलमित्युपदिष्ट सुखत्वमपि तस्य सुप्रसिद्धं हि ।
आनन्दो ब्रह्मेति हि मन्त्रे चान्यत्र दर्शितं भूयः ॥ ७४ ॥
आनन्दत्वं यदि चेद्ब्रह्मणि सिद्धं सुखत्वमप्येवम् ।
उपसंहृतौ हि कथितं तमसः पारत्वमुचितमेवास्य ॥ ७५ ॥
सकलनिगमान्तवाक्यैस्तमःपरत्वेन वर्ण्यते योऽसौ ।
यः सत्येनेत्येतन्मन्त्रोक्तं रूढमस्य सत्यत्वम् ॥ ७६ ॥
स्वे महिमनीतिमन्त्रे श्रुतं च यत्स्वमहिमप्रतिष्ठत्वम् ।
यदपि च सर्वात्मत्वं सर्वगतत्वं च यदपि निर्दिष्टम् ॥ ७७ ॥
तदखिलमपि परमात्मनि भूम्न्येव समञ्जसं न चान्यत्र ।
उपसंहृतिवाक्यस्य ह्युपक्रमेणैकवाक्यभावोऽपि ॥ ७८ ॥
भूम्नः परमात्मत्वं साधयति न चेतरस्य कस्यापि ।
तस्मादेतद्वाक्यं छान्दोग्ये सप्तमे विनिर्दिष्टम् ॥ ७९ ॥
भूमपरमखिलमात्मनि समन्वितं निर्विशेषचिन्मात्रे ।
नन्विह तत्सत्यपदं ब्रह्मणि रूढमिति भूमवाक्यमिदम् ॥ ८० ॥
तत्साहचर्ययोगाद्ब्रह्मपरं चेत्तथैव तत्रास्तु ।
बृहदारण्यकवाक्ये ह्येतद्वै तदितिवाक्यनिर्दिष्टम् ॥ ८१ ॥
अक्षरमिह वर्णः स्यादक्षरशब्दश्च वर्णरूढो हि ।
यद्यपि योगाश्रयणे ब्रह्मपरत्वं प्रतीयते तस्मिन् ॥ ८२ ॥
तदपि च योगाश्रयणं रूढिविरोधान्न चेह संभवति ।
तस्मादक्षरशब्दादोंकारो ह्यत्र गृह्यते नान्यः ॥ ८३ ॥

सर्वात्मकत्वकथनादाकाशान्तस्य धारकत्वेन।
निर्दिश्यते स एव ह्योंकार इति प्रदर्शितां शङ्काम् ॥ ८४ ॥
निरसितुमवहितहृदयश्चकार मुनिवर्य एतदधिकरणम्।

अक्षरमम्बरान्तधृतेः ॥ १० ॥

प्रथमे गार्गीप्रश्ने ह्याकाशो भूतधारकोऽभिहितः ॥ ८५ ॥
तस्मिन्निति द्वितीये ह्याकाशान्तस्य धारकत्वेन।
अक्षरमिदमुपदिष्टं मुनिप्रवीरेण याज्ञवल्क्येन ॥ ८६ ॥
अस्थूलादिपदैरिह लक्षणमुक्तं च तस्य तेनैव।
एतल्लक्षणलक्ष्यं ब्रह्मैवाक्षरपदेन निर्दिष्टम् ॥ ८७ ॥
उपदिश्यते यदक्षरमाकाशान्तस्य धारकत्वेन।
वर्णात्मक ओंकारे ह्याकाशान्तस्य धारकत्वं वा ॥ ८८ ॥
अस्थूलादिपदोक्तं लक्षणमपि वा यतो न संभवति।
सर्वात्मकत्वमपि वा तस्योंकारस्य यदपि निर्दिष्टम् ॥ ८९ ॥
तदिदं ध्यानार्थं स्यान्न वस्तुयाथात्म्यनिर्णयस्य कृते।
ननु यद्यक्षरशब्दादोंकारो नेह गृह्यते तर्हि ॥ ९० ॥
भवतु प्रधानमक्षरमस्मिन्पूर्वोक्तलक्षणं युक्तम्।
अपि चाम्बरान्तविधरणमपि युक्तं तस्य कारणत्वेन ॥ ९१ ॥
शारीरो वा स्यादिह यदक्षरं याज्ञवल्क्यनिर्दिष्टम्।

सा च प्रशासनात् ॥ ११ ॥

या चाम्बरान्तविधृतिः परात्मनः स्यान्न च प्रधानस्य ॥ ९२ ॥
जगतः प्रशासितृत्वं यदत्र वाक्येऽक्षरे विनिर्दिष्टम्।
सर्वज्ञे परमात्मनि तदेतदुचितं न च प्रधानेऽपि ॥ ९३ ॥
शारीरेऽपि न युक्तं यदसौ देहादिभिः परिच्छिन्नः।

अन्यभावव्यावृत्तेश्च ॥ १२ ॥

अत्राक्षरशब्देन हि यदन्यदाशङ्कितं प्रधानादि ॥ ९४ ॥
तद्भावरहितमेव ह्यक्षरमेषा श्रुतिर्हि बोधयति।
द्रष्टृत्वादृष्टत्वाद्यखिलं यच्चोपदर्शितं श्रुत्या ॥ ९५ ॥
तेनाचेतनभावः सकलोऽयं बाधितो भवत्यस्य।
अक्षरशब्दः सोऽयं योगबलाद्ब्रह्मबोधको भवति ॥ ९६ ॥

यत्र हि रूढिर्योगस्तत्र हि योगाद्बलीयसी रूढेः(ढिः) ।
अत्र च रूढेर्बाधाद्योगबलेनाक्षरं परं ब्रह्म ॥ ९७ ॥
तस्मादक्षरवाक्यं ज्ञेये ब्रह्मणि समन्वितं भवति ।
ननु यदि बृहदारण्ये यदक्षरं याज्ञवल्क्यनिर्दिष्टम् ॥ ९८ ॥
लिङ्गवशेनाक्षरपदरूढेर्बाधाद्भवेत्परं ब्रह्म ।
प्रश्नोपनिषदि या खलु निरूपिता सत्यकामसंज्ञाय ॥ ९९ ॥
प्रणवालम्बनविद्या यः पुनरित्यादिवाक्यनिवहेन ।
तत्र च यः परशब्दः पुरुषविशेषणपरो हि निर्दिष्टः ॥ १०० ॥
गतिलिङ्गयोगतः स्यात्परकार्यपर एव रूढिबाधेन ।
गतिरिह दृष्टा कार्ये ब्रह्मणि सा खलु न कारणे दृष्टा ॥ १०१ ॥
ईक्षत इत्यन्तेन हि मन्त्रेण यदीक्षणं विनिर्दिष्टम् ।
अन्वेतीत्यन्तेन हि तत्प्राप्तिफलं यदेतदुपदिष्टम् ॥ १०२ ॥
तदुभयमपि कार्ये स्याद्युक्तं न हि कारणे कथंचिदपि ।
तस्माद्यदभिध्यानं तदपि च कार्यस्य युक्तमाभाति ॥ १०३ ॥
इत्याक्षेपप्राप्ताविदमधिकरणं कृतं मुनीन्द्रेण ।

ईक्षतिकर्मव्यपदेशात्सः ॥ १३ ॥

इह पिप्पलादनामा मुनिवर्यः सत्यकाममुपसन्नम् ॥ १०४ ॥
ओंकारं च सतत्त्वं तदवयवांश्च प्रबाधयन्भूयः ।
ब्रह्मध्यानालम्बनभावं द्विविधं हि दर्शयामास ॥ १०५ ॥
ब्रह्मप्राप्त्यात्मकमपि फलमुभयविधं निरूपयामास ।
एतद्वा इत्याद्येनान्वेतीत्यन्तमन्त्रभागेण ॥ १०६ ॥
पश्चान्निर्दिष्टेन हि यः पुनरित्यादिमन्त्रभागेण ।
यः साधको हि पुरुषस्त्रिमात्रमोंकारमनिशमालम्ब्य ॥ १०७ ॥
ध्यायन्परं पुमांसं विसृष्टदेहश्च सूर्यमुपयाति ।
सूर्ये संपन्नः सन्स सामभिर्ब्रह्मलोकमुपनीतः ॥ १०८ ॥
योऽसौ हिरण्यगर्भो जीवघनो यश्च पर इति प्रथितः ।
तस्मात्परं पुमासं स ईक्षते पुरिशयं परं ब्रह्म ॥ १०९ ॥
इममर्थमुपादिदेश हि स पिप्पलादश्च सत्यकामाय ।
अत्रायं परशब्दो ब्रह्मणि रूढ इति सुप्रसिद्धं हि ॥ ११० ॥
अत्र च रूढेर्बाधे न कारणं किमपि शक्यते वक्तुम् ।
यत्कार्यगमनमुक्तं लिङ्गं तत्स्यान्न बाधकं रूढेः ॥ १११ ॥

कार्यगतस्य हि पुंसः कारणसाक्षात्कृतिर्यतो दृष्टा ।
कार्यात्यय इति सूत्रे तस्मात्कारणपरोऽत्र परशब्दः ॥ ११२ ॥
यदि परशब्दो योऽयं कार्यपरः स्यात्तदैतदफलं स्यात् ।
उभयात्मकत्वकीर्तनमुभयप्राप्तिस्वरूपफलकथनम् ॥ ११३ ॥
एतद्वा इति मन्त्रे दृष्टं यदिद निरर्थकं तत्स्यात् ।
ध्येयत्वव्यपदेशो ह्यतथाभूतस्य दृश्यते शास्त्रे ॥ ११४ ॥
पञ्चाग्निध्यानादावीक्षतिकर्मत्वकीर्तनं न तथा ।
तस्यादत्र ध्येयः परः पुमानेव नापरं ब्रह्म ॥ ११५ ॥
यस्मात्परस्य पुंसः श्रुतिरीक्षतिकर्मतां ब्रवीत्यस्य ।
तस्मादेतद्वाक्यं यथोपदिष्ट हि पिप्पलादेन ॥ ११६ ॥
ज्ञेये प्रणवध्येये ब्रह्मणि परमे समन्वितं भवति ।
नन्विह परशब्दोऽयं परमात्मन्येव मुख्य इति मत्वा ॥ ११७ ॥
परमात्मपरतयाऽयं निर्दिष्टश्चेत्तथैव चात्रास्तु ।
इह दहरवाक्यमेतच्छान्दोग्ये दृश्यते ह्यथेत्यादि ॥ ११८ ॥
तत्र ब्रह्मपुरेऽस्मिन्दहरं यत्पुण्डरीकमुपदिष्टम् ।
तस्यान्तरप्रकाशं दहरत्वेनेह दर्शयित्वाऽथ ॥ ११९ ॥
तस्यान्तस्थं यत्स्यात्तस्यान्वेष्टव्यता विनिर्दिष्टा ।
भूताकाशः स्यादिह योऽसावाकाशशब्दनिर्दिष्टः ॥ १२० ॥
यस्माद्भूताकाशे रूढो ह्याकाशशब्द इह दृष्टः ।
दहरायतनापेक्षं दहरत्वं तस्य सम्यगुपपन्नम् ॥ १२१ ॥
अन्वेष्टव्यत्वादिकमस्यैव स्यान्न चेतरस्यात्र ।
अन्वेष्टव्यत्वादिकमाकाशान्तस्थ एव दृष्टमिति ॥ १२२ ॥
यद्युच्यते तदाऽयं शारीरः स्यान्न चेह परमात्मा ।
दहरत्वादिकमखिलं तस्मिन्नाराग्रमात्र उपपन्नम् ॥ १२३ ॥
जीवपुर एव तस्मिन्ब्रह्मपुरत्वं श्रुतिर्हि बोधयति ।
जीवकृतकर्मजन्यं शरीरमेतद्धि जीवपुरमेव ॥ १२४ ॥
जीवे च ब्रह्मपदं भाक्तं स्यान्नैव मुख्यभावेन ।
यो हि पुरस्वामी स्यात्पुरैकदेशे स्थितिर्भवेत्तस्य ॥ १२५ ॥
बुद्ध्याद्युपाधिकत्वाच्छारीरोऽयं भवेत्पुरस्वामी ।
परमात्मनो विभुत्वाद्दहरत्वादिकमयुक्तमेतस्मिन् ॥ १२६ ॥

इत्याशङ्कां निरसितुमधिकरणमिदं चकार मुनिरत्र ।

दहर उत्तरेभ्यः ॥ १४ ॥

हृत्पुण्डरीकवेश्मनि दहरो योऽसाविहान्तराकाशः ॥ १२७ ॥
स च परमात्मा नासौ भूताकाशो न चापि शारीरः ।
यस्मादुत्तरवाक्ये ह्येतच्छब्देन दहरमनुकृष्य ॥ १२८ ॥
आत्मत्वाद्युपदिष्टं तस्माद्दहरः परः पुमानेव ।
आत्मत्वं च यदुक्तं ह्यपहतपाप्मत्वमपि च यच्चोक्तम् ॥ १२९ ॥
यदिदं हि सत्यसंकल्पत्वान्तं विजरतादिमध्यमपि ।
तत्सर्वं परमात्मन उचितं न व्योम्नि नापि शारीरे ॥ १३० ॥
यस्माद्भूताकाशो ह्यचेतनस्तेन भवति नाऽऽत्माऽसौ ।
यद्यप्यात्मा जीवस्तथाऽपि नापहतपाप्मतादिगुणः ॥ १३१ ॥
भूताकाशौपम्यं तद्गुणसारस्य नैव संभवति ।
ब्रह्माभेदेन यदा तदेतदापाद्यते तदा भाक्तम् ॥ १३२ ॥
मुख्यासंभवपक्षे गौणार्थो गृह्यते न चेतरथा ।
यद्यप्याकाशपदं भूताकाशे तु मुख्यमेव स्यात् ॥ १३३ ॥
पूर्वोक्तधर्मबाधात्तथाऽपि सोऽयं न गृह्यते दहरः ।
आकाशस्तल्लिङ्गादित्यधिकरणेन पौनरुक्त्यमपि ॥ १३४ ॥
नैवाऽऽशङ्क्यं यस्माद्यदत्र दृष्टं हि लिङ्गमस्पष्टम् ।
अन्वेष्टव्यत्वादिकमन्तस्थस्यैव वस्तुनो दृष्टम् ॥ १३५ ॥
दहरस्याऽऽकाशस्य तु नैतद्दृष्टमिति नैवमाशङ्क्यम् ।
यद्याकाशो दहरो नान्वेष्टव्यो भवेत्तदैवं स्यात् ॥ १३६ ॥
द्यावाभूमीत्यादिकमन्वेष्टव्यं भवेदतो नैवम् ।
इह दहरवाक्यशेषे ह्यपहतपाप्मत्वगुणकमात्मानम् ॥ १३७ ॥
हृत्पुण्डरीकवेश्मन्यन्विष्य तदाश्रितांश्च सत्यादीन् ।
अन्विष्य भोगशेषं क्षपयित्वा ये व्रजन्ति परलोकम् ॥ १३८ ॥
तेषामुपासकानामकुण्ठितः कामचार उपदिष्टः ।
यस्मात्तस्मादत्र हि दहरं च तदाश्रितं च सत्यादि ॥ १३९ ॥
अन्वेष्टव्यं तदुभयमिति बोधयितुं यदन्तरिति कथितम् ।
ब्रह्मोपलब्धिसाधनमिदं शरीरमिति सुप्रसिद्धं हि ॥ १४० ॥

ब्रह्मपुरशब्दयोगोऽप्यनुकूलो भवति नैव विपरीतः ।
आकाशौपम्यादिकमखिलं परमात्मनो हि युक्ततरम् ॥ १४१ ॥
यस्मात्सर्वगतोऽसावायतनापेक्षमस्य दहरत्वम् ।
ये वाक्यशेषदर्शितधर्मास्ते साधकाः स्युरत्रेति ॥ १४२ ॥
पञ्चम्यन्तार्थमिमं सूत्रैर्वर्णयति सूत्रकारोऽयम् ।

गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च ॥ १५ ॥

इह दहरवाक्यशेषे ब्रह्मगतिर्दर्शिता हि जीवानाम् ॥ १४३ ॥
सा ब्रह्मभावमस्य हि साधयति ब्रह्मलोकशब्दोऽपि ।
अहरहरिमाः सुषुप्ताः प्रजाः खलु ब्रह्मलोकमिमम् ॥ १४४ ॥
न विदुर्गच्छन्त्योऽपीत्ययमर्थश्च प्रदर्शितस्तत्र ।
हृत्पुण्डरीकनिलयो दहरो योऽयं न चेत्परात्मा स्यात् ॥ १४५ ॥
नैतत्सुषुप्तिसमये जीवानां ब्रह्मलोकगमनं स्यात् ।
यो ब्रह्मलोकशब्दः सोऽप्यस्य परात्मतां हि साधयति ॥ १४६ ॥
न हि सत्यलोकगमनं सुप्ताद्दृष्टं हि सर्वजन्तूनाम् ।
ब्रह्मैव लोक इति खलु सहसा इह भवति नैव तत्पुरुषः ॥ १४७ ॥
तस्माद्गतिशब्दाभ्यां दहराकाशो हि भवति परमात्मा ।
ब्रह्मगमनं हि दृष्टं सुषुप्तिकाले च सर्वजन्तूनाम् ॥ १४८ ॥
सति संपद्येत्यादौ श्रुतिनिर्दिष्टं तदेतदिह लिङ्गम् ।

धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥ १६ ॥

अथ य इतिवाक्यदर्शितसेतुपदेनोपदिष्ट आत्माऽसौ ॥ १४९ ॥
अस्य चराचरलक्षणजगतो विधृतेश्च भवति परमात्मा ।
अत्र च विधृतिपदार्थो धारयिता न खलु धारणं भवति ॥१५०॥
आत्मपदसाहचर्यादयं च महिमा न दृश्यतेऽन्यत्र ।
बृहदारण्यकवाक्ये ह्येतस्येत्यादिवाक्यशेषेऽपि ॥ १५१ ॥
सोऽयं महिमा जगतो ह्यसंकरायोपवर्ण्यते भूयः ।

प्रसिद्धेश्च ॥ १७ ॥

अत्राऽऽकाशपदेन हि परमात्मा गृह्यते न चान्योऽपि ॥ १५२ ॥
आकाशो हेत्यादावाकाशपदं परात्मनि प्रथितम् ।

इतरपरामर्शात्स इति चेन्नासंभवात् ॥ १८ ॥

अथ य इति वाक्यशेषो दहराध्याये हि दृश्यते तत्र ॥ १५३ ॥

यः संप्रसादशब्दः सुषुप्तरूढोऽपि जीववचनः स्यात् ।
अत्र हि शारीरोऽस्माच्छरीरदेशात्समुत्थितो भूत्वा ॥ १५४ ॥
ज्योतिः संपद्य परं रूपेण स्वेन युज्यते योऽसौ ।
स ह्यात्मेत्युपदेशात्स एव जीवोऽत्र दहर इति चेन्न ॥ १५५ ॥
जीवो यदि दहरः स्यात्पूर्वोपन्यस्तधर्मबाधः स्यात् ।
तस्माद्योऽसौ दहरः स हि परमात्मा न चेतरः कश्चित् ॥ १५६ ॥
तद्वाक्यशेषदर्शितगुणजातं तत्र युक्तमखिलमपि ।

उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥ १९ ॥

जीवस्य दहरतायामसंभवादिति च हेतुरुपदिष्टः ॥ १५७ ॥
न हि युक्तो यदि बाधो धर्माणां पारमेश्वराणां स्यात् ।
न च न हि दृष्टो बाधः शारीरेऽस्मिन्यथोक्तधर्माणाम् ॥ १५८ ॥
यस्मादुत्तरवाक्ये दृश्यन्ते जीव एव ते धर्माः ।
आदौ चोदशरावब्रह्माणि वाक्येन दर्शयित्वाऽन्यम् ॥ १५९ ॥
देहात्मवादपक्षं तस्मिन्दोषे मरुत्वताभिहिते ।
तस्मै प्रजापतिरसाविन्द्रायाऽऽत्मानमुपादिदेशेत्थम् ॥ १६० ॥
एतं त्वेवेत्याद्यैर्बहुप्रपञ्चं ह्यनेकपर्यायैः ।
योऽसौ जाग्रत्पुरुषो य एष इत्यादिवाक्यनिर्दिष्टः ॥ १६१ ॥
सोऽयममृतादिलक्षणपरमात्मैवेति वर्णयामास ।
तद्वत्स्वाप्निकपुरुषोऽप्यमृताभयलक्षणो विनिर्दिष्टः ॥ १६२ ॥
सौषुप्तिकोऽपि पुरुषो यथोक्तलक्षणसमन्वितोऽभिहितः ।
पर्यायत्रितयेऽस्मिन्दूषणजाले हि मघवताऽभिहिते ॥ १६३ ॥
मघवन्नित्यारभ्य हि स एव जीवस्तुरीय उपदिष्टः ।
सशरीरतानिमित्तं यदप्रियं यदपि च प्रियं वाऽन्यत् ॥ १६४ ॥
न ह्यशरीरस्य सतः प्रियं च किंचिन्न चाप्रियं वाऽपि ।
अविवेकमूलकं स्यात्सशरीरत्वं यदस्य निर्दिष्टम् ॥ १६५ ॥
श्रुतिकृतविवेकबोधादविवेके शिथिलभावमापन्ने ।
व्युत्थायास्माद्देहात्साक्षात्कुर्वन्परं पुमांसं यः ॥ १६६ ॥
संपद्यते परात्मा स उत्तमः पुरुष इति हि तत्रोक्तम् ।
सोऽयममृतादिलक्षण आत्मा जीवः कथं न दहरः स्यात् ॥१६७॥

अपहतपाप्मत्वादिकमखिलं तस्योपपन्नमेव यतः।
इति नाऽऽशङ्क्यं तत्र ह्याविर्भूतस्वरूप उपदिष्टः॥ १६८॥
स च परमात्मैव स्यात्तस्य च नापहतपाप्मताबाधः।
बाधोऽयं तत्र स्याद्योऽसौ देहात्मभावमुपयातः॥ १६९॥
तदभिप्रायेणैव ह्यसम्भवादिति निरूपितो हेतुः।
स व्यज्यते कदाचिद्धर्मः स्वाभाविको हि सोपाधौ॥ १७०॥
नीलाद्युपाधियोगात्स्फटिकादौ शौक्ल्यतादिधर्म इति।
स्वाभाविकधर्माणां बाधो निर्दिश्यते हि सोपाधौ॥ १७१॥
तद्वदविद्योपाधिक आत्मनि बाधोऽत्र सूत्रकारोक्तः।
जीवे हि पारमेश्वरधर्माणां च प्रदर्शिते बाधे॥ १७२॥
जीवाद्विलक्षणत्वं परमात्मन्यपि निरूपितं भवति।
परमेश्वरस्य जीवाद्विलक्षणत्वे प्रपञ्चिते पश्चात्॥ १७३॥
तस्यासंसारित्वं सर्वज्ञत्वं समर्थितं भवति।
एतदितिवाक्यजालैर्ब्रह्माभेदेन दर्शिते जीवे॥ १७४॥
यदविद्यापरिकल्पितसंसारित्वं निवर्त्यते तस्मिन्।
संसारित्वनिवृत्तौ जीवोऽयं ब्रह्मभावमुपयाति॥ १७५॥
ब्रह्मात्मभावसिद्धौ भवति ब्रह्मैव जगदिदं सर्वम्।
प्राग्बोधात्स्वाभाविककर्तृत्वादिकमिहावलम्ब्यैव॥ १७६॥
कर्मविधयः प्रवृत्तास्तथैव चोपासनादिविधयोऽपि।

## अन्यार्थश्च परामर्शः॥ २०॥

जीवपरामर्शोऽसौ दृष्टो यो दहरवाक्यशेषे हि॥ १७७॥
स च खलु न हि जीवपरः किंतु परात्मप्रवृत्तिसिद्ध्यर्थः।
यज्ज्योतिःसंपन्नो जीवो निष्पद्यते स्वरूपेण॥ १७८॥
अपहतपाप्मा चायं ह्यन्वेष्टव्य इति बोधयत्येषः।

## अल्पश्रुतेरिति चेत्तदुक्तम्॥ २१॥

दहरत्वमस्य नोचितमिति नाऽऽङ्क्य यतश्च तस्यापि॥ १७९॥
वर्णितमेतत्पूर्वं निचाय्यतापेक्षमर्भकौकस्त्वम्।
नन्विह मुण्डकवाक्ये न तत्र सूर्य इति मन्त्र उपदिष्टः॥ १८०॥
तत्र च मन्त्रे सूर्यश्चन्द्रो नक्षत्रविद्युदादीनि।
तत्र न भान्तीत्युक्त्वा तद्भासा भाति सर्वमिति चोक्तम्॥१८१॥

तत्र हि तच्छब्दोक्तस्तेजोधातुः स किं परात्मा वा ।
विनिगमकाभावादिह संदेहोऽयं समर्थितो भवति ॥ १८२ ॥
पूर्वत्र दहरवाक्ये ह्यात्मत्वादिश्रुतेर्विरोधेन ।
तत्राऽऽकाशपदस्य हि रूढेर्बाधात्परात्मपरतोक्ता ॥ १८३ ॥
तद्वदिह भासमाने भानानिषेधश्रुति(ते)र्विरोधेन ।
लट इह रूढेर्बाधाद्भविष्यदर्थत्वमुचितमाश्रयितुम् ॥ १८४ ॥
सत्यर्था चेयं स्यात्तत्रेतिपदे च सप्तमी या सा ।
तस्मिन्सति सूर्यादिकमग्न्यवसानं न भास्यते किमपि ॥ १८५ ॥
इति वाक्यार्थे ज्ञाते तेजोधातुर्हि तत्परार्थः स्यात् ।
अहनि च भास्करबिम्बे प्रकाशमाने हि चन्द्रतारादि ॥ १८६ ॥
किमपि न भास्यत इति यत्तदेतदस्माकमनुभवारूढम् ।
यदिहानुभासमुक्तं तदपि च तुल्यस्वभावयोर्युक्तम् ॥ १८७ ॥
अनुगमनादिकमखिलं लोके तुल्यस्वभावयोर्दृष्टम् ।
तस्मात्तेजोधातुः शस्तः कोऽप्यत्र तत्परार्थः स्यात् ॥ १८८ ॥
इति शङ्कां वारयितुं मुनिना रचितं तदेतधिकरणम् ।

अनुकृतेस्तस्य च ॥ २२ ॥

तत्र च मुण्डकवाक्ये न तत्र सूर्य इतिमन्त्रनिर्दिष्टः ॥ १८९ ॥
तच्छब्दार्थः सोऽयं परमात्मा भवति नेतरः कश्चित् ।
यस्मादस्मिन्मन्त्रे तस्यानुकृतिर्हि दर्शिता जगतः ॥ १९० ॥
अनुकृतिरनुभानं स्यादनुभातीत्यादिवाक्यनिर्दिष्टम् ।
तस्येति सूत्रशेषश्चतुर्थपादोपदिष्टबोधार्थः ॥ १९१ ॥
मन्त्रे तस्येत्यत्र च षष्ठी संबन्धवाचिका भवति ।
तत्संबन्धिकभानप्रयोज्यभानाश्रयत्वमस्यार्थः ॥ १९२ ॥
यत्संबन्धिकभानप्रयोज्यभानावलम्बि जगदेतत् ।
न हि तत्पदोपदिष्टः कथमन्यः स्यात्परं तु परमात्मा ॥ १९३ ॥
नन्वनुकृतिरिह लोके दृष्टा तुल्यस्वभावयोरेव ।
चिज्जडयोरिह साधकमिति शङ्काऽप्यत्र नैव कर्तव्या ॥ १९४ ॥
संतप्तायःपिण्डे ह्यग्न्यनुकरणं हि दृश्यते लोके ।
रजसि च वाय्वनुकरणं तस्मात्तुल्यत्वमत्र न निमित्तम् ॥ १९५ ॥
यत्त्वेवकारघटितमन्त्रस्थतृतीयपादवाक्यमपि ।
तद्भानव्यतिरेकादन्याभासं स्वमर्थमाचष्टे ॥ १९६ ॥

एवं च लक्षणद्वयमत्र परात्मन इहोपदिष्टं स्यात् ।
यद्भानव्यतिरेकादन्यस्याभासमानता तत्त्वम् ॥ १९७ ॥
सर्वार्थभासकत्वं मन्त्रस्थचतुर्थपादनिर्दिष्टम् ।
मन्त्रे प्रथमे पादे भातेर्णिज्योग एव कर्तव्यः ॥ १९८ ॥
विषयार्थिका हि सा स्यात्तत्रेतिपदस्थसप्तमी या हि ।
सूर्यो वा चन्द्रो वा नक्षत्राण्यपि च विद्युदादीनि ॥ १९९ ॥
बाह्यार्थभासकान्यपि तानि परं तन्न भासयन्तीति ।
इति वाक्यार्थे फलिते न बाधकं किमपि मनसि संस्फुरति ॥ २००
सतिसप्तम्याश्रयणे श्रुतहान्यादीनि दूषणानि स्युः ।
पूर्वोपदर्शितार्थप्रतिपत्तिपरं हि तत्परं दृष्टम् ॥ २०१ ॥
पूर्वोपदर्शित किल सर्वज्ञ ब्रह्म निर्विशेषं यत् ।
यस्मिन्द्यौरित्याद्यैस्तच्छब्दार्थस्ततः परात्मैव ॥ २०२ ॥
तुल्यस्वभावयोः स्यादनुकृतिरित्यत्र कोऽपि न विरोधः ।
तं देवा इतिमन्त्रे ज्योतिष्ट्वं ह्यात्मनो विनिर्दिष्टम् ॥ २०३ ॥
तच्छुभ्रमिति च मन्त्रेऽप्यतः परात्मैव तत्पदेनोक्तः ।

## अपि च स्मर्यते ॥ २३ ॥

यद्रूपं ब्रह्मोक्तं न तत्र सूर्य इति मन्त्रवाक्येण ॥ २०४ ॥
तद्रूपं गीतायां न तदित्यारभ्य वर्णितं भूयः ।
तस्मादेतद्वाक्यं न तत्र सूर्य इति मुण्डके पठितम् ॥ २०५ ॥
भारूपे परमात्मनि विज्ञेये तत्समन्वित भवति ।
नन्वस्या कठवल्ल्यां मन्त्रो योऽङ्गुष्ठमात्र इत्यादिः ॥ २०६ ॥
अङ्गुष्ठमात्र इह खलु पुरुषोऽय देहमध्यमध्यास्ते ।
न च भूतभव्यराशेरीशानः सर्वकालसंनिहितः ॥ २०७ ॥
इत्युपदिष्टो योऽसौ स किं परात्माऽथ भवति जीवो वा ।
इत्यत्र संशयः किल भवत्यसावुभयलिङ्गयोगेन ॥ २०८ ॥
मुण्डकवाक्यस्थस्य च न तत्र सूर्य इति मन्त्रभागस्य ।
अध्याहारेण णिचस्तत्र च दृष्टानुमानलिङ्गेन ॥ २०९ ॥
ब्रह्मपरत्वं साधितमनात्मपरतां व्युदस्य पूर्वत्र ।
अङ्गुष्ठमानलिङ्गादध्याहृत्य क्रियामिहास्मीति ॥ २१० ॥
ध्यानविधिशेषभावाज्जीवपरत्वं हि युक्तमस्यापि ।
अथ सत्यवतः कायादितिस्मृतिर्ह्यत्र साधिका भवति ॥ २११ ॥

योऽङ्गुष्ठमात्रपुरुषस्तत्रोक्तो जीव एव न तदन्यः ।
तत्रोक्तपाशबन्धनलिङ्गान्यखिलानि जीव एव यतः ॥ २१२ ॥
स्मृत्यनुसारादत्राप्युपदिष्टो जीव एव न परात्मा ।
इति शङ्कां वारयितुं परात्मपरतां च तस्य बोधयितुम् ॥ २१३ ॥
अधिकरणमेतदमलं चकार मुनिसघमाननीयोऽसौ ।

शब्दादेव प्रमितः ॥ २४ ॥

योऽङ्गुष्ठपरिमितोऽसौ पुरुषो मन्त्रेण दर्शितः सोऽयम् ॥ २१४ ॥
परमेश्वर एव स्याद्यत ईशानादिशब्दयोगोऽत्र ।
यो भूतभव्यराशेरीशानः स च कथं हि जीवः स्यात् ॥ २१५ ॥
प्रकरणमपि यदिह स्यात्तदपि च दृष्टं परात्मपरमेव ।
अन्यत्रेत्यारम्भे प्रश्नो योऽसौ परात्मपर एव ॥ २१६ ॥
तस्य प्रतिवचनपथे पठितो योऽङ्गुष्ठमात्र इत्यादिः ।
स कथं जीवपरः स्यात्तस्मादिह दर्शितः परात्मैव ॥ २१७ ॥
अङ्गुष्ठपरिमितत्वं कथमात्मन इति च नैवमाशङ्क्यम् ।

हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥ २५ ॥

यद्यपि परमात्माऽयं सर्वगतः सर्वशक्तिसंपन्नः ॥ २१८ ॥
मनुजहृदयाधिवासात्तस्य ह्यङ्गुष्ठपरिमितत्वमपि ।
योऽसौ हि मनुजकायः प्रायो दृष्टो हि नियतपरिमाणः ॥ २१९॥
मनुजहृदयं यदेतत्प्रायेणाङ्गुष्ठपरिमितं दृष्टम् ।
तस्मादसौ परात्मा निर्दिष्टोऽङ्गुष्ठमात्र इति तत्र ॥ २२० ॥
अविशेषतः प्रवृत्ते शास्त्रेऽधिकृतो हि मनुज एवासौ ।
शक्तत्वार्थित्वादिकमधिकारिविशेषणं च तस्यैव ॥ २२१ ॥
यदि च परिमाणलिङ्गाज्जीवपरत्वे भवेदृधृदावेशः ।
परमात्मैकत्वेन हि जीवे तात्पर्यमस्य वाक्यस्य ॥ २२२ ॥
सकलनिगमान्तवचसां द्विधाप्रवृत्तिस्तु शास्त्रदृष्टा हि ।
प्रत्यगभिन्नब्रह्मणि सविशेषे सत्यकामतादिगुणे ॥ २२३ ॥
ज्ञानोपासनभेदात्तस्मात्पक्षद्वयेऽपि न विरोधः ।
उत्तरनिर्दिष्टो यो मन्त्रो ह्यङ्गुष्ठमात्र इत्यादिः ॥ २२४ ॥
तस्य प्रत्यगभिन्नब्रह्मार्थत्वं स्फुटं हि तत्रैव ।
ज्ञेयपरत्वं वा स्यादुपास्यपरताऽथ वाऽस्य मन्त्रस्य ॥ २२५ ॥

परमेश्वरपरतायां न बाधकं किमपि मनसि संस्फुरति।
कठवल्लीवाक्यस्थो योऽसावङ्गुष्ठमात्र इतिमन्त्रः ॥ २२६ ॥
ब्रह्मण्युपास्यरूपे विज्ञेये वा समन्वितो भवति।
मनुजाधिकारिकं चेच्छास्त्रं देवाधिकारिकं न स्यात् ॥ २२७ ॥
तदनधिकारे यानि क्रममुक्त्यर्थान्युपास्तिवाक्यानि।
बाध्येरन्निति शङ्कां निरस्य देवाधिकारकथनेन ॥ २२८ ॥
तदुपष्टम्भपुरःसरमिदमधिकरणं चकार मुनिवर्यः।

तदुपर्यपि बादरायणः संभवात् ॥ २६ ॥

मनुजानामुपरितना ये देवाः सन्ति तेऽपि चाधिकृताः ॥ २२९ ॥
श्रवणमननादिसहकृतविशुद्धपरमात्मविषयविद्यायाम्।
विद्याग्रहणाङ्गानि ह्यर्थित्वादीनि संभवन्त्येषाम् ॥ २३० ॥
मन्त्रार्थवादवाक्यैर्विग्रहवत्त्व हि दृश्यते तेषाम्।
विद्याग्रहणाङ्गानि हि लिङ्गानि ब्रह्मचर्यमुख्याणि ॥ २३१ ॥
इन्द्रादिदैवतात्म(न्य)नु दहराध्याये प्रदर्शितान्येव।
स्वोद्देश्यके हि कर्माणि न त्वस्त्येवाधिकार इति मत्वा ॥ २३२ ॥
इन्द्रादीनां कर्मण्यधिकारो नेति वर्णितं भूयः।
विद्यायामधिकारे नैतद्बाधकमुदाहृतं किमपि ॥ २३३ ॥
तस्माद्देवादीनामधिकारः स्यादिहाऽऽत्मविद्यायाम्।

विरोधः कर्मणीति चेन्नानेकप्रति-
पत्तेर्दर्शनात् ॥ २७ ॥

विद्याग्रहणाङ्गं ननु विग्रहवत्त्वं यदा हि देवानाम् ॥ २३४ ॥
कर्माणि विरोधशङ्का परिहर्तुं नेह शक्नुयात्कोऽपि।
विग्रहवतो हि लोके स्वरूपसंनिधिवशेन चाङ्गत्वम् ॥ २३५ ॥
ऋत्विक्प्रभृतिषु दृष्टं तथैव कर्माङ्गभाव इह वाच्यः।
बहुभिः क्रियमाणेषु हि बहुषु च यागेषु संनिधानेन ॥ २३६ ॥
एकः सन्निन्द्रादिः कथमिह यागाङ्गभावमुपगच्छेत्।
यागे संनिहितास्ते विग्रहवन्तः कुतो न दृश्यन्ते ॥ २३७ ॥
तस्मान्न देहिनस्ते किंत्वर्थोपहितशब्दरूपाः स्युः।
इति चेन्नेयं शङ्का यतश्च ते योगवीर्यसमुपचिताः ॥ २३८ ॥

योगैश्वर्यबलेन च बहूनि गात्राणि संसृजन्त्येते ।
निजयोगसृष्टगात्रैर्युगपदनेकत्र चाङ्गता यान्ति ॥ २३९ ॥
योगैश्वर्यबलेन च देवानां बहुशरीरसंपत्तिः ।
शाकल्ययाज्ञवल्क्यप्रश्नप्रतिवचनसरणिषु प्रथिता ॥ २४० ॥
इह वैश्वदेवशस्त्रे कति दृष्टाः शस्यमानदेवाः स्युः ।
इति शाकल्यप्रश्ने प्रतिवचनं याज्ञवल्क्यमुनिनोक्तम् ॥ २४१ ॥
त्रीणि सहस्राणि तथा त्रीणि शतानि च षडुत्तराणीति ।
तेषां संख्याकथनात्संख्येया दर्शिता भवन्त्येव ॥ २४२ ॥
केषामेते देवा विभूतयः स्युरिति पुनरपि प्रश्ने ।
वस्वादिदेवतानां विभूतयस्ते प्रदर्शितास्तेन ॥ २४३ ॥
वस्वादयश्च षण्णां पृथ्व्यादीनां विभूतयः कथिताः ।
कतमस्यैते देवा विभूतयः स्युरिति चान्तिमप्रश्ने ॥ २४४ ॥
प्राणोऽसौ निर्दिष्टो हिरण्यगर्भः समष्टिरूपो यः ।
आत्मन इत्याद्या या स्मृतिरप्यणिमादियोगसिद्धस्य ॥ २४५ ॥
युगपदनेकशरीरैर्योगं च तथाऽपि यागमाचष्टे ।
यागाङ्गभावकलिता अपि देवास्ते परैर्न दृश्यन्ते ॥ २४६ ॥
ऋत्विज इव ते न स्युर्ये ह्यन्तर्धानशक्तिसंपन्नाः ।
अर्थान्तरमपि भवति हि सूत्रे निर्दिष्टचरमभागस्य ॥ २४७ ॥
विग्रहवानेकोऽपि हि युगपदनेकाङ्गभावमुपयाति ।
एको यथा हि लोके बहुभिर्युगपज्जनो नमस्क्रियते ॥ २४८ ॥
तद्वद्यजिक्रियायामेकोऽनेकत्र चाङ्गतां गच्छेत् ।
यज्यर्थस्त्यागः स्यात्त्यागोद्देश्यत्वमेव चाङ्गत्वम् ॥ २४९ ॥
एतच्चैकस्यापि हि युगपदनेकत्र दृश्यते लोके ।
तस्मादिह देवानां विग्रहवत्त्वेऽपि बाधकाभावात् ॥ २५० ॥
देवानामधिकारो विद्यायामिति यदेतदनवद्यम् ।

**शब्द इति चेन्नातः प्रभवात्प्रत्यक्षा-
नुमानाभ्याम् ॥ २८ ॥**

नन्विह विग्रहवत्त्वेऽपीन्द्रादीनां विरोधपरिहारः ॥ २५१ ॥
कर्मणि परं कृतः स्याच्छब्दे तु विरोध एव जागर्ति ।
औत्पत्तिकसूत्रे किल नित्यस्यार्थस्य नित्यसंबन्धात् ॥ २५२ ॥

वैदिकशब्दे सकले नित्यत्वं स्थापितं हि पूर्वत्र।
संप्रति विग्रहवत्त्वे देवादीनामिहास्मदादीनाम् ॥ २५३ ॥
जननमरणादिसाम्यादनित्यता सेयमपरिहार्यैव।
तदनित्यत्वे सिद्धे तद्वाचकवेदवाक्यजातस्य ॥ २५४ ॥
सिद्धा ह्यनित्यता सा वेदाप्रामाण्यमेव साधयति।
इति शङ्काऽत्र न कार्या प्रभवत्यखिलं हि वैदिकाच्छब्दात्॥२५५॥
यत इदमखिलं प्रभवति तस्य च नित्यत्वमपरिहार्यं हि।
ब्रह्मप्रभवत्वं हि प्रथमे सूत्रे प्रदर्शितं जगतः ॥ २५६ ॥
शब्दप्रभवत्वमिह प्रपञ्चित जगत एतदसमरसम्।
इति नात्र शङ्कनीयं यतस्तयोर्भिन्नरूपता भवति ॥ २५७ ॥
ब्रह्मप्रभवत्वं यद्ब्रह्मोपादानकत्वमेवेह।
इह शब्दपूर्वकत्वं शब्दप्रभवत्वमत्र निर्दिष्टम् ॥ २५८ ॥
तेन ततो न विरोधं वर्णयितुं कोऽपि शक्नुयादत्र।
शब्दप्रभवत्वेन च देवादीनामनित्यता सिद्धा ॥ २५९ ॥
देवाद्यनित्यतायां वेदप्रामाण्यमपगतं भवति।
इत्येतद्दूषणमपि नास्मत्पक्षं स्पृशेत्कथंचिदपि ॥ २६० ॥
देवाद्युत्पत्तावपि वेदाप्रामाण्यमत्र नाऽऽशङ्क्यम्।
आकृत्या संबन्धः शब्देन व्यक्तिभिः कथाचिदपि ॥ २६१ ॥
व्यक्तीनां नानात्वात्तत्संबन्धो हि दुर्ग्रहो येन।
शब्दप्रभवत्वमिह श्रुतिस्मृतिभ्यां हि निश्चितं भवति ॥ २६२ ॥
एत इतिमन्त्रदर्शितपदपङ्क्तिस्मरणपूर्विकां सृष्टिम्।
एत इतिस्मृतिरेषा वर्णयति यतोऽस्य शब्दमूलत्वम् ॥ २६३ ॥
श्रुत्यन्तराणि जगतः शब्दप्रभवत्वमेव कथयन्ति।
स्मृतिरप्यनादिनिधनेत्याद्या जगतश्च मूलत्वम् ॥ २६४ ॥
प्रथयति तस्माच्छब्दे न विरोधः कश्चिदत्र संभवति।
ननु शब्दप्रभवत्वं जगतो यद्वर्णितं हि पूर्वत्र ॥ २६५ ॥
स च शब्दः किं वर्णः किं वा स्फोटोऽयमिति भवेच्छङ्का।
तत्र च शब्दस्फोटो भवेदयं न खलु वर्णरूपः स्यात् ॥ २६६ ॥
वर्णा एते यस्मादुत्पन्नध्वंसिनश्च गृह्यन्ते।
वर्णात्मकत्वपक्षे पूर्वोक्तं सकलमनुपपन्नं स्यात् ॥ २६७ ॥

नित्याच्छब्दादखिलं जगदेतत्प्रभवतीति पूर्वोक्तम् ।
प्रत्युच्चारणमेते वर्णा भिन्ना यतः प्रतीयन्त ॥ २६८ ॥
तारत्वाद्यैरर्थैर्भिन्नत्वेन प्रतीयमानानाम् ।
अर्थावबोधकत्वं नित्यत्वं वा कथं हि वर्णानाम् ॥ २६९ ॥
एकैकस्मिन्वर्णे नार्थप्रत्यायकत्वमिह दृष्टम् ।
क्रमवत्त्वाद्वर्णानां तत्समुदायः कथं प्रतीयेत ॥ २७० ॥
न ह्यप्रतीयमान स्वार्थप्रत्यायकत्वमुचितं स्यात् ।
पूर्वाक्षरानुभूतिजसंस्कारैः सहकृतोऽन्त्यवर्णोऽपि ॥ २७१ ॥
स्वयमप्रतीयमानो नार्थप्रत्यायकत्वमुपयाति ।
संस्कारानवबोधे न तत्सहकृतान्त्यवर्णबोधः स्यात् ॥ २७२ ॥
तस्मान्न वर्णरूपः शब्दोऽयं स्फोटरूप एव स्यात् ।
एकैकवर्णबोधजसंस्कारपुरस्कृतान्त्यवर्णमतौ ॥ २७३ ॥
एकमतिगोचरतया स्फुरणात्स्फोट इति वर्ण्यते सोऽयम् ।
एकमतिगोचरत्वं वर्णानां स्यादितीह नाऽऽशङ्क्यम् ॥ २७४ ॥
तेषामनेकभावादसिद्धमेकश्रुतीतिविषयत्वम् ।
उच्चारयितृविभेदेऽप्येकाकारप्रतीतिगम्यत्वात् ॥ २७५ ॥
स्फोटोऽयं नित्यः स्यात्प्रभवति तस्मादिदं हि जगदखिलम् ।
इति पक्षोऽयमयुक्तो यत उपवर्षो हि नैवमाचष्टे ॥ २७६ ॥
किं तु स भगवानेतत्प्रोवाच हि वर्ण एव शब्द इति ।
तत्प्रत्यभिज्ञया किल वर्णानां नित्यता परं सिद्धा ॥ २७७ ॥
उत्पन्नध्वंसित्वं वर्णेषु न दृष्टमेव केनापि ।
नाऽऽशङ्क्यं सादृश्यात्सेयं हि प्रत्यभिज्ञेति ॥ २७८ ॥
यत्रोत्तरकालंचेद्बाधो निर्णीयते तदेवं स्यात् ।
शब्दाभेदे सत्यप्युच्चारणभेदतो हि भेदमतिः ॥ २७९ ॥
तारत्वं मन्द्रत्वं यच्चोदात्तत्वमन्यदपि यच्च ।
ध्वनिकृतमेतत्सकलं न वर्णकृतमिति न भेदशङ्काऽत्र ॥२८०॥
दूरादाकर्णयतः प्रथमं कर्णपथमवतरेद्यस्तु ।
स ध्वनिरिति निर्दिष्टस्तद्भेदेनात्र भेदनिर्देशः ॥ २८१ ॥
गौरित्येकं पदमित्येकत्वप्रत्ययोऽत्र यो दृष्टः ।
समुदायविषयकत्वाद्वनसेनादाविवेह निरवद्यः ॥ २८२ ॥

जारा राजेत्यादौ भवति क्रमभेदतो हि भेदमतिः ।
तस्माद्वर्णा एव क्रमोपदिष्टा भजन्ति पदसंज्ञाम् ॥ २८३ ॥
पदसंज्ञां लभमाना वर्णाः स्वार्थान्प्रबोधयन्त्याशु ।
स्फोटस्य वाचकत्वे गौरवमधिकं न कश्चिदिह लाभः ॥ २८४ ॥
वर्णाः क्रमादिकलिताः स्फोटमभिव्यञ्जयन्ति न स्फोटः ।
अर्थं प्रत्याययतीत्यत्र फलं गौरवं न चान्यदपि ॥ २८५ ॥
वर्णेभ्यो भिन्नोऽयं स्फोटः स्वार्थाभिधायकश्च यदि ।
स्फोटप्रतीतिविषया वर्णा न स्युर्विलक्षणा हि यतः ॥ २८६ ॥
यदि च विलक्षणयोरपि नियमेनैकप्रतीतिगम्यत्वम् ।
गोमहिषशब्दयोरपि नियतैकज्ञानगम्यता भूयात् ॥ २८७ ॥
तस्माद्योऽयं शब्दः स च न स्फोटः परं तु वर्णः स्यात् ।
वर्णात्मकाद्धि शब्दात्प्रभवति जगदखिलमेतदिति सिद्धम्॥२८८॥

## अत एव च नित्यत्वम् ॥ २९ ॥

नित्यनियताकृतेरिह जगतः सर्वस्य वेदमूलत्वात् ।
वेदस्य तादृशस्य हि कर्तुरसिद्धेश्च वेदनित्यत्वम् ॥ २८९ ॥
यज्ञेन वाच इति हि श्रुतिरुपपादयति वेदनित्यत्वम् ।
यानि स्मृतिवचनानि हि युगान्त इत्यादिनोपदिष्टानि ॥ २९० ॥
तान्यखिलान्यपि भूयः प्रथयन्ति हि वेदशब्दनित्यत्वम् ।
आकृतिसंबन्धेन हि वेदप्रामाण्यमपि च निरवद्यम् ॥ २९१ ॥

## समाननामरूपत्वाच्चाऽऽवृत्तावप्य-विरोधो दर्शनात्स्मृतेश्च ॥ ३० ॥

शब्दार्थयोर्हि लोके व्यवहाराद्भासते हि संबन्धः ।
संबन्धभास एव हि शब्दस्यार्थाभिधायकत्वं स्यात् ॥ २९२ ॥
अर्थावबोधकत्वे वेदप्रामाण्यमखिलमुपपन्नम् ।
जगतः स्थितिकाले स्याद्यथोपदिष्टं हि सकलमुपपन्नम् ॥ २९३ ॥
जगदेतदखिलमपि यत्प्रलीयतेऽप्यभिनवं च जायेत ।
अभिनवसृष्टौ पूर्वव्यवहारः सर्व एव लुप्तः स्यात् ॥ २९४ ॥
व्यवहर्तृमूलकोऽसौ व्यवहारो दृश्यते न चेतरथा ।
स्वापे वागादिलये पुनः प्रबोधे हि तदनुसंधानात् ॥ २९५ ॥

पूर्वानुरूप एव व्यवहारस्तत्र भवति नात्र तथा ।
व्यवहर्तृव्यवहारव्यवहार्याणां लये समुत्पन्ने ॥ २९६ ॥
अनुसंधातुरभावात्तद्व्यवहारः कथं पुनः सर्गे ।
व्यवहारो यदि न स्याद्योऽसौ शब्दार्थयोर्हि संबन्धः ॥ २९७ ॥
न स विज्ञायेत तदा कथमस्यार्थावबोधकत्वं स्यात् ।
तदभावे वेदस्य प्रामाण्यकथाऽपि दूरवार्तेव ॥ २९८ ॥
इति शङ्काऽत्र न कार्या समनामजगत्समानरूपं हि ।
जगति समनामरूपे ह्यावृत्त्यभ्युपगमेऽपि न विरोधः ॥ २९९ ॥
यदि नामरूपभेदः पूर्वोत्तरयोर्भवेत्तदा तत्र ।
व्यवहारलोपतः स्यादर्थानभिधायकत्वमनिवार्यम् ॥ ३०० ॥
जगति समनामरूपे व्यवहारविलोपकारणाभावात् ।
अर्थावबोधकत्वे सिद्धे प्रामाण्यमनपवदनीयम् ॥ ३०१ ॥
कल्पान्तरं गतानां व्यवहारो नैव कस्यचिद्भवति ।
अनुसंधातुरभावादित्युक्तं दूषणं च नात्र स्यात् ॥ ३०२ ॥
ये चेह पूर्वकल्पे प्रकृष्टविज्ञानकर्मसंपन्नाः ।
अपि वर्तमानकल्पे प्रादुर्भूता हिरण्यगर्भाद्याः ॥ ३०३ ॥
कल्पान्तरगतमखिलं स्मर्तुं व्यवहर्तुमधिकृतास्ते स्युः ।
यो ब्रह्माणमितिश्रुतिरिममेवार्थं हि सकलमाचष्टे ॥ ३०४ ॥
काण्डर्षिप्रभृतीनां व्यतीतकल्पाभिसंधिसामर्थ्यम् ।
प्रथयन्ति श्रुतयोऽन्याः स्मृतयस्तस्मान्न कश्चिदिह दोषः ॥ ३०५ ॥
समनामरूपतां खलु जगतो दर्शयति नामनिर्देशात् ।
सूर्याचन्द्रमसाविितिमन्त्रोऽयं तैत्तिरीयके पठितः ॥ ३०६ ॥
नक्षत्रेष्टिविधावप्यग्निर्वेत्यादिका श्रुतिश्चैवम् ।
अग्न्यादिदेवतानां कल्पान्तरनामरूपतां ब्रूते ॥ ३०७ ॥
श्रुतयोऽन्याः कथयन्ति हि जगतः समनामरूपतामस्य ।
नामभिरेवेत्यन्ताः स्मृतयोऽप्युक्तार्थमेव कथयन्ति ॥ ३०८ ॥

मध्वादिष्वसंभवादनधिकारं जैमिनिः ॥ ३१ ॥

देवानामधिकारो विद्यायां बादरायणेनोक्तः ।
स च खलु न समञ्जस इति जैमिनिराचार्य एवमाचष्टे ॥ ३०९ ॥

छान्दोग्ये मधुविद्या या चासावित्यनेन निर्दिष्टा ।
तत्राऽऽदित्यो योऽयं माध्विति शब्देन मन्त्रनिर्दिष्टः ॥ ३१० ॥
मधुभावेनोपास्यो ह्यादित्य इति प्रतीयते तस्मात् ।
नेयं मधुविद्या स्यात्तत्राऽऽदित्यस्य नाधिकारः स्यात् ॥ ३११ ॥
आदित्यसंश्रितानि ह्यमृतानि च पञ्च तत्र दृष्टानि ।
वस्वाद्युपजीव्यानि प्रथितान्येतानि रोहितादीनि ॥ ३१२ ॥
तदुपासनाफलं यद्वस्वादिप्राप्तिलक्षणं तदपि ।
तत्रैव दृष्टमन्त्रे ह्यधिकारो नैव देवतानां स्यात् ॥ ३१३ ॥
योऽयमुपास्योपासकभावः सकलो हि भेदमूलः स्यात् ।
भेदाभावादत्र ह्यधिकारो नैव शक्यते वक्तुम् ॥ ३१४ ॥
कर्णादिसप्तकेष्वपि यान्ययमित्यादिमन्त्रदृष्टानि ।
ऋषिभावनात्मकानि ह्युपासनान्यपि च सुप्रसिद्धानि ॥ ३१५ ॥
तदुपासनेष्वृषीणामधिकारोऽयं न शक्यते वक्तुम् ।
तस्मादिन्द्रादीनां मध्वादिष्वनधिकारसंसिद्धौ ॥ ३१६ ॥
विद्यान्तरानधिकृते निरुक्तविद्याधिकारभङ्गेण ।
ब्रह्मात्मगोचरायां विद्यायामनधिकार एव स्यात् ॥ ३१७ ॥

## ज्योतिषि भावाच्च ॥ ३२ ॥

यदिदं ज्योतिर्मण्डलमाश्रित्य नभो विभासयत्यखिलम् ।
आदित्याद्याः शब्दास्तत्प्रतिपादनपरा हि लक्ष्यन्ते ॥ ३१८ ॥
ज्योतिर्मण्डलरूपा देवाः सर्वे ह्यचेतना दृष्टाः ।
विद्याग्रहणाङ्गं यत्सामर्थ्यं तत्कथं भवेत्तेषाम् ॥ ३१९ ॥
विग्रहवतां हि भूयस्तदेतदखिलं हि दृश्यते लोके ।
न हि विग्रहादिरहिता देवा विद्याधिकारिणस्ते स्युः ॥ ३२० ॥
विग्रहयोगो हविषां भोगश्चैश्वर्यसुप्रसन्नत्वे ।
फलदातृत्वमपीदं पञ्चकमितिहासदर्शित यदपि ॥ ३२१ ॥
तत्पौरुषेयवाक्यप्रदर्शितं न प्रमाणसिद्धं स्यात् ।
विधिविनियुक्ता मन्त्राः प्रयोगनिहितार्थबोधमात्रपराः ॥ ३२२ ॥
न हि देवविग्रहादिप्रदर्शनार्थे प्रमाणभूताः स्युः ।
इति जैमिन्याक्षेपो निरस्यते बादरायणेनेह ॥ ३२३ ॥

भावं तु बादरायणोऽस्ति हि ॥ ३६ ॥

इह बादरायणो मुनिरधिकारं देवतात्मनां ब्रूते ।
ब्रह्मत्वगोचरायां विद्यायामर्थितादियोगेन ॥ ३२४ ॥
यद्यपि मधुविद्यादौ देवानामनधिकार एव स्यात् ।
नैतावताऽधिकारे प्रसरति दोषः परात्मविद्यायाम् ॥ ३२५ ॥
एकत्रानधिकारे ह्यन्यत्राप्यनधिकार एवेति ।
नायं नियमो दृष्टः केनापि हि कुत्रचित्कदाचिदपि ॥ ३२६ ॥
अप्राप्तराजसूयोऽप्यधिकारी भवति दर्शयागादौ ।
तत्र च यो न्यायः स्यादत्रापि स एव निर्णये हेतुः ॥ ३२७ ॥
तद्यो यो देवानामित्यादिश्रुतिरपीह देवानाम् ।
विद्यायामधिकारं विद्याफलभूतमोक्षमभिधत्ते ॥ ३२८ ॥
इन्द्रो हेत्याद्या या श्रुतिरपि देवाधिकारमभिधत्ते ।
गन्धर्वयाज्ञवल्क्यस्मृतयोऽप्युक्तार्थमेव कथयन्ति ॥ ३२९ ॥
ज्योतिर्मण्डलरूपा देवास्ते देहधारिणो न स्युः ।
इति शङ्का हि न युक्ता यस्माद्देवास्तु शक्तिसंपन्नाः ॥ ३३० ॥
ज्योतिर्मयात्मना हि स्थातुं विग्रहविशेषमादातुम् ।
निपुणा इति खलु दृष्टं सुब्रह्मण्यार्थवादवाक्येषु ॥ ३३१ ॥
गङ्गातटेऽतिविमले कुन्तीं स्वध्यानतत्परां दृष्ट्वा ।
आदित्य एष भगवान्पुरुषाकृतिमास्थितो जगामाऽऽशु ॥ ३३२ ॥
इत्यादिस्मृतयोऽपि हि देवानां विग्रहादियोगं च ।
यज्ज्योतिरात्मना हि स्थितिमपि कथयन्ति तेन न विरोधः॥३३३॥
विग्रहयोगाभावे देवानां तदिदमनुपपन्नं स्यात् ।
मघवान्प्रजापतावितिवाक्ये यद्ब्रह्मचर्यमुपदिष्टम् ॥ ३३४ ॥
अन्यदपि श्रुतिवचनं प्रथितं यद्वज्रहस्त इति यच्च ।
इन्द्रं सहस्रनयनं गोत्रभिदं वज्रबाहुमभिधत्ते ॥ ३३५ ॥
विग्रहयोगाभावे यागोद्देश्यत्वमनुपपन्नं स्यात् ।
ध्यायेद्वषट्करिष्यन्नित्यन्तानीह वेदवाक्यानि ॥ ३३६ ॥
ध्यानारूढस्यैव हि यागोद्देश्यत्वमामनन्ति यतः ।
लोके विग्रहरहितो ध्यातुं शक्यो न नियतभावेन ॥ ३३७ ॥
इह विग्रहादिमत्त्वप्रतिपत्तिपरं हि वाक्यजातं यत् ।
तच्चार्थवादरूपं स्वार्थपरं नेति नैवमाशङ्क्यम् ॥ ३३८ ॥

येनार्थवादवाक्यान्यवान्तरान्वयधियं हि जनयित्वा ।
कैमर्थक्यवशेन स्तुतिलक्षकतां प्रयान्ति नैवाऽऽद्यो ॥ ३३९ ॥
नैतावताऽर्थवादः स्वार्थपरो नेति युक्तमभिधातुम् ।
श्रुतिवचनदृष्टमर्थं न शक्नुयात्कोऽपि वा निराकर्तुम् ॥ ३४० ॥
इतिहासादिकमपि यत्तदखिलमत्र प्रमाणमेव स्यात् ।
यस्मात्समूलमेतन्महर्षिजुष्टं न चाप्रमाणं स्यात् ॥ ३४१ ॥
इह पौरुषेयभावादप्रामाण्ये तु शास्त्रमफलं स्यात् ।
वर्णाश्रमव्यवस्थाभिधायि शास्त्रं यदाऽप्रमाणं स्यात् ॥ ३४२ ॥
जगदखिलमव्यवस्थितवर्णाश्रमधर्मकलुषितं प्रभवेत् ।
तस्माद्यदिदं सकलं प्रमाणभूतं न चान्यथा भवति ॥ ३४३ ॥
ये चाणिमादियोगैः सिद्धा व्यासादयश्च ये चान्ये ।
ते देवान्पश्यन्तीत्येषा शास्त्रप्रसिद्धिरपि युक्ता ॥ ३४४ ॥
तस्माद्विग्रहवत्त्वं देवादीनां प्रमाणसंसिद्धम् ।
विग्रहवत्त्वादेव हि विद्यायामधिकृता हि देवाः स्युः ॥ ३४५ ॥
विद्याधिकारिवाक्यं समन्वितं विग्रहादिभूतार्थे ।
तद्वद्ब्रह्मणि भूते समन्वितं सकलनिगमवाक्यमपि ॥ ३४६ ॥
ननु यदि विग्रहवत्त्वाद्देवा विद्याधिकारिणः स्युरिति ।
शूद्रा अप्यविशेषाद्विद्यायामधिकृताः कुतो न स्युः ॥ ३४७ ॥
इह शूद्रयोनिजनिता विशिष्टविज्ञानसंपदनुकम्प्याः ।
विदुरप्रमुखा ये स्युर्विख्याता ब्रह्मवित्समाजेषु ॥ ३४८ ॥
अर्थित्वं सामर्थ्यं विद्याङ्गं यच्च सकलमुपदिष्टम् ।
तत्सर्वं शूद्राणां विग्रहयोगात्समञ्जसं भवति ॥ ३४९ ॥
तस्माच्छूद्रो यज्ञेऽनवक्लृप्त इति प्रदर्शितं यदपि ।
यज्ञानवक्लृप्तत्वं तच्च न विद्याधिकारविद्वेषि ॥ ३५० ॥
यच्चाग्निहोत्रसाधनसंपद्रहितोऽत्र नाधिकारीति ।
नायं नियमो यस्माद्विदुरादिष्वपि च दृश्यते विद्या ॥ ३५१ ॥
संवर्गवाक्यशेषे ह्ययमेवार्थः प्रदर्शितो भवति ।
जानश्रुतिर्हि कश्चिद्विख्यातः परमधार्मिको भूपः ३५२ ॥
स च हंसवाक्यदर्शितरैक्वमहामुनिचरित्रमाकर्ण्य ।
षट्छतसंख्याकैः सह गोभी रथमेकमाददानोऽयम् ॥ ३५३ ॥
विद्याग्रहणार्थं तं जगाम दृढभक्तिभावितस्वात्मा ।
तमृषी रैक्वो दृष्ट्वा जानश्रुतिमाह शूद्रशब्देन ॥ ३५४ ॥

तस्माच्छूद्रोऽप्यस्यां विद्यायामधिकृतो भवत्येव ।
इत्याक्षेपं सकलं निरसितुमधिकरणमेतदाह मुनिः ॥ ३५५ ॥

शुगस्य तदनादरश्रवणात्तदा-
द्रवणात्सूच्यते हि ॥ ३४ ॥

विग्रहयोगाच्छूद्रोऽप्यधिकुर्यादिति हि नैवमाशङ्क्यम् ।
यो वै गृहीतवेदो योऽसौ सम्यग्गृहीतवेदार्थः ॥ ३५६ ॥
ब्रह्मात्मगोचरायां विद्यायामधिकृतः स एव स्यात् ।
असति हि सामर्थ्ये स्यादर्थित्वं केवलं न विद्याङ्गम् ॥ ३५७ ॥
शास्त्रोपदिष्टमेव हि सामर्थ्यं यत्तदेव विद्याङ्गम् ।
अध्ययनविध्यधिकृते विचारशक्तिं हि शास्त्रमाचष्टे ॥ ३५८ ॥
उपनयनपूर्वकेऽस्मिन्वेदाध्ययने न चायमधिकारी ।
उपनयनादिकमखिलं विहितं वर्णत्रयस्य नान्यस्य ॥ ३५९ ॥
विदुरादिषु दृष्टा या विद्या सा पूर्वसाधनायत्ता ।
यज्ज्ञानवक्तृतत्वे प्रमाणभूतं यदेव वाक्यं स्यात् ॥ ३६० ॥
विद्यानवक्तृतत्वे तदेव मानं हि युक्तिसामान्यात् ।
शूद्रपदं यच्चैतल्लिङ्गं संवर्गवाक्यनिर्दिष्टम् ॥ ३६१ ॥
नैतन्न्यायाभावान्न्यायानुगृहीतमेव लिङ्गं स्यात् ।
तत्र च रूढेर्बाधाद्योगार्थाश्रयणमेव कर्तव्यम् ॥ ३६२ ॥
कम्वर इति हंसोक्तेरस्य च जानश्रुतेः शुगुत्पन्ना ।
शुचमेतां सूचयितुं रैक्वमुनिः प्राह त च राजानम् ॥ ३६३ ॥
आत्मापरोक्षबोधं प्रख्यापयितुं स एष मुनिवर्यः ।
योऽयं रथो हारित्वा गोभिः सहितस्तवास्तु शूद्रेति ॥ ३६४ ॥
तत्र च शूद्रपदस्य हि योगार्थो गृह्यते न रूढ्यर्थः ।
शुचमभिदुद्रावाय शुचा हि दुद्राव रैक्वमयमिति वा ॥ ३६५ ॥
योगबलबोधितोऽसौ राजा जानश्रुतिर्न शूद्रः स्यात् ।
क्षत्रप्रेषणरूपादैश्वर्यात्सूच्यतेऽयमेवार्थः ॥ ३६६ ॥

क्षत्रियत्वगतेश्चोत्तरत्र चैत्र-
रथेन लिङ्गात् ॥ ३५ ॥

संवर्गवाक्यशेषात्क्षत्रियता हि प्रतीयते तत्र ।
चित्ररथवंशजन्मा ह्यभिप्रतारी नृपो विनिर्दिष्टः ॥ ३६७ ॥

तद्याजको हि योऽसौ कापेयः शौनकोऽपि तत्रोक्तः।
चित्ररथः क्षत्रिय इति कापेया याजकाश्च तस्येति ॥ ३६८ ॥
निर्दिष्टमेव तस्मादभिप्रतारी हि भवति राजाऽसौ।
तेन च सह निर्देशाल्लिङ्गाज्जानश्रुतिर्भवेद्राजा ॥ ३६९ ॥

संस्कारपरामर्शात्तदभावाभिलापाच्च ॥ ३६ ॥

इह खलु विद्याग्रहणे संस्कारो वैदिकः परामृष्टः।
ब्रह्मपरा इत्याद्यैस्तदभावश्चाभिलप्यते शूद्रे ॥ ३७० ॥
शूद्रे न पातकं स्याद्भक्षणमूलं न चास्य संस्कारः।
इममर्थमुपदिशन्ति हि न शूद्र इत्यादिकानि वाक्यानि ॥ ३७१ ॥

तदभावनिर्धारणे च प्रवृत्तेः ॥ ३७ ॥

गौतममुनिरिह भगवाञ्जाबालं निकटमागतं दृष्ट्वा।
सत्यवचनेन तस्मिञ्शूद्रत्वाभावनिश्चये जाते ॥ ३७२ ॥
अनुशासितुमुपनेतुं जाबालमिमं प्रवृत्त इति दृष्टम्।
तस्माद्योऽसौ शूद्रो विद्यायामधिकृतः कथ न स्यात् ॥ ३७३ ॥

श्रवणाध्ययनार्थप्रतिषेधात्स्मृतेश्च ॥ ३८ ॥

वेदस्य श्रवण वाऽप्यध्ययनं वा निषिध्यते शूद्रे।
तदुभयनिषेधने स्यादर्थावगमो निषिद्ध एवास्य ॥ ३७४ ॥
अयमर्थः सकलोऽपि ह्यथास्य वेदामितिसूत्रवाक्येषु।
उपदिष्टस्तत्करणे प्रायश्चित्तं च तत्र निर्दिष्टम् ॥ ३७५ ॥
संस्कारादिविहीनः श्रवणाध्ययनादिसंपदा रहितः।
विद्यायां प्रतिषिद्धो विद्याधिकृतः कथं भवेच्छूद्रः ॥ ३७६ ॥
तस्मादेतद्वाक्यं समन्वितं क्षत्रिये यथा सिद्धे।
सकलमपि श्रुतिवाक्यं सिद्धे ब्रह्मणि समन्वितं भवति ॥ ३७७ ॥
ननु कठवल्ल्यामस्यां यदिदं किं चेतिवाक्यमुपदिष्टम्।
तत्र च जगदखिलमपि प्राणाश्रितमेव चेष्टते यदिदम् ॥ ३७८ ॥
सुमहत्तरभयहेतुः समुद्यतं वज्रमिव हि लोकेऽस्मिन्।
यच्चैवं विदुरेनं ते सर्वे यान्ति मोक्षमित्युक्तम् ॥ ३७९ ॥
अङ्गुष्ठमात्रवाक्यं जीवे ब्रह्मैक्यबोधजनकतया।
ब्रह्मपरमेतदिति खलु वर्णितमत्र तु तथा न संभवति ॥ ३८० ॥
एजयितृत्वाद्विदिते प्राणे ब्रह्मैक्यबोधनायोगात्।
ब्रह्मपरत्वायोगे प्राणपरत्वं हि युक्तमाश्रयितुम् ॥ ३८१ ॥

वज्रोपमितत्वं यद्वायोः पर्जन्यभावयोगेन ।
युक्तं स्यादिति शङ्कां निरसितुमधिकरणमेतदाह मुनिः ॥ ३८२ ॥

कम्पनात् ॥ ३९ ॥

अत्र हि योऽसौ प्राणः स हि परमात्मा न वायुमात्रं स्यात् ।
न हि केवलो हि वायुः सर्वपरिस्पन्दकारणं भवति ॥ ३८३ ॥
न प्राणेनेत्याद्यै सर्वपरिस्पन्दकारणत्व यत् ।
परमात्मन्युपदिष्टं तस्मात्प्राणोऽत्र भवति परमात्मा ॥ ३८४ ॥
भयहेतुत्वादिकमपि परमात्मन्येव दृश्यते यस्मात् ।
अत्र भयादित्यादौ तस्मात्प्राणो हि भवति परमात्मा ॥ ३८५ ॥
भीषाऽस्मादित्यादावेतत्सर्वं प्रपञ्चितं भूयः ।
भयहेतुत्वं यदपि च सर्वपरिस्पन्दकारणत्वं च ॥ ३८६ ॥
पूर्वस्मिन्नपि भागे तदेव शुक्रमितिवाक्यनिर्दिष्टः ।
परमात्मैव हि तस्मादत्र प्राणः कथं स वायुः स्यात् ॥ ३८७ ॥
प्रकरणसमाश्रयेऽपि हि परमात्मैव प्रतीयते नान्यः ।
अन्यत्रेत्यारम्भात्प्रकरणमखिलं परात्मपरमेव ॥ ३८८ ॥
तद्विज्ञानफलं यद्ब्रह्ममृतत्वं तत्परात्मपक्षे स्यात् ।
न हि वायुमात्रपक्षे तस्मात्प्राणोऽत्र भवति परमात्मा ॥ ३८९ ॥
कठवल्लीवाक्यस्थं यदिदं किं चेतिवाक्यमखिलमपि ।
ब्रह्मणि परमानन्दे विज्ञेयात्मनि समन्वितं भवति ॥ ३९० ॥
नन्विह दहराध्याये प्राजापत्यं य एष इत्यादि ।
वाक्यं दृष्टं तत्र ज्योतिःशब्दो हि दृश्यते योऽसौ ॥ ३९१ ॥
ब्रह्मपरो वा किं वा सूर्यपरो वेति संशये जाते ।
पूर्वत्र सर्वशब्दं ब्रह्मपरत्वप्रसाधकं मत्वा ॥ ३९२ ॥
तत्पदयोगेनायं प्राणो ब्रह्मेति युक्तमाश्रयितुम् ।
अत्र तु न तथा लिङ्गं प्रकरणमप्यात्मगोचरं दूरे ॥ ३९३ ॥
तस्माज्ज्योतिःशब्दं न परं ब्रह्मेति शङ्कितं दोषम् ।
निरसितुमिदमधिकरणं कृपया रचितं मुनिप्रवीरेण ॥ ३९४ ॥

ज्योतिर्दर्शनात् ॥ ४० ॥

अत्र ज्योतिःशब्दं भवति परं ब्रह्म नैव सूर्यादि ।
यस्मादस्मिन्वाक्ये स उत्तमः पुरुष इति तु दृष्टं हि ॥ ३९५ ॥

उत्तमपुरुषपदं तत्प्रकरणसाहाय्ययोगमालम्ब्य ।
ज्योतिःशब्दस्यास्य ब्रह्मपरत्वं प्रसाधयितुमीष्ट ॥ ३९६ ॥
क्रममुक्तिबोधनार्थं नेदं वाक्यं प्रवृत्तमिह यस्मात् ।
इह निर्विशेषगोचरमखिलं वाक्यं तु दृश्यते ह्येतत् ॥ ३९७ ॥
अशरीरं वावेतिश्रुत्युक्तं यदशरीरतारूपम् ।
तच्च न मार्गायत्तं तस्माद्युक्ता न सूर्यपरताऽत्र ॥ ३९८ ॥
सूर्यप्राप्तिद्वारा ब्रह्मप्राप्तिर्विवक्षिता यत्र ।
तत्र च सूर्यपरत्वं ज्योतिःशब्दस्य युक्तमाश्रयितुम् ॥ ३९९ ॥
सगुणोपास्तौ तदिदं युक्तं न हि निर्विशेषविद्यायाम् ।
तस्मादस्मिन्वाक्ये ज्योतिःशब्दः परात्मपर एव ॥ ४०० ॥
अशरीरतात्मकोऽसौ मोक्षो ब्रह्मापरोक्षसापेक्षः ।
व्यादायेत्यत्रेव ह्यत्र क्त्वान्तस्य विनिमयो भवति ॥ ४०१ ॥
तस्माद्दहराध्याये ज्योतिर्वाक्यं यदत्र निर्दिष्टम् ।
तत्स्वप्रकाशरूपे ब्रह्मणि परमे समन्वितं भवति ॥ ४०२ ॥
नन्वत्र च्छान्दोग्ये ह्याकाशो हेतिवाक्यमुपदिष्टम् ।
तत्राऽऽकाशो योऽसौ निर्वहिता नामरूपयोर्भवति ॥ ४०३ ॥
ते चापि नामरूपे यस्माद्भिन्ने हि तत्परं ब्रह्म ।
तदमृतमात्माऽपि स्यादित्याकाशः प्रदर्शितो भूयः ॥ ४०४ ॥
स च किं भूताकाशः किं परमात्मेति भवति संदेहः ।
पूर्वमुपक्रमवाक्यश्रुतात्मपदयोगबलसहायेन ॥ ४०५ ॥
ज्योतिष्पदं यदेतद्ब्रह्मपरं हीति वर्णित भूयः ।
तद्वदिहोपक्रमगतमाकाशश्रुतिबलं समालम्ब्य ॥ ४०६ ॥
भूताकाशपर स्यादखिलं वाक्यं यदेतदुपदिष्टम् ।
इत्याक्षेपं निरसितुमधिकरणमिदं चकार मुनिवर्यः ॥ ४०७ ॥

आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ ४१ ॥

अत्राऽऽकाशो योऽसौ ब्रह्मैव स्यान्न भूतमात्रं हि ।
अर्थान्तरत्वमस्मिन्निर्दिष्टं येन नामरूपाभ्याम् ॥ ४०८ ॥
तन्निर्देशादस्मिन्न कार्यरूपत्वमभिहितं भवति ।
निर्वहितृत्वमिहोक्तं परात्मनोऽन्यत्र नैव संभवति ॥ ४०९ ॥
तद्ब्रह्म तदमृतमिति व्यपदेशो योऽत्र दृश्यते भूयः ।
न हि सर्वो युक्तः स्याद्ब्रह्मणि परमे न भूतमात्रेऽपि ॥ ४१० ॥

आकाशश्रुतिरेषा बहुभिर्लिङ्गैरुपद्रुता भूयः ।
स्वविषयविकलादीनां विषयान्तरमगतिकं समाश्रयते ॥ ४११ ॥
तस्मादेतद्वाक्यं छान्दोग्ये दृश्यमानमखिलमपि ।
अमृतामयस्वरूपे ब्रह्मणि परमे समन्वितं भवति ॥ ४१२ ॥
नन्विह बृहदारण्ये योऽयं विज्ञानमय इति प्रथितम् ।
वाक्यं दृष्टं तत्किं जीवपरं स्यात्परात्मपरमथ वा ॥ ४१३ ॥
पूर्वस्मिन्नधिकरणे लिङ्गं ह्यर्थान्तरत्वमुपदिष्टम् ।
तच्च न लिङ्गं यस्मादभिन्नरूपेऽपि भेद उपदिष्टः ॥ ४१४ ॥
एवमितिवाक्य एव हि विज्ञानमयो दृश्यते न शारीरः ।
इत्याशङ्कां निरसितुमधिकरणमिदं कृतं हि सूत्रकृता ॥ ४१५ ॥

सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ ४२ ॥

व्यपदेशादितिसूत्रे पञ्चम्यन्तस्य पूरणं कार्यम् ।
विज्ञानमयो योऽसौ न हि शारीरः परं तु परमात्मा ॥ ४१६ ॥
यस्मात्स खलु सुषुप्तावुत्क्रान्तावुच्यते हि भेदेन ।
एवमितिवाक्यजालैः शारीरविलक्षणो हि यः प्राज्ञः ॥ ४१७ ॥
निर्दिश्यते स एव हि विज्ञानमयः स एव परमात्मा ।
यस्माद्विज्ञानमयो महानजश्चेति पूर्वनिर्दिष्टः ॥ ४१८ ॥
अयमिह सलिलादिपदैर्यदुत्तरत्रापि दर्शितो भूयः ।
प्रश्नप्रतिवचनानि हि परमात्मपराणि तत्र दृश्यन्ते ॥ ४१९ ॥

पत्यादिशब्देभ्यः ॥ ४३ ॥

पत्यादयश्च शब्दाः स एष इत्यादिवाक्यनिर्दिष्टाः ।
ते खलु परमात्मपरा विज्ञानमये हि दर्शिता ह्यत्र ॥ ४२० ॥
तस्माद्विज्ञानमयः पर एवाऽऽत्मा न चेतरः कश्चित् ।
यदिदं वाक्यमिहोक्तं समन्वितं निर्विशेषचिन्मात्रे ॥ ४२१ ॥
शारीरकमीमांसा मुनिना व्यासेन विरचिता सेयम् ।
चतुरध्यायी तस्यां प्रथमो योऽसौ समन्वयाध्यायः ॥ ४२२ ॥
तत्र हि तृतीयपादे सूत्रार्थो यश्च भाष्यकारोक्तः ।
आर्यावृत्तैरमलैः प्रकाशितो जयतु सोऽयमनवद्यः ॥ ४२३ ॥

इति प्रथमाध्यायस्य तृतीयः पादः
समाप्तः ॥ ३ ॥

———

## अथ चतुर्थपादप्रारम्भः ।

---

त्रिभिरप्येतैः पादैर्ब्रह्मणि वेदान्तवाक्यनिचयस्य ।
लिङ्गैरुपक्रमादिभिरन्यैश्च समन्वयो हि निर्णीतः ॥ १ ॥
ईक्षत्यधिकरणे हि प्रधानवादश्च परिहृतः पूर्वम् ।
तद्यत्प्रधानमस्य त्वीक्षणलिङ्गादशब्दता कथिता ॥ २ ॥
अत्र च वेदान्तानां गतिसामान्यं च चेतने गदितम् ।
तत्रेदमनुपपन्नं यदशब्दत्वं निरूपितं तस्य ॥ ३ ॥
ब्रह्मणि गतिसामान्यं प्रधानमिह येन शब्दवद्दृष्टम् ।
तेन च गतिसामान्यं प्रधानपक्षेऽपि युक्तमाश्रयितुम् ॥ ४ ॥
कठवल्ल्यामेतस्यां महतः परमिति हि वाक्यमुपदिष्टम् ।
तत्र च वाक्ये महतः परमव्यक्तं प्रदर्शितं भवति ॥ ५ ॥
विज्ञानमयपदस्य ब्रह्मपरत्व प्रदर्शितं पूर्वम् ।
अस्याव्यक्तपरस्य प्रधानपरतेह तद्वदेव स्यात् ॥ ६ ॥
पत्यादिशब्दयोगाद्विज्ञानमयो यथा परं ब्रह्म ।
महदादिशब्दयोगादव्यक्तमिह प्रधानमेव स्यात् ॥ ७ ॥
तस्माच्छब्दवदेतत्प्राधानमत्रोपलभ्यते वाक्ये ।
तस्य च सशब्दतायां गतिसामान्य च तत्र सुगमं स्यात् ॥ ८ ॥
तस्यैव युक्तमेतज्जगतो जन्मादिकारणत्वमपि ।
सकलागमान्तवचसां समन्वयो यश्च पूर्वनिर्दिष्टः ॥ ९ ॥
ब्रह्मणि स कथं सिध्येद्यतः प्रधाने प्रतीयते सोऽयम् ।
इत्याक्षेपं निरसितुमिदमधिकरणं चकार मुनिवर्यः ॥ १० ॥

**आनुमानिकमप्येकेषामिति चेन्न शरीर-रूपकविन्यस्तगृहीतेर्दर्शयति च ॥ १ ॥**

कपिलस्मृतिवचनैरिदमचेतनं यत्प्रधानमुपदिष्टम् ।
कठवल्ल्यामेतस्यामव्यक्तपदोक्तमेतदेव स्यात् ॥ ११ ॥
रूढिबलाद्योगबलादव्यक्तपदं समञ्जसं तत्र ।
इति तस्य शब्दवत्त्वादशब्दता त्वनुचिताऽस्य वक्तुं स्यात् ॥ १२ ॥
इति चेन्नेयं शङ्का यतः प्रधानं न चतदव्यक्तम् ।
रूपकविन्यस्तं यच्छरीरमव्यक्तशब्दयोग्यं स्यात् ॥ १३ ॥

पूर्वस्मिन्वाक्ये किल योऽसावात्मा रथी विनिर्दिष्टः ।
तस्य च रथः शरीरं बुद्धिः सारथिरिदं मनो यदपि ॥ १४ ॥
प्रग्रह इति निर्दिष्टं हयाश्च सकलेन्द्रियाणि मार्गाश्च ।
शब्दादयो हि विषया भोक्ता संघातरूप आत्मेति ॥ १५ ॥
निर्दिश्य सकलमेतद्रथिनो मार्गद्वयं च निर्दिष्टम् ।
बुद्धीन्द्रियैरशुद्धैः पुरस्कृतश्चेत्स याति संसारम् ॥ १६ ॥
योऽसौ रथी यदा स्याद्विशुद्धबुद्ध्यादिपरिवृतः शुद्धः ।
स हि मार्गपारभूतं विष्णोः परमं पदं प्रयातीति ॥ १७ ॥
तदिदं परमपदं यद्दर्शयितुं वाक्यमेतदुपदिष्टम् ।
तच्चेन्द्रियेभ्य इति खलु तत्र च दृष्ट त एव निर्दिष्टाः ॥ १८ ॥
ये पूर्ववाक्यदृष्टा आत्मप्रमुखा भवन्ति विषयान्ताः ।
आत्मान्ता येऽत्र स्युः पूर्वत्रेहापि तुल्यशब्दा हि ॥ १९ ॥
अव्यक्तपदमिहोक्तं पूर्वस्मिन्नोपलभ्यते वाक्ये ।
तदपि प्रकरणबलतः पूर्वोक्तशरीरपरमिति न्याय्यम् ॥ २० ॥
पूर्वत्राऽऽत्मानन्तरमुपादिष्टं यच्छरीरमवशिष्टम् ।
बुध्यारूढं यस्मादव्यक्तपदेन गृह्यते तदिदम् ॥ २१ ॥
प्रकरणविधुरं हि कथं प्रधानमव्यक्तशब्दयोग्यं स्यात् ।
अव्यक्तपदं चैतद्रूढिबलाद्बोधकं प्रधानस्य ॥ २२ ॥
सांख्यानामेवेयं रूढिर्दृष्टा न चेतरस्यापि ।
तत्प्रत्यभिज्ञया स्याद्वस्तुग्रहणं न हि क्रमादेव ॥ २३ ॥
अश्वस्थाने पश्यन्गामश्व नो बुधो विजानाति ।
प्रकरणमपि यदिदं स्यात्परात्मपरमेव न प्रधानपरम् ॥ २४ ॥
यच्छेदितिवाक्योक्तो योगः सर्वः परात्मधीहेतुः ।
एष इतिवाक्यनिवहैर्दुर्विज्ञेयत्वमात्मनः प्रथयन् ॥ २५ ॥
तद्विज्ञानायैव हि योगो रथरूपकल्पना चेयम् ।
तत्र प्रधानवार्ता न दृश्यते केनचित्क्वचिद्वाऽपि ॥ २६ ॥
अव्यक्तपदं चैतद्योगेन स्याच्छरीरपरमेव ।
ननु कथमिदं शरीरं व्यक्तपदार्हं भवेदिहाव्यक्तम् ॥ २७ ॥
तस्मात्प्रधानमेवाव्यक्तपदार्हं न चान्यदिति चेन्न ।

सूक्ष्मं तु तदर्हत्वात् ॥ २ ॥

यदिदं सूक्ष्मशरीरं तदेव चाव्यक्तशब्दनिर्देश्यम् ॥ २८ ॥

तद्वाचको हि शब्दस्तत्कार्यपरोऽपि दृश्यते लोके।
गोभिरितिवाक्य एव हि गोशब्दः क्षीरवाचको दृष्टः ॥ २९ ॥
तद्वदिहाव्यक्तपदं सूक्ष्मपरं स्थूलबोधकं भवति।
यदिदं सूक्ष्मं लोके तत्रैवाव्यक्तशब्द उपलब्धः ॥ ३० ॥
सूक्ष्मे मुख्ये भूत्वा गौण्या स्थूले प्रवर्तते सोऽयम्।

तदधीनत्वादर्थवत् ॥ ३ ॥

अव्यक्तशब्दयोग्यं यदिदं सूक्ष्मं शरीरमुपदिष्टम् ॥ ३१ ॥
रथिनोऽस्य चेतनस्य हि न तद्विना भवति तस्य संसारः।
सूक्ष्म शरीरमेव ह्यव्यक्तपदेन गृह्यते नान्यत् ॥ ३२ ॥
तदधीनः संसारो यस्मादिति केचिदत्र कथयन्ति।
तदयुक्तं पूर्वत्र हि रथरूपतया शरीरमुभयविधम् ॥ ३३ ॥
निर्दिष्टं यद्यत्र ह्येकं चेत्तर्हि वाक्यभेदः स्यात्।
ननु यद्यव्यक्तपदप्रतिपाद्यं सूक्ष्ममिह शरीरं चेत् ॥ ३४ ॥
तदिदं प्रधानमेव ह्यत्रोक्त स्यादितीह नाऽऽशङ्क्यम्।
यदिदमविद्यात्मकमिह सूक्ष्मशरीरं तदात्मपरतन्त्रम् ॥ ३५ ॥
यच्च प्रधानमुक्तं स्वतन्त्रमेतदिति वर्ण्यते सांख्यैः।
तस्मात्प्रधानवादः सोऽयं वेदान्तिभिर्निराक्रियते ॥ ३६ ॥
यदि च प्रधानमेव ह्यव्यक्तपदार्हमत्र निर्दिष्टम्।

ज्ञेयत्वावचनाच्च ॥ ४ ॥

ज्ञेयत्वमत्र वाक्ये तदिहाव्यक्ते कुतो न निर्दिष्टम् ॥ ३७ ॥
पदमात्रमेतदिह किल निर्दिष्टं दृश्यते हि वाक्येऽस्मिन्।
गुणपुरुषान्तरबोधान्निःश्रेयसमिति च तेन तद्युक्तम् ॥ ३८ ॥
ज्ञेयत्वावचने किल तन्निर्देशो वृथैव तेषां स्यात्।
तस्मात्प्रधानमेतत्प्रदर्शयितुमत्र नेदमुपदिष्टम् ॥ ३९ ॥
अपि तु परमेश्वरं तं बोधयितु वाक्यमेतदुपयुक्तम्।
रथरूपकल्पनाद्यैः परमेश्वर एव चित्तमवतार्य ॥ ४० ॥
निःश्रेयसफलकतया परात्मविज्ञानमुपदिशत्येतत्।

वदतीति चेन्न प्राज्ञो हि प्रकरणात् ॥ ५ ॥

ज्ञेयत्वानिर्देशादव्यक्तं न प्रधानमिति नैतत् ॥ ४१ ॥

यस्मादस्यां वल्ल्यामशब्दमित्यादिवाक्यमखिलमपि ।
यदशब्दतादिगुणकं प्रधानमेतन्निचाय्यमभिधत्ते ॥ ४२ ॥
इति चेन्नेयं शङ्का यस्मात्प्राज्ञोऽयमत्र निर्दिष्टः ।
यदिदं प्रकरणमेतत्परमात्मपरं न हि प्रधानपरम् ॥ ४३ ॥
येनासौ परमात्मा न जायते म्रियत इत्यनेनोक्तः ।
मृत्युमुखमोक्षफलकं यदस्य विज्ञानमत्र निर्दिष्टम् ॥ ४४ ॥
तदपि परमात्मपक्षे समञ्जसं न प्रधानपक्षेऽपि ।

त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥ ६ ॥

अस्यां कठवल्ल्यां खल्वग्निर्जीवस्तथैव परमात्मा ॥ ४५ ॥
त्रय एते निर्दिष्टाः प्रश्नप्रतिवचनवाक्यजालेन ।
प्रश्न उपन्यासो वा प्रधानविषयो न दृश्यते क्वापि ॥ ४६ ॥
तस्मादस्मिन्वाक्ये नाव्यक्तपदं प्रधानमभिधत्ते ।
नन्वेतदनुपपन्नं प्रश्नोपन्यासरूपलिङ्गं यत् ॥ ४७ ॥
नचिकेताः किल पित्रा प्राहितो मृत्योः सकाशमुपयातः ।
मृत्युः किल तं दृष्ट्वा परितुष्टस्त्रीन्वरानिमान्प्रादात् ॥ ४८ ॥
जनकस्य सौमनस्यं तथाऽग्निविद्यां तथाऽऽत्मविद्यां च ।
जनकस्य सौमनस्ये प्रथमं दत्ते वरद्वयं शिष्टम् ॥ ४९ ॥
या चेयमग्निविद्या या च परात्मप्रकाशिका विद्या ।
शिष्टे वरद्वयेऽस्मिन्प्रश्नत्रयमेतदनुपपन्नं हि ॥ ५० ॥
प्रतिवचनं च तथैवानुपपन्नमितीह नैवमाशङ्क्यम् ।
यस्माद्वरप्रदानव्यतिरेकेणात्र किमपि न हि दृष्टम् ॥ ५१ ॥
प्रश्नव्यतिरेकेण च नेहोपन्यस्तमेव किंचिदपि ।
एवं सत्यपि नात्र प्रश्नत्रयमङ्गलेशशङ्काऽपि ॥ ५२ ॥
शिष्टे वरद्वयेऽस्मिन्प्रश्नत्रयमेतदुचितमेव स्यात् ।
भिन्नार्थकं यदा स्यात्प्रश्नान्तरमत्र भवति दोषोऽयम् ॥ ५३ ॥
जीवेशगोचरस्य प्रश्नयुगस्यैकविषयकत्वेन ।
एकत्वादिह न भवति वरप्रदानव्यतिक्रमाशङ्का ॥ ५४ ॥
प्रश्नत्रित्वोक्तिरियं विशेषभेदप्रवादमाश्रित्य ।
तस्मादिह मात्रार्थे परात्मपक्षे न कोऽपि दोषः स्यात् ॥ ५५ ॥
दोषः प्रधानपक्षे भवति ततो न प्रधानमव्यक्तम् ।

महद्वच्च ॥ ७ ॥

सांख्यैः सत्तामात्रे प्रयुज्यमानो यथा महच्छब्दः ॥ ५६ ॥
न हि वैदिके प्रयोगे तामभिधातु यथा न शक्तः स्यात् ।
अव्यक्तशब्द एष प्रधानपर इति हि वर्णितः सांख्यैः ॥ ५७ ॥
न हि स प्रधानवाची भवति ततोऽव्यक्तमिह शरीरं स्यात् ।
यदिदं प्रधानमस्य ह्यशब्दता निरपवादमिह सिद्धा ॥ ५८ ॥
तस्माद्वेदान्तानां ब्रह्मणि परमे समन्वयः सुगमः ।
अव्यक्तपदायोगादशब्दमेतत्प्रधानमित्युक्तम् ॥ ५९ ॥
नन्वत्राजामन्त्रादशब्दता दुर्लभैव पुनरस्य ।
तत्र च काचिदजोक्ता या लोहितशुक्लकृष्णवर्णा सा ॥ ६० ॥
बह्वीः प्रजाः सरूपाः सृजति हि तामेक एष जुषमाणः ।
अनुशेते ह्यविवेके जहाति चान्यस्तु भुक्तभोगां ताम् ॥ ६१ ॥
इति तत्र च निर्दिष्टा ह्यजा प्रधानं ततो न चान्यत्स्यात् ।
पूर्वं प्रधानपक्षे लिङ्गं किंचिदपि नोपलब्धमिति ॥ ६२ ॥
प्राज्ञप्रकरणबलतो ह्यव्यक्तपदं शरीरपरमुक्तम् ।
इह लोहितादिशब्दैः सत्त्वादिगुणत्रयं हि निर्दिष्टम् ॥ ६३ ॥
तच्चाजाशब्दस्य प्रधानपरताप्रसाधकं लिङ्गम् ।
स्रष्टृत्वमपि च तस्मादशब्दता स्यात्कथं प्रधानस्य ॥ ६४ ॥
इत्याक्षेपं निरसितुमधिकरणमिदं चकार मुनिमान्यः ।

चमसवदविशेषात् ॥ ८ ॥

अर्वाग्बिल इति मन्त्रश्चमसप्रतिपत्तिसाधनो दृष्टः ॥ ६५ ॥
तत्रार्वाग्बिलशब्दो विशेषतो नार्थबोधको भवति ।
येन स्वार्थं ब्रूते ग्रहादिसाधारणेन धर्मेण ॥ ६६ ॥
एष इतिवाक्यशेषाद्विशेषतः स्वार्थनिर्णयो भवति ।
तद्वदिहाजामन्त्रः सामान्यार्थप्रदर्शको भवति ॥ ६७ ॥
नात्र प्रधानवाचकशब्दो दृष्टो न दृश्यते लिङ्गम् ।
यदजापदमत्र स्याद्योगेनान्यार्थकं च तद्भवति ॥ ६८ ॥
रूढिश्चाजायां किल दृष्टा नास्मिंस्तथा प्रधानेऽपि ।
ये लोहितादिशब्दास्तेऽपि न सत्त्वादिवाचकाः स्युरिह ॥ ६९ ॥
रूपविशेषपरत्वं लोके वेदे च दृष्टमेतेषाम् ।
मुख्यार्थसंभवे किल गौणार्थो गृह्यते न केनापि ॥ ७० ॥

तस्मादिदं प्रधानं नाजाशब्देन गृह्यते किंतु ।

ज्योतिरुपक्रमा तु तथा ह्यधीयत एके ॥ ९ ॥

येयं ज्योतिष्प्रमुखा भूतत्रयलक्षणा जगद्योनिः ॥ ७१ ॥
परमेश्वरपरतन्त्रा या लोहितशुक्लकृष्णवर्णाऽपि ।
छान्दोग्यवाक्यदृष्टा सेयमजा गृह्यतेऽत्र न तदन्या ॥ ७२ ॥
तस्या हि वाक्यशेषे दृष्टोऽसौ लोहितादिगुणयोगः ।
संदिग्धासंदिग्धौ यद्येकत्रैव संगतौ भवतः ॥ ७३ ॥
तत्रासंदिग्धेन हि संदिग्धार्थस्य निगमनं न्याय्यम् ।
तेनाजामन्त्रेऽपि हि भूतत्रयलक्षणा ह्यजा ग्राह्या ॥ ७४ ॥
उपभुज्यते ह्यविदुषा विदुषा संत्यज्यते हि सैवाजा ।
क्षेत्रज्ञभेदसिद्ध्यै विद्वदविद्वत्प्रदर्शनं न कृतम् ॥ ७५ ॥
भेदमनूद्य तयोरिह बन्धविमोक्षव्यवस्थितिः कथिता ।
नन्वत्राजाशब्दो ज्योतिष्प्रमुखां कथं हि बोधयति ॥ ७६ ॥
इह योगरूढिबाधादित्याशङ्का निरस्यते सपदि ।

कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ १० ॥

योगेन वाऽपि रूढ्या ज्योतिष्प्रमुखां न चायमभिधत्ते ॥ ७७ ॥
सादृश्योपाधिकया कल्पनया ता प्रबोधयत्येषः ।
लोके काचिदजा हि स्याल्लोहितशुक्लकृष्णवर्णाढ्या ॥ ७८ ॥
जनयति सरूपवर्गं तथेयमिति बोधयत्ययं शब्दः ।
तस्मात्काल्पनिकत्वं तत्राजाशब्द एष उपपन्नः ॥ ७९ ॥
मध्वादयश्च शब्दा आदित्यादौ यथोपपन्नाः स्युः ।
तस्मादशब्दतैषा सिद्धा सांख्योचितप्रधानस्य ॥ ८० ॥
ब्रह्मणि वेदान्तानां समन्वयो निरपवाद एवात्र ।
नन्वत्राजामन्त्रादिह प्रधाने सशब्दता मा भूत् ॥ ८१ ॥
यस्मिन्निति मन्त्रात्किल सशब्दता स्यादिह प्रधानस्य ।
तस्मिन्मन्त्रे पञ्च हि पञ्चजनास्तद्वदेव चाऽऽकाशः ॥ ८२ ॥
यस्मिन्प्रतिष्ठिताः स्युस्तमेव मन्ये सदाऽहमात्मानम् ।
एवं विद्वानमृतो ब्रह्मामृतरूप एव भूयासम् ॥ ८३ ॥
इत्येवमर्थजातं प्रपाञ्चितं पञ्चकद्वयं तत्र ।
तदिदं हि पञ्चविंशतितत्त्वानि स्मृतिगतानि निर्दिशति ॥ ८४ ॥

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त।
षोडशकश्च विकारो न प्रकृतिर्न विकृतिश्च पुरुष इति ॥ ८५ ॥
स्मृतिनिर्दिष्टामेव हि तत्त्वानां पञ्चविंशतिं ब्रूते।
रूढिं त्यक्त्वा ज्योतिष्प्रमुखार्थकता ह्यजापदस्योक्ता ॥ ८६ ॥
तद्वज्जनशब्दस्य हि रूढिं परिहृत्य तत्त्वपरता स्यात्।
मन्त्रान्तरावलम्बात्सांख्यैरुद्भाविताममिमां शङ्काम् ॥ ८७ ॥
वारयितुमाहृतात्मा चकार मुनिवर्य एतदधिकरणम्।

## न संख्योपसंग्रहादपि नाना-
## भावादतिरेकाच्च ॥ ११ ॥

सनिबन्धनैव संख्या द्वित्राद्या दृश्यते हि लोकेऽस्मिन् ॥ ८८ ॥
धर्मनिबन्धनविरहे पञ्चत्वाद्या कथं भवेत्संख्या।
पञ्चपदद्वययोगात्संख्यैव हि पञ्चविंशतिर्लब्धा ॥ ८९ ॥
तावन्मात्रेण कथं तत्त्वानां पञ्चविंशतेर्बोधः।
जनशब्देन समस्तं पञ्चपदं वा कथ विशेष्यं स्यात् ॥ ९० ॥
उपसर्जनं हि लोके विशेष्यत्वे न केनचिद्दृष्टम्।
पञ्चजना इत्येतत्समस्तमेवेह न भवति व्यस्तम् ॥ ९१ ॥
भाषिकवाक्यादस्य ह्येकपदत्वं विनिश्चितं भवति।
पञ्चजना इत्यस्मात्संख्यालाभे कुतस्तदाकाङ्क्षा ॥ ९२ ॥
संख्याकाङ्क्षाविरहे पञ्चेति पदं पुनर्वृथैव स्यात्।
इह पञ्च पञ्च पूल्यः स्युरिति च दृष्टा हि सा समाहारे ॥ ९३ ॥
पञ्चजना इत्यत्र तु समास इह कर्मधारयो येन।
दिक्संख्ये संज्ञायामित्यस्मादिह समास उपदिष्टः ॥ ९४ ॥
संख्याबोधार्थं किल पञ्चपदं जनपदेन न समस्तम्।
सप्तर्षय इत्यादौ संज्ञायां किल समास उपदिष्टः ॥ ९५ ॥
तद्वदिहापि स्यादिति स पञ्चविंशतिरितः प्रतीयेत।
सूत्रे ह्यात्माकाशौ तत्त्वान्तःपातिनौ विनिर्दिष्टौ ॥ ९६ ॥
यस्मिन्निति मन्त्रे खलु तौ पृथगेवोपदर्शितौ भवतः।
आधारत्वेनाऽऽत्मा ह्याकाशश्च प्रतिष्ठितत्वेन ॥ ९७ ॥
निर्दिष्टौ तस्मात्किल तत्त्वानां पञ्चविंशतेर्भङ्गः।
तस्मादस्मिन्मन्त्रे निरुक्तसूत्रैकवाक्यताभङ्गात् ॥ ९८ ॥

सेयमयुक्ता शङ्का तत्त्वानां पञ्चविंशतीनां या ।
इह पञ्चजनपदे किल समासविधिना प्रतीयते संज्ञा ॥ ९९ ॥
सेयं प्रतीयमाना संज्ञिनमाकाङ्क्षते हि नियमेन ।
तस्यामाकाङ्क्षायां रूढिबलात्संज्ञिनं प्रबोधयति ॥ १०० ॥
सोऽयं हि वाक्यशेषः प्राणस्य प्राणमित्युपन्यस्तः ।

प्राणादयो वाक्यशेषात् ॥ १२ ॥

यस्मिन्निति मन्त्रोत्तरमिहोपलब्धो हि वाक्यशेषोऽयम् ॥१०१॥
तत्र प्राणाश्चक्षुः श्रोत्रं चान्नं च मन इति ह्येते ।
पञ्च पदार्थाः कथितास्त एव मन्त्रे भवन्ति जनाः ॥ १०२ ॥
जनशब्दः प्राणादिषु कथं प्रवर्तेत इतीह नाऽऽशङ्क्यम् ।
भवतां तत्त्वेषु यथा प्राणादिष्वपि तथा प्रवर्तेत ॥ १०३ ॥
इह सुप्रसिद्धसंनिधिपठितो यो ह्यप्रसिद्धवचनः स्यात् ।
तस्य प्रसिद्धपरता दृष्टाऽन्यत्रोद्भिदादिशब्देषु ॥ १०४ ॥
जनपदसमार्थकं च प्राणादिषु दृश्यते हि पुरुषपदम् ।
ते वा एते पञ्चेत्यस्मिंस्तस्मान्न कश्चिदिह दोषः ॥ १०५ ॥
माध्यंदिनाश्च ये स्युस्तेषामेते भवन्तु पञ्चजनाः ।
काण्वानां कथमेते प्राणादिषु नाऽऽमनन्ति ये चान्नम् ॥ १०६ ॥
न हि तत्र पञ्चसंख्या तत्पारे स्यादितीह नाऽऽशङ्क्यम् ।

ज्योतिषैकेषामसत्यन्ने ॥ १३ ॥

येषां पाठे चान्न प्राणादिषु नोपलभ्यते तत्र ॥ १०७ ॥
पूर्वत्र दर्शित यज्ज्योतिष्प्राणादिसमुदये योज्यम् ।
तस्मात्त एव मन्त्रे पञ्चजनाः स्युर्न सांख्यतत्त्वानि ॥ १०८ ॥
कापिलसूत्रं यदिदं तस्य च मूलं न दृश्यते किमपि ।
तस्माद्यदशब्दत्वं पूर्वोक्तं तच्च निरपवादं स्यात् ॥ १०९ ॥
ब्रह्मणि वेदान्तानां समन्वयो निरपवाद इति सिद्धम् ।
ब्रह्मणि वेदान्तानां गतिसामान्यं प्रपञ्चितं हि ननु ॥ ११० ॥
तदनुपपन्न यस्माद्वेदान्तानां विगानमिह दृष्टम् ।
श्रुतिवचनवैपरीत्ये जगज्जनिप्रभृतिकारणत्वमपि ॥ १११ ॥
तत्रासिद्धं तेन च लक्षणवाक्यं कथं समन्वेति ।
तत्र श्रुतिवचनानि ह्यनेकविधसृष्टिमामनन्त्येवम् ॥ ११२ ॥
आत्मन इति चैका श्रुतिरादावाकाशजन्म निर्दिशति ।
तत्तेजोऽसृजतेतिश्रुतिरादौ जन्म तेजसो वदति ॥ ११३ ॥

स प्राणमसृजतेति श्रुतिरादौ प्राणजन्म निर्दिशति ।
स इमानित्याद्या हि श्रुतिरादौ लोकसृष्टिमुपदिशति ॥ ११४ ॥
तत्कर्तृकां हि सृष्टिं बोधयति श्रुतिरियं सदेवेति ।
जगदेतदसत्कर्तृकमुपदिशति श्रुतिरियं ह्यसद्वेति ॥ ११५ ॥
श्रुतयोऽन्या अप्येव सृष्टिं नानाविधां हि कथयन्ति ।
सृष्टिश्रुतिवाक्यानि स्रष्टव्येषु क्रमादिवैचित्र्यात् ॥ ११६ ॥
विप्रतिपन्नानि यतो लक्षणबोधः कथं भवत्येभ्यः ।
जन्मादिकारणत्वं लक्षणमुक्तं हि तस्य यत्पूर्वम् ॥ ११७ ॥
तदसिद्धं चेद्ब्रह्मणि गतिसामान्यं हि दुरुपपादं स्यात् ।
योऽयं प्रधानपक्षे दोषः सोऽयं परात्मपक्षेऽपि ॥ ११८ ॥
इत्याशङ्का निरसितुमिदमधिकरणं प्रपञ्चितं मुनिना ।

कारणत्वेन चाऽऽकाशादिषु
यथाव्यपदिष्टोक्तेः ॥ १४ ॥

इह सृज्यमानविषये विगानमुपलभ्यते हि वेदेषु ॥ ११९ ॥
स्रष्टरि वेदान्तानां विगानमुपलभ्यते न किंचिदपि ।
ईक्षणपूर्वकमस्य हि कारणतां वर्णयन्ति वेदान्ताः ॥ १२० ॥
सत्यं ज्ञानमनन्तं सर्वज्ञं ब्रह्म दर्शयन्ति तथा ।
सोऽकामयतेत्येवं कामयितृत्वं हि तस्य निर्दिष्टम् ॥ १२१ ॥
अन्यत्रापि तथैव हि तदैक्षतेत्यत्र ताद्धि निर्दिष्टम् ।
मन्त्रान्तरे तदेव हि स ईक्षतेत्यादिवाक्यनिर्दिष्टम् ॥ १२२ ॥
एवं किलेक्षितृत्वं हीक्षांचक्र इतिवाक्यनिर्दिष्टम् ।
तच्चेतनस्य धर्मो नान्यस्येत्युक्तमेव पूर्वत्र ॥ १२३ ॥
सर्वज्ञत्वादिकमपि सर्वत्रैव प्रपञ्चितं तस्य ।
ब्रह्मेह यादृशं हि प्रपञ्चितं कारणत्वधर्मेण ॥ १२४ ॥
मन्त्रान्तरे तथैव ब्रह्म प्रतिपादितं हि सर्वत्र ।
कार्यविगाने सत्यपि कारणमविगीतमेव सर्वत्र ॥ १२५ ॥
नैतावन्मात्रेण हि लक्षणभङ्गोऽत्र शङ्कितु शक्यः ।
ब्रह्मैकरूपमेव तु कारणमुपदिश्यते हि वेदान्ते ॥ १२६ ॥
सत्कर्तृका हि सृष्टिश्छान्दोग्ये या प्रतीयते साऽपि ।
परमात्मकर्तृकैवेत्येवं निर्धारितं हि पूर्वत्र ॥ १२७ ॥

नन्विह लक्षणमेतद्ब्रह्मणि नैवोपपद्यते यस्मात् ।
असतोऽपि कारणत्वं दर्शयति श्रुतिरियं ह्यसद्वेति ॥ १२८ ॥

समाकर्षात् ॥ १५ ॥

असदित्यस्मिन्मन्त्रे निरात्मकं नासदुच्यते किंतु ।
ब्रह्म सदेवासदिति ह्यव्याकृतनामरूपमुपदिष्टम् ॥ १२९ ॥
यद्यन्यथा हि पूर्वं सत्यज्ञानादिलक्षणं ब्रह्म ।
आकृष्य सम्यगस्य हि कामयितृत्वं च दर्शयत्येव ॥ १३० ॥
तस्मात्सृष्टिं विततां निर्दिश्यानन्तरं हि तस्यैव ।
असदित्युपदेशोऽसावसंगतः स्यादतो ह्यसच्छब्दः ॥ १३१ ॥
ब्रह्म सदात्मकमेव ह्यव्याकृतनामरूपमुपादिशति ।
यत्रासच्छब्दोऽयं छान्दोग्ये दृश्यते सदित्यादिः ॥ १३२ ॥
सोऽपि स्ववाक्यदर्शितसत्पदयोगात्सदर्थको भवति ।
व्याक्रियतेत्यादौ हि व्याकरणं कर्तृतन्त्रमुपदिष्टम् ॥ १३३ ॥
सर्वत्र व्याकर्ता परमात्मैवेति वर्णितं श्रुत्या ।
व्याकरवाणीत्यनया तस्मान्नेहास्ति बाधकं किमपि ॥ १३४ ॥
लक्षणवाक्यविरोधो न केनचिच्छङ्कितुं हि शक्योऽत्र ।
तस्माल्लक्षणवाक्यं ब्रह्मणि परमे समन्वितं भवति ॥ १३५ ॥
नन्विह लक्षणवाक्यं सकलं ब्रह्मणि समन्वितं कथितम् ।
तदनुपपन्नं यस्मात्कौषीतकिवाक्यमन्यथा दृष्टम् ॥ १३६ ॥
तत्र च बालाकिरसौ राजानमजातशत्रुमुपयातः ।
तं चोपगम्य सोऽयं बालाकिरजातशत्रुमाहैवम् ॥ १३७ ॥
ब्रह्म ब्रवाणि त इति हि संबोध्यैनं प्रबोधयामास ।
आदित्ये चन्द्रमसि च योऽसौ पुरुषो भवेत्परात्मेति ॥ १३८ ॥
तच्छ्रुत्वा राजाऽसौ त्वयोक्तमखिलं मृषेति निर्दिश्य ।
एतेषां पुरुषाणां योऽसौ कर्ता हि यस्य तत्कर्म ॥ १३९ ॥
स हि वेदितव्य इति खलु राजा बालाकिमुपदिदेशेत्थम् ।
तत्र च योऽसौ कर्ता प्राणो वा स्याद्यथापि जीवो वा ॥ १४० ॥
इत्येवं संदेहः कर्मपदश्रवणयोगतो भवति ।
पूर्वमसत्पदमेतत्स्ववाक्यगतसत्पदावलम्बेन ॥ १४१ ॥
सद्ब्रह्मपरतया तद्वर्णितमत्र तु न साधकं किमपि ।
बालाकिवाक्यदृष्टं ब्रह्मपद तन्न राजवाक्येऽस्ति ॥ १४२ ॥

तस्मात्प्राणोऽयं स्याद्योऽसौ कर्ता हि दर्शितो राज्ञा ।
चलनात्मकं हि कर्म च तस्योचितमेव वायुरूपतया ॥ १४३ ॥
पुरुषाणां कर्तृत्वं समष्टिरूपेण युक्तमेवास्य ।
जीवो वाऽयं तस्य च धर्माधर्मात्मकं हि कर्म स्यात् ॥ १४४ ॥
पुरुषाणां कर्तृत्वं भोक्तृत्वात्तस्य युक्तमेव स्यात् ।
पूर्वोक्तलक्षणं हि प्राणस्यापि प्रदर्शितं ह्यत्र ॥ १४५ ॥
तस्माल्लक्षणवाक्यं ब्रह्मणि कथमिह समन्वितं भवति ।
इत्याक्षेपं निरसितुमिदमधिकरणं प्रदर्शितं मुनिना ॥ १४६ ॥

जगद्वाचित्वात् ॥ १६ ॥

यदिदं कर्मपदं तच्चलनात्मककर्मबोधकं न भवेत् ।
एतच्च सुप्रसिद्धं ह्यप्रकृतमशब्दितं च भवति यतः ॥ १४७ ॥
कर्तृव्यापारं वा क्रियाफलं वा न बोधयत्येतत् ।
कर्तृपदात्तल्लाभे कर्मपदं स्यादिदं हि पुनरुक्तम् ॥ १४८ ॥
अत्र प्रदर्शितानां पुरुषाणां बोधकं न कर्मपदम् ।
पूर्वोपदर्शितत्वादुभयत्र च लिङ्गवचनवैरूप्यात् ॥ १४९ ॥
तस्मादिह कर्मपदं योगेन स्वार्थबोधकं वाच्यम् ।
यत्क्रियते तत्कर्मेत्येवं योगेन कार्यपरमेव ॥ १५० ॥
जगदेकदेशभूत्या कार्यत्वेन प्रदर्शयन्पुरुषान् ।
प्रादेशिककर्तृत्वाशङ्कां वारयितुमेवमाह पुनः ॥ १५१ ॥
यन्नामरूपभिन्नं जगदखिलं तत्पदेन निर्दिश्य ।
तदिदं यस्य हि कार्यं स वेदितव्य इति निर्दिशत्येनम् ॥ १५२ ॥
तस्मादिह कर्मपदं जगत्परं सत्क्रियापरं भवति ।
यः सर्वस्य च जगतः कर्ता सोऽयं भवेत्परात्मैव ॥ १५३ ॥
सर्वेषां भूतानामित्यस्मिन्वाक्यशेष उपदिष्टम् ।
तद्विज्ञानफलं यन्निरतिशयं ब्रह्म भवति तेनायम् ॥ १५४ ॥

जीवमुख्यप्राणलिङ्गान्नेति
चेत्तद्व्याख्यातम् ॥ १७ ॥

नन्वत्र वाक्यशेषे बालाकिमसौ बुबोधयिषुरादौ ।
आमन्त्र्य सुप्तपुरुषं प्राणस्याभोक्तृतां प्रदर्शयति ॥ १५५ ॥
यष्ट्यभिघातोत्थानात्तद्व्यतिरिक्तं च जीवमुपदिशति ।
तत्रैव दर्शितोऽसौ मुख्यप्राणो ह्यथेति वाक्येन ॥ १५६ ॥

एवं जीवोऽपि तथा निर्दिष्टस्तद्यथेति वाक्येन ।
तस्माज्जीवो वा स्यात्प्राणो वेत्यत्र नैवमाशङ्क्यम् ॥ १५७ ॥
जीवादिलिङ्गयोगात्तत्तदुपास्तिर्यदा विवक्ष्येत ।
त्रिविधमुपासनमत्र प्रसज्यते तत्तु नैव युक्तमिह ॥ १५८ ॥
प्राणपदस्य हि वृत्तिः परमात्मनि दर्शितैव पूर्वत्र ।
जीवपरात्मैक्येन हि परमात्मनि जीवलिङ्गमुपपन्नम् ॥ १५९ ॥

अन्यार्थं तु जैमिनिः प्रश्नव्याख्या-
नाभ्यामपि चैवमेके ॥ १८ ॥

जीवपरामर्शोऽयं जीवलक्षणपरात्मबोधपरः ।
प्रश्नव्याख्याने किल परमात्मपरे यतः प्रतीयेते ॥ १६० ॥
इति जैमिनिराचार्यो जीवपरामर्शकारणं ब्रूते ।
क्वैष इति वाक्यशेषे प्रश्नोऽयं स्यात्परात्मपर एव ॥ १६१ ॥
प्रतिवचनमपि हि दृष्टं यदेतिमन्त्रे परात्मपरमेव ।
अप्येके शाखिन इह वदन्ति बालाकिराजसंवादे ॥ १६२ ॥
विज्ञानमयं जीवं निर्दिश्य स्वापमुपदिशन्त्यस्य ।
हार्दाकाशे ब्रह्मणि तस्मादिह दर्शितः परात्मैव ॥ १६३ ॥
अत्र परात्मन एव हि निर्दिष्टं सर्वकारणत्वमपि ।
यदपि च गतिसामान्यं ब्रह्मणि वेदान्तवाक्यनिचयस्य ॥ १६४ ॥
अनवद्यं हि तदस्मात्कौषीतकिवाक्यमेतदखिलमपि ।
जगतः कारणरूपे ब्रह्मणि परमे समन्वितं भवति ॥ १६५ ॥
नन्विह बृहदारण्ये मैत्रेयीब्राह्मणे समाम्नातम् ।
पत्युः कामाय पतिः प्रिय इत्यादिकमनेकमात्मपरम् ॥ १६६ ॥
वाक्यं तत्र प्रथमं मैत्रेयी याज्ञवल्क्यमुनिमाह ।
भगवन्यच्च रहस्यं वेत्सि तदेतन्ममाद्य कथयेति ॥ १६७ ॥
तच्छ्रुत्वा मुनिवर्यो मैत्रेय्यै तदिदमुपदिदेश किल ।
पत्युः कामाय पतिर्न हि प्रियो भवति चाऽऽत्मकामाय ॥ १६८ ॥
पतिजायापुत्राद्या ये चान्ये भोगसाधनीभूताः ।
आत्मार्थतया सर्वे प्रिया भवन्त्यत्र न स्वकामाय ॥ १६९ ॥
सोऽयं प्रियतम आत्मा सर्वेषां भोगसाधनानां यः ।
द्रष्टव्यः श्रोतव्यो मन्तव्योऽसौ तथा निदिध्यास्यः ॥ १७० ॥

अस्मिन्नात्मनि दृष्टे श्रुते मते तद्वदेव विज्ञाते ।
सर्वमिदं विदितं स्यादिति मैत्रेयीमुवाच मुनिवर्यः ॥ १७१ ॥
एवं मध्येऽपि तथा श्रुत्या वर्णितमिदं महद्भूतम् ।
तद्वदनन्तमपारं विज्ञानघनः स एव चाऽऽत्माऽयम् ॥ १७२ ॥
एतेभ्यो भूतेभ्यः समुत्थितस्तान्यनु प्रणश्यति हि ।
तामेवमुपदिदेश हि योऽसावात्मेह दर्शितो मुनिना ॥ १७३ ॥
स हि किं परमात्मा स्याज्जीवो वाऽयमिति संशयप्राप्तौ ।
पूर्वमुपक्रमवाक्ये ब्रह्मपदश्रुतिबलावलम्बेन ॥ १७४ ॥
बालाक्यजातशत्र्वोः प्रश्नप्रतिवचनवाक्यमखिलमपि ।
ब्रह्मपरं तद्वर्णितमत्र तु वाक्ये ह्युपक्रमे दृष्टः ॥ १७५ ॥
प्रियसमूचित आत्मा भोक्ताऽयं जीव एव किं न स्यात् ।
यच्च समुत्थानं स्याद्भूतेभ्यस्तदपि जीवलिङ्गं हि ॥ १७६ ॥
द्रष्टव्यत्वादिकमपि तस्यैवोक्तं न चेतरस्य स्यात् ।
सर्वं विदितमिहोक्तं भोक्त्रर्थत्वाच्च भोग्यपरमेव ॥ १७७ ॥
तस्मादस्मिन्वाक्ये निर्दिष्टो जीव एव न परात्मा ।
इत्याक्षेपं निरसितुमिदमधिकरणं प्रदर्शितं मुनिना ॥ १७८ ॥

## वाक्यान्वयात् ॥ १९ ॥

योऽसावस्मिन्वाक्ये निर्दिष्टः स खलु भवति परमात्मा ।
यस्मादेतद्वाक्यं परमात्मन्येव सम्यगन्वेति ॥ १७९ ॥
अत्र ह्युपक्रमे किल मैत्रेयीं याज्ञवल्क्यमुनिराह ।
अमृतत्वस्य त्वाशा वित्तेनानेन काऽपि नास्तीति ॥ १८० ॥
येन च वित्तेनाहं न स्याममृतादि तेन वित्तेन ।
किमहं कुर्यामिति सा तत्साधनमेनमिति हि पप्रच्छ ॥ १८१ ॥
तत्पृष्टेन च मुनिना य एष आत्मा हि सम्यगुपदिष्टः ।
स हि कथमिह जीवः स्यात्परमात्मैवोपदिष्ट इह भवति ॥१८२॥
ब्रह्मज्ञानादेव ह्यमृतत्वं वर्णयन्ति वेदान्ताः ।
यद्यत्र दर्शितोऽयं न चेत्परात्मा वृथोपदेशः स्यात् ॥ १८३ ॥
अमृतत्वसाधने किल पृष्टे तत्साधनं हि वक्तव्यम् ।
परमात्मानुपदेशे कथमिह तत्साधनं हि कथितं स्यात् ॥ १८४ ॥
आत्मनि विदिते सर्वं विदितं स्यादिति च यच्च निर्दिष्टम् ।
सर्वात्मके परात्मनि विदिते तादिदं समञ्जसं भवति ॥ १८५ ॥

यद्येतज्जीवपरं तदेदमिति वाक्यमनुपपन्नं स्यात् ।
बुध्याद्युपाधिको न ह्यनन्ततापारतादिगुणयोगी ॥ १८६ ॥
यस्येतिवाक्यदर्शितसकलजगत्कारणत्वमपि जीवे ।
असमञ्जसमेव स्यात्तस्मादिह दर्शितः परात्मैव ॥ १८७ ॥
इदं सर्वं यदितिश्रुतिबोधितसर्वकार्यरूपत्वम् ।
सर्वस्य कारणत्वात्परमात्मन्येव तदपि युक्ततरम् ॥ १८८ ॥
दुन्दुभ्याद्या अपि ये दृष्टान्ताश्चात्र दर्शिता भूयः ।
तेऽपि च परात्मपक्षं प्रसञ्जयन्त्यत्र न हि ततोऽन्यमपि ॥ १८९ ॥
आत्मनि विज्ञाते सति निर्दिष्टं यच्च सर्वविज्ञानम् ।
येनाश्रुतमित्यादौ प्रदर्शितं तत्परात्मलिङ्गं हि ॥ १९० ॥
तस्मादिह परमात्मा मैत्रेयीब्राह्मणे विनिर्दिष्टः ।
द्रष्टव्यत्वादिकमिह तस्यैव स्यान्न चेतरस्यापि ॥ १९१ ॥
नन्विह यदि परमात्मा विवक्षितः स्यात्तदेतदसमरसम् ।
पत्यादिसूचितस्य हि भोक्तुर्द्रष्टव्यतादिनिर्वचनम् ॥ १९२ ॥
यच्च समुत्थानं स्याद्भूतेभ्यो दर्शितं हि तदयुक्तम् ।
परमात्मबोधने किल विज्ञानात्मा यतो निराकाङ्क्षः ॥ १९३ ॥

प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥ २० ॥

प्रियसूचितस्य भोक्तुर्द्रष्टव्यत्वादिकीर्तनं यत्स्यात् ।
सर्वं विदितं भवतीत्येवंरूपा हि या प्रतिज्ञा स्यात् ॥ १९४ ॥
तस्याः सिद्धेः सूचकलिङ्गमिति ह्याश्मरथ्य आचार्यः ।
जीवपरमात्मनोरिह भेदाशङ्कां भृशं निवर्त्य किल ॥ १९५ ॥
साधयति तां प्रतिज्ञां तदिदं लिङ्गमिति सूत्रवाक्यार्थः ।
यदि च तयोर्भेदः स्यात्तदा प्रतिज्ञा हि बाधितैव स्यात् ॥ १९६ ॥

उत्क्रमिष्यत एवंभावादित्यौडुलोमिः ॥ २१ ॥

ज्ञानध्यानाभ्यामिह विवेकविज्ञानसुप्रसन्नस्य ।
देहेन्द्रियसंघातादुच्चिक्रमिषोः परात्मभावेन ॥ १९७ ॥
प्रियसूचितस्य भोक्तुर्निर्देशोऽसावुपक्रमे सफलः ।
इत्यौडुलोमिरार्यो भोक्तृग्रहणं हि सफलयत्यादौ ॥ १९८ ॥

अवस्थितेरिति काशकृत्स्नः ॥ २२ ॥

इह चोपक्रमवाक्ये प्रियादिसंसूचितस्य भोक्तुरयम् ।
द्रष्टव्यतानिदेशः सकलोऽयं सफल एव न विरुद्धः ॥ १९९ ॥

परमात्मनो यदा स्याद्भिन्नो भोक्ता तदा हि विफलं स्यात् ।
यत इह परमात्माऽसाववस्थिता भोक्तृभावमालम्ब्य ॥ २०० ॥
तत एतस्मिन्वाक्ये न कोऽपि दोष इति काशकृत्स्नमुनिः ।
तस्मादेतद्वाक्यं ब्रह्मणि परमे समन्वितं भवति ॥ २०१ ॥
नन्विह वेदान्तानां ब्रह्मणि परमे समन्वयः कथितः ।
बुद्ध्यारूढे वस्तुनि तात्पर्यस्यावधारणं मत्वा ॥ २०२ ॥
बुद्ध्यारोहार्थं किल लक्षणमुक्तं हि तस्य पूर्वत्र ।
तदपि च लक्षणमस्य हि जगतो जन्मादिकारणत्वं हि ॥२०३॥
किमुपादानं तत्त्वं किं वा तत्स्यान्निमित्ततारूपम् ।
इत्येतन्निर्णेतुं सपदि विचारः प्रवर्तितो मुनिना ॥ २०४ ॥
लक्षणसूत्रानन्तरमयं विचारस्तु कर्तुमुचितः स्यात् ।
निर्धारिततात्पर्यैर्वेदान्तैस्तस्य निर्णयार्थं हि ॥ २०५ ॥
अध्यायान्ते तस्य हि विचार एष प्रवर्तितो मुनिना ।
जन्मादिकारणत्वं निमित्ततारूपमत्र युक्तं हि ॥ २०६ ॥
ईक्षणपूर्वकमेव हि कारणतां दर्शयन्ति वेदान्ताः ।
सा कर्तृता स्वरूपनिमित्ततायां हि पर्यवस्येत ॥ २०७ ॥
यत ईश्वरत्वमस्य प्रसिद्धमस्मान्निमित्तता युक्ता ।
वैवस्वतादिषु परं राजानुकूल्ये निमित्तता दृष्टा ॥ २०८ ॥
यदिचेन्निमित्तताऽस्य हि जगत उपादानमन्यदिह वाच्यम् ।
कार्यानुरूपमेव हि दृष्टमुपादानकारणं लोके ॥ २०९ ॥
जगदिदमचेतनं स्यात्तदुपादानं च तादृश भवति ।
त्रिगुणात्मकं प्रधानं ह्यचेतनं भवति जगदुपादानम् ॥ २१० ॥
तस्मात्परात्मलक्षणमचेतनेऽस्मिन्भवेत्प्रधानेऽपि ।
इत्याशङ्कां निरसितुमिदमधिकरणं प्रदर्शितं मुनिना ॥ २११ ॥

प्रकृतिश्च प्रतिज्ञादृष्टान्ता-
नुपरोधात् ॥ २३ ॥

जिज्ञास्यं ब्रह्मैतज्जगन्निमित्तं च जगदुपादानम् ।
नोचेत्तथा प्रतिज्ञादृष्टान्तावत्र कुण्ठितौ स्याताम् ॥ २१२ ॥
ब्रह्म जगतो यदा स्यान्निमित्तमात्रं तदा तयोर्भेदात् ।
ब्रह्मणि विदिते सर्वं विदितं स्यादिति हि या प्रतिज्ञा सा॥२१३॥
उपरुध्येत यदा तज्जगत उपादानकारणं भवति ।
ब्रह्माभेदाज्जगतस्तदा प्रतिज्ञा समर्थिता भवति ॥ २१४ ॥

ब्रह्म यदि केवलं स्याज्जगत उपादानकारणं हि तदा ।
कर्तर्यन्यस्मिन्सति तदनुपपन्नं हि सर्वविज्ञानम् ॥ २१५ ॥
तस्मादुभयविधं स्याज्जगतो जन्मादिकारणत्वं हि ।
उक्तार्थकाच्चशब्दात्समर्थितं भवति सर्वविज्ञानम् ॥ २१६ ॥
दृष्टान्ताश्च मृदाद्या यदेतिवाक्ये प्रदर्शितास्तेऽपि ।
प्रथयन्ति कारणत्वं प्रकृतित्वात्मकमतोऽत्र न विरोधः ॥ २१७ ॥
शाखान्तरे प्रतिज्ञादृष्टान्तावेतदर्थकौ भवतः ।
तस्मात्परमात्माऽयं प्रकृतिः कर्ता च भवति नैकतरम् ॥ २१८ ॥

## अभिध्योपदेशाच्च ॥ २४ ॥

सोऽकामयत बहु स्यामित्येवं तैत्तिरीयकं वाक्यम् ।
आध्यानपूर्विका हि प्रवृत्तिरत्रोपलभ्यते तस्य ॥ २१९ ॥
तत्राभिध्यानस्य प्रतीयते स्वात्मगोचरत्वं हि ।
ध्यातृत्वात्कर्तृत्वं ध्येयत्वात्प्रकृतिताऽपि तस्य स्यात् ॥ २२० ॥

## साक्षाच्चोभयाम्नानात् ॥ २५ ॥

छान्दोग्ये किल दृष्टं सर्वाणि ह वेति वाक्यमात्मपरम् ।
इतरानपेक्षता किल बोधयति ह्यवकार इह पठितः ॥ २२१ ॥
तेनेतरानपेक्षसृष्टिप्रलयौ परात्मनः कथितौ ।
कर्तृत्वप्रकृतित्वे तस्माद्वाक्यात्परात्मनो लब्धे ॥ २२२ ॥

## आत्मकृतेः परिणामात् ॥ २६ ॥

आत्मानं स्वयमकरोदित्येवं तैत्तिरीयवाक्यमिह ।
स्वयमकुरुतेतिवाक्यात्कर्तृत्वं तस्य भवति निर्दिष्टम् ॥ २२३ ॥
आत्मानमित्यनेन प्रकृतित्वं तस्य दर्शितं भवति ।
कर्मत्वं कर्तृत्व कथमेकस्यैव भवति हीत्येतत् ॥ २२४ ।
परिणामादित्यस्मान्निरस्यते सपदि सूत्रशेषेण ।
परिणमयत्यात्मानं स्वशक्तियोगेन हि परात्मेति ॥ २२५ ॥

## योनिश्च हि गीयते ॥ २७ ॥

सर्वज्ञः परमात्मा योनिरयं गीयते हि वेदान्तैः ।
यत्तदिति चैवमाद्यैर्वाक्यैर्यद्भूतयोनिमित्यन्तैः ॥ २२६ ॥
तद्वाक्यमध्यपठितैर्विभुमित्येतैर्हि कर्तृता लब्धा ।
तत्रैव योनिशब्दात्प्रकृतित्वं चापि लभ्यते तस्य ॥ २२७ ॥

जन्मादिकारणत्वं यदुभयविधमत्र दर्शितं तच्च ।
सत्यज्ञानानन्ते परमात्मन्येव समुचितं भवति ॥ २२८ ॥

एतेन सर्वे व्याख्याता व्याख्याताः ॥ २८ ॥

इह च प्रधानवादः प्रत्यासन्नो हि वेदवादस्य ।
शिष्टैश्च परिगृहीतो वैदिकलिङ्गोपबृंहितश्चापि ॥ २२९ ॥
तस्मात्तत्प्रतिषेधे यत्नोऽपि ततः कृतो हि सूत्रकृता ।
तत्प्रतिषेधकलिङ्गैरन्ये वादाश्च निरसिता एव ॥ २३० ॥
तत्रापि तुल्यमेतद्यदशब्दत्वं ह्युदाहृतं लिङ्गम् ।
अत्र पदाभ्यासोऽयं ह्यध्यायसमाप्तिमेव बोधयति ॥ २३१ ॥
शारीरकमीमांसा मुनिना व्यासेन विरचिता सेयम् ।
चतुरध्यायी तस्या प्रथमो योऽसौ समन्वयाध्यायः ॥ २३२ ॥
तत्र चतुर्थे पादे सूत्रार्थो यश्च भाष्यकारोक्तः ।
आर्यावृत्तैरमलैः प्रकाशितो जयतु सोऽयमनवद्यः ॥ २३३ ॥
शारीरकमीमांसाप्रथमाध्यायस्थसकलसूत्रार्थः ।
श्रीभाष्यकारदर्शिततरणिं संश्रित्य वर्णितः सोऽयम् ॥ २३४ ॥
भाष्यार्थरत्नमाला वैयासकिसूत्रजालसंग्रथिता ।
भगवति परमानन्दे समर्पिता जयतु जगति निरवद्या ॥ २३५ ॥

इति प्रथमाध्यायस्य चतुर्थः पादः समाप्तः ॥ ४ ॥

---

इति प्रथमाध्यायः समाप्तः ॥ १ ॥

---

अथ द्वितीयाध्यायस्य प्रथम पादः ।

---

प्रथमेऽध्याये जगतो जन्मस्थित्यन्तकारणं ब्रह्म ।
जन्माद्यस्येत्याद्यैः सूत्रैरुपदर्शितं हि सूत्रकृता ॥ १ ॥
व्यापित्वं नित्यत्वं सर्वज्ञत्व तथाऽद्वयत्वमपि ।
सूत्रेण शास्त्रदृष्ट्या त्वित्याद्येनोपदर्शितं मुनिना ॥ २ ॥
ये च प्रधानवादास्तथाऽणुवादाश्च ये च विख्याताः ।
ते चाऽऽनुमानिकादिकसूत्रैरश्रौतभावपरिभूताः ॥ ३ ॥
सकलनिगमान्तवचसामुपक्रमाद्यैः समन्वयोऽभिहितः ।
ब्रह्मण्युपास्यरूपे विज्ञेये सच्चिदादिपदलक्ष्ये ॥ ४ ॥

ननु सकलश्रुतिवचसां ब्रह्मणि योऽसौ समन्वयोऽभिहितः ।
स्मृत्यनवकाशदोषादसमञ्जस एव सोऽयमाभाति ॥ ५ ॥
न हि कपिलस्मृतिवचसां कर्मण्यवकाशलेशशङ्काऽपि ।
सम्यग्दर्शनमेव हि फलं समुद्दिश्य तानि रचितानि ॥ ६ ॥
न ह्येतादृशवचसामप्रामाण्यं हि शङ्कितुं शक्यम् ।
तेन च तदानुगुण्याच्छ्रुतिवचसामिह समन्वयो वाच्यः ॥ ७ ॥
तस्माद्वेदान्तानां समन्वयो नेह भवति युक्ततमः ।
इति खलु विरोधशङ्कां परिहर्तुं विषयविषयिताकृपाम् ॥ ८ ॥
संगतिमालम्ब्येमामध्यायोऽय द्वितीय आरब्धः ।
अज्ञाते विषये न हि विरोधशङ्का समाधियोगो वा ॥ ९ ॥
इत्यविरोधाध्याये समन्वयानन्तरत्वमुचितमिति ।
निश्चित्य सकलमर्थं चकार मुनिवर्य एतदधिकरणम् ॥ १० ॥

स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्य-
स्मृत्यनवकाशदोषप्रसङ्गात् ॥ १ ॥

सांख्यस्मृतिवचनानां न्यायाभासोपबृंहितत्वामिति ।
प्रथमे तावत्पादे प्रत्यधिकरणं निरूप्यते भूयः ॥ ११ ॥
स्मृतिरिह तन्त्राख्या या कपिलादिमहर्षिभाषिता सा हि ।
तदनुगुणाश्च स्मृतयः समर्थयन्ति प्रधानकारणताम् ॥ १२ ॥
न हि तासामवकाशः कथयितुमन्यत्र केनचिच्छक्यः ।
मन्वादिस्मृतिवचसां वर्णाश्रमधर्मनिर्णयार्थतया ॥ १३ ॥
कर्मण्यवकाशः स्यादिह च तथा नैव कर्मपरता स्यात् ।
गुणपुरुषान्तरबोधान्निःश्रेयसमिति वदन्ति कपिलाद्याः ॥ १४ ॥
ब्रह्मणि वेदान्तानां समन्वयो यश्च दर्शितः पूर्वम् ।
स्मृत्यनवकाशदोषे जाग्रति स कथं हि संस्थितिं यायात् ॥ १५ ॥
तस्मात्स्मृत्यनुसाराच्छ्रुत्यन्तानां समन्वयो युक्तः ।
नोचेद्वेदान्तानामप्रामाण्यं हि दुर्निवारं स्यात् ॥ १६ ॥
इति चेन्नैवमिहापि हि दोषोऽय दुर्निवार एव स्यात् ।
स्मृत्यनवकाशदोषाद्वेदान्ताश्च प्रधानवादपराः ॥ १७ ॥
मन्वादिस्मृतिवचसामवकाशो नोपलभ्यते तत्र ।
यश्चायमन्तरात्मा क्षेत्रज्ञश्चेति कथ्यते विबुधैः ॥ १८ ॥

यच्चाव्यक्तं त्रिगुणं तस्मादुत्पन्नमुपदिशत्यन्या।
मनुना च सर्वभूतेष्वात्मानं चाऽऽत्मनीह भूतानि ॥ १९ ॥
पश्यन्स आत्मयाजी स्वाराज्यं गच्छतीति निर्दिष्टम्।
एवमिह भारतादावयमेवार्थः प्रदर्शितो भूयः ॥ २० ॥
तव मम चान्तर्यामी ये चान्यदेहसंस्थिताः सर्वे।
सर्वेषामपि तेषां साक्षी न हि गृह्यते स जडधीभिः ॥ २१ ॥
सोऽयं हि विश्वमूर्धा विश्वभुजो विश्वपाच्च विश्वाक्षः।
अनुसरति सर्वभूतेष्वयमात्मा स्वैरचारिमर्यादाम् ॥ २२ ॥
इत्यादिवचनजातैः सर्वज्ञत्वादिगुणगणोपेतः।
आदिष्टः परमात्मा नियामकत्वेन न प्रधानमपि ॥ २३ ॥
आपस्तम्बाद्यैरपि पर एवाऽऽत्मा हि जगदुपादानम्।
तस्मात्कायाः प्रभवन्तीत्याद्यैर्वर्णितं हि भूयोऽपि ॥ २४ ॥
तस्मात्स्मृतिवचनानां श्रुत्यनुसारात्प्रमाणता वाच्या।
श्रुतिविपरीतार्थानामप्रामाण्यं हि कपिलवाक्यानाम् ॥ २५ ॥
प्रथमे तन्त्रे चैवं जैमिनिना सूत्रितं हि सूत्रकृता।
असति विरोधे श्रुत्या स्मृतेः प्रमाणत्वमितरथा नेति ॥ २६ ॥
कपिलस्मृतिवचसामिह मूलं नैवोपलभ्यते क्वापि।
निर्मूलैरेतैरिह कथं विरोधः समन्वये श्रौत ॥ २७ ॥
ननु कपिलस्मृतिवचसामप्रामाण्यं न शङ्कितुं शक्यम्।
यस्मादृषिप्रसूतं कपिलमितिश्रुतिरिमं हि वर्णयति ॥ २८ ॥
यस्य ज्ञानातिशयं श्रुतिरियमेवं हि वर्णयत्यमलम्।
तद्वचसां हि विरोधे श्रौतः कथमिह समन्वयो भवति ॥ २९ ॥
इति शङ्काऽत्र न कार्या यदयं कपिलो न मन्त्रनिर्दिष्टः।
सुगतसुतविलयकर्ता भगवान्कपिलो हि मन्त्रनिर्दिष्टः ॥ ३० ॥
स च खलु न सूत्रकर्ता किं त्वन्यस्तेन तन्निराक्रियते।
न हि शब्दमात्रसाम्यादभिलषितार्थाः क्वचिच्च सिध्यन्ति ॥३१॥
स्मृत्यनवकाशदोषस्तस्मादिह नैव शङ्कितुं शक्यः।
श्रौते समन्वयेऽस्मिन्विरोधशङ्काऽपि दूरवार्तैव ॥ ३२ ॥
नन्वीक्षत्यधिकरणे प्रधानवादो हि निरसितः पूर्वम्।
कथमिह पुनराशङ्का संजातेषेति नैवमाशङ्क्यम् ॥ ३३ ॥

परतन्त्रप्रतिमाः स्युः प्रायेण जना हि वेदवाक्यार्थम् ।
निश्चेतुमस्वतन्त्राः स्मृतिषु प्रख्यातकर्तृकास्वेव ॥ ३४ ॥
बहुमानाद्द्विश्वस्युर्नास्मद्व्याख्यानसरणिषु ह्येते ।
अत इह तत्स्मृतिवचसामसारतां वक्तुमयमुपन्यासः ॥ ३५ ॥

इतरेषां चानुपलब्धेः ॥ २ ॥

यानीतराणि सांख्यैर्महदादीनि प्रधानकार्याणि ।
निर्दिष्टान्येतानि हि लोके वेदे च नोपलभ्यन्ते ॥ ३६ ॥
भूतेन्द्रियाणि तावल्लोके वेदे च सुप्रसिद्धानि ।
तद्विषयस्मृतिरपि या प्रमाणमिति सा हि नो निराक्रियते ॥३७॥
महदादीनि हि लोके वेदे न क्वापि चोपलभ्यन्ते ।
षष्ठेन्द्रियार्थकल्पान्यत्र स्मृतिरपि कथं प्रमाणं स्यात् ॥ ३८ ॥
क्वचिदिह तत्परमिव यन्महदादिपदं हि दृश्यते वेदे ।
तच्चातत्परमिति खलु निर्दिष्टं ह्यानुमानिके सूत्रे ॥ ३९ ॥
यदि कार्यस्य स्मरणं न चेत्प्रमाणं हि कारणस्य स्यात् ।
तत्कथमिह प्रमाणं तत्र स्मृत्यनवकाशदोषः स्यात् ॥ ४० ॥
सांख्यस्मृतिबाधेऽपि हि तदुक्तयुक्त्यादिबाधनं नेति ।
नेयं शङ्का कार्या तदुत्तरत्रोपवर्ण्यते येन ॥ ४१ ॥
नन्विह वेदान्तानां समन्वये हि प्रधानवादेन ।
न भवतु विरोधशङ्का योगस्मृत्या नु सैव जागर्ति ॥ ४२ ॥
इति शङ्कां वारयितुं सोत्कण्ठो बादरायणाचार्यः ।
पूर्वोपदिष्टमेव न्यायं त्वत्रापि सम्यगतिदिशति ॥ ४३ ॥

एतेन योगः प्रत्युक्तः ॥ ३ ॥

यस्मादिह प्रधानं महदादीन्यपि च वेदबाह्यानि ।
निर्दिष्टान्यत्रापि हि तस्माद्योगोऽपि निरसितो भवति ॥ ४४ ॥
नन्वयमतिदेशः किल निरर्थको भाति नात्र फलदेशः ।
सामान्यन्यायत्वाद्योगः पूर्वेण निरसितो येन ॥ ४५ ॥
नायं दोषो यस्माद्योगोऽसौ वेदवाक्यनिर्दिष्टः ।
श्रोतव्यो मन्तव्यस्तथा निदिध्यासितव्य इत्येवम् ॥ ४६ ॥
श्वेताश्वतरादौ हि त्रिरुन्नतं स्थाप्य सममिति प्रथितम् ।
योगविधानपरं किल बहुप्रपञ्चं हि वाक्यमुपलब्धम् ॥ ४७ ॥

लिङ्गानि वैदिकान्यपि योगपराणि स्फुटं प्रतीयन्ते ।
तां योगमित्यधीते मन्त्रे विद्यामिति प्रसिद्धेऽपि ॥ ४८ ॥
अथ तत्त्वदर्शनस्योपायो योग इति योगशास्त्रेऽपि ।
सम्यग्दर्शनकारणभावाद्योगो हि दर्शितो भवति ॥ ४९ ॥
संप्रतिपन्नार्थत्वाद्योगस्मृतिरनपवदनयोग्या स्यात् ।
इत्यभ्यधिका शङ्का निरस्यते सपदि चातिदेशेन ॥ ५० ॥
क्वचिदपि संप्रतिपत्तौ विप्रतिपत्तिः क्वचिद्यतो दृष्टा ।
अध्यात्मगोचरानुस्मृतिषु च बहुधा सतीष्वपि ह्यनयोः ॥ ५१ ॥
मुनिना तु सांख्ययोगस्मृत्योर्यत्नः कृतो निराकरणे ।
यस्माच्च सांख्ययोगौ पुरुषार्थकराविति प्रसिद्धौ हि ॥ ५२ ॥
शिष्टैश्च परिगृहीतौ लिङ्गेनाऽऽम्नायचोदितेनेद्धौ ।
अयमर्थस्तत्कारणमितिमन्त्रे सांख्ययोगयोर्दृष्टः ॥ ५३ ॥
श्रुतिनिरपेक्षेण न तत्सांख्यज्ञानेन योगमार्गेण ।
निःश्रेयसमधिगम्यत इति हि निराकरणमेतयोर्भवति ॥ ५४ ॥
आत्मैकत्वज्ञानादन्यन्मोक्षैकसाधनं नेति ।
स्फुटतरमिह बाधयति श्रुतिरेषा विश्रुता तमेवेति ॥ ५५ ॥
यस्मात्सांख्या योगा नाऽऽत्मैकत्वं वदन्ति तेनैते ।
श्रुतिबाह्या इति मत्वा सूत्रकृतैतन्मतं निराक्रियते ॥ ५६ ॥
तत्कारणमितिमन्त्रे निर्दिष्टः सांख्ययोगशब्दोऽपि ।
वैदिकमेव ज्ञानं ध्यानं ब्रूते न हि स्मृतिप्रथितम् ॥ ५७ ॥
येनाऽऽसन्नविरोधो न भवति सांख्यैस्तथैव योगैश्च ।
योऽसौ संप्रतिपन्नो वेदान्तैः सोऽद्य नो निराक्रियते ॥ ५८ ॥
योऽयमसङ्गो हीतिश्रुत्युक्तः पुरुष एव सांख्योक्तः ।
योगोक्तमथ परिव्राडितिश्रुतीरितनिवृत्तिनिष्ठत्वम् ॥ ५९ ॥
तदुभयमिष्यत एव ह्यविरुद्धं येन वेदवाक्यानाम् ।
प्रतिवक्तव्यान्येवं तर्कस्मरणानि यानि चान्यानि ॥ ६० ॥
तस्मात्स्मृतिवाक्यैरिह विरोधशङ्कावकाशपरिहारात् ।
ब्रह्मणि वेदान्तानां समन्वयो निरपवाद इति सिद्धम् ॥ ६१ ॥
नन्वत्र स्मृतिवचनैराक्षेपे परिहृतेऽपि पुनरन्यः ।
तर्कनिमित्तः सोऽयं विरोध इह दुर्निवार एव स्यात् ॥ ६२ ॥

धर्म इवाऽऽम्नायोऽसावनपेक्षोऽत्रेति नैवमाशङ्क्यम् ।
धर्मस्यासिद्धत्वात्स च न हि मानान्तराणि संस्पृशति ॥ ६३ ॥
ब्रह्म च सिद्धं यस्मान्मानान्तरवेद्यभावमुपयाति ।
इत्याम्नायसमन्वयमिह पुनराक्षिपति तर्कसाधनतः ॥ ६४ ॥

न विलक्षणत्वादस्य तथात्वं च शब्दात् ॥ ४ ॥

दृष्टानुसारतोऽसावदृष्टमर्थं समर्पयन्ती या ।
युक्तिर्हि संनिकृष्टा श्रुतिरनुभूतेस्तु विप्रकृष्टेव ॥ ६५ ॥
अनुभूत्यवसानं यद्ब्रह्मज्ञानं हि मोक्षफलकं स्यात् ।
भवति तदेवाविद्यानिवर्तकं न हि परोक्षविज्ञानम् ॥ ६६ ॥
दर्शनसाधनमेतन्मननं श्रवणातिरिक्तमुपदिशति ।
श्रोतव्य इति श्रुतिरप्यावश्यकता हि तेन तर्कस्य ॥ ६७ ॥
तस्मात्तर्कविरोधान्न ब्रह्मप्रकृतिकं हि जगदेतत् ।
यस्मादचेतनं तत्सुखदुःखाकुलमशुद्धमाभाति ॥ ६८ ॥
ब्रह्म त्वानन्दघनं शुद्धं च स्वप्रकाशचिन्मात्रम् ।
प्रकृतिविकारात्मकता विरूपयोः कथमियं भवति ॥ ६९ ॥
न हि रुचकादिविकारा मृदुपादाना भवन्ति लोकेऽस्मिन् ।
ये च शरावाद्या अपि न सुवर्णप्रकृतिका हि दृश्यन्ते ॥ ७० ॥
यस्माज्जगदिदमखिलं सुखदुःखान्वितमचेतनं तस्मात् ।
सुखदुःखाकलितस्य ह्यचेतनस्यैव कार्यमिह भवति ॥ ७१ ॥
जगदिदमचेतनं सत्स्यादुपकरणं हि चेतनस्यैतत् ।
न हि सत्युभयोरुपकृतिरिह कस्यचित्केनचिद्भवति ॥ ७२ ॥
लोके न हि प्रदीपावन्योन्यस्योपकरणतामेतः ।
उपकृतिरिह चेतनयोरन्योन्यं स्वामिभृत्ययोर्यद्वत् ॥ ७३ ॥
कार्यं करणं चेतनमप्युपकरणं हि भोक्तुरिति चेन्न ।
न हि लोके केवलयोश्चेतनयोरुपकृतिः क्वचिद्दृष्टा ॥ ७४ ॥
स्यात्स्वामिभृत्ययोरप्यचेतनांशस्य चेतनोपकृतिः ।
बुद्ध्याद्यचेतनांशे भवति हि तद्वच्च चेतनोपकृतिः ॥ ७५ ॥
पुरुषाश्चाकर्तारो निरतिशयाश्चेतना विनिर्दिष्टाः ।
तस्मान्नैतेषामिह परस्परं चोपकारिता भवति ॥ ७६ ॥
न ब्रह्मप्रकृतिकमिह जगदेतत्तद्विलक्षणं येन ।
मृत्पाषाणानामपि चैतन्यं स्याद्यदा तदैवं स्यात् ॥ ७७ ॥

ननु सुप्तमूर्छितादौ चैतन्यं सदपि भवति न व्यक्तम्।
तद्वन्मृदादिकाना चैतन्यं नो विभाव्यत सदपि ॥ ७८ ॥
चेतनविलक्षणत्वं जगतः कथमिति हि नैवमाशङ्क्यम्।
एवमपि चास्य जगतो विलक्षणत्वं हि दुर्निवारमिति ॥ ७९ ॥
ब्रह्म च शुद्धं जगदिदमशुद्धमुपदिश्यत हि शास्त्रेषु।
इति शुद्ध्यशुद्धिलक्षणविलक्षणत्वं तु जगति दुर्वारम् ॥ ८० ॥
तस्मादचेतनस्य हि कार्यं जगदेतदखिलमपि वाच्यम्।
तदिहाचेतनमेतत्प्रधानमनुरूपकारणं जगतः ॥ ८१ ॥
चेतनविलक्षणत्व जगतः कथयति हि शब्द एवायम्।
सच्च त्यच्च निरुक्तं तथाऽनिरुक्तं च भवति विज्ञानम् ॥ ८२ ॥
तद्वदविज्ञानमिति ब्रूते चेतनविलक्षणत्वं हि।
तस्मादचेतनं स्याज्जगन्न हि ब्रह्म जगदुपादानम् ॥ ८३ ॥
ननु चेतनत्वमपि किल मृदादिकाना तथेन्द्रियाणां च।
श्रूयत एव हि मन्त्रे मृदब्रवीदिति च ते ह वाचमिति ॥ ८४ ॥

अभिमानिव्यपदेशस्तु विशे-
षानुगतिभ्याम् ॥ ५ ॥

प्रकृताशङ्कां निरसितुमयं तुशब्दो हि सूत्रनिर्दिष्टः।
न हि खलु मृदब्रवीदित्यनया श्रुत्या मृदादिकानां स्यात् ॥८५॥
चेतनता ह्यभिमानिव्यपदेशोऽसौ न भूतमात्रस्य।
वागाद्यभिमानिन्यो ह्यभिमानिन्यो मृदादिकानां याः ॥ ८६ ॥
तास्तु खलु चेतनाः स्युर्व्यपदिश्यन्ते हि वदनकृत्येषु।
यस्माद्भोक्तॄणामपि तथैव भूतेन्द्रियादिकानां च ॥ ८७ ॥
चेतनताचेतनताप्रविभागोऽयं हि पूर्वमुपदिष्टः।
सर्वस्य चेतनत्वे प्रविभागोऽयं हि दुरुपपादः स्यात् ॥ ८८ ॥
कौषीतकिवाक्ये किल दृष्टो यः प्राणवाक्यसंवादः।
तत्र च कारणशङ्का निर्वर्तिता देवतादिशब्देन ॥ ८९ ॥
सर्वत्र देवताः खल्वभिमानिन्यस्तथैव चानुगताः।
मन्त्रार्थवादवाक्येष्ववगम्यन्ते तथेतिहासादौ ॥ ९० ॥
अग्निर्वागितिमन्त्रः करणानुगतां हि देवता ब्रूते।
अभिमानिव्यपदेशं ते ह प्राणा इति श्रुतिर्वक्ति ॥ ९१ ॥
तत्तेज ऐक्षतेति श्रुतिरपि सद्रूपदेवताया हि।
स्वविकारानुगताया ईक्षा व्यपदिश्यते न चान्यस्य ॥ ९२ ॥

यस्माद्ब्रह्मविलक्षणमिदं जगद्दृश्यते हि लोकेऽस्मिन् ।
तत्प्रकृतिकमिह न स्यादित्याशङ्कां निराकरोति मुनिः ॥ ९३ ॥

दृश्यते तु ॥ ६ ॥

अत्र तुशब्दो योऽसावाक्षेपं निरसितुं प्रवृत्तो हि ।
ब्रह्मविलक्षणमेतज्जगन्न तत्प्रकृतिकं भवेदिति ह ॥ ९४ ॥

यदिदं दूषणमुक्तं तदत्र पक्षे पदं न विदधाति ।
अत्र च विलक्षणत्वं यत्किंचिद्वाऽथ सर्वतो वा स्यात् ॥ ९५ ॥
किंचिद्वैलक्षण्यं प्रतिकूलं प्रकृतिविकृतिभावे चेत् ।
पुरुषशरीरादिह किल कशनखानां कथं भवेज्जन्म ॥ ९६ ॥
इह चेतनं प्रसिद्धं पुरुषशरीर ह्यचेतनान्येव ।
केशनखादीनि ततस्तत्प्रकृतिकता कथ हि तेषां स्यात् ॥ ९७ ॥
तद्वच्च वृश्चिकानामुत्पत्तिर्भवति गोमयादिभ्यः ।
ते चेतनाः प्रसिद्धा अचेतनान्येव गोमयादीनि ॥ ९८ ॥
ननु [च]शरीरमचेतनमचेतनान्यव गोमयादीनि ।
न विलक्षणता तेषामतो भवेत्प्रकृतिविकृतिभावो हि ॥ ९९ ॥
तद्वच्च वृश्चिकानां गात्राणि भवन्त्यचेतनान्यव ।
गोमयकार्याणि यतो न विरोधः प्रकृतिविकृतिभावे स्यात्॥१००॥
इति चद्विलक्षणत्वं तथाऽपि दुर्वारमेतयोर्भवति ।
एकं हि चेतनस्याधिष्ठान स्यात्तथा न चान्यत्स्यात् ॥ १०१ ॥
इति खलु वैलक्षण्यं परिहर्तुं नैव केनचिच्छक्यम् ।
वैलक्षण्ये च कथ तयोर्भवेत्प्रकृतिविकृतिभावोऽपि ॥ १०२ ॥
सर्वात्मना हि तच्चेद्वैलक्षण्यं हि बाधकं प्रकृते ।
नैतज्जगति यतोऽयं सत्तारूपश्च धर्म उभयत्र ॥ १०३ ॥
चैतन्यानन्वितमिति जगन्न चेतनविकार इति चन्न ।
चेतनकारणवादे दृष्टान्तो नात्र विद्यते कश्चित् ॥ १०४ ॥
सर्वस्य जनिमतः किल जगतः प्रकृतिर्हि चेतनं तत्र ।
दृष्टान्तमन्तरेण ह्ययमाक्षेपो न शङ्कितुं शक्यः ॥ १०५ ॥
पक्षातिरिक्त एव हि दृष्टान्तो नैव पक्षकुक्षिस्थः ।
कारणगुणसंक्रमण का[र्ये] सर्वत्र दृष्टमि[ति] मत्वा ॥ १०६ ॥
चैतन्यं कार्ये स्यादिति शङ्काऽप्यत्र नैव कर्तव्या ।
अण्वादिकारणत्वे दोषोऽयं दुर्निवार एव स्यात् ॥ १०७ ॥

तत्र च योऽसौ न्यायः स एव चात्रापि निर्णये हेतुः।
चेतनकार्यत्वे स्याज्जगतश्चैतन्यमिति तु नाऽऽशङ्क्यम् ॥ १०८ ॥
न विभाव्यते कदाचित्स्वगता धर्मो हि सुप्तमूर्छितयोः।
तद्वदिहापि स्यादिति दोषो न ब्रह्मकारणत्वे स्यात् ॥ १०९ ॥
यदपि च वलक्षण्यं जगत्यशुद्धत्वधर्मयोगेण।
अविभावितत्वमूलकमखिलं स्यान्नैव वस्तुवृत्तमपि ॥ ११० ॥
चेतनकारणतायामेतद्बाधकमुदाहृतं न भवत्।
श्रुतिरपि तदैक्षतेति प्रथयति सत्यादिलक्षणं ब्रह्म ॥ १११ ॥
जगतः कारणमिति खल्वस्य च सर्वात्मकत्वमुपदिशति।
या खलु मननं श्रवणव्यतिरेकेण श्रुतिः प्रदर्शयति ॥ ११२ ॥
तर्कावश्यकतायां समानमिति हि प्रपञ्चितं नैतत्।
यत इह केवलतर्को न भवति कस्यापि निर्णये हेतुः ॥ ११३ ॥
नैषा तर्केणेतिश्रुतिरिममर्थं प्रदर्शयत्येवम्।
जगतः कारणविषया मतिर्हि तर्केण नापनेया स्यात् ॥ ११४ ॥
श्रुत्युपदिष्टा सेयं यथोक्तविज्ञानसाधन हेतुः।
श्रुतिबलविरहे को वा तर्केण हि केवलेन निर्णेतुम् ॥ ११५ ॥
प्रभवति को वा वक्तुं कुत आजाता कुतश्च सृष्टिरियम्।
सृष्टेरर्वाचीना देवा नैवास्य निर्णये कुशलाः ॥ ११६ ॥
अस्य च जगतो योऽसावध्यक्षः सत्यलोकनिलयोऽपि।
वेद न वा वेदेति प्रथयति दुर्बोधरूपतामस्य ॥ ११७ ॥
तस्माच्छ्रुत्यभिगम्ये तर्कविरोधः पदं न विदधाति।
श्रुतिशतगेये तस्मिन्मननं श्रवणाङ्गमेव निर्दिष्टम् ॥ ११८ ॥
द्रष्टव्यः श्रोतव्यो मन्तव्य इतिश्रुतिः प्रवृत्तेयम्।
श्रुतिनिर्दिष्टेऽपि भवेत्तस्यासंभावितत्वशङ्काऽपि ॥ ११९ ॥
तामपनेतुं ह्येषा श्रुतार्थसंभावितत्वविज्ञाने।
मननं परमं साधनमुपदिशति न हि स्वतन्त्रमानमिति ॥ १२० ॥
श्रुत्यनुगुणं हि तच्चेद्यथोक्तविज्ञानसाधनं भवति।
प्रतिकूलं मननं यत्तदप्रमाणं हि तेन न विरोधः ॥ १२१ ॥
सूत्रकृदिममेवार्थं प्रवक्ति तर्काप्रतिष्ठितत्वेन।
सिद्धं हि वस्तु लोके दृष्टं मानान्तराभिगम्यमिति ॥ १२२ ॥

तद्वद्ब्रह्मापीति हि दूषणमेतन्न चेह संभवति ।
ब्रह्म तु यद्यपि सिद्धं तथाऽपि मानान्तरं न संस्पृशति ॥ १२३ ॥
रूपादियोगरहितं ब्रह्म यतो भवति नेन्द्रियग्राह्यम् ।
नैवानुमानगम्यं लिङ्गाभावात्किमन्यदिह मानम् । १२४ ॥
तस्माच्छ्रुत्यभिगम्ये तर्कविरोधः स्मृतेर्विरोधो वा ।
ब्रह्मणि पदमाधातुं न शक्नुयात्तेन कोऽपि न विरोधः ॥ १२५ ॥
ब्रह्मणि परमानन्दे न बाधक श्रुतिसमन्वये किमपि ।
ब्रह्म यदि कारणं स्यात्प्रागुत्पत्तेस्तदात्मना सत्त्वम् ॥ १२६ ॥
कार्यस्य वाच्यमेतन्न च खलु युक्तं विरुद्धरूपेण ।
यदि च प्रधानमेतज्जगतो जन्मादिकारणं भवति ॥ १२७ ॥
प्रागुत्पत्तेः सत्त्व तदात्मना जगति युक्तमिति चेन्न ।

असदिति चेन्न प्रतिषेधमात्रत्वात् ॥ ७ ॥

ननु यदि चेतनमेकं जगतो जन्मादिकारणं यस्मात् ।
शब्दादिमच्च कार्यं स्थूलं परिदृश्यते हि जगदखिलम् ॥ १२८ ॥
ब्रह्म च तद्विपरीतं कारणमुपवर्ण्यते तदैवं स्यात् ।
असदेव कार्यमेतत्प्रागुत्पत्तेरिति प्रसज्येत ॥ १२९ ॥
सत्कार्यवादिनस्ते तदनिष्टं स्यादितीह नाऽऽशङ्क्यम् ।
प्रतिषेधमात्रमेतन्नास्य प्रतिषेध्यमस्ति किंचिदपि ॥ १३० ॥
सत्त्वं प्रागुत्पत्तेः प्रतिषेद्धुं नैव शक्नुयादेषः ।
यत उत्पत्तेः प्रागपि कारणरूपेण सत्त्वमस्य स्यात् ॥ १३१ ॥
हित्वा कारणसत्ता प्रागुत्पत्तेस्तथैव चेदानीम् ।
कार्यस्य नैव दृष्टं सत्त्वं प्रतिपद्यते हि तच्च कथम् ॥ १३२ ॥

अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॥ ८ ॥

चेतनकारणतायां दोषोऽयं दुर्निवार एव ननु ।
स्थितिसमये जगदेतत्स्थूलमशुद्धं च दृश्यते लोके ॥ १३३ ॥
अप्ययकाले तदिदं कारणरूप प्रपद्य सकलमपि ।
शुद्धं कारणरूपं स्वीयाशुद्ध्यादिधर्मनिवहेन ॥ १३४ ॥
संछाद्य दूषयेदिति दूषणमेतच्च दुर्निवारं हि ।
अविभागमुपगतानां भोक्तॄणामपि परेण पुरुषेण ॥ १३५ ॥
पुनरुत्पत्तौ तेषां भोक्तृविभागोऽपि दुर्लभो भवति ।
असति च नियामके स्याद्भोक्तृविभागस्तदा हि मुक्तानाम्॥१३६॥

पुनरुत्पत्तिरपि स्यादित्येतद्दूषणं हि दुर्वारम् ।
यदि चेदप्ययकाले परेण कार्यं विभक्तमेव स्यात् ॥ १३७ ॥
स्थितिसमयादविशेषादप्यय एवास्य दुर्लभो भवति ।
अपृथग्व्यवहारे स्यादप्ययवार्ता हि कार्यकारणयोः ॥ १३८ ॥
यद्यविभक्त यदि वा विभक्तमेवेह कारणे कार्यम् ।
अप्ययसमये सोऽयं दुर्वारो दोष एष इति चेन्न ॥ १३९ ॥

न तु दृष्टान्तभावात् ॥ ९ ॥

नायं दोषः प्रसरति जगतो जन्मादिकारणे तस्मिन् ।
अविभक्तमेव कार्यं ब्रह्मणि जन्मादिकारणे भवति ॥ १४० ॥
अप्ययसमये तत्र [च] दृष्टान्तो दोषमेनमपनुदति ।
मृत्प्रकृतिका विकारा घटकरकाद्याः स्थितिव्यतिक्रान्तौ ॥१४१॥
तामपियन्तोऽपि च ते न संसृजन्त्यात्मधर्मलेशेन ।
रुचकादयः सुवर्णे न संसृजन्त्यप्यये स्वधर्मेण ॥ १४२ ॥
पृथ्वीविकारभूतो भूतग्रामश्चतुर्विधो योऽसौ ।
उच्चावचप्रभेदोऽप्यप्ययकाले न चाऽऽत्मधर्मेण ॥ १४३ ॥
यद्वत्पृथिवीमेतां न दूषयति तद्वदेव चेहापि ।
ब्रह्मणि विशुद्धरूपे न दोषसंसर्गलेशशङ्काऽपि ॥ १४४ ॥
त्वत्पक्षसाधने किल दृष्टान्तो नोपलभ्यत कोऽपि ।
दूषणमपि यच्चैतत्तदल्पमेवोपदर्शितं भवता ॥ १४५ ॥
स्थितिसमयसुलभमपि यत्तदप्यये दर्शितं यतो भवता ।
चेतनकारणवादे तस्मात्तदिदं न दूषणं किमपि ॥ १४६ ॥
अविभागमुपगतानामपि भोक्तॄणां परेण चापीतौ ।
शक्त्यवशेषादेव च भोक्तृविभागः पुनः प्रवर्तेत ॥ १४७ ॥

स्वपक्षदोषाच्च ॥ १० ॥

योऽसौ दोषः सोऽयं प्रधानवादेऽपि तुल्य एव स्यात् ।
शब्दादिमच्च कार्यं प्रधानमेतच्च तद्विहीनं हि ॥ १४८ ॥
स्थूलं सकलं कार्यं प्रधानमेतद्विलक्षणं तस्मात् ।
यदि च विलक्षणयोरिह नैव स्यात्प्रकृतिविकृतिभावोऽयम्॥१४९॥
न स्यात्प्रधानजगतोस्तव चायं प्रकृतिविकृतिभावोऽपि ।
जगतः प्रागुत्पत्तेरसत्त्वमपि दुर्निवारमेव स्यात् ॥ १५० ॥

अप्ययकालेऽपि तथा कारणमेतच्च कार्यधर्मेण ।
संसृज्येत तथैव हि भोक्तृविभागोऽपि दुर्लभो भाति ॥ १५१ ॥
मुक्तानां च तथैव हि पुनरुत्पत्तिस्तु दुर्निवारैव ।
यदि केचिदप्ययेऽपि हि विभक्तरूपा परं प्रधानेन । १५२ ॥
तेषां कथं प्रधानं कारणमेषां प्रधानकार्यत्वम् ।
यस्माद्दूषणमेतत्तुल्यमतो नेह बाधकं भवति ॥ १५३ ॥

तर्काप्रतिष्ठानादप्यन्यथाऽनुमेयमिति
चेदेवमप्यविमोक्षप्रसङ्गः ॥ ११ ॥

इत्यागमगम्येऽर्थे तर्कविरोधो हि नैवमाशङ्क्यः ।
यस्मान्निरागमास्ते पुरुषोत्प्रेक्षानिबन्धना एव ॥ १५४ ॥
पुरुषमतिवैरूप्याद्यतो भवन्त्यप्रतिष्ठितास्तर्काः ।
उत्प्रेक्षिताश्च निपुणं कुशलैरनुमातृभिश्च ये तर्काः ॥ १५५ ॥
अन्यैरभियुक्ततरैराभास्यन्ते हि ते च सर्वेऽपि ।
अथ सुप्रसिद्धकीर्तेः कपिलस्य स्यात्प्रतिष्ठितस्तर्कः ॥ १५६ ॥
इति नात्र शङ्कनीयं प्रसिद्धमहसो भवन्ति तीर्थकराः ।
बहवः कणभुक्प्रमुखा विप्रतिपत्तिश्च दृश्यते तेषाम् ॥ १५७ ॥
तर्कविदामप्येषां कपिलः सर्वोत्तमो हि भवतीति ।
कणभुक्प्रमुखैरेतैः कपिलोऽयं नैव परिगृहीतोऽस्ति ॥ १५८ ॥
अथ वयमन्यथैव ह्यनुमास्यामो यथा न दोषोऽयम् ।
नैव हि वक्तुं शक्यं तर्कः सकलः प्रतिष्ठितो नेति ॥ १५९ ॥
अर्थाभासनिरासद्वारा श्रुत्यर्थनिर्णये सोऽयम् ।
तर्कः कारणमिति हि श्रुतिः प्रदर्शयति मननसाहाय्यम् ॥ १६० ॥
तर्कबलादेव यतः सुखसंबन्धे च दुःखपरिहारे ।
लोकः प्रवर्ततेऽसावतीतसाम्यादनागते तस्मिन् ॥ १६१ ॥
तस्मात्सावद्यमिमं तर्कं हित्वा य एष निरवद्यः ।
तर्कः संश्रयणीयो भवतीत्याशाऽत्र नैव कर्तव्या ॥ १६२ ॥
क्वचिदपि विषये तर्कः प्रतिष्ठितः स्यात्तथाऽपि न विमोक्षः ।
वागाद्यगम्यमेतद्ब्रह्म यतो दर्शयन्ति वेदान्ताः ॥ १६३ ॥
तत्र च तर्कः सोऽय निरागमो हि प्रतिष्ठितो नेति ।
तस्मादागमवशतस्तदनुगुणस्मृतिवचःसहायेन ॥ १६४ ॥

चेतनमद्वयरूपं ब्रह्मैवैतस्य कारणं सिद्धम् ।
अन्यच्छ्रुतिविपरीत प्रधानमेतस्य कारणं नेति ॥ १६५ ॥
ब्रह्मणि वेदान्तानां समन्वये नैव बाधक किमपि ।
नान्वह समन्वयेऽस्मिन्पुनर्विरोधो हि दुर्निवारः स्यात् ॥ १६६ ॥
कपिलस्मृतिवचनैरिह विरोधशङ्का तु परिहृता पूर्वम् ।
द्रव्यं न विभुप्रकृतिकमिति योऽसौ कणभुगभिमतस्तर्कः ॥१६७॥
संप्रति तेन विरोधो दुर्वारः श्रुतिसमन्वये भवति ।
कपिलस्तर्के कुशलः कणभुक्तस्मादतीव कुशलः स्यात् ॥ १६८ ॥
कणभुक्तर्कविरोधाच्छ्रुतिवचसामिह समन्वयोऽसिद्धः ।
इति शङ्कामतिदेशादपनेतु रचितमेतदधिकरणम् ॥ १६९ ॥

एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥ १२ ॥

शिष्टपरिग्रहविधुरा ये वै शिष्टा[परिग्रहा]स्ते स्युः ।
अतिदेशेन निरस्तास्ते खल्वण्वादिवादमुख्या ये ॥ १७० ॥
योऽसौ प्रधानवादः प्रत्यासन्नो हि वेदवादस्य ।
शिष्टैश्च परिगृहीतः श्रुतिलिङ्गेनोपबृंहितस्तद्वत् ॥ १७१ ॥
अणुकारणतावादो नायं कस्यापि संमतो भवति ।
शिष्टैर्न परिगृहीतस्तस्मादत्रात्यनादरोऽभिहितः ॥ १७२ ॥
तस्य निराकरणेऽपि च तुल्यं साधनमिहोपदिष्टं हि ।
अतिगम्भीरं चैतद्ब्रह्माऽऽगममात्रसमधिगम्यं स्यात् ॥ १७३ ॥
तर्कानवगाह्यत्व त ेव तर्काप्रतिष्ठितत्वमपि ।
अपि चान्यथानुमानेऽप्यविमोक्षः सकलमेतदिह तुल्यम् ॥१७४॥
ननु यदि जगदखिलमपि ब्रह्मप्रकृतिकमितीष्यत भवता ।
ब्रह्माद्वितीयरूपं कार्यं सकलं हि भिन्नरूपं हि ॥ १७५ ॥
कारणवैलक्षण्याद्वैलक्षण्यं हि दृश्यते कार्ये ।
मृत्तन्तुभेदतः स्याद्घटपटयोर्भिन्नरूपता दृष्टा ॥ १७६ ॥
ब्रह्मण्यप्रत्यक्ष श्रुतिः प्रमाणं न चान्यदित्युक्तम् ।
अत्र पुनः प्रत्यक्षे जगति विरुद्धार्थरूपताऽनुचिता ॥ १७७ ॥
इह भोक्तृभोग्ययोर्यः प्रत्यक्षे चोपलभ्यते भेदः ।
ब्रह्मप्रकृतिकतायां तस्य च बाधो भवत्स चायुक्तः ॥ १७८ ॥
आदित्यो यूप इतिश्रुतिर्यथा गौणमर्थमाचष्टे ।
तद्वत्सच्च त्यच्चेत्येवंभूता श्रुतिश्च गौणपरा ॥ १७९ ॥

तस्माज्जगदखिलमपि प्रधानकारणकमुचितमाश्रयितुम् ।
इति शङ्कामपनेतुं मुनिना रचितं तदेतदधिकरणम् ॥ १८० ॥

भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॥ १३ ॥

ब्रह्म यदि चाद्वितीयं कारणमुपदिश्यते हि वेदान्तैः ।
भोक्ता हि भोग्यभाव भोग्यं वा भोक्तृभावमुपगच्छेत् ॥ १८१ ॥
न हि कारणविशेषे कार्यविशेषो हि दृश्यते क्वापि ।
भोक्त्रापत्तौ सत्यामविभागो दुर्निवार एव तयोः ॥ १८२ ॥
जगति खलु भोक्तृभोग्यौ विभक्तरूपेण सुप्रसिद्धौ हि ।
अनुचितमिदमाश्रयितुं प्रमाणसिद्धार्थबाधनं श्रुत्या ॥ १८३ ॥
इतिचेन्नैवं यस्माल्लोकवदेवात्र निर्णयो भवति ।
मृत्प्रकृतिका विकारा घटकरकाद्याः परस्परं भिन्नाः ॥ १८४ ॥
मृत्खल्वेकाकारा प्रकृतिविकारत्वमत्र दृष्टं हि ।
वीच्यादयो विकाराः समुद्रमूलाः परस्परं भिन्नाः ॥ १८५ ॥
तेषां कारणभूतः समुद्र एकोऽद्वितीय आभाति ।
रुचकादयो विकाराः सुवर्णमूलास्तथैव दृश्यन्ते ॥ १८६ ॥
एकस्वरूपमेव हि सुवर्णमाभाति तद्वदेवेह ।
शब्दादयो हि भोग्या भोक्ता चाऽऽविद्यकश्च संघातः ॥ १८७ ॥
ब्रह्मविकाराः सन्तो भजन्ति भेदं परस्परं सर्वे ।
भेदः प्रमाणसिद्धो वीच्यादिषु दृश्यते यथा लोके ॥ १८८ ॥
तद्वद्भोक्त्रादिष्वपि भेदे नैवास्ति बाधकं किमपि ।
तस्मात्प्रकृतविभेदे विकारभेद इति नायमेकान्तः ॥ १८९ ॥
वीच्यादिकार्यजाते यदयं नियमो हि भङ्गमापन्नः ।
तस्माच्छ्रुत्यनुसाराद्ब्रह्मप्रकृतिकमिदं हि जगदखिलम् ॥ १९० ॥
ब्रह्मणि कारणरूपे श्रुत्यन्तसमन्वयोऽपि निरवद्यः ।
ब्रह्मप्रकृतिकतायां योऽसौ दोषः प्रदर्शितः पूर्वम् ॥ १९१ ॥
स च परिहृतो हि दोषः परिणामप्रक्रियां समालम्ब्य ।
यदिदं दूषणमुक्तं विवर्तवादावलम्बनेन पुनः ॥ १९२ ॥
तदिदं दूषणमखिलं निर्मूलयितुं कृतप्रयत्नेन ।
इह खल्वादृतमनसा मुनिना रचितं तदेतदधिकरणम् ॥ १९३ ॥

तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ १४ ॥

व्यवहारावसरे किल जगत्समग्रं विभक्तमाभाति ।
परमार्थतो हि सकलं कारणरूपं सकार्यमन्यदिह ॥ १९४ ॥

यस्मादनन्यतैव हि विमृष्टयोर्भवति कार्यकारणयोः ।
कारणसत्तां हित्वा कार्यासत्त्वं तयोरनन्यत्वम् ॥ १९५ ॥
मृद्घटयोरिह लोके मृदनन्यत्वं तदेदृशं दृष्टम् ।
सर्वत्र कार्यजाते ह्यनन्यता भवति कारणेनैवम् ॥ १९६ ॥
आरम्भणशब्दाद्यैस्तमेतमर्थं श्रुतिः प्रदर्शयति ।
येनाश्रुतमित्यादावेकज्ञानेन सर्वविज्ञानम् ॥ १९७ ॥
निर्दिश्य तत्र चायं दृष्टान्तो हि प्रदर्शितः श्रुत्या ।
मृत्पिण्डेनैकेन च मृन्मयमखिलं यथैव विज्ञातम् ॥ १९८ ॥
यस्माद्वाचारम्भणमेष विकारा हि नामधेयमिति ।
घटकरकादिविकारो वाचैवाऽऽरभ्यते हि केवलया ॥ १९९ ॥
परमार्थतो विमर्शे न विकारो नाम कश्चिदन्योऽस्ति ।
अनृतात्मको विकारो नामैव हि मृत्तिकेव सत्यमिति ॥ २०० ॥
तेजोबन्नेषु तथा त्रीणि हि रूपाणि सत्यमिति चोक्तम् ।
दृष्टान्तोऽयं ब्रह्मण उक्तार्थसमर्थनाय निर्दिष्टः ॥ २०१ ॥
ब्रह्मप्रकृतिकमेतत्तद्व्यतिरेकेण नास्ति चैतदिति ।
प्रख्याप्य सत्यमेकं ब्रह्मैवेतिश्रुतिः प्रदर्शयति ॥ २०२ ॥
सूत्रे चाऽऽदिग्रहणाच्छ्रुत्यन्तरमैतदात्म्यमित्येवम् ।
मानमिति सूचितं स्यात्तदनन्यत्वे यथोपदिष्टार्थे ॥ २०३ ॥
दृष्टान्तैरेतैरिह भवेदनेकात्मकत्वमस्येति ।
नैवाऽऽशङ्क्यं यस्मात्कारणमात्रस्य सत्यता कथिता ॥ २०४ ॥
तस्करदृष्टान्तोऽयं विकारजातः स चानृतत्वं हि ।
प्रथयति न चेत्तदेवं तदुपन्यासो हि विफल एव स्यात् ॥ २०५ ॥
दृष्टान्ते चैतस्मिन्बन्धनमिह तस्करे विनिर्दिष्टम् ।
अनृताभिसंधियोगात्तथैव दार्ष्टान्तिकेऽपि वक्तव्यम् ॥ २०६ ॥
प्रकृतिविकारौ सत्यौ स्यातां को वाऽनृताभिसंधिः स्यात् ।
तस्मादनृतं कार्यं सत्तु स्यात्कारणं परं ब्रह्म ॥ २०७ ॥
इति खल्वङ्गीकार्यं दृष्टान्तोऽयं तदाऽनुकूलः स्यात् ।
ब्रह्म ननु निर्विशेषं सविशेषं च द्विरूपमुपदिष्टम् ॥ २०८ ॥
प्रथयन्ति निर्विशेषं ह्यशब्दमित्यादिवाक्यजालानि ।
सविशेषमुपदिशन्ति श्रुतिवचनान्यपि च सर्वकर्मेति ॥ २०९ ॥
एकत्वं नानात्वं ब्रह्मणि सत्य तदेतदुभयमपि ।
उपयुज्यते तु कर्मणि नानात्वेनास्य यच्च विज्ञानम् ॥ २१० ॥

एकत्वेन च सत्यज्ञानं मोक्षैकफलमिति न्याय्यम् ।
तस्मात्तदिदमयुक्तं कारणमात्रस्य सत्यताकथनम् ॥ २११ ॥
इतिचेन्मैवं शङ्क्यं ब्रह्म यतो निर्विशेषरूपमिति ।
यस्मिन्सर्वाणीतिश्रुतिः प्रदर्शयति नेह नानेति ॥ २१२ ॥
ननु यदि चैवं चेत्स्यात्सविशेषनिरूपणं वृथैव स्यात् ।
श्रुतिवाक्यदर्शितस्य हि वैयर्थ्यं नैव दृश्यते क्वापि ॥ २१३ ॥
इतिचेन्मैवं यस्मात्सविशेषमुपासनार्थमुपदिष्टम् ।
तस्य च परिणामित्वं जगदाकारेण वर्णितं यदपि ॥ २१४ ॥
तदपीह निर्विशेषप्रतिपत्त्यर्थं श्रुतिः प्रदर्शयति ।
अन्येन सोम्य शुङ्गेनेतिश्रुतिरेतमर्थमाचष्टे ॥ २१५ ॥
व्यवहारावस्थायां परात्मनो भवति चेशितृत्वमपि ।
तत्रेशितव्यभावो जगतः सर्वस्य वर्ण्यते शास्त्रे ॥ २१६ ॥
तत्रोपास्योपासकभावोऽसावीशजीवयोर्भवति ।
बोधयितुमेतमर्थं लोकवदित्याह सूत्रकारोऽयम् ॥ २१७ ॥
परमार्थावस्थायां न चेशितव्य न वाऽपि चोपास्यम् ।
केवलरूपो ह्यात्मा विभाति नान्यत्ततोऽस्ति किंचिदपि॥ २१८ ॥
श्रुतिरेषा बोधयति हि यस्मिन्सर्वाणि नेह नानेति ।
दर्शयितुमेतमर्थं तदनन्यत्व हि सूत्रितं मुनिना ॥ २१९ ॥
ननु चेत्सकलं कार्यं विकारभूतं तथाऽनृतं तर्हि ।
लोकव्यवहारोऽयं विच्छिद्येताव्यवस्थितत्वेन ॥ २२० ॥
व्यवहारः सकलोऽयं प्रमाणमूलः प्रमातृमूलश्च ।
सर्वस्य चानृतत्वे न च प्रमाता न हि प्रमाणं वा ॥ २२१ ॥
व्यवहारस्तदभावे कथं हि लोकप्रवर्तनाहेतुः ।
शास्त्रीयो विधिरूपो ज्योतिष्टोमादिगोचरो योऽसौ ॥ २२२ ॥
प्रतिषेधश्चापि तथा विच्छिद्येताप्रमाणकत्वेन ।
शास्त्रेण चानृतेन प्रतिपाद्य यदपि चाऽऽत्मतत्त्वमपि ॥ २२३ ॥
तच्च कथं सत्यं स्यादित्याशङ्काऽत्र नैव कर्तव्या ।
आत्मावबोधतः प्राग्जगदखिलं सत्यरूपमाभाति ॥ २२४ ॥
तदुपाश्रित्य च सकलः प्रमाप्रमातृप्रमाणविषयोऽसौ ।
व्यवहारश्च तथैव व्यवस्थितार्थो न चान्यथा भवति ॥ २२५ ॥

स्वप्नव्यवहारः प्राग्यथा प्रबोधान्न बाध्यते तद्वत् ।
स्वप्नेन चानृतेन हि शुभस्य लाभो यथा भवेल्लोके ॥ २२६ ॥
अनृतेन चाऽऽत्मलाभस्तथा भवत्येव मोक्षशास्त्रेण ।

भावे चोपलब्धेः ॥ १५ ॥

एतस्मादपि हेतोरनन्यता भवति कार्यकारणयोः ॥ २२७ ॥
यस्मात्कारणभावे दृष्टा कार्यस्य नियतमुपलब्धिः ।
सत्यां मृदि करकादिः सति च सुवर्णे तथैव रुचकादिः ॥२२८॥
उपलभ्यते हि तस्मादनन्यता भवति कार्यकारणयो. ।
नैवान्यस्य च भावे न ह्यन्यस्योपलब्धिरिह दृष्टा ॥ २२९ ॥
न ह्यश्वो गोरन्यो गोर्भावे चोपलभ्यते ह्यश्वः ।
एवं कुलालभावे घटोपलब्धिश्च नैव दृष्टा हि ॥ २३० ॥
सत्यपि निमित्तनैमित्तिकभावे न हि तयोरयं नियमः ।
यदयं नियमो दृष्टो यत्र स्यात्प्रकृतिविकृतिभावोऽयम् ॥ २३१ ॥
नन्वन्यस्य च भावे न ह्यन्यस्योपलब्धिरिति न स्यात् ।
धूमश्चाग्नेरन्यः स चाग्निभावेऽपि नियतमुपलब्धः ॥ २३२ ॥
नियतोपलब्धियोगादनन्यता स्यादितीह न हि नियमः ।
नैवं निवातदेशे ह्यग्न्युद्वापेऽपि दृश्यते धूमः ॥ २३३ ॥
अथ वा तदनन्यत्वे तद्भावेनोपलब्धिविषयत्वम् ।
हेतुं वयं वदामो हेतुरयं नाग्निधूमयोर्भवति ॥ २३४ ॥
मृद्घटयोरिह दृष्टः सोऽयं तस्मादनन्यता हि तयोः ।
अथ वा भावाच्चेति हि सूत्रावयवोऽयमत्र पठनीयः ॥ २३५ ॥
तेनोपलब्धिभावादनन्यता साधितैतयोर्भवति ।
पूर्वं शब्दबलेन ह्यनन्यता दर्शिता हि सूत्रकृता ॥ २३६ ॥
प्रात्यक्षिकोपलब्ध्या तदनन्यत्वं प्रसाधितं ह्यत्र ।

सत्त्वाच्चावरस्य ॥ १६ ॥

हेतोरेतस्मादप्यनन्यता भवति कार्यकारणयोः ॥ २३७ ॥
यस्मात्प्रागुत्पत्तेः कारणरूपेण सत्त्वमवरस्य ।
कार्यस्य वाच(च्य)मेतन्नचेत्ततः स्यात्कथं तदुत्पत्तिः ॥ २३८ ॥
उत्पत्तिप्राक्समये यदात्मना यन्न वर्तते कार्यम् ।
न ततस्तस्योत्पत्तिः सिकताभ्यस्तैलपूर इव भवति ॥ २३९ ॥
तस्मादनन्यदेव हि कार्यं सकलं च कारणेन स्यात् ।

## असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् ॥ १७ ॥

प्रागुत्पत्तेर्ननु यदि सत्त्वं स्यात्कारणात्मना कार्ये ॥ २४० ॥
स्यादिह तद्वैतयोरियमनन्यता तच्च नैव संभवति ।
यस्मात्प्रागुत्पत्तेरसत्त्वमस्योपदर्शयत्येषा ॥ २४१ ॥
श्रुतिरसदेवेदमिति ह्यन्याऽप्येवं श्रुतिर्ह्यसद्वेति ।
तस्मात्प्रागुत्पत्तेरनन्यता सदसतोः कथं घटते ॥ २४२ ॥
इति चेन्मैवं यस्मात्प्रागुत्पत्तेरसन्न कार्यं स्यात् ।
किंतु सदेव हि कार्यं प्रागुत्पत्तेरसद्विनिर्दिष्टम् ॥ २४३ ॥
धर्मान्तरेण चायं व्यपदेशो भवति युक्त एवास्य ।
धर्मान्तरमियमेव ह्यव्याकृतनामरूपतैवास्य ॥ २४४ ॥
सच्छब्दार्हं लोके यद्याकृतनामरूपमिह भवति ।
उत्पत्त्यनन्तरं स्याद्व्याकृतनामस्वरूपता कार्ये ॥ २४५ ॥
तदभावादुत्पत्तेः प्रागसदिति कथ्यते सदेवेदम् ।
अत्रत्यवाक्यशेषादयमेवार्थः प्रतीयते यस्मात् ॥ २४६ ॥
तत्रोपक्रमवाक्ये यदसच्छब्देन वर्णितं पूर्वम् ।
उत्तरवाक्येन च तत्सच्छब्देनोपवर्णितं हि पुनः ॥ २४७ ॥
श्रुत्यन्तरेऽप्यसद्वेत्यत्र च यदसत्प्रदर्शितं तस्य ।
स्वयमकुरुतेति चोत्तरवाक्यात्सद्रूपता भवेत्तस्मात् ॥ २४८ ॥
युक्त प्रागुत्पत्तेः कारणरूपेण सत्त्वमवरस्य ।

## युक्तेः शब्दान्तराच्च ॥ १८ ॥

सत्त्वमनन्यत्वं वा प्रागुत्पत्तेश्च कारणेनास्य ॥ २४९ ॥
कार्यस्य युक्तमेव हि युक्तेः शब्दान्तराच्च भाति यतः ।
अत्र च या युक्तिः स्यात्सैवेदानीं निरूप्यते भूयः ॥ २५० ॥
दधिघटरुचकाद्यर्थिभिरेतानि क्षीरमृत्सुवर्णानि ।
नियतमुपादीयन्ते न वैपरीत्येन तानि गृह्यन्ते ॥ २५१ ॥
सत्कार्यवाद एव हि तदिदं युक्तं न चेतरत्रापि ।
कारणनियमो न स्याद्यत्रासत्कार्यवादवार्ता स्यात् ॥ २५२ ॥
सर्वत्र चाविशेषे कार्ये सत्त्वे तथैव चान्यत्वे ।

मृद एव स्यान्नैव क्षीरादिति नियम एष इह न स्यात्।
प्राक्कार्यस्यासत्त्वे तुल्येऽपि हि कश्चिदतिशयः क्षीरे ॥ २५४ ॥
दध्नः स्यादेवं किल घटादिकार्यस्य मृत्तिकादिषु च।
इतिचेदेवं हि तदा तवापि सत्कार्यवाद एव स्यात् ॥ २५५ ॥
कार्यातिशयो योऽसौ शक्तिविशेषो हि कारणे वाच्यः।
स च कारणात्मभूतो नापि तदन्यो न चाप्यसन्भवति ॥ २५६ ॥
यदि चान्यो यदि चासन्क्षीरादपि वा घटः कुतो न भवेत्।
क्षीरेऽपि चास्य तुल्यं ह्यन्यत्वं वा तथैव चासत्त्वम् ॥ २५७ ॥
प्रागसदन्यत्कार्यं समवैति कथं हि कारणे पश्चात्।
समवायकल्पना वा नैव च युक्ता तु कार्यकारणयोः ॥ २५८ ॥
संबन्धमन्तरा खलु न भवति कार्यस्य कारणे सत्त्वम्।
अत इह समवायोऽयं संबन्धो युक्त एतयोरिति चेत् ॥ २५९ ॥
समवायस्यापि तदा संबन्धश्चान्य एव किं न स्यात्।
संबन्धता च यस्मान्नासंबन्धस्य युज्यते वक्तुम् ॥ २६० ॥
यदि खलु संबन्धोऽयं संबन्धान्तरमपेक्षते नैव।
संयोगः संबन्धो नैवापेक्षेत तं च समवायम् ॥ २६१ ॥
यदि चेत्समवायोऽयं समवायान्तरमपेक्षते च तदा।
तस्यान्यस्तस्यान्यः संबन्ध इतीह चानवस्था स्यात् ॥ २६२ ॥
संयोगो हि गुणत्वात्संबन्धान्तरमपेक्षते नायम्।
समवायो यस्मादयमगुणः स्यादिति पुनर्न चाऽऽशङ्क्यम्। २६३॥
गुणपरिभाषा सेयं न चात्र तन्त्रं परं त्वपेक्षैव।
संयोगः संबन्धः सन्नपि वाऽयं समीहते यद्वत् ॥ २६४ ॥
तद्वत्समवायोऽपि स्यादिह बीजं तु तुल्यमुभयत्र।
तादात्म्यमेव चेह प्रतीयते जगति कार्यकारणयोः ॥ २६५ ॥
यद्यश्वमहिषयोरिव भेदश्चेत्स्यात्तयोर्हि समवायः।
यदपि च कार्यद्रव्यं सर्वावयवेषु भवति समवेतम् ॥ २६६ ॥
किं वाऽप्येकैकस्मिन्निति वक्तव्यं न युक्तमुभयमपि।
सर्वावयवेषु यदा तत्प्रत्यक्षं हि दुर्लभं भवति ॥ २६७ ॥
सर्वावयवानामिह भवेद्यदा संनिकर्ष एतत्स्यात्।
न च लोके हि बहुत्वं व्यस्तग्रहणेन गृह्यते क्वापि ॥ २६८ ॥
अवयवशः प्रत्येकं कार्यं समवेतमवयवेषु यदि।
आरम्भानतिरिक्ता अप्यवयविनः स्युरवयवाश्चान्ये ॥ २६९ ॥

एकैकस्मिन्हि यदा समवेतं कार्यमभिमतं भवति ।
एकैकसंनिकर्षे सत्यपि गृह्येत कार्यमखिलमपि ॥ २७० ॥
एकत्र व्यापारे व्यापारोऽन्यत्र तस्य नैव स्यात् ।
न हि देवदत्त एकः स्रुघ्ने निवसंस्तु पाटलीपुत्रे ॥ २७१ ॥
स्रुघ्न इव तदहरेव च संनिहितः स्यादतो न युक्तमिदम् ।
प्रत्येकपरिसमाप्तिर्गोत्वादिपदस्य वर्ण्यते च यदा ॥ २७२ ॥
प्रत्येकमवयवेष्वपि फलयोगः स्यात्तदा स्वकार्यस्य ।
उरसा च पृष्ठकार्यं स्तनकार्यं वा भवेच्च शृङ्गेण ॥ २७३ ॥
नैतत्क्वापि च दृष्टं तस्मात्कथमेतयोर्विभिन्नत्वम् ।
प्रागुत्पत्तेरसदिह कार्यं वा कारणे कथं भवति ॥ २७४ ॥
असतोऽपि जन्म चेत्स्याद्वन्ध्यापुत्रोऽपि जायते न कथम् ।
असतो निस्तत्त्वत्वान्मर्यादाकरणमस्य न च युक्तम् ॥ २७५ ॥
क्षेत्रगृहादीनामिह मर्यादा दृश्यते सतामेव ।
प्राक्पूर्णवर्मणोऽयं वन्ध्यापुत्रो बभूव राजेति ॥ २७६ ॥
न ह्यसतो मर्यादा वन्ध्यापुत्रस्य कुत्रचिद्दृष्टा ।
उत्पत्तिरपि च या स्यात्क्रिया च सा स्यात्सकर्तृकाऽपि तथा ॥
नाकर्तृका क्रियेयं नैवासत्कर्तृका क्वचिद्दृष्टा ।
ननु यदि कार्योत्पत्तेः प्रागपि कार्यं सदेव चेत्तर्हि ॥ २७८ ॥
व्यापारः सकलोऽयं विफलः स्यात्कारणस्य सर्वस्य ।
इत्यपि नैवाऽऽशङ्क्यं कारकयोगस्तु नात्र विफलः स्यात् ॥२७९॥
यद्यपि कारणमेतत्प्रागपि सिद्धं तथाऽपि सफलोऽयम् ।
करणव्यापारः स्यात्कार्याकारेण योजयितुमेतत् ॥ २८० ॥
तस्मादुत्पत्तेः प्राक्सदनन्यत्कारणेन कार्यमतः ।
ब्रह्मप्रकृतिकमखिलं ब्रह्मानन्यत्तदात्मना सपदि ॥ २८१ ॥
सिद्धमिह या प्रतिज्ञा येनाश्रुतमिति च साऽपि सिद्धैव ।
सत्त्वानन्यत्वे किल युक्तेरेवं समर्थिते भवतः ॥ २८२ ॥
शब्दान्तराच्च जगतस्ते वै सम्यङ्निरूपयिष्येते ।
पूर्वमसद्व्यपदेशी योऽसौ शब्दः प्रसञ्जितः कार्ये ॥ २८३ ॥
तस्माच्छब्दान्तरमिह सच्छब्दोऽयं हि दृश्यते कार्ये ।
यस्मात्सदेव सोम्येत्यस्मिन्मन्त्रे हि सत्पदेनाऽऽदौ ॥ २८४ ॥

सृष्टेः पूर्वं सकलं सदात्मनैवोपदर्शितं भवति।
कथमसतः सत्त्वादीत्याक्षिप्य पुनस्तदेव निर्दिष्टम् ॥ २८५ ॥
सत्येवेत्येवस्मादग्रे कार्यं सदेव नान्यदिति।

पटवच्च ॥ १९ ॥

संवेष्टितः पटोऽयं न विशिष्टायामविस्तरो भाति ॥ २८६ ॥
पश्चात्प्रसारितोऽसौ यावत्स्वायामविस्तरो भाति।
न च संवेष्टितरूपात्प्रसारितोऽसौ हि भिद्यते लोके ॥ २८७ ॥
वेमादिव्यापारात्प्रागिह तन्तुषु पटो न गृह्येत।
वेमकुविन्दतुरीणां व्यापारोऽसौ यदा प्रवृत्तः स्यात् ॥ २८८ ॥
तन्त्वात्मनैव तत्र स्फुटतरमुपलभ्यते तदैवासौ।
एवं सृष्टेः पूर्वं ह्यव्याकृतनामरूपभावेन ॥ २८९ ॥
सदपि च कार्यं सकलं स्फुटतरमिह नोपलभ्यते किमपि।
यद्याविद्यकमेतन्नाम च रूपं तथा [च] भूतमपि ॥ २९० ॥
व्याकृतमेतच्चेत्स्यात्परेण सकलं सदात्मना भाति।

यथा च प्राणादिः ॥ २० ॥

प्राणायामनिरुद्धे प्राणापानादिपञ्चकेऽपि यथा ॥ २९१ ॥
आकुञ्चनप्रसारणकार्यं नैवोपलभ्यते किमपि।
जीवनमात्रं कार्यं भाति च तस्मिन्समीरणात्मत्वम् ॥ २९२ ॥
प्राणानामवियोगे जीवनमात्राधिकं हि कार्यमिदम्।
आकुञ्चनादिकं स्यात्प्राणापानादिभेददृष्टिश्च ॥ २९३ ॥
तद्वत्सृष्टेः पूर्वं सदात्मना भवति जगदवस्थानम्।
नैवाभ्युदयफलं स्यात्तेजोबन्नादिभेददृष्टिर्वा ॥ २९४ ॥
सृष्टेः पश्चादखिलं ह्यभ्युदयफलं विभेददृष्टिर्वा।
तस्मात्सिद्धं जगतस्तदनन्यत्वं तदात्मना सत्त्वम् ॥ २९५ ॥
प्रत्यगभिन्ने ब्रह्मणि वेदान्तसमन्वयोऽपि निरवद्यः।

इतरव्यपदेशाद्धिताकरणा-
दिदोषप्रसक्तिः ॥ २१ ॥

अत्राहितकरणं तद्रज्ज्वध्यासात्प्रतीयते सूत्रे ॥ २९६ ॥
नन्वेतदनुचितं स्याद्ब्रह्म यदा भवति जगदुपादानम्।
इतरव्यपदेशोऽयं श्रुत्यन्तेषूपलभ्यते यस्मात् ॥ २९७ ॥

इह चानेनेत्यस्मिन्मन्त्रे ब्रह्मात्मता हि जीवस्य ।
तत्त्वमसीत्येतस्मिन्ब्रह्मणि जीवात्मताऽपि निर्दिष्टा ॥ २९८ ॥
तस्मात्प्रत्यक्परयोः परस्परात्मत्वमभिहितं भवति ।
तेन ब्रह्मप्रकृतिकमिदमखिलं जीवकर्तृकं भवति ॥ २९९ ॥
यच्चानिष्टं लोके नरकाद्यखिलं हि सृजति जीव इति ।
अभ्युपगन्तव्यं किल दोषोऽयं दुर्निवार एव तदा ॥ ३०० ॥
आत्माहितकरणं यन्न हि स्वतन्त्रस्य कुत्रचिद्दृष्टम् ।
एतन्न्यायविरुद्धं स्रष्टृत्वं ब्रह्मणः कथं घटते ॥ ३०१ ॥
जीवेशयोरभेदे ब्रह्मगतस्रष्टृतादि जीवस्य ।
यदपि च संसारित्वं जीवगतं ब्रह्मणोऽपि दुर्वारम् ॥ ३०२ ॥
तस्मादयं स्वतन्त्रो जीवः कर्ताऽऽत्मसौमनस्यकरम् ।
कुर्यान्न चाहितं यज्जन्मजरारोगमरणजालमपि ॥ ३०३ ॥
न हि कश्चिदपरतन्त्रो निजात्मनो बन्धनालयं कमपि ।
स्वयमेव तं च सृष्ट्वा तदनुप्रविशन्हि दुःखमनुभवति ॥ ३०४ ॥
अन्त्यन्तनिर्मलः सन्नतिमलिनं देहमात्मभावेन ।
नैवोपेयात्स्वयमिह कृतमपि यद्दुःखकरमिदं जह्यात् ॥ ३०५ ॥
विरचितमिदं विचित्रं जगन्मयेति स्मरेदयं जीवः ।
सर्वो लोकः स्पष्टं स्मरति हि कार्यं कृतं मयेत्येवम् ॥ ३०६ ॥
मायावी निजमायां स्वेच्छामात्राद्यथोपसंहरति ।
एवं शारीरोऽपि च सृष्टिमिमां नोपसंहरेद्धि कुतः ॥ ३०७ ॥
स्वमपि शरीरं त्यक्तुं नानायासेन शक्नुयाज्जीवः ।
तस्माद्धि तत्क्रियादेरदर्शनादनुचितैव सृष्टिरियम् ॥ ३०८ ॥
इत्याशङ्कां निरसितुमेतत्सूत्रं प्रदर्शितं मुनिना ।

## अधिकं तु भेदनिर्देशात् ॥ २२ ॥

अत्र तुशब्दो योऽसावाक्षेपनिरासफलक इह भवति ॥ ३०९ ॥
योऽसौ शारीरः स्यात्स्रष्टारं तं वयं न च ब्रूमः ।
यः शारीरादधिकः सर्वज्ञः सर्वशक्तिसंपन्नः ॥ ३१० ॥
तं परमेश्वरमेव तु जगतः स्रष्टारमिह वयं ब्रूमः ।
न च तस्य विद्यते किल हितमहितं वेह नित्यतृप्तत्वात् ॥ ३११ ॥
शारीरे तत्सर्वं स च न स्रष्टा परं तु परमात्मा ।
परमेश्वरे तु तस्मिन्कथं हिताकरणलक्षणो दोषः ॥ ३१२ ॥

यस्मादसौ परात्मा भिन्नत्वेनोपदिश्यते शास्त्रे ।
द्रष्टव्यः श्रोतव्यो मन्तव्य इति श्रुतिस्तथैवेयम् ॥ ३१३ ॥
सोऽन्वेष्टव्य इति श्रुतिरपि भेदं त्वीशजीवयोर्वक्ति ।
न हि कर्तृकर्मभावो विनैव भेदं क्वचित्प्रसिद्धोऽस्ति ॥३१४॥
तस्मादसौ परात्मा कर्मत्वेनोपदिष्ट इह योऽसौ ।
न हि खलु भवति परात्मा स्रष्टा तस्मिन्न दोषशङ्काऽपि ॥३१५॥
ननु तत्त्वमसीत्येषा श्रुतिर्ह्यभेदं तयोः प्रदर्शयति ।
येनाश्रुतमित्यन्या श्रुतिरप्येतं तयोर्निरूपयति ॥ ३१६ ॥
कथमेकस्मिन्ब्रह्मणि भेदाभेदौ तु संभवेयाताम् ।
इति नात्र शङ्कनीयं यत इह भेदो ह्युपाधिमूलः स्यात् ॥ ३१७ ॥
आविद्यकदेहादावहंममाध्यासकवलितो योऽसौ ।
न हि शारीरस्तस्माद्भेदो निर्दिश्यते हि परमेशे ॥ ३१८ ॥
नित्यनिवृत्ताविद्यो यतः परात्मा हि दोषनिर्मुक्तः ।
अविवेकलक्षणोऽसावध्यासो यावदस्ति शारीरे ॥ ३१९ ॥
तावत्संसारित्वं तस्य स्रष्टृत्वमीश्वरस्य स्यात् ।
अविवेकमखिलमेतं व्युदस्य चैतन्यरूपमात्रेण ॥ ३२० ॥
प्रतिबोधितो यदाऽसौ तदा न भेदस्तदा न संसारः ।
परमेश्वरस्तदा स्यान्न स्रष्टा किं त्वखण्डरूपः स्यात् ॥ ३२१ ॥
तदभिप्रायेणैव हि तत्त्वमसीत्यादिवाक्यजालेन ।
नवधा प्रपञ्चितोऽयं प्रत्यक्परमात्मनोरभेदो हि ॥ ३२२ ॥
अविवेककृता भ्रान्तिर्या तु हिताकरणदोषमूलं स्यात् ।
ब्रह्माभेदे सत्यपि न स्रष्टा भ्रान्तिकवलितो जीवः ॥ ३२३ ॥
तदभावाच्च परात्मा जगतः स्रष्टेति सर्वमनवद्यम् ।

## अश्मादिवच्च तदनुपपत्तिः ॥ २३ ॥

नन्विदमखण्डरूपे ब्रह्मणि वैचित्र्यमनुपपन्नमिह ॥ ३२४ ॥
एकः शारीरः स्यादन्यः परमेश्वरश्च भवतीति ।
कार्यकृतं वैचित्र्यं स्वरूपकृतमपि निरूपितं शास्त्रे ॥ ३२५ ॥
इति दोषो न तु शङ्क्यो ह्यश्मादिवदेव सर्वमुपपन्नम् ।
पृथिवीत्वजातिकलिता अप्यश्मानो भवन्ति वज्राद्याः ॥ ३२६ ॥
केचिन्महार्हमणयो मध्यमवीर्याश्च सूर्यकान्ताद्याः ।
अन्ये श्ववायसानां प्रहरणफलका भवन्ति पाषाणाः ॥ ३२७ ॥

पार्थिवभागोऽवगतेष्वपि बीजेषु तथैव वैचित्र्यम् ।
पत्रफलपुष्पगन्धैरनेकविधमेव लक्ष्यते लोके ॥ ३२८ ॥
एकस्यान्नरसस्याप्यध्यात्मं लोहितादिवैचित्र्यम् ।
ब्रह्मण्यखण्डरूपे तद्वज्जीवेशभाववैचित्र्यम् ॥ ३२९ ॥
स्रष्टृत्वं भोक्तृत्व सर्वज्ञत्वं तथैव चाज्ञत्वम् ।
तस्मात्सिद्धं जगतो ब्रह्मैव तु कारण न चान्यदिति ॥ ३३० ॥
ब्रह्मण्येवंरूपे वेदान्तसमन्वयोऽपि निरवद्यः ।
ननु परमात्मा जगतो न कारणं स्याद्यतोऽयमसहायः ॥ ३३१ ॥
असहायस्य च लोके स्रष्टृत्वं नोपलभ्यते क्वापि ।
ससहायः स्रष्टा स्यान्न चासहाय इति लोकनयसिद्धम् ॥३३२॥
न्यायविरोधाद्ब्रह्मणि जगतः स्रष्टृत्वमनुपपन्नं हि ।
तस्माद्वेदान्तानां समन्वयोऽप्यत्र दुरुपपादः स्यात् ॥ ३३३ ॥
इत्याशङ्कां निरसितुमिदमधिकरणं प्रदर्शितं मुनिना ।

उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥ २४ ॥

लोके कार्यारम्भे च कुलालादयो हि कर्तारः ॥ ३३४ ॥
मृद्दण्डचक्रसचिवाः सन्तः कार्येषु ते प्रवर्तन्ते ।
यद्ब्रह्म तदसहाय कार्यं जगदखिलमतिदुरारम्भम् ॥ ३३५ ॥
कथमीदृशस्य जगतः स्रष्टृसहायं भवेत्परं ब्रह्म ।
इति चेन्मैवं यस्मात्क्षीरवदेवेदमखिलमुपपन्नम् ॥ ३३६ ॥
क्षीरं जलं विनैव हि सहायमन्यं यथा हि लोकेऽस्मिन् ।
दधिकरकाकारेण च परिणमते ब्रह्म तद्वदेवेदम् ॥ ३३७ ॥
जगदात्मना स्वभावाद्विना सहायं तथैव परिणमते ।
नन्वसहायं क्षीरं नैव हि दध्यात्मना च परिणमते ॥ ३३८ ॥
औष्ण्यादिना हि लोके क्षीरं दधि भवति न स्वतः क्वापि ।
इति चेन्नेयं शङ्का स्वयमपि दधिभावमेतदुपयाति ॥ ३३९ ॥
औष्ण्यादिना दधि स्यात्त्वरयेत्येतच्च लोकसिद्धमिदम् ।
दधिभावशीलता यदि न स्यात्स्वयमन्यथैव औष्ण्याद्यैः ॥३४०॥
दधिभावोऽस्य बलादिह न युज्यते कदाऽपि कुत्रचिद्वाऽपि ।
न हि लोके वायुर्वाऽप्याकाशो वाऽथ वा तदन्यो वा ॥ ३४१ ॥
औष्ण्यादिना बलाद्वा दधिभावगतोऽपि कुत्रचिद्दृष्टः ।

देवादिवदपि लोके ॥ २५ ॥

देवा ऋषयः पितरो गन्धर्वाश्चापि जगति विख्याताः ॥ ३४२ ॥
त खल्विच्छामात्रात्सृजन्ति हर्म्याणि रम्यरूपाणि ।
तद्वद्विचित्ररूपाण्यपि गात्राणि च सृजन्त्यभिध्यानात् ॥ ३४३ ॥
उपसंहरन्ति पुनरपि तान्यखिलानि च निजेच्छयैवेति ।
रेतःसेकसहायं विना बलाकाऽपि गर्भमिह धत्ते ॥ ३४४ ॥
प्रस्थानसाधनं वा किमपि ह्यनपेक्ष्य पद्मिनी च तथा ।
उपसर्पति ह्ययत्नात्सरोन्तरात्सा सरोन्तरं तद्वत् ॥ ३४५ ॥
एवं ब्रह्मापि तदा विना सहाय प्रवर्तते कार्ये ।
नन्विह दृष्टान्तोऽयं न चानुरूपो विभाति कश्चिदपि ॥ ३४६ ॥
देवादिकर्तृकायां सृष्टौ देवादिदेह एव स्यात् ।
कारणमपि च बलाका स्तनयित्नुरवेण गर्भमिह धत्ते ॥ ३४७ ॥
चेतननियोजितैव हि सरोन्तरं पद्मिनीयमुपसरति ।
तस्माच्चेतनकर्तृकसृष्टौ दृष्टान्त एष विषमः स्यात् ॥ ३४८ ॥
इति चेन्मैवं यस्माद्दृष्टान्तोऽयं हि भवति न च विषमः ।
दृष्टान्तन विवक्षितमिह हि कुलालादिकर्तृवैधर्म्यम् ॥ ३४९ ॥
बाह्यं साधनमिह किल यथा कुलालादयो ह्यपेक्षन्ते ।
एवं देवाद्या इह नापेक्षन्ते हि साधनं बाह्यम् ॥ ३५० ॥
ब्रह्मा पि तद्वदेव हि जगदारम्भे न साधनं किमपि ।
बाह्यमपेक्षत इति खल्वंशस्तुल्यो हि सोऽयमुभयत्र ॥ ३५१ ॥
देवादयो यथा वा निजयोगबलेन ससृजन्त्येवम् ।
ब्रह्मापि विश्वमेतत्सृजत्यचिन्त्यात्मशक्तियोगेन ॥ ३५२ ॥
श्रुतिरपि तमेतमर्थं न तस्य कार्यमिति दर्शयत्येषा ।
तस्मादसहायेऽपि ब्रह्मणि वियदादिकारणत्वं स्यात् ॥ ३५३ ॥
ब्रह्मणि वेदान्तानां समन्वयोऽपीह भवति निरवद्यः ।

कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥ २६ ॥

नन्वत्र क्षीराद्यैर्दृष्टान्तैर्ब्रह्म जगदुपादानम् ॥ ३५४ ॥
असहायमेव भवतीत्येतत्सर्वं प्रपञ्चितं पूर्वम् ।
तच्चैतदनुपपन्नं यस्मात्क्षीरादि भवति परिणामि ॥ ३५५ ॥
तद्दृष्टान्तबलेन हि यथाऽसहायस्य कारणत्वं स्यात् ।
परिणामिकारणत्वं तथैव परमात्मनोऽस्य वक्तव्यम् ॥ ३५६ ॥

ब्रह्म यदि निर्विशेषं जगदाकारेण परिणमेत तदा ।
कृत्स्नप्रसक्तिदोषाद्द्रष्टव्यत्वोपदेशवैयर्थ्यम् ॥ ३५७ ॥
कृत्स्नप्रसक्तिरत्र तु जगदाकारेण कृत्स्नपरिणामः ।
कृत्स्नस्य कार्यभावापत्त्या द्रष्टव्यताऽस्य नैव स्यात् ॥ ३५८ ॥
यद्येकदेशमात्राज्जगदाकारेण परिणमेत तदा ।
निरवयवभावबोधकशब्दा ये चास्य वेदनिर्दिष्टाः ॥ ३५९ ॥
निर्मलशब्दपुरोगा विरुद्धकथनेन ते हि कुप्येयुः ।
निरवयवस्य च लोके नचैकदेश्येकदेशभावः स्यात् ॥ ३६० ॥
यदि वा परिणामि स्याद्यदि वा कृत्स्नस्य कार्यपरिणामः ।
यद्येकदेशभावस्तदाऽस्य चानित्यताऽपि दुर्वारा ॥ ३६१ ॥
तस्माच्चेतनकारणवादोऽयमयुक्त एव भातीह ।
निरसितुमिममाक्षेपं मुनिना रचित तदेतदधिकरणम् ॥ ३६२ ॥

श्रुतेस्तु शब्दमूलत्वात् ॥ २७ ॥

अत्र तुशब्दो योऽसावुक्ताक्षेपस्य निरसनार्थः स्यात् ।
चेतनकारणवादे नायं दोषः प्रवर्तते कोऽपि ॥ ३६३ ॥
इह कारणस्य रूपे श्रुतिः प्रमाण न केवलस्तर्कः ।
जगतः सृष्ट्यारम्भे परिणमते ब्रह्म तत्स्वरूपेण ॥ ३६४ ॥
न च परिणमते कृत्स्नं तदिति श्रुतिरेव बोधयत्येषा ।
सोऽकामयतेत्याद्या पादोऽस्येत्येवमादिका च तथा ॥ ३६५ ॥
तदिदं हि शब्दमूलं ब्रह्म यथाशब्दमभ्युपेयं स्यात् ।
नैव ह्यतीन्द्रियार्थे विनैव शब्दं यथार्थबुद्धिः स्यात् ॥ ३६६ ॥
अस्यातीन्द्रियभावं न चक्षुषेति श्रुतिः प्रबोधयति ।
नैतादृशस्य तस्य हि रूपं शब्दं विनैव तर्केण ॥ ३६७ ॥
अपि वा निर्धारयितुं प्रतिपादयितुं च कोऽपि शक्तः स्यात् ।
मणिमन्त्रशक्तयोऽपि तु विचित्रकार्यैकसाधनीभूताः ॥ ३६८ ॥
दृश्यन्ते खलु लोके ता अप्युपदेशसमधिगम्याश्च ।
किमुताचिन्त्यमहिम्नः परात्मनः शक्तिरप्रतर्क्येति ॥ ३६९ ॥
तस्माच्छ्रुत्यभिगम्ये जगतो जन्मादिकारणे तस्मिन् ।
कृत्स्नप्रसक्तिरूपा दोषा नैवेह शङ्कितुं शक्याः ॥ ३७० ॥
नन्विह विरुद्धमर्थं श्रुतिरप्येषा कथं प्रबोधयति ।
परिणमत न च कृत्स्नं परिणमत इदं विरुद्धमाभाति ॥ ३७१ ॥

अतिरात्रे षोडशिनं गृह्णातीत्यादिकर्मवाक्येषु ।
भवति विकल्पाश्रयणं विरोधपरिहारकारणं तेषु ॥ ३७२ ॥
तत्कर्म पुरुषतन्त्रं यतो विकल्पादि तत्र युक्तं स्यात् ।
ज्ञानं तु वस्तुतन्त्रं प्रमाणजन्यमिति सुप्रसिद्धं हि ॥ ३७३ ॥
वस्तुनि न विकल्पः स्यात्स च क्रियायां हि दृश्यते शास्त्रे ।
अविरुद्धाक्षेपैषा श्रुतिः प्रमाणं न वैपरीत्येन ॥ ३७४ ॥
परिणामवादपक्षे सावयवत्वं ह्यनित्यताऽपि स्यात् ।
तस्माच्चेतनकारणवादो हि न युक्त एष इति चेन्न ॥ ३७५ ॥
इह खलु विवर्तवादाश्रयणे तात्पर्यमस्य सूत्रकृतः ।
अत्र च न विरोधः स्यान्नानित्यतादिदोषशङ्काऽपि ॥ ३७६ ॥
मायावी परमात्मा निजमायाशक्तियोगमालम्ब्य ।
निरवयवो नित्योऽपि हि जगदाकारेण भासते बहुधा ॥ ३७७ ॥
तिमिरहतलोचनानां चन्द्रो हि यथा ह्यनेकधा भाति ।
तद्वदविद्याकवलितनिजात्मभासां स भाति विश्वात्मा ॥ ३७८ ॥
प्रादेशिका हि माया जगदाकारोऽपि चैकदेशगतः ।
मायायोगविहीनं ब्रह्म द्रष्टव्यभावमुपयाति ॥ ३७९ ॥
मायोपाधिसहायात्सकलं तस्योपपन्नमेव स्यात् ।
परिणामवादपक्षे दोषोऽयं न हि विवर्तवादेऽपि ॥ ३८० ॥

## आत्मनि चैवं विचित्राश्च हि ॥ २८ ॥

आत्मानुपमर्देन हि सृष्टिरियं ब्रह्मणा कथं घटते ।
इति नात्र शङ्कनीयं यत इह सृष्टिस्तथैव दृष्टा हि ॥ ३८१ ॥
मायाव्यादिषु लोके विना स्वरूपोपमर्दमुपलब्धा ।
हस्त्यश्वरथपदातिप्रमुखाणां सृष्टिरेवमन्यत्र ॥ ३८२ ॥
स्वप्नदृगादिषु दृष्टा तथैव सृष्टिर्भवेत्परात्मनि च ।
तत्र यथा नैते स्युर्दोषा मायामयत्वयोगेन ॥ ३८३ ॥
तद्वद्ब्रह्मणि नैते दोषा जगतोऽस्य मायिकत्वेन ।
तस्मान्निरवयवेऽस्मिन्वेदान्तसमन्वयोऽपि निरवद्यः ॥ ३८४ ॥

## स्वपक्षदोषाच्च ॥ २९ ॥

चेतनकारणवादे योऽसौ दोषः प्रसञ्जितः सोऽयम् ।
तुल्यः प्रधानवादे परमाणुप्रकृतिभाववादेऽपि ॥ ३८५ ॥

शब्दादिरहितमेतन्निरवयवं च प्रधानमण्वादि ।
सावयवस्य च शब्दादिमतः कारणमिति प्रतिज्ञातम् ॥ ३८६ ॥
तत्र च पूर्वोक्तोऽसौ दोषोऽयं दुर्निवार एव स्यात् ।
अणुकारणतावादे ह्यणुरपरेणाणुना हि संयुक्तः ॥ ३८७ ॥
द्व्यणुकादि जनयतीति प्रपञ्चितं तच्च नैव युक्ततरम् ।
निरवयवयोस्तयोरिह संयोगः स्याद्यदेकदेशेन ॥ ३८८ ॥
परमाणूनां हि तदा सावयवत्वं तु दुर्निवारं स्यात् ।
सर्वावच्छेदेन तु संयोगो यदि तथाऽपि दोषोऽयम् ॥ ३८९ ॥
प्रथिमानुपपत्त्यादिः कार्यस्य स्यादतो न दोषोऽयम् ।
परिहृत एव हि पूर्वं दोषोऽय ब्रह्मकारणत्वे हि ॥ ३९० ॥
तस्मान्निरवयवमपि ब्रह्मेद भवति जगदुपादानम् ।
ब्रह्मणि तथाविधेऽस्मिन्वेदान्तसमन्वयोऽपि निरवद्यः ॥ ३९१ ॥
नन्विह सशरीराणां कार्योत्पादैकसाधिका शक्तिः ।
मायाविप्रभृतीनां दृष्टान्तोक्तेन चाशरीरस्य ॥ ३९२ ॥
ब्रह्मण्यशरीरेऽस्मिञ्जगदुत्पादप्रयोजिका शक्तिः ।
कथमिति शङ्कां निरसितुमिदमधिकरणं प्रदर्शितं मुनिना ॥ ३९३ ॥

सर्वोपेता च तद्दर्शनात् ॥ ३० ॥

यद्यपि मायाव्यादिषु सशरीरेष्वेव दृश्यते शक्तिः ।
भवति तथाऽपि न दोषो यतः परात्मा ह्यकुण्ठितैश्वर्यः ॥ ३९४ ॥
न च शक्तिप्रतिबन्धः कदाऽपि तस्यास्त्यलुप्तशक्तित्वात् ।
शारीरे हि किलेद कार्यारम्भे शरीरसाहाय्यम् ॥ ३९५ ॥
यस्माच्छारीरोऽसौ शरीरसंयोगसाधनो भवति ।
परमात्मा तु शरीरं विनाऽपि तत्सर्वशक्तिसंपन्नः ॥ ३९६ ॥
दर्शयति श्रुतिरेषा परात्मनः सर्वशक्तिसंयोगम् ।
यस्मात्पराऽस्य शक्तिर्विविधेति तथैव सर्वकर्मेति ॥ ३९७ ॥
तस्मादेकस्य यथा सामर्थ्यं स्यात्तथा परस्यापि ।
सामर्थ्यं भवतीति हि न चायमेकान्त इत्यभिप्रायः ॥ ३९८ ॥

विकरणत्वान्नेति चेत्तदुक्तम् ॥ ३१ ॥

एतदचक्षुःश्रोत्रं तथैव चापाणिपादमित्येषा ।
अश्रोत्रमवागमना इति श्रुतिर्ह्यकरणं विनिर्दिशति ॥ ३९९ ॥

एवंविधस्य तस्य स्रष्टृत्वं स्याद्विरुद्धमिति चेन्न ।
एतस्य चोत्तरं तु प्रदर्शितं नेह किमपि वक्तव्यम् ॥ ४०० ॥
मायाशक्तिसहायात्परमात्मा सृजति विश्वमखिलमपि ।
स्वेच्छामात्रात्सकरणमात्मशरीरं मनोज्ञमातनुते ॥ ४०१ ॥
तेन च विहरति भक्तैरुपदिशति निजात्मतत्त्वमखिलमपि ।
संहरति दनुजवर्गं पालयति च दीनलोकमखिलमपि ॥ ४०२ ॥
उपसंहृत्य च सकलं केवलरूपेण भाति विश्वात्मा ।
तस्याकुण्ठितशक्तेर्नैवाशक्यं हि विद्यते किमपि ॥ ४०३ ॥
तस्माद्वेदान्तानां ब्रह्मणि परमे समन्वयो युक्तः ।

## न प्रयोजनवत्त्वात् ॥ ३२ ॥

सृष्टिप्रवृत्तिरेषा ननु भवति परात्मनो न युक्ततमा ॥ ४०४ ॥
लोके प्रवृत्तिरेषा दृष्टा ह्यात्मप्रयोजनार्थैव ।
आत्मप्रयोजनार्था परात्मनः स्याद्यदा प्रवृत्तिरियम् ॥ ४०५ ॥
व्याहन्येत तदानीं परितृप्तत्वं परात्मनस्तदिदम् ।
उन्मत्तस्य यथा वा प्रवृत्तिरेवं परात्मनो भवति ॥ ४०६ ॥
सर्वज्ञत्वं तस्य श्रुतिनिर्दिष्टं विरुद्धमेव स्यात् ।
तस्मादन्याय्येयं चेतनसृष्टिः श्रुतिप्रणीताऽपि ॥ ४०७ ॥
इति शङ्कां परिहर्तुं मुनिना रचितं तदेतदधिकरणम् ।

## लोकवत्तु लीलाकैवल्यम् ॥ ३३ ॥

श्रुतिनिर्दिष्टा सेयं सृष्टिः केवलमिहास्य लीलैव ॥ ४०८ ॥
लोके च यथा राज्ञः क्रीडादिषु भवति केवलं लीला ।
अनपेक्ष्य किंचिदपि वा प्रयोजनं तद्वदेव चेहापि ॥ ४०९ ॥
परमात्मनः प्रवृत्तिर्लीलारूपैव चान्तरेण फलम् ।
राजादिक्रीडास्वपि भवेच्च किंचित्प्रयोजनं सूक्ष्मम् ॥ ४१० ॥
परमेश्वरस्य सृष्टिक्रियासु नास्ति प्रयोजनं किमपि ।
यस्मादसौ परात्मा स चाऽऽप्तकाम इति गीयते शास्त्रे ॥ ४११ ॥
तस्माच्छ्रुतिवचसामिह समन्वये नैव बाधकं किमपि ।
ननु परमात्मा सोऽयं जगतो जन्मादिकारणं न भवेत् ॥ ४१२ ॥
यस्मादसौ परात्मा विषमां सृष्टिं हि जगति निर्माति ।
अत्यन्तसुखसमृद्धान्देवान्सृजतीह मर्त्यवर्गमपि ॥ ४१३ ॥

मध्यमसुखभाजमिमं तथैव चात्यन्तदुःखभाजोऽपि ।
पश्वादीनपि सृजति हि तेन च वैषम्यमस्य दुर्वारम् ॥ ४१४ ॥
प्रलयावसरे सर्वप्राणिनिकायं विनाऽपराधेन ।
संहरतस्तस्यैव तु परमात्मनो निर्घृणत्वमनिवार्यम् ॥ ४१५ ॥
क्रूरत्वमपि च तस्य हि दुःखविधानात्तथैव दुर्वारम् ।
रागद्वेषादिकमपि पृथग्जनस्येव तस्य दुर्वारम् ॥ ४१६ ॥
अपहतपाप्मनि तस्मिन्स्रष्टृत्व युक्तमीदृश नु कथम् ।
तस्मान्न जगत्कारणमात्मा वैषम्यनिर्घृणत्वाभ्याम् ॥ ४१७ ॥
इत्याशङ्कां निरसितुमिदमधिकरणं प्रदर्शितं मुनिना ।

वैषम्यनैर्घृण्ये न सापेक्षत्वा-
त्तथा हि दर्शयति ॥ ३४ ॥

इति चेन्नैवं यस्मान्न चास्य वैषम्यनिर्घृणत्वे स्तः ॥ ४१८ ॥
यदि निरपेक्षः सोऽयं विषमां सृष्टिं हि निर्मिमीते चेत् ।
स्यातामेतौ दोषावस्य परात्मा स किंतु सापेक्षः ॥ ४१९ ॥
प्राणिकृतौ यौ धर्माधर्मावेव ह्यपेक्ष्य सृष्टिमिमाम् ।
रचयति स चायमात्मा कुतोऽस्य वैषम्यनिर्घृणत्वे तु ॥ ४२० ॥
यद्वद्व्रीहीयवादिषु साधारणकारणं च पर्जन्यः ।
तद्वत्परमात्मा स्यात्साधारणकारणं जगत्स्रष्टा ॥ ४२१ ॥
तत्तद्बीजान्येव व्रीह्यादिविशेषकारणानि यथा ।
तत्तत्कर्माणि तथा देवादिविशेषकारणानि स्युः ॥ ४२२ ॥
नेशापराधमूला सृष्टिः कर्मापराधमूलैव ।
वैषम्यादिनिरासे सापेक्षत्वं हि यच्च तस्योक्तम् ॥ ४२३ ॥
तदिदं सापेक्षत्वं प्रपञ्च्यते सपदि सूत्रशेषेण ।
दर्शयति श्रुतिरेषा सापेक्षत्वं यदेष एवेति ॥ ४२४ ॥
ऊर्ध्वं हि नेतुमिच्छति यं च परात्मा तमेनमादौ हि ।
कारयति कर्म साध्विति य चाधो नेतुमिच्छति ह्यात्मा ॥ ४२५॥
तमसाधु कर्म कारयतीत्येषाऽपि प्रदर्शयत्येवम् ।
नन्विह कारयितृत्वात्फलप्रदातृत्वमस्य निर्दिष्टम् ॥ ४२६ ॥
कारयितृत्वे तस्य च सापेक्षत्वं कथं भवेदिति चेत् ।
जन्मान्तरवासनया कुर्वन्तं कारयत्ययमावात्मा ॥ ४२७ ॥

तेन च सापेक्षत्वे न बाधकं किमपि शङ्कितुं शक्यम् ।
यदि चाकुर्वन्तमपि ह्यात्मा साध्वादि कर्म कारयति ॥ ४२८ ॥
भवति तदाऽयं दोषः सापेक्षत्वं च दुर्घटं तस्य ।

न कर्माविभागादिति चेन्ना-
नादित्वात् ॥ ३५ ॥

नन्विह सापेक्षत्वं यच्चोक्तं तच्च दुर्घटं भाति ॥ ४२९ ॥
यस्मात्प्रलयावसरे निर्लेपं भवति कर्म सकलमपि ।
उत्तरकालं सृष्टौ वैषम्यकरस्य कर्मणोऽसत्त्वात् ॥ ४३० ॥
तुल्यैवाऽऽद्या सृष्टिर्भवेन्न देवादिविषमभावेन ।
यदि तुल्या सृष्टिरियं तदोत्तरत्रापि तद्वदेव स्यात् ॥ ४३१ ॥
यदि चेद्विषमा सृष्टिर्वैषम्यादिक्रमबाधितं तस्य ।
इति चेन्नानादित्वात्कर्मण इह नास्ति दोषशङ्काऽपि ॥ ४३२ ॥
तदनादिकालसंसृतमखिलं कर्मेति नास्ति दोषोऽयम् ।
कथमस्य कर्मणः स्यादनादिकालप्रवृत्ततेत्येवम् ॥ ४३३ ॥
शङ्कामेतां निरसितुमेतत्सूत्रं प्रदर्शितं मुनिना ।

उपपद्यते चाप्युपलभ्यते च ॥ ३६ ॥

संसारस्तन्मूलं कर्मानादीति चोपपन्नं हि ॥ ४-४ ॥
यद्यादिमानयं स्यात्संसारस्तस्य मूलमपि कर्म ।
मुक्तानामपि लोकेऽस्मिन्पुनरपि संसारबन्धनं न कुतः ॥ ४३५ ॥
उपलभ्यते च तदिदं कर्मानादीति मन्त्रवर्णेषु ।
सूर्याचन्द्रमसाविति मन्त्रो ब्रूते तथैव चान्याऽपि ॥ ४३६ ॥
प्रथयत्यमेन जीवेनेत्याद्या तेन सकलमनवद्यम् ।
सपदि परपक्षदूषणमुख्यफलं प्रकरणं प्रवर्तयितुम् ॥ ४३७ ॥
सूत्रकृदुपसंहरति प्रकरणमेतत्स्वपक्षसिद्धिफलम् ।

सर्वधर्मोपपत्तेश्च ॥ ३७ ॥

चेतनकारणपक्षे कारणधर्माश्च ये च विख्याताः ॥ ४३८ ॥
कारणरूपे ब्रह्मण्युपपद्यन्ते हि सर्वधर्मास्ते ।
सर्वज्ञता तथा स्याद्विचित्रमायासहायताऽप्येवम् ॥ ४३९ ॥
तद्वच्च सर्वशक्तिः कारणतामस्य साधयन्त्येव ।
तस्माद्वेदान्तानां सर्वज्ञे सर्वशक्तिसंपन्ने ॥ ४४० ॥

ब्रह्मणि कारणरूपे समन्वयो निरपवाद इति सिद्धम् ।
शारीरकमीमांसा मुनिना व्यासेन विरचिता सेयम् ।
चतुरध्यायी तस्यां द्वितीयसंज्ञश्च योऽयमध्यायः ॥ ४४१ ॥
तत्र प्रथमे पादे सूत्रार्थो यश्च भाष्यकारोक्तः ।
आर्यावृत्तैरमलैः प्रकाशितो भवतु सोऽयमनवद्यः ॥ ४४२ ॥

इति द्वितीयाध्यायस्य प्रथमः पादः ॥ १ ॥

---

अथ द्वितीयपादप्रारम्भः ।

---

सांख्यादिस्मृतिवचनैर्विरोधशङ्कां व्युदस्य पूर्वत्र ।
ब्रह्मणि वेदान्तानां समन्वयोऽसौ स्थिरीकृतः सूत्रैः ॥ १ ॥
सांख्यादिस्मृतिवचसां न्यायाभासोपबृंहितत्वेन ।
स्थिरयितुमप्रामाण्यं द्वितीयपादः प्रवर्तते सपदि ॥ २ ॥
यद्यपि वेदान्तानामैदंपर्यावधारणार्थमिदम् ।
शास्त्रं हि केवलाभिर्युक्तिभिरेवेह कमपि सिद्धान्तम् ॥ ३ ॥
साधयितुमप्रवृत्तं दूषयितुं वाऽपि तर्कशास्त्रमिव ।
सत्यं तथाऽपि लोके विख्यातानि च महान्ति तन्त्राणि ॥ ४ ॥
कपिलादिसंमतानि हि महाजनैश्चापि परिगृहीतानि ।
उपलभ्य जडमतीनां केषांचित्स्यादिहापि च भ्रान्ता ॥ ५ ॥
तत्त्वावधारणाय तु भवन्ति चैतानि साधनानीति ।
अत इह तदसारत्वं यावन्नैवोपवर्ण्यते तावत् ॥ ६ ॥
वेदान्तवाक्यनिचयैरुत्पन्नं ज्ञानमाकुली भवति ।
तस्मादसौ हि यत्नो युक्तः कपिलादेमतनिरासे स्यात् ॥ ७ ॥
अत्र स्वपक्षसाधनमभ्यर्हितमिति कृतं तदादौ च ।
संप्रति परपक्षोऽयं निरस्यते हि स्वपक्षदार्ढ्याय ॥ ८ ॥
ईक्षत्याद्यधिकरणे प्रागपि सांख्यादिमतनिरासोऽयम् ।
प्रायः कृतो हि पुनरपि तत्र च यत्नो वृथेति चेन्नैवम् ॥ ९ ॥
पूर्वं प्रधानवादे श्रुतिसाहाय्यं न चास्ति किंचिदिति ।
निरसितमत्र च पादे युक्तिसहायो निरस्यते सपदि ॥ १० ॥
नन्विह कारणधर्मा ब्रह्मण्येवोपपादिताः सर्वे ।
तदिदमयुक्तं यस्मादिह प्रधानेऽपि संभवन्त्येते ॥ ११ ॥

घटकरकादिविकारा मृदात्मनाऽन्वीयमानरूपा हि ।
ते च खलु मृद्विकारा मृत्सामान्यैकपूर्वका दृष्टाः ॥ १२ ॥
आध्यात्मिका अपीत्थं भेदाः सुखदुःखमोहरूपेण ।
अन्वीयमानरूपास्तादृशसामान्यपूर्वका एव ॥ १३ ॥
सुखदुःखमोहरूपं ह्यचेतनं तत्प्रधानमेव स्यात् ।
तदिद प्रधानमेव ह्यचेतनं भवति जगदुपादानम् ॥ १४ ॥
परिमाणाद्यैर्लिङ्गैरपि जगतः कारणं तदेव स्यात् ।
इति शङ्कामपनेतुं मुनिना रचित तदेतदधिकरणम् ॥ १५ ॥

## रचनानुपपत्तेश्च नानुमानम् ॥ १ ॥

नैवाभिलषितसिद्धिर्दृष्टान्तादेव केवलाद्भवति ।
दृष्टान्तोऽयं लोके सुलभो भवतीह सर्वपक्षेषु ॥ १६ ॥
यदचेतनं हि लोके न चेतनेनानधिष्ठितं किमपि ।
कार्यं रचयदृदृष्टं मृदादिकेषु च रथादिषु ह्येवम् ॥ १७ ॥
लोके मृदादयो वा रथादयो वा कुलालवाहाद्यैः ।
अनधिष्ठिता घटादीन्रचयन्तो जगति नैव दृश्यन्ते ॥ १८ ॥
चेतनपुरस्कृतैरिह मृद्दार्वाद्यैर्हि विरचिता दृष्टाः ।
गेहप्रासादाद्याः सुखदुःखप्राप्तिविघटनानलसाः ॥ १९ ॥
जगदेतदखिलमपि किल देवमनुष्याद्यधिष्ठितं भवति ।
कर्मफलभोगयोग्यं भूम्यप्तेजोनिलादिपर्याप्तम् ॥ २० ॥
प्रज्ञावद्भिः शिल्पिभिरालोचयितुं हि जातु मनसाऽपि ।
यदशक्यं तद्रचयेत्स्वतन्त्रमेतत्प्रधानमनभिज्ञम् ॥ २१ ॥
मृद्दृष्टान्तैरेव ह्यनुमेयं मूलकारणं जगतः ।
न तु बाह्यकुम्भकारप्रमुखैरिति नियमकारणं किमपि ॥ २२ ॥
श्रुतिरेवमनुगृहीता चेतनदृष्टान्तसंग्रहे भवति ।
यस्मात्तदैक्षतेति श्रुतय कथयन्ति चेतनात्सृष्टिम् ॥ २३ ॥
सर्वज्ञकारणत्वे तदेतदखिलं समञ्जसं भवति ।
यदि चेत्प्रधानमेतत्स्वतन्त्रमेवाखिलं जगज्जनयेत् ॥ २४ ॥
स्थूलोपलाः स्वतन्त्राः प्रासादादीन्कुतो हि न सृजन्ति ।
इति रचनानुपपत्तेः स्मृतिदृष्टमिदं न कारणं जगतः ॥ २५ ॥
सुखदुःखमोहभावेनान्वयरूपो य एष निर्दिष्टः ।
हेतुस्तस्यासिद्धिं सूचयति ह्यन्य एष सूत्रस्थः ॥ २६ ॥

बाह्याध्यात्मिकभेदेष्विह न हि सुखदुःखमोहरूपतया ।
अन्वय इहास्ति लोके यतश्च तेषां विरुद्धभावोऽस्ति ॥ २७ ॥
सुखदुःखादिकमखिलं प्रतीयते चान्तरत्वधर्मेण ।
शब्दादयश्च बाह्या अनन्तरत्वेन जगति भासन्ते ॥ २८ ॥
शब्दादयो हि भेदाः सुखादिकानां निमित्तभावेन ।
दृष्टा यतः कथं स्यादन्वयहेतुः स चायमुपपन्नः ॥ २९ ॥
न तु भिन्नरूपयोरयमभिन्नभावो हि दृश्यते क्वापि ।
यश्चाऽऽदिशब्दलभ्यः सूत्रेऽसौ परिमितत्वहेतुरपि ॥ ३० ॥
संसर्गपूर्वकत्वप्रसाधनायोपदिष्ट इह कार्ये ।
देशपरिच्छेदात्मा भागासिद्धो हि सोऽयमाकाशे ॥ ३१ ॥
कालपरिच्छेदेऽस्मिन्हेतौ स्यात्सिद्धसाधनं दोषः ।
योऽयमविद्यागुणयोः संसर्गस्तत्र भवति दोषोऽयम् ॥ ३२ ॥
पक्षद्वयेऽपि सोऽयं स कंचिदर्थं हि साधयत्येषः ।
वस्तुपरिच्छेदात्मकमेतद्यदि परिमितत्वमत्रोक्तम् ॥ ३३ ॥
सत्त्वरजस्तमसामपि तुल्यं तदतो ह्यसावनेकान्तः ।
तस्मादसाधकोऽयं यश्चोक्तः परिमितत्वहेतुरपि ॥ ३४ ॥
लोके हि कार्यकारणविभागबुद्धिः प्रवर्तते यावत् ।
तावदचेतनपूर्वकमखिलं कार्यमिति नायमेकान्तः ॥ ३५ ॥
यत्र च विभागबुद्धिः समाप्यते जगति कार्यकारणयोः ।
तदचेतनं प्रधानं तत्पूर्वकमेव सकलमपि कार्यम् ॥ ३६ ॥
इति सांख्यदर्शितं यल्लक्षणमेतत्परात्मनस्तुल्यम् ।
तेन च सकलं कार्यं चेतनपूर्वकमितीह किं न स्यात् ॥ ३७ ॥

प्रवृत्तेश्च ॥ २ ॥

अत्रानुपपत्तेरिति पदमनुवृत्तं हि भवति पूर्वस्मात् ।
तेनानुपपत्तिरसाविह प्रवृत्तेः प्रदर्शिता भवति ॥ ३८ ॥
आस्तामियं तु रचना तत्सिद्ध्यर्थाऽपि या प्रवृत्तिः स्यात् ।
सा सत्त्वरजस्तमसां भवति ह्यङ्गाङ्गिरूपतैव किल ॥ ३९ ॥
एवं कार्याभिमुखप्रवृतता सेति तां च कथयन्ति ।
सा च प्रवृत्तिरिह खल्वचेतनस्यैव केवलस्य भुवि ॥ ४० ॥
दृष्टा नैव मृदादेश्चेतःसंयोगमन्तरा क्वापि ।
चेतनपुरस्कृतस्य हि सा तु मृदादेस्तथा रथादेश्च ॥ ४१ ॥

तस्मात्तदनुपपत्तेः प्रधानमिह नैव जगदुपादानम् ।
नन्विह चेतनयोगादचेतनस्य च यदा प्रवृत्तिः स्यात् ॥ ४२ ॥
सिद्धैव सा प्रधाने तदनुपपत्तिश्च नेति चेन्नैवम् ।
यद्यप्यचेतनेऽस्मिन्मृदादिके सा प्रवृत्तिरुपलब्धा ॥ ४३ ॥
भवतु तथाऽपि च सा खल्वचेतने भवति चेतनादेव ।
दहनप्रकाशरूपा क्रिया च काष्ठादिसंश्रयाऽपि यथा ॥ ४४ ॥
ज्वलनाधीनेव स्यात्तथैव सा भवति चेतनाधीना ।
लोकायतिकमतेऽपि हि जीवद्देहस्य चेतनत्वेन ॥ ४५ ॥
अनुमतमिह रथशकटप्रभृतीनां तु प्रवर्तकत्वं स्यात् ।
तस्मादचेतनानां प्रवर्तकत्वं हि चेतने युक्तम् ॥ ४६ ॥
ननु परमात्मा सोऽयं चैतन्यैकस्वरूप एवोक्तः ।
तद्व्यतिरेकेणास्य प्रवर्तकं नोपलभ्यते किमपि ॥ ४७ ॥
स कथं प्रवर्तकः स्यादिति शङ्काऽप्यत्र नैव कर्तव्या ।
यस्मात्सर्वज्ञोऽसौ परमात्मा सर्वशक्तिसंपन्नः ॥ ४८ ॥
तस्य प्रवर्तकत्वे शङ्केयं कथमुदेति मनसि तव ।
एकोऽसौ परमात्मा प्रवर्तकः कथमितीह नाऽऽशङ्क्यम् ॥ ४९ ॥
मायोपाधिवशेन हि तदेदखिलं समञ्जसं तस्य ।
तस्मात्परात्मनोऽस्य प्रवर्तकत्वं यदेतदनवद्यम् ॥ ५० ॥

## पयोम्बुवच्चेत्तत्रापि ॥ ३ ॥

नन्वत्राचेतनयोः पयोम्बुनोरपरतन्त्रयोर्लोके ।
दृष्टा प्रवृत्तिरेषा तथा प्रधानस्य सा कथं न स्यात् ॥ ५१ ॥
वत्सविवृध्द्यर्थं किल यथा स्वतः स्यन्दते पयो लोके ।
लोकानामुपकृतये यथा जलं वा तथा प्रधानमपि ॥ ५२ ॥
महदाद्याकारेण स्वभावतो नैव परिणमेत कुतः ।
इति चेन्न येन कथयति चेतनसापेक्षतां हि तत्रापि ॥ ५३ ॥
योऽप्स्विति मन्त्रो योऽसौ तथव चतस्य वेति मन्त्रोऽपि ।
अपि वत्सचोषणं यन्मातुः प्रेमानुबन्धनं यच्च ॥ ५४ ॥
तदुभयसापेक्षमिदं पयः परिष्यन्दते जलं यच्च ।
तन्निम्नभूम्यपेक्षं सदा परिष्यन्दते न चेतरथा ॥ ५५ ॥
अत इह दृष्टान्तोऽयं पक्षसमो नैव तद्बहिर्भूतः ।
तस्मात्पयोम्बुवच्चेत्यनुपन्यसनीयमेतदिह भवति ॥ ५६ ॥

व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥ ४ ॥

सत्त्वं रजस्तमश्च त्रयो गुणा यदि समानभावेन ।
अवतिष्ठमानरूपाः प्रधानमेतदिति वर्ण्यते सांख्यैः । ५७ ॥
तद्व्यतिरेकेण तदा प्रवर्तकं न हि निवर्तकं वाऽस्ति ।
तदभावादनपेक्षं ह्यनपेक्षत्वात्प्रवर्तते च कथम् ॥ ५८ ॥
गुणवैषम्यकृतोऽयं सर्गो वा भवति तस्य तदभावे ।
तस्मात्प्रधानवादः प्रतारणार्थो न युक्तिमूलः स्यात् ॥ ५९ ॥

अन्यत्राभावाच्च न तृणादिवत् ॥ ५ ॥

तृणपल्लवोदकादि क्षीराकृत्या यथा हि परिणमते ।
तद्वत्प्रधानमेतन्महदाद्याकारपरिणतं न कुतः ॥ ६० ॥
इति शङ्काऽत्र न युक्ता यतस्तृणाद्यपि भवेन्न निरपेक्षम् ।
यदि निरपेक्षं ह्येतत्क्षीराकारेण परिणमेत तदा ॥ ६१ ॥
अन्यत्र धेनुकायास्तृणादिकं क्षीरतां कुतो नेयात् ।
यदि चेदन्यत्रापि क्षीरी भूयात्तृणादिकं लोके ॥ ६२ ॥
यच्च प्रहीणमेतद्यच्च बलीवर्दचर्वितं वाऽपि ।
तदपि क्षीराकृत्या परिणतिमेतां हि नो लभेत कुतः ॥ ६३ ॥
मानुषसाध्यं किंचिद्भवति च देवादिकृत्यमपि किंचित् ।
न च निर्निमित्तमेतत्तस्मात्तदिदं हि देवताकृत्यम् ॥ ६४ ॥
मर्त्या अपि प्रभूतं क्षीरं लब्धुं प्रभूतघासमिमाम् ।
धेनुं हि चारयन्त्यपि तस्मात्सकलं हि चेतनायुक्तम् ॥ ६५ ॥

अभ्युपगमेऽप्यर्थाभावात् ॥ ६ ॥

स्वाभाविकी प्रवृत्तिर्न चास्य भवतीति दर्शितं पूर्वम् ।
अभ्युपगच्छेम वयं भवतः श्रद्धामिहानुरुध्येताम् ॥ ६६ ॥
स्वाभाविकीं प्रवृत्तिं तथाऽपि दोषोऽनुयुज्यते सोऽयम् ।
स्वाभाविकी प्रवृत्तिः सेयं नापेक्षते हि किंचिदिति ॥ ६७ ॥
यद्युच्येत तदेयं यथैव नापेक्षते हि सहकारि ।
एवं नापेक्षेत प्रयोजनमपीति दोष इह भवति ॥ ६८ ॥
साधयति च प्रधानं पुरुषस्यार्थं समग्रमिति योऽयम् ।
हीयेत सा प्रतिज्ञा न च प्रवृत्तिर्हि दृश्यते विफला ॥ ६९ ॥
यदि च प्रवृत्तिरस्य प्रयोजनमपेक्षते हि न सहायम् ।
तदपि प्रयोजनं वा तस्या नैवोपलभ्यते किमपि ॥ ७० ॥

भोगो वा स्यादथ वाऽप्यपवर्गो वाऽथ तदुभयं वाऽपि ।
नैवं प्रयोजनं स्याद्यत इह पुरुषो हि निष्कलो भवति ॥ ७१ ॥
विषयकृतसुखविशेषाधाननैवास्य भोग इह वाच्यः ।
अध्यासमन्तरेण हि स च न हि पुरुषे भवेदयं भोगः ॥ ७२ ॥
अध्यासोऽयं सांख्यैर्नैवाभ्युपगम्यते हि कुत्रापि ।
तस्मादिह भोगार्था प्रवृत्तिरिति नैव शक्यते वक्तुम् ॥ ७३ ॥
तस्या भोगार्थत्वेऽप्यविमोक्षापत्तिरत्र दुर्वारा ।
सा स्यादपवर्गार्थेत्ययमपि पक्षो न चेह संभवति ॥ ७४ ॥
अपवर्गोऽयं पुंसः स्वात्मावस्थानलक्षणो नान्यः ।
सोऽयं हि तत्प्रवृत्तेः प्रागपि सिद्धं प्रयोजनं न भवेत् ॥ ७५ ॥
अपवर्गार्थत्वे वा शब्दाद्युपलब्धिरनुपपन्ना स्यात् ।
उभयार्थता यदा स्यादविमोक्षोऽयं हि तत्र दुर्वारः ॥ ७६ ॥
यस्मादनन्तता स्याद्भोक्तव्यानां प्रधानमात्राणाम् ।
औत्सुक्यनिरसनार्थं क्रियासु यद्वत्प्रवर्तते लोकः ॥ ७७ ॥
पुरुषस्य मुक्तये हि प्रवर्तते तद्वते(दे)तदव्यक्तम् ।
इत्यौत्सुक्यनिरासप्रयोजनार्था प्रवृत्तिरित्यपि न ॥ ७८ ॥
इच्छाविशेष एव ह्यौत्सुक्यं तद्धि चेतनस्यैव ।
नाचेतनस्य लोके क्वचिदपि दृष्टं तदेतदौत्सुक्यम् ॥ ७९ ॥
यदि चेतनदृक्शक्तेर्वैयर्थ्यभयाद्भवेत्प्रवृत्तिरियम् ।
दृक्शक्तेरवियोगात्प्रधानगतसर्गशक्त्यविच्छेदात् ॥ ८० ॥
पुरुषस्य चाविमोक्षः प्रधानवादे हि भवति दुर्वारः ।
तस्मात्प्रधानवादो न कथंचिदपीह घटयितुं शक्यः ॥ ८१ ॥

## पुरुषाश्मवदिति चेत्तथाऽपि ॥ ७ ॥

लोके यदा हि कश्चित्पुरुषो दृक्शक्तिसंयुतो गन्तुम् ।
शक्तिविहीनः पङ्गुः पुरुषं दृग्शक्तिविच्युत चान्धम् ॥ ८२ ॥
गतिशक्तिसचिवमपरं वाग्व्यापारेण तं प्रवर्तयते ।
एवमयस्कान्तोऽश्मा प्रवृत्तिरहितोऽप्ययः प्रवर्तयति ॥ ८३ ॥
तद्वदयं पुरुषोऽपि प्रवर्तयिष्यति परं प्रधानमिदम् ।
इतिदृष्टान्तालम्बात्पुनराशङ्का समुत्थिता सेयम् ॥ ८४ ॥
सा तु न युक्ता यस्माद्दृष्टान्तोऽयं हि विषम इह भवति ।
वागाद्यैः पङ्गुरसावन्धमधिष्ठाय तं नियोजयति ॥ ८५ ॥

तत्रेदमुचितमेव हि पुरुष उदासीन इह च निर्दिष्टः ।
सोऽयं निर्व्यापारः कथ प्रधानं प्रवर्तयितुमर्हः ॥ ८६ ॥
एवंविधस्य लोके प्रवर्तकत्वं न हि क्वचिद्दृष्टम् ।
यदि च प्रवर्तकत्वं तथाविधस्यापि कल्प्यते सांख्यैः ॥ ८७ ॥
पुरुषस्यौदासीन्यं स्वातन्त्र्यं वा कथं प्रधानस्य ।
यदि चायस्कान्त इव प्रवर्तते संनिधानमात्रेण ॥ ८८ ॥
पुरुष उदासीनेऽपि प्रधानमेतत्तदा भवेदेवम् ।
संनिधिसातत्येन प्रवृत्तिसातत्यमप्रतीकारम् ॥ ८९ ॥
परिमार्जनाद्यपेक्षो ह्यनित्यसंनिधिरसावयस्कान्तः ।
तस्माद्दृष्टान्तोऽसौ विषमो न प्रकृतनिर्णयार्थः स्यात् ॥ ९० ॥
पुरुष उदासीनोऽसावचेतनं हि प्रधानमिह च तयोः ।
संबन्धयिता चान्यस्तृतीय इह नोपलभ्यते क्वापि ॥ ९१ ॥
इह योग्यतानिमित्तः संबन्धो यदि तयोर्भवेत्तर्हि ।
योग्यत्वानुच्छेदात्प्रवृत्त्यनुच्छित्तिरपरिहार्यैव ॥ ९२ ॥
पूर्ववदर्थाभावो दोषोऽयं तुल्य एव चेहापि ।
चेतनकारणपक्षे सोऽयं दोषः पदं न विदधाति ॥ ९३ ॥
सर्वज्ञे परमात्मनि मायामूल प्रवर्तकत्वं स्यात् ।
औदासीन्यं यदिदं स्वतोऽस्य सिद्धं न साधनायत्तम् ॥ ९४ ॥

अङ्गित्वानुपपत्तेश्च ॥ ८ ॥

यदि सत्त्वरजस्तमसां समता न गुणप्रधानभावः स्यात् ।
सेयं साम्यावस्था प्रधानमिति वर्णयन्ति खलु सांख्याः ॥ ९५ ॥
सा कूटस्था नित्या भवति यदा नैव सर्गवार्ता स्यात् ।
सर्गो महदादीनां गुणवैषम्ये हि भवति नेतरथा ॥ ९६ ॥
कूटस्थानां कथमिह तेषामङ्गाङ्गिभावसंपत्तिः ।
अङ्गित्वानुपपत्तेरयुक्त एव प्रधानवादोऽयम् ॥ ९७ ॥
यदि नैते कूटस्था गुणा न नित्यास्तथाऽपि दोषोऽयम् ।
दुर्वारस्तव पक्षे यतो नियन्ता न चेह कश्चिदपि ॥ ९८ ॥

अन्यथानुमितौ च ज्ञशक्तिवियोगात् ॥ ९ ॥

अनुमीयते तथेदं दोषो न यथा प्रधानवादे स्यात् ।
एते सत्त्वादिगुणा वैषम्योपगमयोग्यतापन्नाः ॥ ९९ ॥

गुणसमतायामपि न हि रचनानुपपत्तिदोषशङ्केह ।
समतापन्ना अपि ते कार्यवशेन च भजन्ति वैषम्यम् ॥ १०० ॥
कार्यं यथा यथा स्यात्तथा स्वभावो हि कल्प्यते तेषाम् ।
चलमिह गुणवृत्तमिति ह्यभ्युपगच्छन्ति कापिला इति चेत्॥१०१॥
एवमपि दुर्निवारो रचनानुपपत्तिरूपदोषः स्यात् ।
यस्माज्ज्ञशक्तिविधुरं त्रिगुणमचेतनमिदं प्रधानं स्यात् ॥ १०२ ॥
यदि च ज्ञशक्तियुक्तं भवेत्प्रधानं तदा निवृत्तं स्यात् ।
प्रतिवादित्वमथ स्याच्चेतनकारणसमर्पणं तेन ॥ १०३ ॥
चेतनमेकं जगतो जन्मस्थित्यन्तकारणं ब्रह्म ।
इति चेतनकारणतावादः स्यान्न प्रधानवादोऽयम् ॥ १०४ ॥

## विप्रतिषेधाच्चासमञ्जसम् ॥ १० ॥

विप्रतिषेधादपि खल्वसमञ्जसमेव कापिलं तन्त्रम् ।
विप्रतिषेधश्चायं बहुतर उपलभ्यते हि तन्त्रेऽस्मिन् ॥ १०५ ॥
क्वचिदिन्द्रियाणि सप्त क्वचिदेकादश वदन्ति तान्येव ।
तन्मात्राणां सर्गं महतः क्वचिदिह वदन्त्यहंकारात् ॥ १०६ ॥
क्वचिदन्तःकरणानि त्रीणि तदेकं क्वचिच्च कथयन्ति ।
इत्यन्योन्यविरोधः प्रसिद्ध एवात्र कापिले तन्त्रे ॥ १०७ ॥
चेतनकारणपरया श्रुत्या स्मृत्या प्रसिद्ध एवायम् ।
इत्यन्योन्यविरोधादसमञ्जसमेव सांख्यतन्त्रमिदम् ॥ १०८ ॥
नन्वेतद्दर्शनमपि भवत्ययुक्तं यदौपनिषदानाम् ।
जात्यन्तरभावोऽयं न वर्ण्यते तर्हि तप्यतापकयोः ॥ १०९ ॥
संसारी जीवो यः संसारस्तप्यतापकावेतौ ।
अर्थी चार्थश्च तथाऽनर्थोऽनर्थी च जगति विख्यातौ ॥ ११० ॥
अर्थोऽपि तापकः स्यात्स चार्जनक्लेशतोऽप्यलाभेन ।
तापयति पुरुषमस्मात्तप्यः पुरुषश्च तापकोऽर्थः स्यात् ॥ १११ ॥
स्वत एवानर्थोऽयं तापक इति जगति सुप्रसिद्धो हि ।
पर्यायेण च ताभ्यां यः संयुज्येत भवति न हि तप्यः ॥ ११२ ॥
अभ्युपगता यदा स्यादेकात्मकता समस्तजगतोऽपि ।
लुप्येत लोकसिद्धो भेदो योऽसौ हि तप्यतापकयोः ॥ ११३ ॥
न हि लोकसुप्रसिद्धं बाधयितुं जगति केनचिच्छक्यम् ।
यद्यर्थिनः स्वतोऽन्यो न स्यादर्थस्तदेदमर्थित्वम् ॥ ११४ ॥

कस्मिन्खलु विषये स्याद्यतोऽयमात्मा स्वरूप एवार्थः ।
अभ्यर्थना हि त्वैक्ये न च सिद्धे जगति कस्यचिद्दृष्टा ॥ ११५ ॥
अर्थित्वस्यासिद्धौ नैवार्थत्वं च कस्यचिद्भवति ।
नन्वेकात्मकयोरप्यन्योन्यं जगति दृश्यते भेदः ॥ ११६ ॥
एकाग्न्यात्मकयोरपि दृष्टो ह्यौष्ण्यप्रकाशयोर्भेदः ।
एकब्रह्मात्मकयोरनयोर्भेदस्तथेति चेन्नैवम् ॥ ११७ ॥
एवमपि दर्शनेऽस्मिन्भवति च दोषो न दोषनिस्तारः ।
औष्ण्यप्रकाशनाभ्यामविमोक्षोऽग्नेर्यथा हि लोकेऽस्मिन् ॥ ११८ ॥
इह तप्यतापकाभ्यामविमोक्षस्तद्वदस्य दुर्वारः ।
धर्मापाये ननु किल यदवस्थानं हि धर्मिणो मोक्षः ॥ ११९ ॥
फनतरङ्गापाये जगति जलस्य स्वरूपमात्रेण ।
समवस्थानं दृष्टं यथा तथैवेह स भवतीत्यपि न ॥ १२० ॥
आविर्भावतिरोभावाभ्यामनपायिनो हि फेनाद्याः ।
तैरिह विमोक्षवार्ता सतो जलस्यातिदुर्लभा दृष्टा ॥ १२१ ॥
दार्ष्टान्तिके कथं वा तद्दृष्टान्तेन दोषपरिहारः ।
भिन्नात्मकतायामिह न दोषशङ्काऽस्ति तप्यतापकयोः ॥ १२२ ॥
ताभ्यां भवति विमोक्षस्तत्संयोगकहेतुपरिहारात् ।
इत्यभ्यधिकां शङ्कां निरसितुमत्राऽऽधीयते तदिदम् ॥ १२३ ॥
सर्वस्यैकात्मकता विशुद्धविज्ञानविलसिता हि यदा ।
सा परमार्थदशेय तदवस्थाया न तप्यतापकता ॥ १२४ ॥
औष्ण्यस्थः परमात्माऽप्यनावृतैकात्म्यभावमुपयातः ।
प्रविलीनेऽपि द्वैते स च कं तापयति तप्यते च कथम् ॥ १२५ ॥
तस्माच्च तप्यतापकभावानुपपत्तिरत्र न हि दोषः ।
दृष्टश्च तप्यतापकभावो व्यवहारसमय एवासौ ॥ १२६ ॥
यत्र यथा दृष्टः स्यात्स च खलु तस्यैव धर्मतामेति ।
क्व पुनरिह तप्यतापकभावः स्यादिति तु नैवमाशङ्क्यम् ॥ १२७ ॥
जीवद्देहस्तप्यः सविताऽसौ तापकः प्रसिद्धो हि ।
नन्विह तापिर्दुःखं सा चेतयितुर्न चास्य देहस्य । १२८ ॥
इति चेद्यदसौ दोषो भवति तवैवायमप्रतीकारः ।
सत्यपि देहे केवलचेतयितुर्भवति नैव तापिरसौ ॥ १२९ ॥

चेतयितुरेव सा चेदशुद्धतादिप्रसक्तिरनिवार्या ।
न च देहचेतयित्रोः संहतभावो निरूप्यते साख्यैः ॥ १३० ॥
न च तप्तेस्तप्तिः स्यादतस्तवैष दुर्निवारः स्यात् ।
सत्त्वं तप्यं हि रजस्तापकमिति नैव वक्तुमिह शक्यम् ॥ १३१ ॥
ताभ्यां कथमस्पृष्टे चेतयितरि तप्यतापकात्मकता ।
प्रतिबिम्बितत्वयोगात्तप्यत इव चेतनोऽयमित्यपि न ॥ १३२ ॥
तदिह परमार्थतोऽसौ न तप्यत इति प्रपञ्चितं भवता ।
नैवेवकारयोगादतथाभूतस्तथाविधो भवति ॥ १३३ ॥
सर्प इव डुण्डुभोऽसावित्युक्त्या निर्विषो न सविषः स्यात् ।
इति खलु यथोक्तधर्मानुपपत्तिरसौ तवैव दुर्वारा ॥ १३४ ॥
आविद्यको हि तस्मादपारमार्थिक इतीह वक्तव्यम् ।
भवता तदिदं तुल्यं ममापि पक्षे न दूषणं किमपि ॥ १३५ ॥
सिद्धान्तभङ्गभीत्याऽहिष्वेत तप्यतापके नित्ये ।
स्वस्वामिभावरूपः संयोगश्चाविवेकसंवलितः ॥ १३६ ॥
भवति यदा तत्साचवं ह्यदर्शनाख्यं तमस्तदा पुंसः ।
संसारबन्धनं स्यात्तस्य विरामो यदा विवेकेन ॥ १३७ ॥
अपवर्गस्तस्य स्यादित्युक्तावपि न दोषनिस्तारः ।
यस्माददर्शनाख्यं तमो हि नित्यं प्रधानवादेऽस्मिन् ॥ १३८ ॥
नित्यत्वेऽपि च तमसो यतो गुणश्चोद्भवाभिभवयोगात् ।
अनियतवृत्तास्तस्मात्तत्संयोगोऽयमनियतो भवति ॥ १३९ ॥
तेन विशिष्टा(ष्टो) परमे युक्तस्तस्यापवर्ग इत्यपि न ।
यद्यनियत एवास्य संयोगः स्यात्तथा वियोगोऽपि ॥ १४० ॥
अनियत एव स्यादित्यपवर्गकथाऽतिदुर्लभा भवतः ।
तस्मादसंगतोऽयं प्रधानवादो निराकृतो भवति ॥ १४१ ॥
नन्विह चेतनकारणवादोऽप्ययमनुपपन्न एव स्यात् ।
यस्माच्चेतनकारणवादेऽपि हि दोष एष दुर्वारः ॥ १४२ ॥
सुखदुःखमोहरूपः प्रधानधर्मः स दृश्यते जगति ।
इति किल पूर्वं जगतः कारणमेतन्न हीति निर्दिष्टम् ॥ १४३ ॥
तद्वदिहापि च वादे दूषणमेतद्धि तुल्यमाभाति ।
तन्त्वादिकारणस्थं गुणजातं शुक्लनीलपीतादि ॥ १४४ ॥

समजातीयगुणान्तरजनकं दृष्टं पटादिके कार्ये ।
यदि चेच्चेतनमेव हि जगतो जन्मादिकारणं भवति ॥ १४५ ॥
कारणगतचैतन्यं चैतन्यान्तरमिहार्जयेन्न कुतः ।
कार्यं यज्जगदखिलं तदचेतनमेव दृश्यते लोके ॥ १४६ ॥
तस्मात्कथमिह जगतो जन्मस्थित्यन्तकारणं ब्रह्म ।
इत्याशङ्कां निरसितुमिदमधिकरणं कृतं मुनीन्द्रेण ॥ १४७ ॥

महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ ११ ॥

कारणगतगुणजातं यद्यत्कार्ये समानजातीयम् ।
आरभते किल तत्तद्गुणान्तरमिति ह नैष नियमोऽस्ति ॥१४८॥
काणभुजे किल समये सोऽयं सृष्टिप्रकार उपदिष्टः ।
परमाणवः किलामी पूर्वमनुत्पन्नकार्यसंरम्भाः ॥ १४९ ॥
पश्चाददृष्टसचिवास्ते खलु संयोगसहकृताः सन्तः ।
व्यणुकादिकं हि सकल ब्रह्माण्डान्तं जगत्सृजन्तीति ॥ १५० ॥
शुक्लादिगुणविशेषाः परमाणुगुणाणुहेतुके द्व्यणुके ।
अपराञ्शुक्लादिगुणान्समजातीयान्समारभन्त हि ॥ १५१ ॥
परमाणुगुणविशेषः परिमाणं यच्च पारिमाण्डल्यम् ।
तत्किल समजातीयं द्व्यणुके नैवाऽऽरभेत परिमाणम् ॥ १५२ ॥
परिमाणे चाणुत्वह्रस्वत्वे द्व्यणुकवृत्तिनी भवतः ।
द्वे द्व्यणुके संवलिते चतुरणुकं यदाऽपि जनयन्ति ॥ १५३ ॥
द्व्यणुकगतं परिमाणं न त्र्यणुकादौ सरूपमारभते ।
द्व्यणुकगते चाणुत्वह्रस्वत्वे वर्णयन्ति परिमाणे ॥ १५४ ॥
त्र्यणुके चतुरणुके वा महत्त्वदीर्घत्वसंज्ञके भवतः ।
कारणगुणतायां किल तुल्यायां चात्र भवति वैषम्यम् ॥ १५५ ॥
शुक्लादिगुणविशेषाः परमाणुगताः समानजातीयान् ।
द्व्यणुकादिकार्यजाते शुक्लादीनारभन्त एवान्यान् ॥ १५६ ॥
नैवाऽऽरभते किंचित्परमाणुगतं हि पारिमाण्डल्यम् ।
इति किल काणादनये वैषम्यं भवति तद्वदत्रापि ॥ १५७ ॥
चेतनकारणवादेऽप्युपपन्नं भवति सकलमेवेदम् ।
कारणसमाश्रितं किल चैतन्यं जगति नाम वर्तेत ॥ १५८ ॥
अस्तित्वलक्षणोऽसौ कारणधर्मस्तु वर्तते कार्ये ।
इति किल सत्युपपत्तौ तदिदं कथमत्र दूषणं भवति ॥ १५९ ॥

अथ तत्र युक्तमेतत्परिमाणेन च विरोधिनाऽऽक्रान्तम् ।
द्व्यणुकादिकार्यजातं तेनाजनकं हि पारिमाण्डल्यम् ॥ १६० ॥
चेतनकारणपक्षे जगदेतच्चेतनाविरुद्धेन ।
नैवाऽऽक्रान्तं दृष्टं तेन कुतो नाऽऽरभेत चैतन्यम् ॥ १६१ ॥
कार्ये चैतन्यान्तरमिति शङ्का दुर्धरेयमिति चेन्न ।
कारणगतमपि चेतन्न यथाऽऽरभते हि पारिमाण्डल्यम् ॥ १६२ ॥
तद्वच्चैतन्यमपीत्ययमंशो भवति तुल्य उभयत्र ।
न हि सर्वांशे साम्यं दृष्टान्ते क्वापि दृश्यते लोके ॥ १६३ ॥
किंच विरोधाक्रान्तं कार्यं परिमाणजननतः पश्चात् ।
प्राक्परिमाणारम्भात्परिमण्डलताऽऽरभेत तन्न कुतः ॥ १६४ ॥
परिमाणान्तरजनने परिमण्डलतेयमन्यथा सिद्धा ।
यस्मात्परिमाणान्तरमुपदिष्टं ह्यन्यहेतुकं मुनिना ॥ १६५ ॥
कारणबहुत्वमपि वा तथैव कारणमहत्त्वमपि वा स्यात् ।
प्रचयविशेषोऽप्यथ वा कार्यमहत्त्वैकसाधनं नान्यत् ॥ १६६ ॥
त्रितयायत्तं च महत्त्वं तद्विपरीतं ह्यणुत्वमिह भवति ।
दीर्घत्वह्रस्वत्वे तत्सहचरिते तथाविधे भवतः ॥ १६७ ॥
इति यत्सूत्रितमेतत्कणादमुनिना च तदपि निर्मूलम् ।
कारणबहुतादौ वा परमाणुगते च पारिमाण्डल्ये ॥ १६८ ॥
कारणगुणतासाम्ये महत्त्वहेतुर्बहुत्वमेवेति ।
विनिगमनायां बीजं वर्णयितुं नेह शक्यते किमपि ॥ १६९ ॥
द्रव्यगुणान्तरयोर्यो ह्यारम्भ. कारणस्थगुणजाते ।
स्वाश्रयसमवायेन तु गुणान्तरारम्भकत्वमविशिष्टम् ॥ १७० ॥
तस्मात्स्वतोऽत्र वाच्या नाऽऽरम्भकता हि पारिमाण्डल्ये ।
तद्वच्चेतनताया अपीति नैवेह दोषशङ्का स्यात् ॥ १७१ ॥
कारणसमवेतो यो विशेषगुण एव कार्यजाते हि ।
स्वसजातीयगुणान्तरमापादयतीति नायमेकान्तः ॥ १७२ ॥
चित्रपटरूपकारणतन्तुगते शुक्लनीलपीतादौ ।
स्वसजातीयार्जकताभङ्गाद्व्यभिचार एष दुर्वारः ॥ १७३ ॥
संयोगादपि लोके कार्यद्रव्यं विलक्षणं दृष्टम् ।
एवमुदाहरणानि प्रथितान्येव हि विलक्षणारम्भे ॥ १७४ ॥

तस्माच्चेतनमेकं जगतो जन्मादिकारणं नान्यत् ।
तत्र च कणाददर्शिततर्कविरोधः पदं न विदधाति ॥ १७५ ॥
नन्वीश्वरानधिष्ठितमिदं प्रधानं न कारणं जगतः ।
इत्यादियुक्तिजालैः प्रधानवादो हि निरसितः पूर्वम् ॥ १७६ ॥
इह च परमाणुवादे न तथा दोषावकाशलेशोऽस्ति ।
यस्मादीशसहाया अणवोऽत्र भवन्ति जगदुपादानम् ॥ १७७ ॥
इति खलु परमाणूनां कारणतापक्षमखिलमुन्मूल्य ।
काणादानां समयं निरसितुमधिकरणमेतदाह मुनिः ॥ १७८ ॥

उभयथाऽपि न कर्मातस्तदभावः ॥ १२ ॥

स ह्यणुकारणवादः प्रपञ्चितश्चैवमत्र काणादैः ।
लोके पटादिकार्यं सावयवं सकलमेव यद्दृष्टम् ॥ १७९ ॥
संयोगकृतसहायैः स्वानुगतैरवयवैस्तदारब्धम् ।
तत्सामान्याद्यदिदं क्षितिजलतेजोनिलाख्यमखिलमपि ॥ १८० ॥
स्वानुगतैश्चानेकैरारब्धं ह्यवयवैः ससंयोगैः ।
अवयव्यवयवभावः सोऽयं यस्मान्निवर्तते स खलु ॥ १८१ ॥
अपकर्षावधिभूतः परमाणुः स च चतुर्विधो भवति ।
सकलमपि कार्यजातं ह्याद्यन्तवदेव दृश्यते लोके ॥ १८२ ॥
कारणविधुरं चैतत्कार्यं न क्वापि दृश्यते जगति ।
अत इह जगतः कारणमणवो हीति प्रदर्शितं मुनिना ॥ १८३ ॥
तेषामपकर्षावधिभूतानां न परतो विभागः स्यात् ।
अण्वन्तो हि विभागो भूम्यादीनां विनश्यतां भवति ॥ १८४ ॥
नैव विभागावस्थाप्रलयः सकलस्य भूतवर्गस्य ।
तत इह सृष्ट्यारम्भे वायुपराण्वदृष्टसापेक्षम् ॥ १८५ ॥
कर्मोत्पन्नमणुं तं स्वाश्रयमण्वन्तरेण योजयति ।
भवति ततो द्व्यणुकादिक्रमेण वायुः प्रजायते स्थूलः ॥ १८६ ॥
एवमयमग्निरापः पृथिवी च शरीरमिन्द्रियं सकलम् ।
भवति हि परमाणुभ्यस्तद्रूपाद्द्व्यणुकरूपमपि चैवम् ॥ १८७ ॥
तन्तुपटन्यायेनेत्यभिमन्यन्ते हि ते च काणादाः ।
तत्पक्षं निरसितुमिह तदेतदभिधीयते हि सूत्रकृता ॥ १८८ ॥
तत्र विभागदशायां परमाणूनां हि कर्मसापेक्षः ।
संयोगः स्याल्लोके कर्मवतां दृश्यते हि संयोगः ॥ १८९ ॥

कर्म च कार्यं यस्मात्तस्य निमित्तं हि किमपि वक्तव्यम्।
यदि च निमित्तं न स्यात्परमाणुषु कर्म चाऽऽद्यमपि न स्यात्॥
यत्नो वाऽप्यभिघातो निमित्तमुपगम्यते यथादृष्टम्।
तस्येहानुपलम्भात्परमाणुषु नापपद्यते कर्म॥ १९१॥
तस्यां चावस्थाया देहवियोगात्कथं भवेद्यत्नः।
देहप्रतिष्ठितेऽस्मिन्मनसि यदा चाऽऽत्मना मनोयोगः॥ १९२॥
आत्मगुणो यत्नोऽसौ जायेत तदा न चान्यथा भवति।
अभिघाताद्यपि दृष्टं प्रत्याख्यातं निमित्तमिह भवति॥ १९३॥
सर्गोत्तरकाल स्यात्कर्म निमित्तं तदेतदखिलमपि।
अथ यद्यदृष्टमेव हि निमित्तमिह यस्य कर्मणो ब्रूपे॥ १९४॥
आत्मनि समवेतं स्याददृष्टमथ वाऽणुमात्रसमवेतम्।
इदमुभयथाऽपि नाणुषु कर्म निमित्तं ह्यचेतनं यस्मात्॥ १९५॥
यच्चेतनानधिष्ठितमचेतनं तत्कथं प्रवर्तयति।
आत्मा तदवस्थायामचेतनोऽजातचेतनत्वेन॥ १९६॥
अभ्युपगतमेतत्खल्वदृष्टमप्यात्ममात्रसमवायि।
तेनासंबन्धे कथमणुषु भवेत्कर्मणो निमित्तं तत्॥ १९७॥
यदि चादृष्टवता किल संबन्धोऽयं हि कर्ममूलः स्यात्।
संबन्धसततभावात्प्रवृत्तिसातत्यमपरिहार्यं स्यात्॥ १९८॥
तस्मात्कर्म निमित्त नियतं नैवोपलभ्यते यस्मात्।
कर्मनिबन्धन इह किल संयोगो नाणुषूपजायेत॥ १९९॥
संयोगस्याजनने सर्गो वा तन्निबन्धनश्च कथम्।
अण्वन्तरेण चाणोः संयोगः स्याद्यदैकदेशेन॥ २००॥
सावयवत्वापत्त्या ह्यनित्यता तेषु दुर्निवारैव।
सर्वांशेन यदा स्यात्प्रथिमानुपपत्तिरपरिहार्यैव॥ २०१॥
कल्पितदेशेन स चेत्संयोगः कथमकल्पितो भवति।
तस्यापि कल्पितत्वे द्व्यणुकादेर्वास्तवस्य कार्यस्य॥ २०२॥
संयोगोऽसावण्वोर्भवेदसमवायिकारणं हि कथम्।
सर्गादावणुषु यथा संयोगार्थं न संभवेत्कर्म॥ २०३॥
एवं प्रलयावसरे कर्म विभागार्थमनुपपन्नं हि।
कर्मनिमित्ताभावो योऽसौ तत्रापि तुल्य एव स्यात्॥ २०४॥

यच्चादृष्टं तदपि च भोगार्थं नैव भवति विलयार्थम् ।
तस्मादणुकारणता सुसमर्था नेह भवति युक्ततमा ॥ २०५ ॥

समवायाभ्युपगमाच्च साम्या-
दनवस्थितेः ॥ १३ ॥

अण्वोः समवैतीदं द्व्यणुकमणुभ्यां हि भिन्नमत्यन्तम् ।
समवायलक्षणेन हि संबन्धेनेति कणभुगभिमानः ॥ २०६ ॥
द्व्यणुकमणुभ्यां भिन्नं समवायमपेक्षते हि संबन्धम् ।
स्वावस्थितये चाण्वोः समवायोऽपि च तथैव किं न स्यात् ॥ २०७॥
द्व्यणुकस्यैवास्यापि हि समवायस्यापि भेदसाम्येन ।
यदि समवायोऽप्येवं संबन्धान्तरमपेक्षते तर्हि ॥ २०८ ॥
तत्संबन्धोऽप्येवं संबन्धान्तरमपेक्षते न कुतः ।
एवं सत्यनवस्था तदत्र पक्षे हि भवति दुर्वारा ॥ २०९ ॥
समवायः संबन्धः संबन्धान्तरमपेक्षते न यदि ।
संयोगश्च तथैव हि नापेक्षेतापरं हि समवायम् ॥ २१० ॥
संयोगो हि गुणत्वात्संबन्धमपेक्षते न समवायः ।
इति च मनोरथमात्रं तुल्यमपेक्षानिमित्तमुभयत्र ॥ २११ ॥
तस्मादनवस्थेयं समवायाभ्युपगमे हि दुर्वारा ।
सत्यामनवस्थायामेकासिद्धावसिद्धमिह सकलम् ॥ २१२ ॥
द्व्यणुकमणुभ्यां द्वाभ्यां नैवोत्पद्येत चाप्रमाणत्वात् ।
अणुकारणतावादस्तस्मादयमनुपपन्न एवेह ॥ २१३ ॥

नित्यमेव च भावात् ॥ १४ ॥

अणवः प्रवृत्तिभावा निवृत्तिभावाः किमुभयथाभावाः ।
अनुभयभावा वा स्युर्नैव चतुर्धोपपद्यते चायम् ॥ २१४ ॥
नित्यप्रवृत्तिभावात्प्रलयाभावः प्रवृत्तिभावत्वे ।
नित्यनिवृत्तेर्भावात्सर्गाभावो निवृत्तिभावत्वे ॥ २१५ ॥
उभयस्वभावतेयं लोके नैवोपपद्यते क्वापि ।
अनुभयभावत्वेऽपि प्रवृत्तिभावे निवृत्तिभावे वा ॥ २१६ ॥
अङ्गीक्रियमाणेऽपि हि निमित्तवशतस्तथाऽपि दोषः स्यात् ।
तत्र यदाऽदृष्टं स्यान्निमित्तमेतस्य नित्यसांनिध्यात् ॥ २१७ ॥
नित्यं प्रवृत्तिरेव स्यादथ तस्याप्यतन्त्रतायां स्यात् ।
नित्याप्रवृत्तिरेव स्यादिति दूषणमशक्यपरिहारम् ॥ २१८ ॥

रूपादिमत्त्वाच्च विपर्ययो
दर्शनात् ॥ १५ ॥

रूपादिमच्च सकलं पटादि दृष्टं हि जगति सावयवम् ।
स्थूलमनित्यं च तथा स्वकारणापेक्षया हि तद्दृष्टम् ॥ २१९ ॥
तन्तूनपेक्ष्य चायं पटस्तथा तन्तवो निजावयवान् ।
इति खलु सकलं दृष्टं तथैव परमाणवोऽपि किं न स्युः ॥२२० ॥
रूपादिमत्त्वहेतुः परमाणुष्वपि यतोऽविशिष्टः स्यात् ।
परमाणूनां हि तदा नित्यत्वविपर्ययः प्रसज्येत ॥ २२१ ॥
नित्यत्ववादिनस्तव परमाणूनामनित्यताऽनुचिता ।
तस्मादणुवादोऽयं न कथंचिदपीह घटयितुं शक्यः ॥ २२२ ॥
सदकारणवन्नित्यं त्विति यन्नित्यत्वकारणं कथितम् ।
तदपि च परमाणूनां कारणवत्वान्निराकृतं भवति ॥ २२३ ॥
नित्यत्वप्रतिषेधो लोके प्रतियोगिनियतसाकाङ्क्षः ।
नित्यत्वाकाङ्क्षी सन्स एव परमाणुनित्यताकाङ्क्षी ॥ २२४ ॥
तस्मादणवो नित्या इत्यपि नैवाणुनित्यतामानम् ।
नित्ये यस्मिन्कस्मिन्नसत्यनित्यमिति नञ्समासोऽयम् ॥ २२५ ॥
न हि भवतीति हि सत्यं न तावतैवाणुनित्यतासिद्धिः ।
नित्यं ब्रह्माऽऽलम्ब्यैवेह समासोऽपि सोऽयमुपपन्नः ॥ २२६ ॥
नित्यत्वे कारणमिह यदविद्येति च तृतीयमिह कथितम् ।
सा चाविद्या हि यदा प्रत्यक्षेणेह कारणाग्रहणम् ॥ २२७ ॥
द्व्यणुकादिनित्यताऽपि स्यादिह दूषणमशक्यपरिहारम् ।
यदि च विशिष्येतासमवेतद्रव्यात्मकत्वयोगेन ॥ २२८ ॥
पूर्वेणैव गतार्थं त्विह पुनरुक्तं निरर्थकं तत्स्यात् ।
पूर्वत्राभिहितं स्यात्कारणवत्वेन दूषणं तदिह ॥ २२९ ॥
कारणनाशात्कारणविभागतोऽन्यस्य नाशकस्येह ।
योऽयमभावोऽविद्या सैवाणूनां हि नित्यतागमकम् ॥ २३० ॥
इति न विनश्यद्वस्तु द्वाभ्यामेव हि यदा विनश्येत ।
भवति तदेयमविद्या परमाणूनां हि नित्यतागमकम् ॥ २३१ ॥
संयोगसचिवमेवानेकमिहाऽऽरम्भकं यदि द्रव्यम् ।
भवति तदैवं हि यदा सामान्यमपास्तभेदमिह जनकम् ॥२३२ ॥

सविशेषावस्थान्तरमापद्याऽऽरम्भकं यदा भवति ।
घृतकठिनतादिलयवन्मूर्तावस्थादिविलयनेनापि ॥ २३३ ॥
कार्यविनाशोत्पत्तेरुक्ताविद्यादिवर्णनं हि वृथा ।
तस्मात्सावयवानामवयवशोऽपि हि विभज्यमानानाम् ॥ २३४ ॥
यत्र च परो विभागो न भवति खलु ते चतुर्विधा ह्यणवः ।
रूपादिमन्त एते नित्याश्चाऽऽरम्भका हि भूतानाम् ॥ २३५ ॥
इति वैशेषिकपक्षो भवति निरालम्बनो वृथैवायम् ।
रूपादिमत्त्वयोगादणुत्वनित्यत्ववैपरीत्येन ॥ २३६ ॥

उभयथा च दोषात् ॥ १६ ॥

गन्धरसरूपसहितस्पर्शा स्थूलेयमवनिरिह दृष्टा ।
रसरूपस्पर्शगुणाः सूक्ष्मा आपस्तथैव तेजोऽपि ॥ २३७ ॥
रूपस्पर्शगुण तत्सूक्ष्मतरं भवति वायुरेष तथा ।
स्पर्शगुणः सूक्ष्मतमो भूतान्येतानि सन्ति चत्वारि २३८ ॥
उपचितगुणभेदेन हि तरतमभावेन जगति लक्ष्यन्ते ।
उपचितगुणादिभेदात्तरतमभावोऽयमणुषु कल्पेत ॥ २३९ ॥
उपचितगुणतायां स्यात्तेषां मूर्त्युपचयोऽपि दुर्वारः ।
मूर्त्युपचये ह्यणूनामनणुत्वापत्तिरत्र दुर्वारा ॥ २४० ॥
यत्र गुणोपचयः स्यान्मूर्तेरप्युपचयोऽपि तत्र स्यात् ।
कार्यात्मकेषु भूतेष्वेवं दृष्टं यतो हि सर्वत्र ॥ २४१ ॥
यद्येतद्दोषभयान्नोपचितादिगुणत्वमिह न स्यात् ।
सर्वे चैकैकगुणाश्चतुर्गुणाश्चापि सर्व एव स्युः ॥ २४२ ॥

अपरिग्रहाच्चात्यन्तमनपेक्षा ॥ १७ ॥

सत्कार्यतावलम्बान्मन्वाद्यैरपि च परिगृहीतत्वात् ।
साधुः प्रधानवादः स कथंचित्स्यान्न चाणुवादोऽयम् ॥ २४३ ॥
नासौ शिष्टगृहीतः केनाप्यंशेन तेन चैतस्मिन् ।
अनपेक्षा कर्तव्या श्रेयस्कामेन चाऽऽदरः कार्यः ॥ २४४ ॥
किंच द्रव्यगुणादीन्षडपि पदार्थान्परस्परं भिन्नान् ।
अभिधाय पुनरिहैव त्विदमपरं कल्पयन्ति काणादाः ॥ २४५ ॥
गुणकर्मादीनां हि द्रव्याधीनत्वमिति तु कथयन्ति ।
तच्चायुक्तं ह्येते यदि भिन्ना न हि परस्पराधीनाः ॥ २४६ ॥

न हि शशकाशपलाशा भिन्नाः सन्तः परस्पराधीनाः।
द्रव्यगुणादीनामिह भिन्नत्वं वा न युज्यते यस्मात् ॥ २४७ ॥
तादात्म्यमेव तेषां परस्परं हि प्रतीयते लोके।
द्रव्यगुणादीनां न ह्यश्वद्विपयोरिवास्ति भेदमतिः ॥ २४८ ॥
नन्विह चक्षुर्ग्राह्यं रूपं स्पर्शस्त्वगिन्द्रियग्राह्यः।
उभयग्राह्यश्च घटः कथमिह तादात्म्यमेतयोरिति चेत् ॥ २४९ ॥
सत्यपि तादात्म्ये किल भेदमतिर्बाह्यरूपसापेक्षा।
एकः पुमान्हि लोके पिता च पुत्रस्तथैव जामाता ॥ २५० ॥
श्वशुरः शालक इत्यपि भेदमतिभाग्यथैव भवति तथा।
ग्राहकभेदापेक्षा भेदमतिः स्यात्स्वरूपसापेक्षम् ॥ २५१ ॥
तादात्म्यं चेत्युभयं ह्यभेदपक्षेऽपि बाधकं न भवेत्।
तस्माद्द्रव्यगुणानां द्रव्याधीनत्वमपि च भिन्नत्वम् ॥ २५२ ॥
नापि प्रमाणगम्यं नैव हि युक्त्येकसाधनं भवति।
ननु गुणकर्मादीनां द्रव्याधीनत्वमत्र युक्तं हि ॥ २५३ ॥
द्रव्यगुणौ तु विभिन्नौ तथाऽपि तावयुतसिद्धरूपौ यत्।
द्रव्याधीनत्वं तद्गुणादिकानां सुयुक्तमेव स्यात् ॥ २५४ ॥
शशकुशकाशादीनां नायुतसिद्धत्वमस्ति कुत्रापि।
तेन न तेषामेषां परस्पराधीनतेति चेन्नैवम् ॥ २५५ ॥
अपृथग्देशत्वं वा ह्यपृथक्कालत्वमपृथगात्मत्वम्।
तच्चायुतसिद्धत्वं वाच्यं तदिदं त्रिधाऽपि नो भवति ॥ २५६ ॥
अपृथग्देशत्वं हि द्रव्यगुणानां कथंचिदपि न स्यात्।
रूपादि हि पटदेशं पटस्तु तन्तुप्रदेश एव यतः ॥ २५७ ॥
अपृथक्कालत्वं चेत्तदपि विरुद्धं भवेद्भवत्पक्षे।
उत्पन्नेषु पटादिषु पश्चादुत्पद्यते हि रूपादि ॥ २५८ ॥
कथमीदृशयोस्तत्स्यादपृथक्कालत्वमयुतसिद्धत्वम्।
धेनुविषाणकयोरपि तत्स्याद्यद्येदमयुतसिद्धत्वम् ॥ २५९ ॥
यच्चापृथगात्मत्वं तत्स्वाभ्युपगमविरुद्धमेव स्यात्।
न ह्यवयवसंयोगादेव च कार्यं प्रजायते लोके ॥ २६० ॥
संयोगमन्तरायाद्दधिहिमकरकादि दृश्यते लोके।
तस्मादणुवादोऽयं श्रेयस्कामैरुपेक्षणीयः स्यात् ॥ २६१ ॥

वैशेषिकसमये किल देहोऽयं चाऽऽशुतरविनाशी स्यात् ।
परिमाणान्तरजननात्तद्धर्मवैनाशिकं (?) हि कथयन्ति ॥ २६२ ॥
तत्पक्षनिरसनान्ते सकलो वैनाशिकोऽपि बुद्धिस्थः ।
इति खलु तत्पक्षोऽयं निरस्यते सपदि सूत्रकारेण ॥ २६३ ॥

समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥ १८ ॥

स च खलु बहुप्रकारो बुद्धिविभेदाद्विनेयभेदाद्वा ।
तत्र त्रय एते स्युः केचित्सर्वास्तितां तु कथयन्ति ॥ २६४ ॥
कथयन्ति केचिदत्र तु विज्ञानास्तित्वमात्रमेव किल ।
अस्य तु वर्णयन्ति हि यदिदं सकलं च शून्यमेवेति ॥ २६५ ॥
ये सर्वास्तित्वपरा बाह्यं भूतं च भौतिकं चापि ।
चित्तं चैत्तं चान्तरमभ्युपगच्छन्ति तान्निराचष्टे ॥ २६६ ॥
[स्कन्धाणुहेतुको यः] समुदाय उभयहेतुकेऽपि तदप्राप्तिः ।
पृथिवीजलतेजोनिलचतुष्टयं भूतमिति तु कथयन्ति ॥ २६७ ॥
भौतिकमिह रूपादिकमपि चक्षुष्प्रमुखमिन्द्रियं चेति ।
भूतं भौतिकमेतत्सकलं ह्यणवोऽत्र संहता एव ॥ २६८ ॥
चित्तं चैत्तं च तथा रूपं विज्ञानवेदने चैवम् ।
संज्ञाः संस्काराख्याः पञ्च स्कन्धाश्च संहता एव ॥ २६९ ॥
तत्रेदमनुपपन्नं यच्चोभयहेतुकश्च समुदायः ।
अणुहेतुकश्च योऽसौ यश्च स्कन्धैकहेतुको वाऽपि ॥ २७०
अङ्गीकृतेऽपि तस्मिन्समुदायापास्तिरत्र दुर्वारा ।
यस्मादणवः स्कन्धा अचेतना एव केवलं ते स्युः ॥ २७१ ॥
यदि संहता न भोक्ता कश्चिच्चेतन इहोपपन्नः स्यात् ।
भवति तदा संघातः सचेतनस्तव न चास्ति सहन्ता ॥ २७२ ॥
तस्मादुभयविधोऽसौ संघातो नोपपद्यते योऽयम् ॥ २७३ ॥

इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात् ॥ १९ ॥

इह सौगतीयसमये या चाविद्याऽथ यश्च संस्कारः ।
विज्ञानं नाम तथा रूपं यदिदं षडायतनमपि च ॥ २७४ ॥
स्पर्शोऽपि वेदनेयं तृष्णापादानसंज्ञिके च तथा ।
यच्च भवो जातिरियं जरा च परिवेदना च मरणं च ॥ २७५ ॥

दुःखं च दुर्मनस्तेत्येवंरूपाणि सुप्रसिद्धानि ।
तानीह चेतनेतरजनकानि यतो भवन्ति चैतस्य ॥ २७६ ॥
संघातस्य निमित्तं तान्येव स्युरिति नैवमाशङ्क्यम् ।
संघातमनवलम्ब्य ह्यात्मानं ये च नोपगच्छन्ति ॥ २७७ ॥
ते चाविद्यादय इह संघातनिमित्ततां कथं यान्ति ।
संघातसिध्द्यनन्तरमिह चाविद्यादिसंततिः प्रभवेत् ॥ २७८ ॥
चित्ताभिज्वलनमिदं न तु संघातस्य कारणं भवति ।
संघाते सिद्धे सति चित्ताभिज्वलनमेतदुद्भवति ॥ २७९ ॥
आशयसंज्ञं चाऽऽलयविज्ञानं नो निमित्तमस्य स्यात् ।
समुदायेभ्यो ह्यस्य त्वस्य त्वा(?)नन्यतादिदुर्बोधम् ॥ २८० ॥
तस्मात्परमाणूनामचेतनत्वाद्धि चेतनस्येह ।
संघातु(हन्तु)रप्यभावात्संघातः कथमिहोपपद्येत ॥ २८१ ॥
संघातस्याभावे कथं नु तन्मूललोकयात्रा स्यात् ।
संघात एव केवलमिह संघातस्य कारणं यदि तु ॥ २८२ ॥
पूर्वस्मात्संघातात्संघातान्तरमपूर्वमिह यत्स्यात् ।
तत्किं सदृशं वा स्यादसदृशमथ वाऽपि विसदृशं वा स्यात्॥२८३॥
यदि सदृशं नियमेन स्याच्च तदा मर्त्यपुद्गलस्येह ।
कर्मविपाकवशादिह न स्याद्देवासुरादितनुयोगैः ॥ २८४ ॥
विसदृशमसदृशमथ वा यदि संघातान्तरं प्रजायेत ।
स च मनुजपुद्गलोऽसौ क्षणेन हस्त्यश्वजन्म किं न लभेत्॥२८५॥
अपि यद्भोगार्थोऽसौ संघातस्तेन न स्थिरो भोक्ता ।
भोगो भोगार्थः स्यान्मोक्षो मोक्षार्थ एव यदि चैवम् ॥ २८६ ॥
यद्यन्यः प्रार्थयिता भूयाद्भोगापवर्गसमयेऽपि ।
तदवस्थानापत्त्या क्षणभङ्गकथा सुदूरतोऽपास्ता ॥ २८७ ॥

उत्तरोत्पादे च पूर्वनिरोधात् ॥ २० ॥

उक्तमविद्यादीनां परस्परोत्पत्तिमात्रहेतुत्वम् ।
नैतावताऽपि सोऽयं संघातः सिध्यतीति चाप्युक्तम् ॥ २८८ ॥
अत्राविद्यादीनां संप्रत्युत्पत्तिमात्रहेतुत्वम् ।
न कथंचन संभवतीत्येतत्प्रतिपाद्यतेऽत्र निपुणतरम् ॥ २८९ ॥
क्षणभङ्गवादिना खल्वेवं निर्दिश्यते च सर्वत्र ।
उत्तरवस्तूत्पादे निरुध्यते पूर्वमखिलमेवेति ॥ २९० ॥

अभ्युपगच्छन्नेवं पूर्वोत्तरयोर्हि हेतुफलभावम् ।
वैनाशिकः कथंचन न समर्थयितुं हि शक्नुयात्तमिमम् ॥ २९१ ॥
योऽयमभावग्रस्तो यश्च निरुद्धो निरुध्यमानो यः ।
स च कथमुत्तरहेतुर्दग्धमृदादिर्घटादिकस्येव ॥ २९२ ॥
अथ भावभूत एव हि परिनिष्पन्नक्षणोऽस्ति यः पूर्वः ।
स भवत्युत्तरहेतुस्तत्र न पूर्वोक्तदोष इति चेन्न ॥ २९३ ॥
भवति तथाऽपि च दोषो यद्युत्तरकार्यहेतुतासिद्ध्यै ।
व्यापारः पुनरन्यः परिनिष्पन्नस्य भावभूतस्य ॥ २९४ ॥
क्षणभङ्गवादहानिं क्षणान्तरस्थायिताप्रसङ्गेन ।
अथ भाव एव चास्य व्यापारः स्यात्तथाऽपि दोषः स्यात्॥२९५॥
हेतुस्वभावशून्यात्फलस्य चोत्पत्त्यसंभवो यस्मात् ।
हेतुस्वभावयोगे फलकालस्थायिताप्रसङ्गेन ॥ २९६ ॥
क्षणभङ्गवादभङ्गः पूर्वोक्तो दुर्निवार एवात्र ।
हेतुस्वभावयोगं विना विफलहेतुताऽस्य कल्पेत ॥ २९७ ॥
सर्वत्रैव हि कार्योपत्त्येहातिप्रसङ्ग एव स्यात् ।
अपि चोत्पादनिरोधौ किंवा वस्तुस्वरूपमथ वा किम् ॥ २९८ ॥
तदवस्थान्तरमथ वा वस्त्वन्तरमिति तु नैव संभवति ।
वस्तुस्वरूपता चेद्वस्त्वन्तर्भाव एतयोर्भवति ॥ २९९ ॥
तेनानादित्वं चानन्तत्वं वस्तुनोऽत्र दुर्वारम् ।
आद्यन्तावस्थे यद्युत्पादनिरोधसंज्ञिके भवतः ॥ ३०० ॥
आद्यन्तमध्यवर्तिक्षणत्रयस्थायिताऽस्य दुर्वारा ।
यदि चोत्पादनिरोधौ व्यतिरिक्तावेव वस्तुनो भवतः ॥ ३०१ ॥
ताभ्यामस्पृष्टत्वाद्वस्तुन एवास्य शाश्वतत्व स्यात् ।
यदि चादर्शनदर्शनरूपौ स्यातां न वस्तुधर्मौ तौ ॥ ३०२ ॥
द्रष्टृगतौ किल ताभ्यामस्पृष्टं वस्तु शाश्वतं न कुतः ।
तस्मात्सौगतमेतन्मतमग्राह्यं न युक्तमिह यस्मात् ॥ ३०३ ॥

असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॥ २१ ॥

हेतावसति यदि स्यात्फलं प्रतिज्ञोपरोध एव स्यात् ।
विषयः करणं यत्स्यात्सहकारी यश्च भवति संस्कारः ॥ ३०४ ॥
एते चतुर्विधाः किल हेतव एतान्प्रतीत्य जायन्ते ।
ते चित्तचैत्तसंज्ञा इति प्रतिज्ञा हि बाधिता भवति ॥ ३०५ ॥

अथ यदि फलपर्यन्तं पूर्वं वस्तु प्रतीक्षते कालम् ।
संस्काराः सर्वेऽपि क्षणिका इत्यस्य भङ्ग एव स्यात् ॥ ३०६ ॥

प्रतिसंख्याप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात् ॥ २२ ॥

अपि यच्च बुद्धिबोध्यं त्रयाद्यदन्यच्च संस्कृतं क्षणिकम् ।
वैनाशिका इतीह क्षणिकत्वं कल्पयन्ति भावानाम् ॥ ३०७ ॥
प्रतिसंख्याप्रतिसंख्यानिरोधसंज्ञा च यदपि चाऽऽकाशम् ।
त्रयमिदमवस्तुभूतं निरुपाख्यमभावमात्रमेवेति ॥ ३०८ ॥
प्रतिसंख्याख्यनिरोधो भावानां बुद्धिपूर्वको नाशः ।
तद्विपरीतश्चान्यो ह्यावरणाभावमात्रमाकाशम् ॥ ३०९ ॥
संस्कृतमुत्पन्नं स्यात्प्रमेयमेवेह बुद्धिबोध्यं स्यात् ।
सपदि निरोधद्वितयं प्रत्याचष्टे हि सूत्रकारोऽयम् ॥ ३१० ॥
प्रतिसंख्याप्रतिसंख्यानिरोधयोर्नेह संभवो घटते ।
संतानगोचरौ वा स्यातामथ भावगोचरौ वा तौ ॥ ३११ ॥
संतानेषु च सर्वेष्वथापि संतानिनामविच्छेदात् ।
फलहेतुभावयोगे कथमिह संतानविच्युतिर्भवति ॥ ३१२ ॥
अथ च निरोधावेतौ तथैव न हि भावगोचरौ भवतः ।
न हि भावानां लोके निरन्वयो वा तथैव निरुपाख्यः ॥ ३१३ ॥
क्वापि विनाशो यस्मादन्वय्यवियोगमेव लोकोऽयम् ।
प्रत्यभिजानात्यत इह भावानां न हि निरन्वयो नाशः ॥ ३१४ ॥
तस्मात्सर्वावस्थास्वप्यन्वयिनां कदाऽप्यविच्छेदात् ।
परपरिकल्पितमेतन्निरोधयुग्मं न चोपपद्येत ॥ ३१५ ॥

उभयथाऽपि च दोषात् ॥ २३ ॥

योऽयमविद्यादीनां परपरिकल्पितनिरोध इह भवति ।
स च किं सम्यग्ज्ञानादथ वाऽन्वयमेव वेति वक्तव्यम् ॥ ३१६ ॥
निर्हेतुकनाशस्याभ्युपगमहानिस्त्विहाऽऽद्यकल्पे स्यात् ।
मार्गोपदेशयत्नानर्थक्यं चोत्तरत्र दुर्वारम् ॥ ३१७ ॥

आकाशे चाविशेषात् ॥ २४ ॥

प्रतिसंख्यादिनिरोधद्वयेऽपि निरुपाख्यता निरस्तैव ।
संप्रत्याकाशस्यापि हि निरुपाख्यत्वं निरस्यते भूयः ॥ ३१८ ॥

आत्मन आकाश इति श्रुतिवचनादस्य वस्तुतासिद्धौ ।
आवरणाभावतया निरुपाख्यत्वं न युक्तमेवास्य ॥ ३१९ ॥
अपि चाऽऽवरणाभावो यद्याकाशस्तथा हि दोषः स्यात् ।
एकस्मिन्हि सुपर्णे पतति सुपर्णान्तरस्य चोत्पित्सोः ॥ ३२० ॥
आवरणस्य च भावात्तस्याऽऽकाशत्वमनुपपन्नं स्यात् ।
अपि चाऽऽवरणाभावो यद्याकाशस्तथा हि सुगतस्य ॥ ३२१ ॥
वायुश्च वियत्संश्रय इति वाक्यं वै भवेदनुपपन्नम् ।
अपि च निरोधद्वयमिदमाकाशं च त्रयं हि निरुपाख्यम् ॥ ३२२ ॥
नित्यमवस्त्विति चैतद्विप्रतिषिद्धं हि सकलमप्येतत् ।
यदि धर्मधर्मिभावस्तदा हि वस्तुत्वमेव तस्य स्यात् ॥ ३२३ ॥

## अनुस्मृतेश्च ॥ २५ ॥

अभ्युपगच्छन्यदसौ क्षणिकत्वं सर्ववस्तुनो जगति ।
उपलब्धुरपि किलायं क्षणिकत्वं किं तथैव नोपेयात् ॥ ३२४ ॥
इह चानुस्मृतियोगादुपलब्धिरितश्च नैव संभवति ।
अनुभवमुपलब्धिमनूत्पन्नं स्मरणं ह्यनुस्मृतिर्भवति ॥ ३२५ ॥
अन्योपलब्धिविषये ह्यन्यस्यानुस्मृतेरदृष्टत्वात् ।
एकोपलब्धृकैव हि सा स्यान्नहि भिन्नकर्तृका भवति ॥ ३२६ ॥
अहमिदमद्राक्षमिदं स्मरामि चेत्येवमनुभवो लोके ।
अद्राक्षीदिदमन्यः स्मराम्यहं त्विति तु कस्यचिद्वाऽपि ॥ ३२७ ॥
नैवानुभवो दृष्टो यदस्य वैनाशिकस्य चाप्येवम् ।
यद्युपलब्धिस्मृत्योरेकः कर्ता भवेत्तदा न स्यात् ॥ ३२८ ॥
क्षणभङ्गवादसिद्धिर्यस्मादेकः क्षणद्वयानुगतः ।
उपलब्धिस्मृत्योरिह नैकः कर्ता न चापि विषयैक्यम् ॥ ३२९ ॥
यस्मात्सेयमभिज्ञा सादृश्यादेव केवलादिति चेत् ।
तेनेदं सदृशमिति द्वितयायत्तं हि भवति सादृश्यम् ॥ ३३० ॥
इह सदृशयोर्द्वयोरपि ग्रहीतुरेकस्य दुर्लभत्वेन ।
सादृश्यमूलमेतत्प्रतिसंधानमिति दुष्प्रलापः स्यात् ॥ ३३१ ॥
सादृश्यग्राह्येकः पूर्वोत्तरयोर्यथा भवेद्धि तदा ।
समयद्वयसंबन्धादेकस्य क्षणिकता कथं घटते ॥ ३३२ ॥
तेनेदं सदृशं स्यादित्येतत्प्रत्ययान्तरं भवति ।
भिन्नपदार्थग्रहणान्न पूर्वपरबोधमूलमिति चेन्न ॥ ३३३ ॥

भिन्नपदार्थग्रहणाद्भवेदिदं प्रत्ययान्तरं हि यदि।
तेनेदं सदृशमिति प्रयोग इह नैव संभवेत्किंतु ॥ ३३४ ॥
सादृश्यमात्रगोचर एव स्यात्प्रत्ययो हि न तदन्यः।
नैवं हि दृश्यते सा प्रतिसंधानं न चापि सादृश्यात् ॥ ३३५ ॥
बाह्ये वस्तुनि लोके तद्वा तत्सदृशमेव वेत्येवम्।
स्यात्संदेहः क्वापि हि न चोपलब्धिर्भवेत्ससंदेहा ॥ ३३६ ॥

नासतोऽदृष्टत्वात् ॥ २६ ॥

स्थिरमनुयायि च कारणमिह यदि वैनाशिकास्तु न सहन्ते।
भवति तदैवमभावाद्भावस्योत्पत्तिरिति तु फलितं हि ॥ ३३७ ॥
नैवाभावाद्भावः क्वचिदप्युत्पद्यमान इह दृष्टः।
यदि चाभावाद्भावः कारणसंपत्तिरनुपयुक्ता स्यात् ॥ ३३८ ॥
नानुपमृद्य प्रादुर्भावादिति ये हि वर्णयन्त्यत्र।
तत्र ह्युपमृदितानां बीजादीनां हि योऽप्यभावः स्यात् ॥ ३३९ ॥
तस्य च शशशृङ्गस्य च निरात्मकत्वेन निर्विशेषत्वात्।
क्षीरादेव दधि स्याद्बीजादेवाङ्कुरश्च भवतीति ॥ ३४० ॥
कारणविशेषविषयो निर्बन्धोऽसौ वृथैव तेषां स्यात्।
यदि निर्विशेष एवाभावो भावस्य कारणं चेत्स्यात् ॥ ३४१ ॥
कथमङ्कुरादिकार्यं नैवोत्पद्येत शशविषाणाद्यैः।
यदि चाभावस्यापि विशेषस्तदा स भावः स्यात् ॥ ३४२ ॥
यदि चाभावस्यैव हि भावोत्पत्त्यैकहेतुता तर्हि।
कार्यं सकलमभावान्वितमेव स्यान्न दृश्यते चैवम् ॥ ३४३ ॥
सकलं कार्यं यत्स्यान्मृदादिभावान्वितं हि तद्दृष्टम्।
तस्माच्च शशविषाणादसतः सत्कार्यजन्मनोऽदृष्टेः ॥ ३४४ ॥
असतश्च कारणत्वाभ्युपगम एवायमनुपपन्नः स्यात्।
तस्मादसंगतो यद्वैनाशिकसमय एष न ग्राह्यः ॥ ३४५ ॥

उदासीनानामपि चैवं सिद्धिः ॥ २७ ॥

यदि चाभावादेव हि भावस्योत्पत्तिरत्र कल्प्येत।
एवमुदासीनानामप्यभिमतसिद्धिरत्र किं न स्यात् ॥ ३४६ ॥
सर्वत्राभावः किल सुलभो यस्मात्कृषीवलस्यापि।
अकृतकृषिकर्मणः स्याद्यतमानस्येव सस्यनिष्पत्तिः ॥ ३४७ ॥

स्वर्गापवर्गयोर्वा नैव हि कश्चिज्जनः समीहेत ।
तस्मात्सोऽयमभावाद्भावोत्पादोऽयमत्र न हि युक्तः ॥ ३४८ ॥

नाभाव उपलब्धेः ॥ २८ ॥

इह खलु बाह्यार्थकथामाश्रित्योद्भावितेषु दोषेषु ।
विज्ञानमात्रवादी बौद्ध इदानीं हि पूर्वपक्षयति ॥ ३४९ ॥
इह शिष्याभिनिवेशाद्बाह्यार्थप्रक्रियेयमारब्धा ।
विज्ञानवाद एव हि सुगताभिमतो न चेतरः कश्चित् ॥ ३५० ॥
तस्मिन्बुध्यारूढे चान्तस्थो मानमेयफलभेदैः ।
तद्रूपेण किलायं व्यवहारश्चोपपद्यते सकलः ॥ ३५१ ॥
सत्यपि बाह्यार्थेऽस्मिन्बुध्यारोहं विनैव कस्यापि ।
व्यवहारो न हि दृष्टो यस्मादन्तस्थ एव सकलोऽयम् ॥ ३५२ ॥
जात्यादयस्तथैव ह्यन्तस्था एव नातिरिक्ताः स्युः ।
ज्ञानगतं हि विशेषं विना विशेषो न बाह्यबुद्धीनाम् ॥ ३५३ ॥
विषयाकारः सकलो ज्ञानेनैवावरुध्यते यस्मात् ।
नैव हि बाह्यार्थः स्यादपार्थिका बाह्यकल्पना सकला ॥ ३५४ ॥
अपि किल सहोपलम्भाद्विषयज्ञप्त्योरभेद एव स्यात् ।
एकस्यानुपलम्भे न ह्यन्यस्योपलब्धिरिह दृष्टा ॥ ३५५ ॥
बाह्यार्थमन्तरेण स्वप्नादिप्रत्यया यथा लोके ।
जागरितगोचरा अपि रसादिमतयस्तथैव किं न स्युः ॥ ३५६ ॥
स्याद्वासनाविशेषात्प्रत्ययवैचित्र्यमसति चाप्यर्थे ।
संसारे चानादौ बीजाङ्कुरवच्च वासनानां च ॥ ३५७ ॥
ज्ञानानामन्योन्यं न प्रतिषिध्येत हेतुफलभावः ।
बाह्यार्थस्याभावाद्युक्तो विज्ञानवाद इति चेन्न ॥ ३५८ ॥
न हि बाह्यस्याभावोऽध्यवसायितुमत्र शक्यः स्यात् ।
बाह्योऽर्थोऽयं सकलो यस्मादुपलभ्यते हि सर्वत्र ॥ ३५९ ॥
उपलभ्यमानमर्थं प्रतिषेद्धुं नैव शक्नुयात्कोऽपि ।
भुञ्जानो भुजिसाध्यां तृप्तिं ह्यनुभूयमान एवेह ॥ ३६० ॥
नाहं भुञ्जे नैव हि तृप्यामीति च वदेत्कथं प्राज्ञः ।
स्वयमुपलभमानोऽसाविन्द्रियसंबद्धमर्थमिह बाह्यम् ॥ ३६१ ॥
नैवाहमुपलभे न च सोऽस्तीति वदेत्कथं जनो मान्यः ।
ननु नोपलभे बाह्यं त्विति नैवाहं ब्रवीमि किं तत्र ॥ ३६२ ॥

उपलब्धिव्यतिरिक्तं नोपलभे किमपि बाह्यमिति चेन्न ।
उपलब्धिविषयभावाद्बाह्यार्थेषु प्रतीयमानेषु ॥ ३६३ ॥
उपलब्धिव्यतिरेके प्रतीयमानेऽपि कथमियं शङ्का ।
सर्वैरपि प्रमाणैर्बाह्यार्थे चोपलभ्यमानेऽपि ॥ ३६४ ॥
व्यतिरेकादिविकल्पैः स न संभवतीति कथमिहोच्येत ।
न ज्ञानविषययोरिह सारूप्याद्विषयबाधनं भवति ॥ ३६५ ॥
असति च विषये तेन हि सारूप्यं कथमिहोपपद्येत ।
नैव च सहोपलम्भादर्थज्ञप्त्योरभेद आशङ्क्यः ॥ ३६६ ॥
सोऽयमुपायोपेयात्मकतायोगेन भेदमूलः स्यात् ।
तस्मादर्थज्ञप्त्योर्भेदोऽसौ सप्रमाण आस्थेयः ॥ ३६७ ॥
विज्ञानयोर्द्वयोरप्युपहतयोरात्मवेदनेनैव ।
इतरेतरयोर्ग्राह्यग्राहकभावोऽयमनुपपन्नः स्यात् ॥ ३६८ ॥
विज्ञानभेदविषया क्षणिकत्वाद्यर्थगोचराऽपि तथा ।
या च स्वलक्षणार्था तथैव सामान्यलक्षणार्था च ॥ ३६९ ॥
या वास्यवासकत्वाविद्योपप्लवपरा तथैवेयम् ।
सदसद्धर्मार्था या या किल बन्धापवर्गविषयाऽपि ॥ ३७० ॥
सकला अपि प्रतिज्ञा हीयेरन्याः स्वशास्त्रविहितास्ताः ।
विज्ञानमभ्युपेत्य हि नैवाभ्युपगम्यते कुतो बाह्याः ॥ ३७१ ॥
अनुभूयते यथा वा विज्ञानं तद्वदेव बाह्योऽर्थः ।
स्वयमनुभूयत एव हि विज्ञानं स्वप्रकाशरूपत्वात् ॥ ३७२ ॥
न तथा बाह्योऽर्थोऽसाविति चेदात्मनि विरुद्धमेतत्स्यात् ।
स्वात्मव्यतिरिक्तेन हि विज्ञानेनानुभूयते योऽसौ ॥ ३७३ ॥
अविरुद्धमतं बाह्यं नेच्छसि पाण्डित्यमद्भुतं तदिदम् ।
स्वव्यतिरिक्तग्राह्यं विज्ञानं यदि तदाऽनवस्था स्यात् ॥ ३७४ ॥
इति खलु नैवाऽऽशङ्क्यं यदिदं विज्ञानसाक्षिभास्यं हि ।
इह साक्षिप्रत्यययोरुपलब्ध्रुपलभ्यभावेन ॥ ३७५ ॥
वैलक्षण्यं दृष्टं प्रत्याख्यातुं न शक्नुयात्कोऽपि ।
किंच यदि भासकान्तरनिरपेक्षमिदं विभाति विज्ञानम् ॥ ३७६ ॥
तर्ह्यप्रमाणगम्यं विज्ञानमिति प्रदर्शितं हि भवेत् ।
चक्षुष्यसाधने खल्वधिगन्तरि सति यथा प्रदीपाद्यैः ॥ ३७७ ॥

प्रथनं दृष्टं तद्वद्विज्ञानस्यापि साक्षिमास्यत्वम् ।
इह साक्षिणोऽवगन्तुं स्वयंप्रसिद्धत्वमिच्छता भवता ॥ ३७८ ॥
विज्ञानवाद एव ह्ययमाश्रित इति न संभ्रमः कार्यः ।
विज्ञानस्योत्पत्तिध्वंसादिकमाश्रितं यतो भवता ॥ ३७९ ॥
व्यतिरिक्तग्राह्यत्वं विज्ञानस्य प्रसाधितं हि ततः ।

वैधर्म्याच्च न स्वप्नादिवत् ॥२९ ॥

बाह्यार्थमन्तरेण स्वप्नादिप्रत्यया यथा लोके ॥ ३८० ॥
जागरितगोचरा अपि विनैव चार्थं भवेयुरिति चेन्न ।
यत्स्वप्नजागरितयोर्वैधर्म्यं दृश्यते हि लोकेऽस्मिन् ॥ ३८१ ॥
स्वप्नोपलब्धमखिलं प्रबोधसमये न दृश्यते लोके ।
एवं मायादिष्वपि यथायथं बाध्यते हि वस्त्वखिलम् ॥ ३८२ ॥
जागरितगोचरं यद्देहप्रासादशयनभूम्यादि ।
न हि बाध्यते कदाचित्तस्माद्वैधर्म्यमेतयोर्भवति ॥ ३८३ ॥
वैधर्म्ये सति च तयोर्विनाऽपि चार्थं यथा भवेत्स्वप्नः ।
एवं जाग्रत्प्रत्यय इत्यालापो वृथा प्रलापः स्यात् ॥ ३८४ ॥
प्रत्यक्षे वैधर्म्ये साधर्म्यं कथमिहोपवर्ण्येत ।

न भावोऽनुपलब्धेः ॥ ३० ॥

बाह्यार्थमन्तरेणाप्युपपद्येतैव वासनाबलतः ॥ ३८५ ॥
ज्ञानगतं वैचित्र्यं सकलं यच्चेति नेह शङ्का स्यात् ।
यस्माच्च वासनानामपि भावो नोपपद्यते हि तव ॥ ३८६ ॥
अर्थोपलब्धियोगान्नानारूपा हि वासना लोके ।
तेष्वनुपलभ्यमानेष्वपि किंमूलास्तु वासनाः स्युरिह ॥ ३८७ ॥
यदि पूर्ववासनातः पुनरन्यद्वासनान्तरं भवति ।
अन्धपरम्परया किल तदाऽनवस्था हि दुर्निवारा स्यात् ॥ ३८८ ॥
उपलब्धिमन्तरेण हि न वासना क्वापि जायते लोके ।
अपि वासनां विनैव ह्युपलब्धिर्दृश्यते हि सर्वत्र ॥ ३८९ ॥
तस्मादर्थनिमित्ता ह्युपलब्धिरिति ह्यवश्यमिह वाच्यम् ।

क्षणिकत्वाच्च ॥ ३१ ॥

आलयविज्ञानं यत्कल्पितमिह वासनाश्रयत्वेन ॥ ३९० ॥

तदपि क्षणिकत्वेन हि न वासनानामिहाऽऽश्रयो भवति ।
कूटस्थे कालत्रयसंबन्धिनि सकलदर्शिनि ह्यसति ॥ ३९१ ॥
न हि वासनानिमित्तप्रतिसंधानाद्विलक्षणं कार्यम् ।
यदि च स्थिरस्वरूपं ह्यालयविज्ञानमभिमतं भवतः ॥ ३९२ ॥
सिद्धान्तहानिरपरो दोषोऽयं दुर्निवार एव तव ।
बाह्यार्थवादपक्षे क्षणिकत्वनिबन्धनानि यानि स्युः ॥ ३९३ ॥
तानीह दूषणानि प्रतिसंधानैकभाजनान्येव ।
बाह्यार्थवादपक्षस्तथैव विज्ञानवादपक्षश्च ॥ ३९४ ॥
तावेतौ वैनाशिकपक्षौ द्वावपि निराकृतौ भवतः ।
सर्वप्रमाणविप्रतिषिद्धोऽयं शून्यवादिपक्षः स्यात् ॥ ३९५ ॥
तस्य निराकरणे खल्वतो निमित्तादनादरः क्रियते ।

## सर्वथाऽनुपपत्तेश्च ॥ ३२ ॥

वैनाशिकसमयोऽयं यथा यथा वा परीक्ष्यते हि तथा ॥ ३९६ ॥
सिकतारूपवदेव हि विदीर्यते नोपपद्यते सोऽयम् ।
बाह्यार्थवादपक्षं तथैव विज्ञानवादपक्षमपि ॥ ३९७ ॥
शून्यार्थवादपक्षं ह्युपदिशतैव त्रयं च सुगतेन ।
स्पष्टीकृतं हि केवलमनृतासंबद्धविप्रलापित्वम् ॥ ३९८ ॥
तस्मात्सौगतसमयः श्रेयस्कामैरुपेक्षणीयः स्यात् ।
भ्रममूलकेन सौगतसिद्धान्तेनेह भवति कदाचिदपि ॥ ३९९ ॥
वेदान्तसारभूते सिद्धान्ते न हि विरोधशङ्का स्यात् ।
इति मुक्तकच्छसमये निराकृते भवति मुक्तवसनानाम् ॥ ४०० ॥
मतमिह बुध्यारूढं तस्मात्तदिदं निरस्यते सपदि ।

## नैकस्मिन्नसंभवात् ॥ ३३ ॥

विवसनसिद्धान्तोऽयं प्रमाणमूलो यतश्च तेनेह ॥ ४०१ ॥
वैदिकसिद्धान्तेऽस्मिंस्तेन विरोधो हि दुर्निवार इति ।
तत्पूर्वपक्षफलमभिसंधायैतन्मतं प्रदर्शयति ॥ ४०२ ॥
इह भोक्तृभोग्यरूपौ जीवाजीवौ विवक्षितौ तत्र ।
विषयेषु चेन्द्रियाणां प्रवृत्तिरास्रव इहोपदिष्टः स्यात् ॥ ४०३ ॥
तां संवृणोति योऽसौ यमनियमादिः स संवरो भवति ।
तप्तशिलारोहादिर्जरयति मलमिति स निर्जरो भवति ॥ ४०४ ॥

बन्धः प्रसिद्ध एव हि मोक्षः सततोर्ध्वगमनमेव स्यात् ।
इति किल सप्त पदार्थास्तेष्वपरमिमं प्रपञ्चयन्त्येते ॥ ४०५ ॥
जीवास्तिकाय एकः पदार्थ इह पुद्गलास्तिकायश्च ।
धर्मास्तिकायसंज्ञोऽप्येवमधर्मास्तिकाय आकाशः ॥ ४०६ ॥
इति सर्वेषामेषां बहुप्रभेदान्हि कल्पयन्त्येते ।
इह सप्तभङ्गिनयमिति कमपि न्यायं हि वर्णयन्त्येते ॥ ४०७ ॥
स्यादस्ति स्यान्नास्ति स्यादस्ति च नास्त्यथाऽप्यवक्तव्यः ।
स्यादस्त्यवाच्य एव स्यान्नास्ति न वाच्य एव भवति तथा॥४०८॥
स्यादस्ति च नास्ति तथा न वाच्य इति सप्तधा हि कथयन्ति ।
विवसनपरिकल्पितमिह यदेतदखिलं विरुद्धमेव स्यात् ॥ ४०९ ॥
न ह्येकस्मिन्धर्मिणि सदसद्धर्मत्वकल्पना युक्ता ।
इति चेदेवंरूपाः सप्त पदार्थाः प्रपञ्चिता भवता ॥ ४१० ॥
ते किं तथैव वा स्युः किंवाऽप्यतथेत्यनिश्चितं ज्ञानम् ।
संशयवदप्रमाणं समुपदिशेत्कथमिहैष तीर्थकरः ॥ ४११ ॥
इह च निरङ्कुशमेव हि यदिदमनैकान्त्यमखिलवस्तुषु च ।
प्रतिजानानस्येदं निर्धारणमपि कथं प्रमाणं स्यात् ॥ ४१२ ॥
एवं निर्धारयितुप्रभृतेरस्तित्वनास्तिताद्यखिलम् ।
स कथं प्रमाणभूतस्तीर्थकरो ह्येवमुपदिशेच्छिष्यान् ॥ ४१३ ॥
उपदिष्टमेतमर्थं बुद्ध्वाऽप्येते कथं प्रवर्तेरन् ।
ऐकान्तिकतायामिह निर्णीताया तदानुकूल्येन ॥ ४१४ ॥
तत्साधनादिकृत्ये प्रवर्तमानोऽत्र दृश्यते लोकः ।
तस्मादनिश्चितार्थं शास्त्रं प्रणयन्नपीह तीर्थकरः ॥ ४१५ ॥
मत्तोन्मत्तवदेव ह्ययमनुपादेयवचन एव स्यात् ।
पञ्चास्तिकायसंज्ञा ये निर्दिष्टा हि तेष्वपि ह्येवम् ॥ ४१६ ॥
पञ्चत्वमस्ति किं वा नास्तीत्येवं न शक्यते बोद्धुम् ।
तेन न्यूना संख्या स्यादधिका वा न पञ्चसंख्यैव ॥ ४१७ ॥
यच्चावक्तव्यत्वं तदपि च तेषां कथं नु संभवति ।
यदि चावक्तव्यास्ते नैवोच्येरंस्तथा न दृश्यन्ते ॥ ४१८ ॥
तन्निर्धारणफलमप्यस्तित्वाद्यैर्न शक्यते बोद्धुम् ।
स्वर्गापवर्गयोरपि पक्षे भावस्तथैव चाभावः ॥ ४१९ ॥

इत्यनवधारणायां तत्र च लोकः कथं प्रवर्तेत ।
जीवप्रभृतीनां वा स्वसमयनिश्चितनिजात्मभावानाम् ॥ ४२० ॥
उक्तानेकविकल्पैरयथावधृतस्वभावतापत्तिः ।
यदिदमणुभ्यः पुद्गलसंज्ञेभ्यः केवलं हि संघाताः ॥ ४२१ ॥
प्रभवन्तीति तदेतत्पूर्वत्रैव तु निराकृतं भवति ।

## एवं चाऽऽत्माकार्त्स्न्यम् ॥ ३४ ॥

किं चाऽऽर्हता हि जीवं शरीरपरिमाणमेव कथयन्ति ॥ ४२२ ॥
सोऽयमसर्वगतः सन्नकृत्स्न आत्मा भवेत्परिच्छिन्नः ।
स्याच्चेदेवमनित्यो घटादिवत्स्यादसौ हि शारीरः ॥ ४२३ ॥
मानुषजीवो चाऽयं मनुष्यतनुमात्रपरिमितो भूत्वा ।
केनापि कर्मणाऽयं स एव हस्त्यादिजन्म लभमानः ॥ ४२४ ॥
हस्त्यादिविपुलदेहं कृत्स्नं विन्देत कथमसौ जीवः ।
हस्तिशरीरो भूत्वा सूक्ष्मशरीरं स एष लभमानः ॥ ४२५ ॥
सूक्ष्मशरीरे तस्मिन्नहि संमीयेत कृत्स्न एवासौ ।
यदि चानन्तावयवो जीवः स्यात्तस्य सूक्ष्मतनुयोगे ॥ ४२६ ॥
केचिच्च संकुचेयुर्महति च विकसेयुरवयवा इति चेत् ।
ये चानन्तावयवा जीवस्योक्ता हि ते च सर्वेऽपि ॥ ४२७ ॥
जीवाधिष्ठितदेशे प्रतिहन्यन्ते न वेति वक्तव्यम् ।
यदि चेत्प्रतिहन्यन्ते संमीयन्ते कथं शरीरेऽल्पे ॥ ४२८ ॥
अप्रतिघाते तेषां तस्यैकावयवदेशताप्राप्त्या ।
इतरावयवानां स्यात्प्रथिमानुपपत्तिरत्र दुर्वारा ॥ ४२९ ॥
एवं सति जीवस्य ह्यणुमात्रत्वप्रसङ्ग एव स्यात् ।

## न च पर्यायादप्यविरोधो विकारादिभ्यः ॥ ३५ ॥

उपगच्छन्ति ह केचित्पर्यायेण च बृहत्तनुप्राप्तौ ॥ ४३० ॥
केचित्सूक्ष्मशरीरे ह्यपगच्छन्तीति नेदमपि युक्तम् ।
पर्यायेणावयवोपगमापगमादियोगतोऽप्यस्य ॥ ४३१ ॥
न च देहपरिमितत्वं नित्यत्वं चास्य शक्यते वक्तुम् ।
येनावयवोपगमापगमाभ्यां विक्रियादिमत्त्वेन ॥ ४३२ ॥
जीवस्यानित्यत्वप्रसक्तिरत्रेयमपरिहार्यैव ।
जीवस्यानित्यत्वे तस्य च भोगापवर्गसंयोगः ॥ ४३३ ॥

उपपादयितुं शक्यो न कथंचिदपीह केनचिद्वाऽपि ।
अत एवमादिदोषप्रसक्तियोगेन चास्य जीवस्य ॥ ४३४ ॥
पर्यायेणावयवोपगमापगमौ न वाञ्छितुं शक्यौ ।

अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ॥ ३६ ॥

मोक्षावस्था सेयं ह्यन्त्यावस्थेति वर्ण्यते जैनैः ॥ ४३५ ॥
नित्यमिति चेष्यते खलु तदवस्थाभाविजीवपरिमाणम् ।
यद्यन्त्यं परिमाणं नित्यं स्यात्तर्हि पूर्वयोरपि च ॥ ४३६ ॥
परिमाणयोस्तथा स्यान्नित्यत्वं न हि तयोर्विशेषः स्यात् ।
एकतनुमानता स्यान्नोपचितापचितगात्रयोगोऽस्य ॥ ४३७ ॥
अपि चान्त्यं परिमाणं जीवगतं यद्यवस्थितं भवति ।
पूर्वत्रापि तथैवावस्थितपरिमाणजीवः स्यात् ॥ ४३८ ॥
एवं सति च सदैव ह्यणुर्महान्वा भवेदसौ जीवः ।
न हि नानातनुयोगात्तत्तत्परिमाणतामसौ गच्छेत् ॥ ४३९ ॥
तस्मात्सौगतमतवच्चाऽऽर्हतमपि मतमिदं न युक्तं स्यात् ।
क्षपणकसिद्धान्तेन हि वेदान्तसमन्वयस्य न विरोधः ॥ ४४० ॥
लुञ्चितकेशमतेऽस्मिन्निराकृते जटिलशैवमतमेतत् ।
बुद्धावध्यारूढं वेदान्तसमन्वयस्य परिपन्थि ॥ ४४१ ॥
इति मत्वा सूत्रकृता तदिदं शैवं मतं निराक्रियते ।

पत्युरसामञ्जस्यात् ॥ ३७ ॥

इह चाधिष्ठातैव हि न प्रकृतिः सोऽयमीश्वरो जगतः ॥ ४४२ ॥
आगमकृतावलम्बाः पाशुपताश्चैवमत्र कथयन्ति ।
केचित्तु सांख्ययोगव्यपाश्रयाश्चैवमत्र कथयन्ति ॥ ४४३ ॥
ईशः प्रधानपुंसोर्नियन्तृभावान्निमित्तमात्रं स्यात् ।
इतरेतरभिन्ना हि प्रधानपुरुषेश्वरा भवन्तीति ॥ ४४४ ॥
माहेश्वरास्त्विहैवं मन्यन्ते वर्णयन्ति चाप्येवम् ।
ये कार्यकारणयोगा विधिदुःखान्ताश्च पञ्च पशुपतिना ॥ ४४५ ॥
इह पशुपाशविमुक्त्यै ह्युपदिष्टाः पशुपतिर्निमित्तमिति ।
कार्यं महदादिकमिह करणं च स्यात्प्रधानमेवेदम् ॥ ४४६ ॥
योगः समाधिरेव त्रिषवणजलमज्जनादि विधिरत्र ।
दुःखान्तोऽसौ मोक्षः पञ्च पदार्थास्त एत एवेह ॥ ४४७ ॥

तत्रेदमनुपपन्नं यच्च हि माहेश्वरादिनिर्दिष्टम् ।
ईशस्य कारणत्वं तदिदमधिष्ठातृभावयोगेन ॥ ४४८ ॥
तत्रासामञ्जस्यात्तदेतदिह नोपपद्यते किमपि ।
इह चासामञ्जस्यं तदेतदीशस्य दृश्यते लोके ॥ ४४९ ॥
यद्धीनमध्यमोत्तमभावेन प्राणिवर्गमखिलमपि ।
विदधत ईशस्यापि हि रागद्वेषादिदोषतापत्तिः ॥ ४५० ॥
रागद्वेषापत्ताविहास्मदादिवदनीश्वरत्वं स्यात् ।
प्राणिकृतकर्मसाधनसापेक्षत्वाददोष इति चेन्न ॥ ४५१ ॥
यदि च नियम्यनियामकभावः कर्मेशयोस्तदा चायम् ।
अन्योन्याश्रयदोषप्रसङ्ग इह दुर्निवार एव स्यात् ॥ ४५२ ॥
सोऽयमनादित्वादिह न दोष इति नैव शक्यते वक्तुम् ।
स हि वर्तमानकालवदतीतकालेऽपि तुल्य एव स्यात् ॥ ४५३ ॥
नयवित्समयः सोऽयं प्रवर्तनालक्षणो हि दोष इति ।
दोषेण चाप्रयुक्तो न स्वार्थे वा तथैव न परार्थे ॥ ४५४ ॥
लोकः प्रवर्तमानो दृष्टः स्वार्थप्रयुक्त एवासौ ।
येन प्रवर्तते किल लोकस्तेनेह चासमञ्जसता ॥ ४५५ ॥
ईशः स्वार्थपरश्चेदनीशता तस्य दुर्निवारा स्यात् ।
अन्यदसामञ्जस्यं पुरुषविशेषः परो ह्युदासीनः ॥ ४५६ ॥

## संबन्धानुपपत्तेश्च ॥ ३८ ॥

योऽसौ प्रधानपुरुषव्यतिरिक्तो हीश्वरो विनिर्दिष्टः ।
संबन्धमन्तरेण प्रधानपुंसोः स ईशिता हि कथम् ॥ ४५७ ॥
न च संयोगो येन प्रधानपुरुषेश्वरा हि सर्वगताः ।
निरवयवाश्च तथाऽतः कथमिह संयोग ईदृशो भवति ॥ ४५८ ॥
इह चाऽऽश्रयाश्रयित्वानिरूपणान्नापि भवति समवायः ।
कार्यैकसमधिगम्यो नाप्यन्यः कश्चिदत्र संबन्धः ॥ ४५९ ॥
अद्यापि कार्यकारणभावस्यैवात्र चाप्रसिद्धत्वात् ।
तादात्म्यलक्षणोऽसौ संबन्धो ब्रह्मवादिनो भवति ॥ ४६० ॥
आगमबलावलम्बात्स खलु निरूपयति कारणाद्यखिलम् ।
आगमदृष्टं सकलं ह्यभ्युपगन्तव्यमेव तेनेह ॥ ४६१ ॥
इह कारणादिरूपं दृष्टान्तबलेन केवलेनैव ।
वर्णयतो हि परस्याभ्युपगन्तव्यं यथैव दृष्टमिदम् ॥ ४६२ ॥

सर्वज्ञदर्शितागमसद्भावादिह भवेत्परस्यापि ।
आगमबलसाहाय्यं समानमिति चेत्परस्पराश्रयता ॥ ४६३ ॥
आगमविश्वासात्किल सर्वज्ञत्वस्य सिद्धिरिह वाच्या ।
प्रामाण्यमागमस्य स्यादिह सर्वज्ञतादिसिद्धौ हि ॥ ४६४ ॥

अधिष्ठानानुपपत्तेश्च ॥ ३९ ॥

इह चानुपपत्तिः स्यात्तार्किकपरिकल्पितस्य चेशस्य ।
यद्वच्च कुम्भकारो मृदाद्यधिष्ठाय संप्रवर्तयति ॥ ४६५ ॥
एवं प्रवर्तयेदयमीशोऽधिष्ठाय हि प्रधानादि ।
इह चाधिष्ठेयं यन्मृदादि रूपादिमद्धि तद्दृष्टम् ॥ ४६६ ॥
इह रूपादिविहीनं प्रधानमीशस्य कथमधिष्ठेयम् ।
तस्मादयुक्तमेतन्मृदादिदृष्टान्तवस्तुवैधर्म्यात् ॥ ४६७ ॥

करणवच्चेन्न भोगादिभ्यः ॥ ४० ॥

लोके च चक्षुरादिकमप्रत्यक्षं यथा ह्यधिष्ठाय ।
पुरुषो यथा नियुङ्क्ते तथा प्रधानं प्रवर्तयेदीशः ॥ ४६८ ॥
नैवोपपन्नमेतन्न हि करणग्रामसाम्यमिह भवति ।
भोगादिना हि करणग्रामस्याधिष्ठितत्वमिह दृष्टम् ॥ ४६९ ॥
नैवमिह दृश्यते किल भोगः संसारिणामिवेशस्य ।
व्याख्यायते किलेदं सूत्रद्वयमन्यथैव पुनरपि च ॥ ४७० ॥

‘ अधिष्ठानानुपपत्तेश्च ’

साधिष्ठानो लोके सशरीरो हीशिता तु राजादिः ।
नैव हि निरधिष्ठानो दृष्टो राष्ट्रस्य चेशिता क्वापि ॥ ४७१ ॥
करणायतनं किंचिच्छरीरमीशस्य तद्वदिह वाच्यम् ।
सृष्ट्युत्तरं शरीरं भवेन्न सृष्टेस्तु पूर्वमपि किंचित् ॥ ४७२ ॥
स च निरधिष्ठानः प्रवर्तकत्वं कथं भवेत्तस्य ।
निरधिष्ठानस्यापि प्रवर्तकत्वे न चेह दृष्टान्तः ॥ ४७३ ॥

‘ करणवच्चेन्न भोगादिभ्यः ’ ।

अथ चेत्करणायतनं शरीरमीशस्य किमपि कल्प्येत ।
संसारिवदस्यापि हि भोगादिरनीश्वरत्वमपि च स्यात ॥ ४७४ ॥

## अन्तवत्त्वमसर्वज्ञता वा ॥ ४१ ॥

अपि चेदमनुपपन्नं तार्किकपरिकल्पितस्य चेशस्य ।
स हि सर्वज्ञोऽनन्तस्तद्वदनन्तं प्रधानमथ पुरुषाः ॥ ४७५ ॥
अभ्युपगम्यन्ते तैर्मिथो विभिन्नास्तथैव चानन्ताः ।
सर्वज्ञेनेशेन प्रधानपुरुषात्मनामिहेयत्ता ॥ ४७६ ॥
सा हि परिच्छिद्येत न वेत्युभयत्रापि भवति दोषोऽयम् ।
पूर्वत्र चान्तवत्त्वं प्रधानपुरुषेश्वरेषु दुर्वारम् ॥ ४७७ ॥
लोके तदन्तवत्किल दृष्टं यदियत्तया परिच्छिन्नम् ।
तद्वत्प्रधानपुरुषेश्वरत्रयं यदि भवेत्परिच्छिन्नम् ॥ ४७८ ॥
तर्ह्यन्तवदेतत्स्यात्संख्यापरिमाणमपि च वक्तव्यम् ।
इह च परिच्छिन्नानां ये मुच्यन्ते जनास्तु संसारात् ॥ ४७९ ॥
संसारः किल तेषां संसारित्वं तदन्तवद्दृष्टम् ।
इतरेषु मुच्यमानेष्वपि संसारस्य चान्तवत्त्वं स्यात् ॥ ४८० ॥
एवं प्रधानमपि किल सविकारं चान्तवद्भवति ।
सर्वस्य चान्तवत्त्वे किमधिष्ठेयं भवेदिहेशस्य ॥ ४८१ ॥
सर्वज्ञतेश्वरत्वे स्यातामीशस्य कुत्र किंविषये ।
यद्यन्तवत्त्वमेषां तदादिमत्त्वं च भवति दुर्वारम् ॥ ४८२ ॥
यदि चेदेवं हि तदा प्रसज्यते शून्यवाद एवात्र ।
यदि चेयत्ता तेषां न परिच्छिद्येत तर्हि दोषोऽयम् ॥ ४८३ ॥
सर्वज्ञत्वाभ्युपगमहानिः परमेश्वरस्य दुर्वारा ।
तस्मादसंगतः स्यात्तार्किकपरिकल्पितेशवादोऽयम् ॥ ४८४ ॥
पञ्चपदार्थनिरूपकशैवमतेऽस्मिन्निराकृते सपदि ।
व्यूहचतुष्टयवादो बुद्धिस्थोऽसौ निरस्यते सोऽपि ॥ ४८५ ॥

## उत्पत्त्यसंभवात् ॥ ४२ ॥

प्रकृतिरधिष्ठाताऽसावुभयात्मकमेव कारणं हीशः ।
येषामभिमत एवं तत्पक्षोऽसौ निरस्यते सपदि ॥ ४८६ ॥
ननु च श्रुतिमूलं वा ह्येवंरूपो विनिश्चितो हीशः ।
या हि श्रुत्यनुकूला स्मृतिः प्रमाणमिति वर्णितं पूर्वम् ॥ ४८७ ॥
तत्पक्षस्य निरासः सूत्रकृतो नैव युक्त इति चेन्न ।
प्रकृतित्वाद्यंशोऽयं नैव विसंवादगोचरो भवति ॥ ४८८ ॥

अस्ति त्वंशान्तरमिह तद्धि विसंवादविषयतामेति ।
एको हि वासुदेवो भगवान्स च खलु निरञ्जनज्ञानः ॥ ४८९ ॥
प्रविभज्येवाऽऽत्मानं स चतुर्धा हि प्रतिष्ठितो भवति ।
आद्यो हि वासुदेवव्यूहः संकर्षणो द्वितीयः स्यात् ॥ ४९० ॥
प्रद्युम्नश्च तृतीयस्तथाऽनिरुद्धश्चतुर्थसंज्ञः स्यात् ।
यो वासुदेवसञ्ज्ञो व्यूहः स परो हि कारणं भवति ॥ ४९१ ॥
जीवमनोहंकाराः कार्यं संकर्षणादयो व्यूहाः ।
इत्थंभूतं तं खल्वभिगमनाद्यैश्च साधनैरिष्ट्वा ॥ ४९२ ॥
क्षीणक्लेशो मनुजस्त्वन्ते प्रतिपद्यते हि भगवन्तम् ।
यच्चैतद्भागवतं प्रपञ्चितं तत्र भगवतो योऽसौ ॥ ४९३ ॥
बहुधा भावो यदपि ह्यजस्रमाराधनं विनिर्दिष्टम् ।
तत्किल न निराक्रियते यस्मादेतच्छ्रुतिस्मृतिप्रथितम् ॥ ४९४ ॥
संकर्षणादिकानां या चोत्पत्तिः प्रदर्शिता सा हि ।
नैवोपपद्यते किल यस्मात्तेषामनित्यतापत्तिः ॥ ४९५ ॥
तदनित्यत्वे मोक्षो भगवत्प्राप्तिर्न चास्य संभवति ।

न च कर्तुः करणम् ॥ ४३ ॥

एतस्मादपि हेतोरसंगतैषा हि कल्पना सर्वा ॥ ४९६ ॥
यस्माद्धि वर्णयन्ति हि संकर्षणसंज्ञकाच्च कर्तुरिदम् ।
उत्पद्यतेऽत्र करणं यच्च प्रद्युम्नसंज्ञकं हि मनः ॥ ४९७ ॥
उत्पद्यतेऽनिरुद्धोऽहंकारः कर्तृजाच्च मनस इति ।
तच्चायुक्तं करणं न च कर्तुर्जायते क्वचिद्वाऽपि ॥ ४९८ ॥
नेह च दृष्टान्तो वा श्रुतिरथवा नोपलभ्यते काऽपि ।

विज्ञानादिभावे वा तदप्रतिषेधः ॥ ४४ ॥

अथ यद्येवं ब्रूषे ये वै संकर्षणादयो गदिताः ॥ ४९९ ॥
जीवादयो न ते स्युर्विज्ञानैश्वर्यशक्तिबलवीर्यैः ।
तेजोभिरप्रतर्क्यैरैश्वरधर्मैः समन्विताः सर्वे ॥ ५०० ॥
निर्दोषा निरवद्या निरधिष्ठानाश्च वासुदेवास्ते ।
तस्माद्यथोपवर्णितदोषः कथमपि न चेह भवतीति ॥ ५०१ ॥
एवमपि दुर्निवारो योऽसावुत्पत्त्यसंभवो दोषः ।
यदि च परस्परभिन्नास्तुल्यात्मानो हि वासुदेवाद्याः ॥ ५०२ ॥

एकेन कार्यसिद्धेरनेकपरमेशकल्पना विफला।
सिद्धान्तहानिरपरो दोषोऽयं दुर्निवार एवात्र ॥ ५०३ ॥
अभ्युपगतं हि भगवानेवैको वासुदेव इति यस्मात्।
एकस्य भगवतो यदि चत्वारस्तुल्यभावमापन्नाः ॥ ५०४ ॥
एवमपि दुर्निवारो यथोपदिष्टो हि दोष इह भवति।
इह वासुदेवसंज्ञात्कथमिह संकर्षणस्य चोत्पत्तिः ॥ ५०५ ॥
असति विशेषे क्वापि हि न दृश्यते कार्यकरणभावोऽयम्।
इह तरतमभावोऽय न दृश्यते पाञ्चरात्रसिद्धान्ते ॥ ५०६ ॥
अपि च चतुःसंख्यायां भगवद्व्यूहाश्च नावतिष्ठेरन्।
स्तम्बावसानमेतद्ब्रह्मादि च यच्च दृश्यते सकलम् ॥ ५०७ ॥
भगवद्व्यूहत्वेन च तदेतदवगम्यते हि सर्वत्र।

विप्रतिषेधाच्च ॥ ४५ ॥

विप्रतिषेधश्चायं बहुविध उपलभ्यते हि शास्त्रेऽस्मिन् ॥ ५०८ ॥
ज्ञानैश्वर्यप्रमुखा गुणास्त आत्मान एव भगवन्तः।
इति गुणभावं गुणिताविरुद्धमेवोपवर्णयन्त्येते ॥ ५०९ ॥
विप्रतिषेधपदस्य हि निन्दार्थपरत्वमपि च संभवति।
वेदेषु चतुर्षु परं श्रेयोऽलब्ध्वा स एष शाण्डिल्यः ॥ ५१० ॥
शास्त्रं तदेतदधिगतवानिति दृष्टा हि वेदनिन्दाऽपि।
तस्मादसंगतैषा वेदविरुद्धार्थकल्पना सकला ॥ ५११ ॥
शारीरकमीमांसा मुनिना व्यासेन विरचिता सेयम्।
चतुरध्यायी तस्यां द्वितीयसंज्ञश्च योऽयमध्यायः ॥ ५१२ ॥
तत्र द्वितीयपादे सूत्रार्थो यश्च भाष्यकारोक्तः।
आर्यावृत्तैरमलैः प्रकाशितो भवतु सोऽयमनवद्यः ॥ ५१३ ॥

इति द्वितीयाध्यायस्य द्वितीयः पादः समाप्तः ॥ २ ॥

---

अथ तृतीयपादप्रारम्भः।

---

जीवस्यानुत्पत्तावाकाशो वा कथं प्रजायेत।
इत्येकदेशिशङ्कां निरसितुमिदमाह सूत्रकारोऽयम् ॥ १ ॥

## न वियदश्रुतेः ॥ १ ॥

श्रुतिविप्रतिषेधाद्यदि परपक्षाणामुपेक्षणीयत्वम् ।
तर्हि श्रुतिपक्षोऽयं विप्रतिषेधादुपेक्षणीयः स्यात् ॥ २ ॥
इति खलु शङ्कोत्थाने वादारम्भो हि तन्निवृत्त्यर्थः ।
इह भूतभोक्तृवचसां मिथो विरोधो निरस्यते पादे ॥ ३ ॥
उत्पत्तिश्रुतयः किल भिन्नप्रक्रमपरा हि लक्ष्यन्ते ।
आकाशस्योत्पत्तिं वदन्ति खलु तैत्तिरीयकश्रुतयः ॥ ४ ॥
छन्दोगाः खलु नैवं वियदुत्पत्तिं समामनन्ति यतः ।
जीवस्य प्राणानामपि क्रमाविकृतविरोध इह दृष्टः ॥ ५ ॥
श्रुत्यन्तरेषु तस्मादयमपि पक्षो ह्युपेक्षणीय इति ।
शङ्कानिरसनपूर्वकसकलश्रुत्यर्थनिर्मलत्वाय ॥ ६ ॥
आरभ्यते विचारस्तत्र प्रथमं हि वियदुपाश्रित्य ।
नोत्पद्यते हि तदिदं वियद्यतो भवति तच्च विभुसंज्ञम् ॥ ७ ॥
किंचोत्पत्तिप्रकरणवाक्ये न श्रूयते क्वचिद्वाऽपि ।
छान्दोग्ये हि सदेवेत्यादौ वाक्ये तु पञ्चभूतानाम् ॥ ८ ॥
तेजो मध्यममाद्यं कृत्वा सृष्टिः प्रपञ्चिता हि सतः ।
मानं श्रुतिर्ह्यतीन्द्रियविज्ञाने या न दृश्यते सेयम् ॥ ९ ॥

## अस्ति तु ॥ २ ॥

अत्र तुशब्दो योऽसौ न हि पक्षान्तरपरिग्रहे मानम् ।
यद्यपि वियदुत्पत्तिश्छान्दोग्ये नैव दृश्यतेऽथापि ॥ १० ॥
दृष्टा च तैत्तिरीयकवाक्ये ते खलु समामनन्त्येवम् ।
सत्यं ज्ञानमनन्तं ब्रह्मेत्यादिश्य तदिदमिह पठितम् ॥ ११ ॥
तस्माद्वा एतस्मादात्मन आकाश इति च यद्वाक्यम् ।
तत्र च विप्रतिषेधः श्रुत्योरनयोर्हि दुर्निवारोऽसौ ॥ १२ ॥
तेजःप्रमुखासृष्टिः क्वचिदिह दृष्टा क्वचिच्च वियदाद्या ।
नैवावगम्यते खल्वनयोः श्रुत्योरिहैकवाक्यत्वम् ॥ १३ ॥
स्रष्टुः सकृच्छ्रुतस्य हि न स्रष्टव्यद्वयेन संबन्धः ।
यद्येवं तत्तेजोऽसृजत तदाकाशमसृजतेति स्यात् ॥ १४ ॥
कर्तव्यद्वययोगो नन्विह कर्तुः सकृच्छ्रुतस्यापि ।
दृष्टः सूपं पक्त्वा तथौदनं पचति विप्र इति चेन्न ॥ १५ ॥

तत्र हि पौर्वापर्याद्युक्तो नाऽऽकाशतेजसोस्तु तथा ।
इह चाऽऽदिमत्त्वमुभयोर्दृष्टं छान्दोग्यतैत्तिरीयकयोः ॥ १६ ॥
स्रष्टुः सकृच्छ्रुतस्य हि युगपत्ताभ्यां कथं नु संबन्धः ।
वायोरग्निरितीदं पृथगाम्नानं विरुद्धमिह भवति ॥ १७ ॥

## गौण्यसंभवात् ॥ ३ ॥

एवं विप्रतिषेधे या ह वियज्जनिपरा श्रुतिः सेयम् ।
गौणी वाच्या यस्माद्वियदुत्पत्तिः कथंचिदपि न भवेत् ॥ १८ ॥
इह कारणसामग्री वियदुत्पत्तौ न दृश्यते काऽपि ।
समवायिकारणं स्याद्यदेकजातीयमिह तथाऽनेकम् ॥ १९ ॥
द्रव्योत्पत्तौ साधनमेतदृष्टं पटादिके कार्ये ।
वियतः कार्यत्वे किल तदत्र नैवोपलभ्यते किमपि ॥ २० ॥
एवं सति च निमित्तं यच्चासमवायिकारणं तदपि ।
तदनुग्रहप्रवृत्तं तदसत्त्वे साधयेत्कथं कार्यम् ॥ २१ ॥
उत्पत्तिमतां दृष्टः पूर्वोत्तरकालयोर्विशेषः स्यात् ।
आकाशस्योत्पत्तौ संभावयितुं न शक्यते सोऽयम् ॥ २२ ॥
किंच पृथिव्यादिभ्यो वैधर्म्यं चास्य दृश्यते भूयः ।
तेन विभुत्वमजत्वं सिध्यति नोत्पत्तिमत्त्वमेतस्य ॥ २३ ॥
घटकरकाकाशगृहाकाशा इति वियत एकरूपस्य ।
भेदव्यपदेशोऽयं ह्युपाधिमूलो न वस्तुमूलः स्यात् ॥ २४ ॥
आकाशो जात इति व्यपदेशः स्यादुपाधिजनिमूलः ।
गौणो वियदुत्पत्तिश्रुतिरपि गौणी तथैव किं न स्यात् ॥ २५ ॥

## शब्दाच्च ॥ ४ ॥

वायुश्चेत्याद्या या श्रुतिर्हि वाय्वन्तरिक्षयोरेवम् ।
अमृतत्वमुपदिशन्ती वियदुत्पत्तिं निवारयत्येषा ॥ २६ ॥
आकाशवदिति चान्या श्रुतिराकाशेन तत्परं ब्रह्म ।
सर्वगतत्वेन तथा नित्यत्वेनापि सदृशमुपदिशति ॥ २७ ॥
उपदिश्य सदृशमेतत्तौ धर्मावस्य सूचयत्येषा ।
स यथाऽनन्त इति श्रुतिराकाशस्याप्यनन्ततां वक्ति ॥ २८ ॥
श्रुतिराकाशशरीरं ब्रह्मेति तथैव बोधयत्यपरा ।
तस्मात्सिद्धं ब्रह्मवदाकाशं नित्यमपि च सर्वगतम् ॥ २९ ॥

स्याच्चैकस्य ब्रह्मशब्दवत् ॥ ५ ॥

शङ्कोत्तरसूत्रमिदं शङ्का चेयं हि भवति तत्रैवम् ।
संभूतशब्द एष हि सकृच्छ्रुतस्तैत्तिरीयके वाक्ये ॥ ३० ॥
वियति च स कथं गौणस्तेजःप्रभृतिषु कथं स मुख्य इति ।
नेयं शङ्का कार्या येनासौ ब्रह्मशब्दवद्भवति ॥ ३१ ॥
तपसा ब्रह्मेत्यस्मिन्नधिकारे तपसि चैवमन्नादौ ।
स्याद्ब्रह्मशब्द एव हि गौणो मुख्यस्तथैव चाऽऽनन्दे ॥ ३२ ॥
ननु नभसोऽनुत्पत्तौ श्रुतिप्रतिज्ञा हि बाधिता भवति ।
एवं किलैकमेवाद्वितीयमिति दृश्यते प्रतिज्ञेयम् ॥ ३३ ॥
यदि नभसो नित्यत्वं ब्रह्म तदा सद्वितीयमेव भवेत् ।
आत्मनि विदिते सर्वं विदितमितीय तथेति चेन्मैवम् ॥ ३४ ॥
अत्रत्यसर्वशब्दः स्वकार्यपर एव नैव सर्वपरः ।
कश्चित्कुलालगेहे मृद्दण्डादीनि पूर्वमुपलभ्य ॥ ३५ ॥
नानाविधान्यमत्राण्युपलभ्य परेद्युरेवमाचष्टे ।
एकाकिनी मृदेव ह्यासीत्पूर्वेद्युरेतदखिलमिति ॥ ३६ ॥
स तु मृत्कार्यं सकलं नाऽऽसीत्पूर्वेद्युरित्यभिप्रेयात् ।
न तु दण्डादिकमेवं नाऽऽसीदग्रे स्वकार्यजातमिति ॥ ३७ ॥
अथवेयमद्वितीयश्रुतिरिह कर्त्रन्तरं निवारयति ।
इह चामत्रप्रकृतेर्मृदः कुलालो यथा ह्यधिष्ठाता ॥ ३८ ॥
नैवमधिष्ठाताऽन्यो भवतीह ब्रह्मणो जगत्प्रकृतेः ।
अथवाऽत्र नाद्वितीयश्रुतिभङ्गोऽयं हि शङ्कितुं शक्यः ॥ ३९ ॥
इह सद्वितीयता किल लोके दृष्टा हि भिन्नलक्षणयोः ।
प्रागुत्पत्तेर्लक्षणभेदो न ब्रह्मगगनयोर्भवति ॥ ४० ॥
क्षीरोदकयोरिव किल तयोश्च संसृष्टयोः पुरा सृष्टेः ।
व्यापित्वामूर्तत्वाद्यखिलं तुल्यं हि धर्मजातं तत् ॥ ४१ ॥
तद्ब्रह्मसर्गकाले यतते स्तिमितं वियद्यथापूर्वम् ।
तेनान्यता तयोः स्यात्सृष्ट्युत्तरमेव नैव तत्पूर्वम् ॥ ४२ ॥
किंचैवमेव सिध्येद्ब्रह्मज्ञानेन सर्वविज्ञानम् ।
अपि किल कार्यं सकलं वियताऽव्यतिरिक्तदेशकालं हि ॥४३ ॥
वियदपि यदिदं हि तथा ब्रह्माव्यतिरिक्तदेशकालं स्यात् ।
तेन ब्रह्मणि विदिते भवति हि विदितं तदेतदाकाशम् ॥ ४४ ॥

क्षीरगतो जलबिन्दुः क्षीरग्रहणेन गृह्यते हि यथा ।
एवं ब्रह्मणि विदिते वियदपि तदिद गृहीतमेव स्यात् ॥ ४५ ॥
इति सकलश्रुतिवचसामविरोध इहेति चैकदेशिमतम् ।
निर्दिश्य सप्रपञ्चं तदिद दूषयति सूत्रकारोऽयम् ॥ ४६ ॥

प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः ॥ ६ ॥

येनाश्रुतमिति या स्यादात्मनि खल्विति तथैव चान्याऽपि ।
कस्मिन्नित्यपरा या न च काचन मदिति चैवमन्याऽपि ॥ ४७ ॥
प्रतिवेदान्तं चैवंरूपा या दृश्यते प्रतिज्ञा हि ।
तस्या एवमहानिस्तदनुपरोधो भवेन्न चेतरथा ॥ ४८ ॥
यद्यव्यतिरेकः स्याद्विज्ञेयाद्ब्रह्मणोऽस्य कृत्स्नस्य ।
उपपद्यते तदैव ह्यव्यतिरेकः स एष निर्दिष्टः ॥ ४९ ॥
यद्येकस्माद्ब्रह्मण उत्पद्येतेदमखिलमपि वस्तु ।
श्रुत्याऽप्यव्यतिरेकादियं प्रतिज्ञा प्रदर्शिता भवति ॥ ५० ॥
इह कार्यकारणाभित्प्रतिपादनपरमृदादिदृष्टान्तैः ।
येनश्रुतमित्याद्या श्रुतिप्रतिज्ञा समर्थिता श्रुत्या ॥ ५१ ॥
ये चोत्तरत्र पठिताः सदेव सोम्येदमग्र इत्याद्याः ।
ते खल्वीक्षणपूर्वकमखिलं तेजःपुरःसरं कार्यम् ॥ ५२ ॥
ब्रह्मण उपदिश्य ततश्चाव्यतिरेकं प्रदर्शयन्ति किल ।
इह चैतदात्म्यमिति किल वाक्यमुपक्रम्य चाऽऽसमाप्तेर्हि ॥ ५३ ॥
न ब्रह्मकार्यमेतद्यद्याकाशं भवेदयुक्तमिदम् ।
ब्रह्मणि विज्ञाते सति न हि विज्ञायेत तदिदमाकाशम् ॥ ५४ ॥
एवं सति प्रतिज्ञा श्रौती सेयं हि बाधिता भवति ।
हीयेत चेत्प्रतिज्ञा वेदाप्रामाण्यमत्र दुर्वारम् ॥ ५५ ॥
प्रतिवेदान्तं शब्दा इदं सर्वमिति चैवमाद्या मे ।
ते तत्तद्दृष्टान्तैरिमां प्रतिज्ञां समर्थयन्ति खलु ॥ ५६ ॥
तस्माज्ज्वलनादिवदिदमपि गगनं ब्रह्मणो जनिं लभते ।
नोत्पद्यते तदेतद्वियदश्रवणादितीह यच्चोक्तम् ॥ ५७ ॥
तदयुक्तमेव यस्माद्वियदुत्पत्तिः प्रदर्शिता श्रुत्या ।
तस्माद्वा एतस्मादात्मन आकाश एवमादिकया ॥ ५८ ॥
ननु तत्तेजोऽसृजतेत्येनेन चास्य विरोध इति चेन्न ।
न हि भिन्नवाक्यता स्याच्छ्रुतिवचसां किंत्विहैकवाक्यत्वम् ॥ ५९ ॥

नन्वविरुद्धानामिह भवेत्कदाचित्तदेकवाक्यत्वम् ।
अत्रैकस्य स्रष्टुः स्रष्टव्ययुगेन युगपदस्पर्शात् ॥ ६० ॥
आकाशतेजसोर्वा प्रथमोत्पत्तेरसंभवाच्च तथा ।
इह च विकल्पायोगाद्वाक्यैकत्वं कथं तयोरिति चेत् ॥ ६१ ॥
इह तैत्तिरीयके किल तेजःसर्गस्तृतीय एवोक्तः ।
परिणेतुमन्यथा सा न शक्यते तैत्तिरीयके दृष्टा ॥ ६२ ॥
छान्दोग्यश्रुतिरेषा शक्या परिणेतुमन्यथा भवति ।
सृष्ट्वाऽऽकाशं वायुं तेजोऽसृजतेति शक्यते वक्तुम् ॥ ६३ ॥
तेजोजनिप्रधाना वियदुत्पत्तिं हि सा न विरुणद्धि ।
भवति ह्यर्थैकत्वे न चार्थनात्वकल्पना युक्ता ॥ ६४ ॥
न ह्येकस्य स्रष्टुर्युगपत्स्रष्टव्ययुगलयोगोऽत्र ।
स्रष्टव्यान्तरमितरश्रुत्यनुसाराद्धि परिगृहीतं स्यात् ॥ ६५ ॥
यद्वत्सर्वं खल्वित्यविशेषश्रुतमपीह सर्वस्य ।
ब्रह्मप्रभवत्वं यत्तदिदं छान्दोग्यवाक्यनिर्दिष्टम् ॥ ६६ ॥
उत्पत्तिक्रममेतं तेजःप्रमुखं न वारयितुमीष्टे ।
तद्वच्च तेजसोऽपि ब्रह्मप्रभवत्वमत्र यद्दृष्टम् ॥ ६७ ॥
तदपि श्रुत्यन्तरगतमुत्पत्तिक्रममिमं नभःप्रमुखम् ।
न निवारयितुं शक्नोत्यत इह न तयोर्विरोधशङ्का स्यात् ॥ ६८ ॥
ननु सर्वं खल्विदमिति वाक्य भवतीह शमविधानार्थम् ।
यस्माच्छान्त उपासीतेति श्रुतमिह न सृष्टिवाक्यमिदम् ॥ ६९ ॥
तस्माद्वियदुत्पत्तौ यथोक्तदृष्टान्तसाधनाभावात् ।
तत्तेजोऽसृजतेतिश्रुत्यनुसारात्क्रमो भवेदिति चेत् ॥ ७० ॥
तेजोजनिप्रधानश्रुत्यनुरोधाद्यदा क्रमोऽयं स्यात् ।
श्रुत्यन्तरप्रसिद्धो वियतः सर्गो भवेत्परित्याज्यः ॥ ७१ ॥
वियतः सर्गो धर्मी प्राथम्यं तद्गतं च यदपि स्यात् ।
तेजः प्राथम्यार्थे तदेतदुभयं हि बाधितं भवति ॥ ७२ ॥
योऽसौ क्रमः स च स्यात्सदाऽर्थधर्मो न चायमिह धर्मी ।
तत्र प्रधानधर्मित्यागाद्धि वरं हि धर्मलोपः स्यात् ॥ ७३ ॥
अपि च च्छान्दोग्येऽस्मिन्क्रमपरशब्दो न दृश्यते कोऽपि ।
आर्थिकभावेनासौ क्रमो भवेन्नैव मुख्यभावेन ॥ ७४ ॥
स च वायोरग्निरितिश्रुतिप्रसिद्धक्रमेण वार्येत ।
प्राथम्ये हि विकल्पः शाखाभेदात्समुच्चयो वाऽपि ॥ ७५ ॥

द्विदलाङ्कुरवत्स्यादिति पक्षोऽप्येतेन परिहृतो भवति ।
तस्माद्विप्रतिषेधः श्रुत्योरनयोर्न चास्ति कश्चिदपि ॥ ७६ ॥
अपि किल येनाश्रुतमिति वाक्यं सकलं समर्थयितुमत्र ।
असमाम्नातमपीदं वियदुत्पत्तावपेक्षितं चेत्स्यात् ॥ ७७ ॥
कस्मान्न गृह्यते वा वियदेतत्तैत्तिरीयकाम्नातम् ।
यच्चोक्तं वियतः किल सर्वेणानन्यदेशकालत्वात् ॥ ७८ ॥
तद्ब्रह्मणा च कार्यैर्वियदपि सह विदितमेव भवतीति ।
नाप्यद्वितीयविषयश्रुतिकोपो भवति चह कश्चिदपि ॥ ७९ ॥
अव्यतिरेकः क्षीरोदकवद्ब्रह्मान्तरिक्षयोर्यस्मात् ।
इति तु न युक्तं यदि चेदेकज्ञानेन सर्वविज्ञानम् ॥ ८० ॥
क्षीरजलन्यायेन स्याच्चेत्तदिदं ह्ययुक्तमेव स्यात् ।
इह च मृदादिभिरेव हि दृष्टान्तैः प्रकृतिविकृतिभावेन ॥ ८१ ॥
सर्वज्ञानं यदिदं नेतव्यं तदिति गम्यते नान्यत् ।
तदिदं सर्वज्ञान सम्यग्ज्ञानं न चान्यथा भवति ॥ ८२ ॥
क्षीरज्ञानगृहीतं जल न सम्यग्गृहीतमिह भवति ।
भवति न पुरुषाणामिव वेदस्यालीकवञ्चनाद्यखिलम् ॥ ८३ ॥
नाप्येकदेशविषयं सर्वज्ञानं स्वकार्यसापेक्षम् ।
एकाद्वितीयतादेरवधारणमपि तथेति नो युक्तम् ॥ ८४ ॥
सर्वत्र संभवादिदमपूर्ववच्चेह नोपदेष्टव्यम् ।
तस्मादशेषविषयं सर्वज्ञानं तदत्र निर्दिष्टम् ॥ ८५ ॥
तदुपन्यासो योऽसौ सर्वस्य ब्रह्मकार्यतापेक्षः ।
गौणी जन्मश्रुतिरिति यच्चोक्त तन्निरस्यते सपदि ॥ ८६ ॥

### यावद्विकारं तु विभागो लोकवत् ॥ ७ ॥

जन्मासंभवशङ्कानिवर्तनार्थस्तुशब्द इह भवति ।
यस्माद्यावत्किंचिद्विकारजातं घटादिकं दृष्टम् ॥ ८७ ॥
तावद्विभक्तमेव हि घटपटकटकादि दृश्यते लोके ।
न त्वविकृतं हि किंचिद्विभक्तमुपलभ्यते कुतश्चिदपि ॥ ८८ ॥
अत्र पृथिव्यादिभ्यो विभाग उपलभ्यते हि वियतोऽपि ।
तस्माद्धि वियदपीदं भवति विकारः कदाऽपि नाविकृतम् ॥ ८९ ॥

एतेन व्याख्यातं दिगादिकानामपीह कार्यत्वम् ।
नन्वात्माऽपि विभक्तो वियदादिभ्योऽत्रगम्यते लोके ॥ ९० ॥
तस्मात्सोऽपि विकारो घटवत्स्यादितीह नाऽऽशङ्क्यम् ।
यो धर्मिसत्तया किल समसत्ताको भवेद्विभागोऽसौ ॥ ९१ ॥
हेतुः स चायमात्मनि न संभवेद्येन कल्पितोऽयं स्यात् ।
हेतावज्ञानान्यद्रव्यत्वमपीह पूरणीयं स्यात् ॥ ९२ ॥
एवं चेद्यभिचारो नाज्ञाने वा तदीयसंबन्धे ।
आत्मन आकाश इति श्रुत्याऽऽकाशादिकारणत्वेन ॥ ९३ ॥
निर्धारितोऽयमात्मा कथं विकारो यथा विकारः स्यात् ।
आकाशादिकमेतत्कार्यं सकलं निरात्मकं भवति ॥ ९४ ॥
एवं च शून्यवादः स्यादत आत्मा कदाऽपि न विकारः ।
योऽसौ सर्वस्याऽऽत्मा जगतः सर्वस्य कारणीभूतः ॥ ९५ ॥
स ह्यात्मेदृशरूपः केन कथं वा क्व वा निराक्रियते ।
अनपेक्ष्य च प्रमाणं सोऽसावात्मा भवेत्स्वयं सिद्धः ॥ ९६ ॥
वियदादयः पदार्थाः केनचिदपि नैवमभ्युपेयन्ते ।
सर्वव्यवहाराणामाश्रयभूतो यतोऽयमात्मा स्यात् ॥ ९७ ॥
प्राग्व्यवहारात्सिद्धः स चायमात्मा कथं निराक्रियते ।
जानामि वर्तमान ह्यतीतमज्ञासिषं तथैवाहम् ॥ ९८ ॥
ज्ञास्याम्येवमनागतमित्येवं ज्ञातुरेव सर्वत्र ।
प्रत्यभिसंधेर्योगादात्मा नित्यो न चैवमाकाशः ॥ ९९ ॥
समजातीयमनेकं व्योम्न उपादानकारणं यस्मात् ।
नैवोपलभ्यतेऽतो नित्यं वियदिति हि यच्च पूर्वोक्तम् ॥ १०० ॥
तदनुपपन्नं यस्माद्द्रव्यारम्भेऽत्र नास्ति नियमोऽसौ ।
आरभते किल कार्यं समजातीयं न चान्यदित्येवम् ॥ १०१ ॥
यदि चैवं नियमः स्यात्पटादिकार्यं कथं भवेत्तत्र ।
तन्तौ तत्संयोगे समजातीयत्वमसुलभं हि यतः ॥ १०२ ॥
समवायिकारणस्याप्येवंरूपो हि नैव नियमः स्यात् ।
सूत्रैर्गोवालैरप्येका रज्जुर्हि सृज्यते यस्मात् ॥ १०३ ॥
आरभते किल कार्यं नैवैकं किंत्वनेकमेवेति ।
नैवायं नियमः स्याद्यतश्च परिणामवाद इह भवति ॥ १०४ ॥

परिणमते किल लोके क्वचिदेकमनेकमपि च परिणमते।
मृद्बीजादिकमेतत्त्वनेकमेवाङ्कुरादिभावेन ॥ १०५ ॥
क्षीरादि तु परिणमते ह्येकं दध्यादिकार्यभावेन।
नैवेशशासनं स्यादनेकमुत्पादकं न चैकमिति ॥ १०६ ॥
तस्माच्छ्रुत्यनुसारादेकस्माद्ब्रह्मणो हि जगदखिलम्।
जायत इति सिद्धं तत्क्षीरवदित्यत्र दृश्यते सूत्रे ॥ १०७ ॥
आकाशस्योत्पत्तौ पूर्वापरकालयोर्विशेषः स्यात्।
इति किल नैवाऽऽशङ्क्यं यश्च विशेषो हि दृश्यते सपदि॥१०८॥
वियति पृथिव्यादिभ्यः स हि पूर्वं नेति गम्यते वियति।
पृथ्व्यप्तेजोवायुस्वभावविधुरं यथा भवेद्ब्रह्म ॥ १०९ ॥
प्रागुत्पत्तेरेवं वियत्स्वभावेन वर्जितं भवति।
तस्माद्वियदपि कार्यं यथा पृथिव्यादि तद्वदेव स्यात् ॥ ११० ॥
एवमनित्यगुणाश्रयभावेनानित्यता भवेद्वियतः।
अमृतत्वश्रुतिरपि या वियतो नित्यत्वबोधिका साऽपि ॥ १११ ॥
अमृता देवा इतिवच्चिरकालावस्थितत्वसापेक्षा।
आकाशस्य जनिश्रुतिरपि गौणी ब्रह्मशब्दवत्तपसि ॥ ११२ ॥
इति तु निराकृतमत इह वियदेतद्ब्रह्मकार्यमिति सिद्धम्।

## एतेन मातरिश्वा व्याख्यातः ॥ ८ ॥

अतिदेशत्वात्पृथगिह संगत्यन्तरमपेक्षते नेदम् ॥ ११३ ॥
व्याख्यानेन हि वियतो व्याख्यातो भवति मातरिश्वाऽपि।
छान्दोग्यः स हि पूर्वं बलवत्तरतैत्तिरीयकश्रुत्या ॥ ११४ ॥
नयनादुक्तस्रष्टरि समन्वयोऽसौ तदेकवाक्यतया।
एवं सत्याकाशानन्तरता तेजसोऽस्य लब्धैव ॥ ११५ ॥
तुल्यवदानन्तर्यं भवति यदा वायुतेजसोरनयोः।
वायोरग्निरितीह क्रमश्रुतिर्या हि बाधिता सा स्यात् ॥ ११६ ॥
पौर्वापर्ये च पुनस्तेजःप्राथम्यभङ्ग एव स्यात्।
तद्भङ्गे च श्रुत्योस्तदेकवाक्यत्वमनुपपन्नं स्यात् ॥ ११७ ॥
इति गौणवादपरतामाश्रित्येहापि पूर्वपक्षः स्यात्।
उत्पत्तिपरे वाक्ये छान्दोग्येऽसौ न दृश्यते वायुः ॥ ११८ ॥
आकाशाद्वायुरिति ह्याम्नातस्तैत्तिरीयके च पुनः।
श्रुत्योर्विप्रतिषेधे चोत्पत्तिश्रुतिरियं हि गौणी स्यात् ॥ ११९ ॥

यस्मात्सैषेत्यादिश्रुतिरस्तमयं निवारयत्यस्य ।
इत्याक्षेपं निरसितुमेतत्सूत्रं प्रदर्शितं मुनिना ॥ १२० ॥
उत्पद्यते हि वायुर्यतः प्रतिज्ञानिरोध इह भवति ।
अभ्युपगतं हि यावद्विकारजातं विभक्तमिह यस्मात् ॥ १२१ ॥
अस्तमयप्रतिषेधश्चापरविद्यापरो न मुख्यः स्यात् ।
अमृतत्वादिश्रवणं व्याख्यातार्थं हि भवति पूर्वत्र ॥ १२२ ॥
नन्विह वियतो वायोरुत्पत्तिप्रकरणे हि तुल्यतया ।
श्रवणादिदमधिकरणं भवेदिहैकं न चातिदेशोऽयम् ॥ १२३ ॥
इति चेन्मन्दधियामिह कदाचिदेषा हि शब्दमात्रकृता ।
शङ्का स्यादिति मत्वा ह्यतिदेशोऽयं प्रदर्शितो मुनिना ॥ १२४ ॥
संवर्गवाक्यशेषे यदसौ वायुः श्रुतो महाभागः ।

## असंभवस्तु सतोऽनुपपत्तेः ॥ ९ ॥

ननु यदि वियदादीनामुत्पत्तिः सा परात्मनोऽपि स्यात् ॥१२५॥
वियतो विकाररूपाद्विकाररूपो यथा भवेद्वायुः ।
स्याद्ब्रह्मणो विकाराद्वियदादीनां तथैव चोत्पत्तिः ॥ १२६ ॥
स्याच्चेदनाद्यनन्तं महतः परमिति हि गौणमेतत्स्यात् ।
अमृतत्वं हि यथा वा वाय्वादेः स्यात्तथैव चेहापि ॥ १२७ ॥
त्वं जातो भवसीति श्रुतिर्हि मुख्यार्थबाधिका वाच्या ।
तस्मात्परात्मनोऽपि स्यादुत्पत्तिः कुतश्चिदिति शङ्काम् ॥ १२८ ॥
निरसितुमसंभवस्त्विति मुनिना रचितं तदेतदधिकरणम् ।
न ब्रह्मणः सतोऽस्य स्यादुत्पत्तिः कुतश्चिदन्यस्मात् ॥ १२९ ॥
सद्रूपं ब्रह्म यतो न भवेत्सत एव तस्य चोत्पत्तिः ।
प्रकृतिविकारात्मकताऽप्यसति विशेषे हि न क्वचिद्दृष्टा ॥१३०॥
नापि विशेषात्सत इह सत्सामान्यं हि शङ्कितुं शक्यम् ।
लोके मृदो घटादिर्मृच्च घटादेर्न दृश्यते क्वापि ॥ १३१ ॥
नाप्यसतो वा सत्स्यादसद्यदेतन्निरात्मकं दृष्टम् ।
श्रुतिरेषा हि स कारणमित्याद्या या च दृश्यते साऽपि॥ १३२ ॥
अधिपं च जनयितारं परात्मनोऽन्यं नचेति वारयति ।
त्वं जातो भवसीति श्रुतिरौपाधिकजनिप्रधानैव ॥ १३३ ॥

सद्नाद्यनन्तमेतद्ब्रह्म न चेह श्रुतेर्विरोधोऽपि ।

तेजोऽतस्तथा ह्याह ॥ १० ॥

छान्दोग्ये तत्तेजोऽसृजतेति श्रूयते हि वाक्यमिदम् ॥ १३४ ॥
तेन च सन्मूलत्व प्रतीयते चास्य तेजसस्तस्मात् ।
तस्यैव तैत्तिरीयकवाक्ये दृष्टं हि वायुमूलत्वम् ॥ १३५ ॥
एवं विप्रतिपत्तौ प्राप्तं हि ब्रह्मयोनि तेज इति ।
तत्तेजोऽसृजतेति ह्युपदेशोऽयं च तत्परो येन ॥ १३६ ॥
एवं चेदेत(?) स्यादेकज्ञानेन सर्वविज्ञानम् ।
वायोरग्निरितिश्रुतिरपि वाय्वग्न्योः क्रमार्थिका भवति ॥ १३७ ॥
एवं प्राप्ते ब्रूते तेजोऽतो जायते हि मरुत इति ।
आह श्रुतिरेषा किल वायोरग्निरिति चेममेवार्थम् ॥ १३८ ॥
इह चापादानार्था न च क्रमार्था हि पञ्चमी सेयम् ।
आत्मन आकाश इति प्रथममपादानपञ्चमी दृष्टा ॥ १३९ ॥
नैव पुरस्तादपि किल सा संभवति क्रियानिमित्तैव ।
सभवतेरधिकारे तुल्ये कथमर्थभेद इह भवति ॥ १४० ॥
अपि च क्रमार्थकत्वे वायोरूर्ध्वमिति कल्पनीया स्यात् ।
उपपदयोगः सोऽयं कारकयोगाद्धि दुर्लभो भवति ॥ १४१ ॥
श्रुतिरेषा तस्मादिह गमयति खलु वायुयोनि तेज इति ।
तत्तेजोऽसृजतेति श्रुतिरन्या ब्रह्मयोनि तेज इति ॥ १४२ ॥
गमयति यद्यपि तस्याः परम्पराजनिपरत्वमेव स्यात् ।
तस्याः श्रुतमामिक्षा दधि तस्या इति हि दृष्टमन्यत्र ॥ १४३ ॥
ईशस्मरणमपीदं भवन्ति भावा इतीह गमकं स्यात् ।
इह चाक्रमवचनानां बलवत्क्रमपरतदेकवाक्यत्वात् ॥ १४४ ॥
वियदादिकारणेऽस्मिन्ब्रह्मणि तेषा समन्वयः सिद्धः ।

आपः ॥ ११ ॥

इह खलु मुण्डकवाक्ये खं वायुर्ज्योतिराप इत्यन्ते ॥ १४५ ॥
ब्रह्मप्रभवत्वमपां श्रुतमन्यत्राग्निजत्वमपि तासाम् ।
तस्मात्तयोर्विरोधेनैवासामाग्निजत्वसिद्धिः स्यात् ॥ १४६ ॥
यत इह दृष्टा लोके ता आपो ह्यग्निदाह्यभावेन ।
एतस्मादिति तत्र क्रमार्थिका पञ्चमीति शङ्कायाम् ॥ १४७ ॥

तेजोन्याय इहापि स्यादित्यतिदिशति सूत्रकारोऽयम् ।
प्रत्यक्षतो विरोधे कथमासामग्निजत्वमिति चेन्न ॥ १४८ ॥
ये च त्रिवृत्कृते ते तयोर्विरोधो हि दृश्यते नेह ।
श्रुतिवचनादविरोधो निर्णीतो येन चात्रिवृत्कृतयोः ॥ १४९ ॥
केवलमतिदेशो न श्रुत्यविरोधप्रदर्शनार्थः स्यात् ।
पञ्चमहाभूतानामुत्पत्तिक्रमनिरूपणार्थश्च ॥ १५० ॥
तेजोभावापन्ने परे श्रुतीना समन्वयस्तस्मात् ।

पृथिव्यधिकाररूपशब्दान्तरेभ्यः ॥ १२ ॥

इह किल ता आप इति च्छान्दोग्यवाक्यमेतदुपलब्धम् ॥१५१॥
अद्भ्योऽन्नसृष्टिरस्मिन्वाक्ये ता अन्नमित्यनेनोक्ता ।
इह चान्नशब्दलभ्यो व्रीह्यादिर्वाऽथवाऽपि पृथिवी वा ॥ १५२ ॥
शब्दप्रकरणयोगादिह संदेहे समुत्थिते तत्र ।
व्रीहियवाद्येवान्नं सत्यां वृष्टौ तदेव बहु भवति ॥ १५३ ॥
इति शङ्कामपनेतुं पृथिवीं निर्दिशति सूत्रकारोऽयम् ।
पृथिवीयमन्नशब्दात्प्रतीयते नौदनादि किंचिदपि ॥ १५४ ॥
अधिकाररूपशब्दान्तराणि लिङ्गानि तत्पराणि यतः ।
प्रकरणमधिकारः स्यात्स खलु महाभूतगोचरो दृष्टः ॥ १५५ ॥
पृथिवीं क्रमागतामिह विलङ्घ्य नौदनपरिग्रहो न्याय्यः ।
इह वाक्यशेषदृष्टं तदनुगुणं दृश्यते हि रूपमपि ॥ १५६ ॥
यत्कृष्णमित्यनेन प्रदर्शितं कृष्णरूपमेव(वा)स्याः ।
व्रीहियवादौ तु पुनः कृष्णत्वं नोपलभ्यते नियतम् ॥ १५७ ॥
क्वचिदिह पाण्डुरवर्णा लोहितवर्णा च दृश्यते पृथिवी ।
एवमपि नेह दोषो बाहुल्यापेक्षया हि कृष्णत्वम् ॥ १५८ ॥
पौराणिकाश्च तद्वत्कृष्णं रूपं प्रदर्शयन्त्यस्याः ।
तस्मात्कृष्णं रूपं भवति पृथिव्या न चेतरस्येदम् ॥ १५९ ॥
श्रुत्यन्तरमप्यद्भ्यः पृथिवीत्येवं हि दृश्यते यदपि ।
तदपि ह्यद्भ्यः सृष्टां पृथिवीं दर्शयति नौदनादि तथा ॥१६० ॥
पृथिवीसृष्टेः पश्चाद्व्रीह्याद्युत्पत्तिरभिहिता यस्मात् ।

तस्मादिहान्नशब्दात्पृथिवी स्यान्नोदनादि किंचिदपि ॥ १६१ ॥
लोकप्रसिद्धिरपि या साऽप्यधिकारादबाधिता भवति ।
योऽसौ हि वाक्यशेषो यत्र क्व च वर्षतेति सोऽन्नस्य ॥ १६२ ॥
पार्थिवतामुक्त्वाऽसावद्भ्यः पृथिवीसमुद्भवं वक्ति ।
एवं हि तैत्तिरीयश्रुतिमाश्रित्यैव तदनुसारेण ॥ १६३ ॥
छन्दोगश्रुतिनयनादविरुद्धो भूतसृष्टिवाक्यानाम् ।
ब्रह्मणि परमानन्दे समन्वयः सपदि तानि भूतानि ॥ १६४ ॥
आश्रित्य परिहरिष्यति तत्स्वातन्त्र्यैकविषयकां शङ्काम् ।

तदभिध्यानादेव तु तल्लिङ्गात्सः ॥ १३ ॥

स्वयमेव स्वविकारान्सृजन्ति वियदादिकानि भूतानि ॥ १६५ ॥
परमेश्वर एवासौ तदात्मनैवावतिष्ठमानः सन् ।
तत्तद्विकारजातं किमभिध्यायन्हि सृजति वेत्येवम् ॥ १६६ ॥
संदेहे सति तावत्स्वयं सृजन्तीति युक्तमाभाति ।
श्रुतिराकाशाद्वायुर्वायोरग्निरिति बोधयत्येव ॥ १६७ ॥
स्वातन्त्र्यं भूतानामतः सृजन्त्येव तानि भूतानि ।
तत्तेज ऐक्षतेति श्रुतिर्यतश्चेतनत्वमपि वक्ति ॥ १६८ ॥
इति शङ्कां वारयितुं तदेतदभिधीयते हि सूत्रकृता ।
परमेश्वर एवासौ सृजति स्वयमेव तानि भूतानि ॥ १६९ ॥
तान्येवाभिध्यायंस्तदात्मनैवावतिष्ठमानश्च ।
तदभिध्यानादेव हि तेजःप्रमुखेषु चेक्षणं भवति ॥ १७० ॥
सर्वनियन्तृत्वं यल्लिङ्गं तस्यैव भवति नान्यस्य ।
अन्तर्यामिपरेऽस्मिन्ब्राह्मणवाक्ये हि दृश्यते तदिदम् ॥ १७१ ॥
सोऽकामयतेत्यस्मिंस्तन्य(त्र) च सर्वात्मभाव उपदिष्टः ।

विपर्ययेण तु क्रमोऽत उपपद्यते च ॥ १४ ॥

श्रुतिकृतविरोधशङ्का यद्यपि नैवेह परिहृताऽथापि ॥ १७२ ॥
भूतानामुत्पत्तिक्रमे तु बुद्धाविहाधिरूढे हि ।
विलयक्रमोऽपि तेषां बुध्यारूढो विचार्यते सपदि ॥ १७३ ॥
किमनियतैनैतेषां क्रमेण विलयः किमन्यथा वा स्यात् ।
भूतोत्पत्तिक्रमतस्तद्विपरीतेन वेति संदेहे ॥ १७४ ॥

उत्पत्तिस्थितिविलया ब्रह्मायत्ता यतो हि भूतानाम् ।
तत्र विशेषाभावादनियम एवेह युक्त आभाति ॥ १७५ ॥
अथवैतेषां विलयः स्यादुत्पत्तिक्रमानुरोधेन ।
इत्याशङ्कायोगात्तदेतदभिधीयते हि सूत्रकृता ॥ १७६ ॥
विपरीतक्रम एव स्यादुत्पत्तिक्रमाद्धि विलयस्य ।
सोपानारोहादौ यथाऽवरोहक्रमो हि विपरीतः ॥ १७७ ॥
ओषध्यादिकमेवं मृदि बिलयं याति मृदपि चाप्स्वेव ।
आपस्तेजसि तेजो वायौ वायुश्च वियति वियदपि च ॥ १७८ ॥
ब्रह्मणि विपरीतेन क्रमेण सकलं हि विलयमुपयाति ।
स्मृतिरपि जगत्प्रतिष्ठेत्याद्या विलयक्रमं हि विपरीतम् ॥ १७९ ॥
दर्शयति येन तस्मान्नैवोत्पत्तिक्रमो हि भवतीह ।
यद्युत्पत्तिक्रम इह विलयेऽपि स्यात्तदा भवेदेवम् ॥ १८० ॥
समवस्थितेऽपि कार्ये कारणविलयश्च जगति दृश्येत ।
कार्याप्यये तु कारणसमवस्थानं हि दृश्यते लोके ॥ १८१ ॥
तस्माद्विपर्ययेण क्रमो हि विलयस्य युक्त एवेह ।

अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॥१५॥

भूतानामुत्पत्तिप्रलयावेतौ श्रुतिस्मृतिप्रथितौ ॥ १८२ ॥
अनुलोमप्रतिलोमक्रमेण तौ भवत इति हि निर्दिष्टम् ।
उत्पत्तिश्चाऽऽत्मादिः प्रलयश्चाऽऽत्मान्त इत्यपीह्योक्तम् ॥ १८३ ॥
इह सेन्द्रियस्य मनसो बुद्धेरपि दृश्यते हि सद्भावः ।
बुद्धिं तु सारथिमिति श्रुतिवाक्ये तत्परं यतो लिङ्गम् ॥ १८४ ॥
उत्पत्तिप्रलयौ किल संग्राह्यावेतयोः क्वचिद्भवतः ।
अभ्युपगतं हि यस्माद्ब्रह्मप्रभवं हि सकलमेतदिति ॥ १८५ ॥
अपि चैतस्माज्जायत इति मन्त्रे सेन्द्रियं मनोऽधीतम् ।
उत्पत्तिपरे वाक्ये भूतानामात्मनोऽन्तराले हि ॥ १८६ ॥
करणानामुत्पत्तिक्रमोऽयमपरो हि दृश्यते तत्र ।
एवं सति च विरोधो भवति हि तित्तिर्यथर्वणश्रुत्योः ॥ १८७ ॥
एवं सति च विरोधाच्छ्रुत्योर्ब्रह्मणि समन्वयोऽसिद्धः ।
तस्मादुक्तोत्पत्तिक्रमविलयक्रमविभङ्ग इति चेन्न ॥ १८८ ॥
आत्मन आकाश इति श्रुतिवाक्ये पञ्चमी हि निर्दिष्टा ।
तस्याश्च कार्यकारणभावेनार्थक्रमः प्रतीयेत ॥ १८९ ॥

पाठक्रमसूत्रं स्यादथर्वणे तेन चेह न विरोधः ।
पाठक्रमाद्धि बलवानर्थक्रम इति हि शास्त्रमर्यादा ॥ १९० ॥
तस्मात्करणानामिह भूतानन्तर्यमेव युक्तं स्यात् ।
यस्माच्च भौतिकानि हि करणानि मनःपुरःसराणि स्युः ॥ १९१ ॥
भूतोत्पत्तिक्रमतो न तदुत्पत्तिक्रमे विशेषः स्यात् ।
अन्नमयं हीत्येषा करणानां भौतिकत्वमाचष्टे ॥ १९२ ॥
अथ चेदभौतिकानि हि करणानि तथाऽपि चात्र न विरोधः ।
भूतानन्तरमेव हि करणानि भवन्ति नैव तत्पूर्वम् ॥ १९३ ॥
एवं पृथगाम्नातः प्रजापतिर्वेति मन्त्रवाक्ये यः ।
भूतक्रमाद्धि करणक्रमः स चायं हि नो विरुद्धः स्यात् ॥१९४॥
तस्मात्समञ्जसः स्याद्भूतोत्पत्तिक्रमोऽयमुपदिष्टः ।

चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो
भाक्तस्तद्भावभावित्वात् ॥ १६ ॥

तत्पदवाच्यार्थस्य हि कारणरूपस्य निर्णयायैव ॥ १९५ ॥
भूतश्रुतिवाक्यानां विरोधशङ्का निराकृता पूर्वम् ।
इह चाऽऽ पादसमाप्तेस्त्वंपदवाच्यार्थसिद्धये भूयः ॥ १९६ ॥
जीवश्रुतिवाक्यानां विरोधशङ्का निरस्यते सपदि ।
जातेष्टिदर्शनेन हि न जायते म्रियत एवमादीनाम् ॥ १९७ ॥
श्रुतिवचसां हि विरोधे जीवाजत्वश्रुतेर्हि बाधः स्यात् ।
तेन च जीवोत्पत्तिक्रमेण भूतक्रमस्य बाधः स्यात् ॥ १९८ ॥
इति शङ्कामुद्धर्तुं मुनिना रचितं तदेतदधिकरणम् ।
चेतनमुद्दिश्यैव हि जातेष्ट्यादि च विधीयते लोके ॥ १९९ ॥
उद्देश्यमिह विधेयाविरोधतो नेयमिति नयो दृष्टः ।
तेन च जातेष्ट्यादिकमखिलं देहादिजन्ममूलं स्यात् ॥ २०० ॥
न हि जीवस्य कदाचिज्जन्म लयो वा स्वतोऽस्य संभवति ।
यदि देहानुविनाशी जीवः स्याच्छास्त्रमेतदफलं स्यात् ॥ २०१ ॥
इष्टप्राप्तिफलं यद्विधिशास्त्रमनिष्टनिरसनार्थं यत् ।
प्रतिषेधशास्त्रमसति ह्यधिकारिणि कुत्र सफलमेतत्स्यात् ॥२०२॥
तस्मान्न जायतेऽसौ न म्रियते जीव एष नित्यः स्यात् ।
श्रुतिरपि जीवापेतं वावेति किलैतमर्थमुपदिशति ॥ २०३ ॥

जन्ममृतिव्यपदेशो लोके दृष्टः स भाक्त एव स्यात् ।
स्थावरजङ्गमदेहव्यपाश्रयौ जन्ममरणशब्दौ स्तः ॥ २०४ ॥
तत्र हि मुख्यौ सन्तावुपचर्येते तदाश्रिते जीवे ।
देहोद्भवाभिभवयोरेतौ शब्दौ यतो हि दृश्येते ॥ २०५ ॥
दर्शयति श्रुतिरेषा स वा अयं पुरुष एवमाद्या हि ।
तनुसंयोगवियोगायत्ताविति जन्ममरणशब्दौ द्वौ ॥ २०६ ॥
जातेष्ट्यादिविधानं सकलमपि शरीरजन्मसापेक्षम् ।
स्थूलावुत्पत्तिलयौ तस्माद्देहव्यपाश्रयावेव ॥ २०७ ॥
न हि जीवे तावेताविती‌ह सूत्रे निराकृतौ भवतः ।
तस्य परस्मादुदयो वियदादीनामिवास्ति नास्तीति ॥ २०८ ॥
शङ्कां निरसितुमेतामुत्तरसूत्रं मुनिः प्रदर्शयति ।

नाऽऽत्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः ॥ १७ ॥

देहेन्द्रियसंघाताध्यक्षे जीवः प्रसिद्ध आत्माऽसौ ॥ २०९ ॥
देहोत्पत्तिलयाभ्यामस्पृष्ट इतीह दर्शितं पूर्वम् ।
भवतु तथाऽप्ययमात्मा वियदादिवदात्मनः परस्माद्धि ॥ २१० ॥
उत्पद्यत इति वाच्यं यतः प्रतिज्ञा हि नोपरुध्येत ।
आम्नातैवोत्पत्तिर्यथा सुदीप्तादिति श्रुतावपि च ॥ २११ ॥
अविकृत एव परात्मा प्रविष्ट इह जीवभावमापन्नः ।
एवं सति प्रतिज्ञा समञ्जसैवेति नेह युक्ततमम् ॥ २१२ ॥
अपहतपाप्मत्वगुणः परमात्मा गीयते हि सर्वत्र ।
तद्विपरीतो जीवो धर्माधर्मादिसाधनो यस्मात् ॥ २१३ ॥
एवं लक्षणभेदे जाग्रति कथमैक्यमेतयोर्भवति ।
वियदादि यद्विभक्तं तत्सर्वं विकृतमेव दृष्टं हि ॥ २१४ ॥
परमात्मनो विभक्तो जीवोऽसावपि विकार एव स्यात् ।
यच्च प्रवेशवाक्यं स एष इत्यादिमन्त्रपरिपठितम् ॥ २१५ ॥
तदपि च विकारभावापत्त्या तस्योपपादनीयं स्यात् ।
जीवोत्पत्तिस्थितिरिह वाक्ये यद्यपि न दृश्यतेऽथापि ॥ २१६ ॥
क्वचिदश्रुतमन्यत्र श्रुतं न वारयितुमर्हतीति नयात् ।
उपसंहर्तव्येयं जीवोत्पत्तिर्हि भवति सर्वत्र ॥ २१७ ॥
उत्पद्यते स तस्मात्तस्य च योऽसावजत्वनिर्देशः ।
कल्पान्तरालजननप्रतिषेधार्थो हि सोऽयमिति चेन्न ॥ २१८ ॥

योऽसावात्मा जीवः स च खलु नोत्पद्यते कदाचिदपि ।
जीवोत्पत्तिरियं न श्रुत्यन्तेषूपलभ्यते क्वापि ॥ २१९ ॥
उत्पत्तिरेव तस्य हि कथमपि वियदादिवन्न संभवति ।
नित्यत्वमेव तस्य श्रुत्यन्तेभ्योऽवगम्यते यस्मात् ॥ २२० ॥
सूत्रस्थाच्च चशब्दादजत्वमवगम्यते हि तस्यैव ।
अविकारत्वं च तथा परात्मनो ह्यविकृतस्य जीवतया ॥ २२१ ॥
समवस्थानं ब्रह्मस्वरूपता लभ्यते हि तस्यैव ।
उपपद्यते हि सा कथमेवंरूपस्य तस्य चोत्पत्तिः ॥ २२२ ॥
दृश्यन्ते हि श्रुतयो न जायते म्रियत एवमाद्या हि ।
एष महानज आत्मेत्येवमजो नित्य एवमाद्याश्च ॥ २२३ ॥
एवमनेनेत्याद्यास्तत्सृष्ट्वेत्येवमादिकाः श्रुतयः ।
तत्त्वमसीत्याद्या अपि तथा स एष इति चैवमाद्याश्च ॥ २२४ ॥
नित्यत्वमभिदधाना जीवोत्पत्तिं निवारयन्त्येव ।
ननु जीवो हि विभक्तो विकार एवेति युक्तमिति चेन्न ॥ २२५ ॥
नास्य स्वतो विभागो भवति हि बुध्याद्युपाधिमूलोऽसौ ।
एको देव इति श्रुतिरेकत्वं येन दर्शयत्यस्य ॥ २२६ ॥
तस्यैकस्यैवाऽऽत्मन उपाधिमयतां प्रदर्शयत्येषा ।
अयमात्मा ब्रह्मेति ह्यादिश्य ब्रह्मरूपतामस्य ॥ २२७ ॥
विज्ञानमयत्वादिकमस्याविकृतस्य दर्शयत्येषा ।
तन्मयता हि विविक्तस्वरूपविज्ञानविधुरतामूला ॥ २२८ ॥
जाल्मः स्त्रीमय इतिवत्तन्मयता तदुपरक्ततारूपा ।
जीवस्योत्पत्तिलयश्रवणं यदपीह दृश्यते तदपि ॥ २२९ ॥
तत्तदुपाध्युत्पत्तिप्रलयप्रतिसंधिपरतया नेयम् ।
विज्ञानघन इतीह श्रुतिरियमप्येतमर्थमुपदिशति ॥ २३० ॥
तनुरूपपरिणतेभ्यो भूतेभ्योऽसौ जनिं समालम्ब्य ।
तान्येव लीयमानान्यनुसृत्यायं विनाशमुपयाति ॥ २३१ ॥
इत्यौपाधिकमरणानन्तरमेतस्य नास्ति संज्ञेति ।
एवमुपाधिप्रलयाधीनः प्रलयोऽस्य न स्वतोऽस्तीति ॥ २३२ ॥
श्रुतिरत्रैवेत्याद्या प्रश्नपुरःसरमिदं प्रदर्शयति ।
आत्मा विज्ञानघनः प्रेत्य च संज्ञा न तस्य काचिदिति ॥ २३३ ॥

आपादितवान्मोहं ब्रूहि न जानामि तन्ममेत्येवम् ।
सति मैत्रेयीप्रश्ने न वा अरे अहमितीह दर्शयति ॥ २३४ ॥
मुनिरविनाशित्वाद्यं मात्रासंसर्गमस्य यत एवम् ।
आत्माऽसौ नित्यः स्यादिह प्रतिज्ञानुरोध एवं स्यात् ॥ २३५ ॥
अविकृत एव परात्मा न जीवभावेन देहसंस्थ इति ।
लक्षणभेदोऽप्यनयोरुपाधितन्त्रो न वस्तुतन्त्रः स्यात् ॥ २३६ ॥
यस्मादत ऊर्ध्वमिति श्रुतिरेषा तस्य दर्शयत्येवम् ।
विज्ञानादिमयस्य प्रकृतस्यैवाऽऽत्मनो हि सकलमिदम् ॥ २३७ ॥
संसारधर्मजातं प्रत्याख्यायोपदिशति तस्यैव ।
परमात्मभावममलं स कथं म्रियेत वाऽथ जायेत ॥ २३८ ॥
तस्मादात्मा नित्यो नैवोत्पद्येत न प्रमीयेत ।

ज्ञोऽत एव ॥ १८ ॥

संप्रत्यात्मैवास्य ज्योतिर्भवतीति वेदवाक्यानाम् ॥ २३९ ॥
पश्यंश्चक्षुः शृण्वञ्श्रोत्रमिति श्रुतिवचोभिरन्योन्यम् ।
ज्ञानानित्यत्वपरैर्यश्च विरोधो निरस्यते सोऽयम् ॥ २४० ॥
जीवस्यानुत्पत्तावपि नासौ स्वप्रकाशचिद्रूपः ।
आगन्तुकचैतन्यः काणभुजानामिवायमात्मा स्यात् ॥ २४१ ॥
यदि नित्यं चैतन्यं तस्य भवेत्सुप्तमूर्छितादीनाम् ।
चैतन्यं किं न भवेत्साधनवैयर्थ्यमपि च दुर्वारम् ॥ २४२ ॥
आगन्तुकचैतन्ये ब्रह्मैक्यं तस्य भवति कथमिति चेत् ।
तस्योत्तरमेतत्स्यादात्माऽसौ भवति नित्यचैतन्यः ॥ २४३ ॥
नोत्पद्यते यतोऽयं परमेव ब्रह्म यदपि चाविकृतम् ।
बुध्याद्युपाधियोगात्तदेव जीवात्मभावमापन्नम् ॥ २४४ ॥
यद्धि परं ब्रह्म स्यात्तन्नित्यस्वप्रकाशचिद्रूपम् ।
सत्यं ज्ञानमनन्तं ब्रह्मेति श्रुतिवचोभिराम्नातम् ॥ २४५ ॥
यदि च परब्रह्मासौ जीवः स्यात्तर्हि नित्यचैतन्यः ।
श्रुतयो विज्ञानमयप्रकरणपठितास्तथैव दृश्यन्ते ॥ २४६ ॥
सोऽयमसुप्तः सुप्तानर्थानाभिलक्ष्य पश्यतीत्यर्था ।
स्वात्मज्योतिः पुरुषः स्वापे भवतीति बोधयत्येका ॥ २४७ ॥
विज्ञातुर्विज्ञातेर्न विलोप इतीह बोधयत्यन्या ।
अथ यो वेदेदमिति प्रतिकरणं वेदनानुसंधानात् ॥ २४८ ॥

जीवात्मनोऽपि भवति हि नित्यज्ञानस्वरूपता सिद्धा।
जीवस्य नित्यचेतनभावे घ्राणाद्यनर्थकं भूयात् ॥ २४९ ॥
इति तु न हि घ्राणादिकमन्यत्र गन्धादिविषयवृत्त्यर्थम्।
गन्धाय घ्राणमिति[श्रुति]रप्युक्तार्थमेव बोधयति ॥ २५० ॥
सुप्तादिषु चैतन्यं स्यादिति शङ्काऽपि नेह कर्तव्या।
श्रुत्यैव परिहृतेयं पश्यन्वै तन्न पश्यतीत्यनया ॥ २२१ ॥
यदि चेतयमानत्वं सुप्तादिषु दृश्यते हि तद्धि किल।
न हि चैतन्याभावात्परंतु तद्विषयवृत्त्यभावेन ॥ २५२ ॥
वियदाश्रयः प्रकाशो यथा प्रकाश्यार्थविरहितत्वेन।
नैवाभिव्यक्तः स्यात्तद्वदिहापीति सर्वमनवद्यम् ॥ २५३ ॥
तस्मात्सिद्धं नित्यः स्वयंप्रभज्ञानरूप आत्मेति।

## उत्क्रान्तिगत्यागतीनाम् ॥ १९ ॥

संप्रति किंपरिमाणो जीवः स्यादिति विचार्यते भूयः ॥ २५४ ॥
ननु जीवे निर्णीतं नित्यत्वं नित्यचेतनत्वमपि।
अत इह परमात्माऽसौ जीव इति निरूपितं हि पूर्वत्र ॥ २५५ ॥
आम्नाता हि परस्य त्वमनन्तता सा हि भवति जीवस्य।
तेन च परिमाणान्तरचिन्ता नेहोचितेति चेन्मैवम् ॥ २५६ ॥
यत उत्क्रान्त्यादीनि ह्यस्य परिच्छेदमेव गमयन्ति।
क्वचिदणुपरिमाणत्वं तस्यैवाऽऽम्नायते स्वशब्देन ॥ २५७ ॥
एतस्यानुकूलतामुपपादयितुं कृतोऽयमारम्भः।
उत्क्रान्त्यादिश्रवणादणुरात्माऽसौ भवेत्परिच्छिन्नः ॥ २५८ ॥
उत्क्रान्तिः स यदेति श्रुतिवाक्येनोपदर्शिता तस्य।
गतिरपि ये वै के चेत्यनया श्रुत्योपदर्शिता भवति ॥ २५९ ॥
आगतिरपि निर्दिष्टा तस्माल्लोकादिति श्रुतौ तस्य।
उत्क्रान्त्यादिश्रवणात्स भवेदात्मा यदा परिच्छिन्नः ॥ २६० ॥
तनुपरिमाणनिरासादणुरयमात्मेति गम्यते हि तदा।

## स्वात्मना चोत्तरयोः ॥ २० ॥

ग्राम्यस्वाम्यनिवृत्तिवदियमुत्क्रान्तिर्भवेदचलतोऽपि ॥ २६१ ॥
नाचलतो हि कदाचन गत्यागमने तथोत्तरे भवतः।
गमिधातुरयं यस्मात्कर्तृगतां हि क्रियां प्रदर्शयति ॥ २६२ ॥

गत्यागती त्वमध्यमपरिमाणस्याणुताप्रयुक्ते हि ।
एवं सत्युत्क्रान्तिर्देहादपसृप्तिरेव नान्या स्यात् ॥ २६३ ॥
चक्षुष्टो वा मूर्ध्नो वेति कृतिरेवमेव दर्शयति ।
आगतिमस्य स एतास्तेजोमात्रा इति श्रुतिर्वक्ति ॥ २६४ ॥
शुक्रमिति श्रुतिरेषा गतिमपि सिद्धान्ततोऽणुरात्मेति ।

नाणुरतच्छ्रुतेरिति चेन्ने-
तराधिकारात् ॥ २१ ॥

नन्वयमात्मा नाणुर्यतोऽनणुत्वं हि तस्य निर्दिष्टम् ॥ २६५ ॥
एष महानज आत्मा योऽयं विज्ञानमय इति श्रुतिषु ।
तस्मादणुपरिमाणः कथमयमात्मेति नेह शङ्का स्यात् ॥ २६६ ॥
यस्मात्प्रकरणमेतद्ब्रह्मपरं भवति नैव जीवपरम् ।
विरजः पर आकाशादित्यपि वाक्यं परात्मपरमेव ॥ २६७ ॥
नन्विह शारीरोऽयं महत्त्वयोगेन दर्शितो भवति ।
योऽयमिति श्रुतिवाक्ये विज्ञानमयो यतश्च शारीरः ॥ २६८ ॥
इति नेह शङ्कनीयं निर्देशोऽयं हि शास्त्रदृष्ट्यैव ।
मनुरहमभवमिति यथा निर्देशो वामदेवसंज्ञस्य ॥ २६९ ॥
तस्मात्प्राज्ञस्यैव हि परिमाणान्तरमतोऽणुरात्माऽयम् ।

स्वशब्दोन्मानाभ्यां च ॥ २२ ॥

अयमणुरात्मा यस्मादणुत्वमस्य श्रुतिर्हि निर्दिशति ॥ २७० ॥
एषोऽणुरिति श्रुतिरिह जीवं प्राणाश्रितत्वयोगेन ।
निर्दिश्य दर्शयति किल तस्यैवाणुत्ववेदितव्यत्वे ॥ २७१ ॥
उन्मानं किल यदिदं वालाग्रेतीह दर्शितं तदपि ।
एवं ह्युन्मानान्तरमाराग्रेति प्रदर्शितं तदपि ॥ २७२ ॥
तेजोन्माने अपि खल्वणुपरिमाणत्वमस्य दर्शयतः ।
ननु जीवस्याणुत्वे स चैकदेशस्थ एव देहे स्यात् ॥ २७३ ॥
सकलशरीरगता कथमुपलब्धिर्दृश्यते हि सा लोके ।
उपलभ्यते हि गङ्गाजलमग्नानां समग्रतनुशैत्यम् ॥ २७४ ॥
परितापोऽपि तथैव च निदाघसमये हि सकलदेहगतः ।

अविरोधश्चन्दनवत् ॥ २३ ॥

इति चेद्यथा हि लोके हरिचन्दनबिन्दुरेकदेशस्थः ॥ २७५ ॥

सकलशरीरव्यापिनमाह्लादं जनयतीह तद्वदयम् ।
देहैकदेशसंस्थो जनयत्युपलब्धिमखिलदेहगताम् ॥ २७६ ॥
त्वक्संबन्धाच्चास्य हि सकलशरीरगतवेदना भवति ।

## अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि ॥ २४ ॥

नन्विह दृष्टान्तोऽयं विषमो नेहार्थसाधको भवति ॥ २७७ ॥
हरिचन्दनबिन्दुरसाविह खलु देहैकदेशसंस्थोऽपि ।
प्रत्यक्षेण हि दृष्टो जनयन्नाह्लादमखिलदेहगतम् ॥ २७८ ॥
इह पुनरुपलब्धिरियं सर्वाङ्गव्यापिनी परं दृष्टा ।
नैवैकदेशसंस्था प्रत्यक्षेणोपलभ्यते तस्य ॥ २७९ ॥
तस्यैकदेशसंस्थितिसाधकमनुमानमपि न देहेऽस्ति ।
उपलब्धिरियं किंवा कृत्स्नतनुस्थत्वगिन्द्रियस्यैव ॥ २८० ॥
किंवा वियत इव विभोः किंवा देहैकदेशसंस्थस्य ।
इतिसंशयानिवृत्तेर्दृष्टान्तो नेह युक्त इति चेन्न ॥ २८१ ॥
देहैकदेशसंस्था वेदान्तेषूपलभ्यते तस्य ।
योऽयं विज्ञानमयः प्राणेष्वित्यादिवेदवाक्येन ॥ २८२ ॥
हृद्यन्तर्ज्योतिरिति श्रुतिवचसा हृदयदेशवृत्तित्वम् ।
यस्मादस्याभ्युपगतमत उपपन्नः किलैष दृष्टान्तः ॥ २८३ ॥
दृष्टान्ताविषम्यादविरोध इतीह युक्तमेवोक्तम् ।

## गुणाद्वा लोकवत् ॥ २५ ॥

चैतन्यगुणव्याप्तेरविरोधो भवति लोकवच्चेह ॥ २८४ ॥
यद्वन्मणिप्रदीपप्रभृतीनामेकदेशसंस्थानाम् ।
या च प्रभा तदीया सा चाधिकदेशसंगता दृष्टा ॥ २८५ ॥
नन्विह चन्दनबिन्दोरपि किल देहैकदेशसंस्थस्य ।
अवयवविसर्पणेन ह्याह्लादयितुत्वमुचितमेवास्य ॥ २८६ ॥
इह खलु जीवस्याणोर्नित्यस्य तथैव सन्ति नावयवाः ।
कैरवयवैः कथं वा सकलं देहं स विप्रसर्पेत ॥ २८७ ॥
इति शङ्कां वारयितुं सूत्रं तदिदं कृतं गुणाद्वेति ।
नन्विह कथं गुणोऽसौ गुणिनमतिक्रम्य वर्तितुं प्रभवेत् ॥ २८८ ॥
पटगतशुक्लादिगुणो न पटादन्यत्र दृश्यते लोके ।
दीपप्रभा हि न गुणो द्रव्यान्तरमेव किंतु सा भाति ॥ २८९ ॥

निबिडावयवं तेजो द्रव्यं लभते प्रदीपसंज्ञां हि ।
विरलावयवं यदिदं तेजोद्रव्यं हि तत्प्रभा भवति ॥ २९० ॥
तस्मादयुक्त एव ह्ययमपि दृष्टान्त इत्यतः पठति ।

व्यतिरेको गन्धवत् ॥ २६ ॥

तथा च दर्शयति ॥ २७ ॥

गन्धवतो द्रव्यस्य व्यतिरेकेणापि वर्ततेऽन्यत्र ॥ २९१ ॥
गन्धो गुणो यथा वा चैतन्यगुणोऽपि तद्वदेव स्यात् ।
उपलभ्यते हि कुसुमेष्वप्राप्तेष्वपि च गन्धगुण एषः ॥ २९२ ॥
तेन गुणत्वाद्रूपवदाश्रयविश्लिष्टता न युक्ताऽस्य ।
इत्येतद्व्यभिचरितं दृष्टो गन्धे यतश्च विश्लेषः ॥ २९३ ॥
गन्धस्यापि सहैवाऽऽश्रयेण विश्लेष इति तु न हि युक्तम् ।
यस्मान्मूलद्रव्याद्विश्लेषोऽस्योपवर्ण्यते तदिदम् ॥ २९४ ॥
क्षीयेत पूर्वसंस्थैर्गुरुबुध्यादिभिरपीह हीयेत ।
सूक्ष्माः कुसुमावयवा विप्रसृताः सर्वतो हि जनयन्ति ॥ २९५ ॥
गन्धं प्रविशन्ति तथा नासापुटमिति न चेन्न युक्ततमम् ।
सूक्ष्मा ह्यतीन्द्रियास्ते स्फुटो हि गन्धः प्रतीयमानोऽसौ॥ २९६ ॥
तस्मान्न किंचिदेतद्यथैव दृष्टं तथाऽभ्युपेतव्यम् ।
दर्शयति श्रुतिरेषा तथैव हृदयालयत्वमणुतां च ॥ २९७ ॥
तस्याभिधाय पुनरप्या लोमभ्यस्तथाऽऽ नखाग्रेभ्यः ।
चैतन्येन गुणेन हि सर्वतनुव्यापितां च दर्शयति ॥ २९८ ॥
श्रुत्यन्तराविलम्बाद्व्यापित्वं तस्य दर्शयत्यधुना ।

पृथगुपदेशात् ॥ २८ ॥

प्रज्ञां पृथगुपदिशति श्रुतिरिह या प्रज्ञया शरीरमिति ॥ २९९ ॥
कृत्स्नतनुव्यापित्वं तथैव तस्योपदर्शयत्येषा ।
स्वापाधिकारपठिता श्रुतिस्तदेतदिति दर्शयत्येवम् ॥ ३०० ॥
अणुरयमात्मा हीशो विभुरत ऐक्यं कथं तयोरिति चेत् ।

तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥ २९ ॥

सोऽयं हि पूर्वपक्षव्यावृत्तिफलस्तु शब्द इह भवति ॥ ३०१ ॥
उत्पत्तिश्रवणाद्ब्रह्मण एव प्रदेशदृष्ट्या च ।
तद्रूपतोपदेशात्परमेव ब्रह्म जीव इत्युक्तम् ॥ ३०२ ॥

यावद्ब्रह्म परं स्यात्तावाञ्जीवोऽपि भवितुमर्हति हि ।
इह च परस्य विभुत्वं श्रुतमत आत्माऽपि भवति विभुरेव॥३०३॥
एष महानज आत्मा योऽयं विज्ञानमय इति प्रथितः ।
जीवपरा हि श्रौता विभुत्ववादाः समर्थितास्तेन ॥ ३०४ ॥
यदि चाणुर्जीवः स्यात्सकलतनुव्याप्तिवेदना न स्यात् ।
त्वक्संबन्धात्सा चेत्कण्टकतोदेऽपि तद्वदेव स्यात् ॥ ३०५ ॥
कण्टकतुन्नो लभते पादतले वेदनां न चान्यत्र ।
इह चैतन्यगुणस्य व्याप्तिर्वा कथमणोर्हि जीवस्य ॥ ३०६ ॥
यच्च गुणस्य गुणत्वं गुणिनमनाश्रित्य तत्कथं सिध्येत् ।
गन्धः साश्रय एव हि संचरतीत्येतदेव युक्तमतः ॥ ३०७ ॥
द्वैपायनेन मुनिना ह्युपलभ्याप्स्विति तदेतदेवोक्तम् ।
सर्वशरीरव्याप्तं चैतन्यं स्याद्यदाऽस्य जीवस्य ॥ ३०८ ॥
न तदाऽणुर्जीवः स्याद्यतो हि चैतन्यरूप एवासौ ।
औष्ण्यप्रकाशरूपो यथा हि वह्निस्तथाऽयमात्मा स्यात् ॥३०९॥
गुणगुणिभावायोगात्तनुपरिमाणत्वनिरसनाच्चैव ।
तस्मादिह परिशेषाद्विभुरयमात्मेति युक्तमभिधातुम् ॥ ३१० ॥
तदणुत्वव्यपदेशं संगमयति सपदि सूत्रकारोऽसौ ।
तद्गुणसारो जीवो यतोऽणुरयमिति हि गीयते तेन ॥ ३११ ॥
इच्छाद्वेषप्रमुखा ये वै बुद्धेर्गुणा हि विख्याताः ।
तेषामध्यासेन ह्यणुत्ववादोऽयमस्य संवृत्तः ॥ ३१२ ॥
कर्तृत्वभोक्तृतात्मकसंसारित्वं च भवति तन्मूलम् ।
स्वत इह सोऽयमकर्ता तद्वदभोक्ता च नित्यमुक्तश्च ॥ ३१३ ॥
अणुपरिमाणाध्यासो बुद्ध्यध्यासप्रयुक्त एवास्य ।
उत्क्रान्तिव्यपदेशो बुद्ध्युत्क्रान्त्या न च स्वतोऽस्य स्यात्॥३१४॥
श्रुतिरिह वालाग्रेति प्रथममणुत्वं हि तस्य निर्दिश्य ।
अन्ते स चेति वाक्यादानन्त्यं तस्य सम्यगुपदिशति ॥ ३१५ ॥
तच्चेवमाञ्जसं स्याद्यदौपचारिकमणुत्वमिह भवति ।
आनन्त्यमौपचारिकमिति नाऽऽशङ्क्यं यतश्च सर्वत्र ॥ ३१६ ॥
ब्रह्मत्वभाव एव श्रुत्यन्तेषूपदिश्यते तस्य ।
या बुद्धेरित्याद्या श्रुतिरस्याऽऽराग्रमात्रता शास्ति ॥ ३१७ ॥

सा बुद्धियोगमूलां तामाचष्टे न हि स्वरूपेण ।
या श्रुतिरेषोऽणुरिति प्रथयत्यणुतां न तत्परा सा हि ॥ ३१८ ॥
ज्ञानप्रसादगम्यः पर एवाऽऽत्मा यतोऽत्र निर्दिष्टः ।
अणुपरिमाणत्वं किल जीवस्याप्यनुपपन्नमेवातः ॥ ३१९ ॥
दुर्ज्ञानत्वपरं स्यादुपाधिसंबन्धपरतया वा स्यात् ।
यच्चान्यच्छ्रुतिवाक्यं प्रदर्शितं प्रज्ञया शरीरमिति ॥ ३२० ॥
बुद्धिः प्रज्ञेव स्यादथवा व्यपदेशमात्रमेतत्स्यात् ।
व्यपदेशोऽयमभिन्ने भवति शिलापुत्रकस्य गात्रमिति ॥ ३२१ ॥
अत्र च गुणगुणिभावो नैवास्तीत्युक्तमेव पूर्वत्र ।
हृदयायतनत्वोक्तिर्बुध्द्यायत्ता तथैव चोत्क्रान्तिः ॥ ३२२ ॥
इममर्थमेव कस्मिन्नहमित्येषा श्रुतिः प्रदर्शयति ।
यद्युत्क्रान्तिर्न स्यात्स्यातां गत्यागती कथं तस्य ॥ ३२३ ॥
तस्माद्व्यपदेशोऽसावुपाधिगुणसारतोऽत्र युक्तः स्यात् ।
परमात्मनो यथा वा प्राज्ञस्योपासनेषु सगुणेषु ॥ ३२४ ॥
स्याद्व्यपदेशोऽणीयान्व्रीहेरित्ययमुपाधियोगेन ।
संसारित्वमणुत्वं तद्वज्जीवेऽप्युपाधियोगेन ॥ ३२५ ॥
बुध्द्यात्मयोगतो ननु संसारित्वं यदाऽस्य कल्प्येत ।
संयोगस्यापगमो भवत्यवश्यमिति तद्वियोगे हि ॥ ३२६ ॥
तस्यासंसारित्वं स्यादिति शङ्कां निराकरोत्यधुना ।

यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥ ३० ॥

नैषा शङ्का कार्या यस्माद्बुध्द्याद्युपाधियोगोऽसौ ॥ ३२७ ॥
स च यावदात्मभावी नाकस्मात्तदवसानमिह भवति ।
यावत्तत्त्वावगतेरस्य न संसारिता निवर्तेत ॥ ३२८ ॥
तावच्च नोपशाम्यति बुध्द्या योगो न केनचिद्वाऽपि ।
बुध्द्या योगो योऽसौ स कथं स्याद्यावदात्मभावीति ॥ ३२९ ॥
एषा शङ्का मुनिना निरस्यते सपदि सूत्रशेषेण ।
योऽयमिति श्रुतिदृष्टो विज्ञानमयो हि बुद्धिमय एव ॥ ३३० ॥
मनआदिसाहचर्यं विज्ञानस्योपलभ्यते येन ।
विज्ञानमयमनोमयपुरःसरा श्रुतिवचोन्तरे दृष्टा ॥ ३३१ ॥
अनुसंचरतीत्यन्ता स समानः सन्निति श्रुतिर्याऽपि ।
लोकान्तरगमनेऽपि हि बुद्ध्या योगं प्रदर्शयत्येषा ॥ ३३२ ॥

मिथ्याज्ञानपुरःसर एवासावात्मबुद्धिसंयोगः ।
मिथ्याज्ञाननिवृत्तिर्न हि सम्यग्ज्ञानमन्तरा भवति ॥ ३३३ ॥
तस्माद्बुद्ध्या योगः सम्यग्ज्ञानादृते न शाम्येत ।
श्रुतिरपि वेदाहमिति प्रथयति तमिमं यथोपदिष्टार्थम् ॥ ३३४ ॥
अत्येति तं विदित्वा मृत्युं मार्गोऽयनाय नान्य इति ।
नन्विह सुप्तौ प्रलये बुद्ध्या योगो न शक्यते ज्ञातुम् ॥ ३३५ ॥
कृत्स्नं विकारविलयं स्वमपीत इति श्रुतिर्यतो वक्ति ।

पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॥ ३१ ॥

सुप्त्यादौ निर्लेपं बुद्धेर्योगेन विलयमुपयाति ॥ ३३६ ॥
सत एवाभिव्यक्तिर्लोके दृष्टा न चासतः क्वापि ।
पुंस्त्वादीनि हि लोके बाल्ये जीवात्मना स्थितान्येव ॥ ३३७ ॥
आविर्भवन्ति पश्चाद्यौवनसमये न वैपरीत्येन ।
यदि चेन्नायं नियमः षण्डादीनां कुतो न जायन्ते ॥ ३३८ ॥
तस्मात्सुप्तौ विलये बुद्ध्या योगो हि सूक्ष्मरूपेण ।
स्थित एव संप्रबोधे व्यक्तं गृह्यत इतीह वक्तव्यम् ॥ ३३९ ॥
दर्शयति श्रुतिरेषा सति संपद्येति चेममेवार्थम् ।

नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽ-
न्यतरनियमो वाऽन्यथा ॥ ३२ ॥

आत्मन उपाधिभूतं ह्यन्तःकरणं मनश्च बुद्धिरिति ॥ ३४० ॥
विज्ञानं चित्तमिति ह्यनेकधा गीयते हि वेदेषु ।
निश्चयवृत्तिर्बुद्धिः संशयवृत्तिकमिदं मनो भवति ॥ ३४१ ॥
यद्यन्तःकरणमिदं नाभ्युपगम्येत तर्हि दोषोऽयम् ।
नित्योपलब्धिरथवा नित्यानुपलब्धिरेव तस्य स्यात् ॥ ३४२ ॥
उपलब्धिसाधनानामात्मेन्द्रियविषयपरिकरादीनाम् ।
सततोपलब्धिरेव हि संनिधियोगेन तस्य जायेत ॥ ३४३ ॥
सति हेतुसमवधाने यदि च फलं नैव दृश्यते तर्हि ।
अनवरतानुपलब्धिस्तस्येयं भवति दुर्निवारैव ॥ ३४४ ॥
शक्तिप्रतिबन्धो वाऽप्यात्मेन्द्रिययोरिहाभ्युपेयः स्यात् ।
शक्तिप्रतिबन्धोऽसावात्मन इह वक्तुमनुचितो भवति ॥ ३४५ ॥

यस्मादविक्रियोऽसावात्मा तेनायमनुचितस्तस्य ।
नापीन्द्रियस्य पूर्वोत्तरक्षणाकुण्ठशक्तिकस्यैव ॥ ३४६ ॥
मध्ये हि कथमकस्माच्छक्तिरियं तस्य चोपरुध्येत ।
तस्माच्च यदवधानानवधानाभ्यामुभे इमे भवतः ॥ ३४७ ॥
तच्चाऽऽवश्यकमेव हि मन इममर्थं श्रुतिः प्रदर्शयति ।
मनसा ह्येवेत्याद्या श्रुतिरन्यत्रेति चापराऽपि तथा ॥ ३४८ ॥
तस्मात्सूत्रकृतोक्तं तद्गुणसारत्वमुचितमेवास्य ।

कर्ता शास्त्रार्थवत्त्वात् ॥ ३३ ॥

तद्गुणसारत्वेन ह्यणुताध्यासात्स्वतो महत्त्वमिति ॥ ३४९ ॥
स्थापितमेतत्संप्रति कर्तृत्वाध्यासमपि च दर्शयति ।
अत्रासङ्गत्वश्रुतिवचनानामपि विधिश्रुतीनां च ॥ ३५० ॥
विप्रतिपत्तौ बुद्धेः कर्तृत्वेनैव शास्त्रनिर्वाहात् ।
सोऽयमकर्तैव स्यादिति सांख्यमतं हि निरसितुं सकलम् ॥३५१॥
कर्तृत्वाध्यासोक्त्या सिद्धान्तयतीह सूत्रकारोऽयम् ।
आत्माऽसौ कर्ता स्याद्यस्माद्विधिशास्त्रमर्थवद्भवति ॥ ३५२ ॥
कथमन्यथाऽर्थवत्स्याद्दध्ना जुहुयाद्यजेत पशुनेति ।
द्रष्टा श्रोता मन्ता बोद्धा कर्तेति शास्त्रमखिलमपि ॥ ३५३ ॥
नैवासङ्गत्वश्रुतिपरिपन्थ्याविद्यकं हि कर्तृत्वम् ।

विहारोपदेशात् ॥ ३४ ॥

तस्मात्स हि कर्ता स्यादितोऽपि चाऽऽत्मा भवेदसौ कर्ता॥३५४॥
यस्माद्विहारमस्य श्रुतिः स ईयत इति प्रदर्शयति ।

उपादानात् ॥ ३५ ॥

आत्माऽसौ कर्ता स्याद्यतस्तदेषामिति श्रुतिस्तस्य ॥ ३५५ ॥
जीवप्रकरण एव हि करणोपादानमस्य कीर्तयति ।

व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॥ ३६ ॥

विज्ञानं यज्ञमिति श्रुतिरेषा हि क्रियासु कर्तृत्वम् ॥ ३५६ ॥
व्यपदिशति तस्य यस्मादितोऽपि चाऽऽत्मा भवेदसौ कर्ता ।
नन्विह विज्ञानपदं बुद्धिपरं स्यान्न चाऽऽत्मपरमिति चेत् ॥३५७॥
बुद्धिपरं चेत्तदिदं निर्देशविपर्ययः प्रसज्येत ।
विज्ञानेनेति स्याद्विज्ञानमितीह नो निदेशः स्यात् ॥ ३५८ ॥

बुद्धिविवक्षायां खलु करणविभक्तिर्हि दृश्यतेऽन्यत्र ।
विज्ञानेनेत्येव श्रुतौ तदेषामिति प्रसिद्धायाम् ॥ ३५९ ॥
ननु यदि बुद्ध्यतिरिक्तो जीवः कर्ता स च स्वतन्त्रः सन् ।
प्रियमात्मनो हि यत्स्यात्तदेव संपादयेन्न विपरीतम् ॥ ३६० ॥
विपरीतमपि च कार्यं कुर्वाणो दृश्यते ह्यसावात्मा ।
एवंविधा प्रवृत्तिर्न हि स्वतन्त्रस्य भवति युक्ततमा ॥ ३६१ ॥
इत्येतामाशङ्कां निरसितुमपरं हि सूत्रमिह पठति ।

उपलब्धिवदनियमः ॥ ३७ ॥

आत्मा यथोपलब्धिं प्रति स्वतन्त्रोऽप्यनिष्टमिष्टं च ॥ ३६२ ॥
उपलभते तद्वदिहाप्यनिष्टमिष्टं समर्जयेन्न कुतः ।
उपलब्धिसाधनानि हि भवन्ति विषयप्रकल्पनार्थानि ॥ ३६३ ॥
उपलब्धौ त्वनपेक्षः स्यादयमात्मा हि चेतनत्वेन ।
नन्वयमात्मा करणान्यपेक्षते विषयकल्पनार्थं चेत् ॥ ३६४ ॥
स च कथमिह स्वतन्त्रः स्यादित्येतच्च तुल्यमुभयत्र ।
कर्ता व्यपेक्षते किल देशं कालं निमित्तमपि किंचित् ॥ ३६५ ॥
नैतावता हि कार्ये कर्तुः स्वातन्त्र्यमपहतं भवति ।
एधोदकसापेक्षः पक्ता पाके स्वतन्त्र एव स्यात् ॥ ३६६ ॥
सहकारान्तरयोगादिष्टानिष्टप्रवृत्तिरस्य स्यात् ।

शक्तिविपर्ययात् ॥ ३८ ॥

विज्ञानव्यतिरिक्तो जीवः कर्तेति वक्तुमिह युक्तम् ॥ ३६७ ॥
विज्ञानशब्दवाच्या बुद्धिः कर्तृत्वभागिनी चेत्स्यात् ।
बुद्धिर्हि करणशक्तिः प्रथिता सर्वत्र सा च हीयेत ॥ ३६८ ॥
एवं हि कर्तृशक्तिस्तस्या बुद्धेः परं प्रसज्येत ।
सर्वार्थकारिकरणं कल्पयितव्यं तदाऽन्यदेतस्याः ॥ ३६९ ॥
शक्तोऽपि सन्क्रियास्विह करणापेक्षो हि दृश्यते कर्ता ।
करणव्यतिरिक्तेऽपि हि कर्तरि संज्ञाकृतो विवादः स्यात् ॥ ३७० ॥

समाध्यभावाच्च ॥ ३९ ॥

औपनिषदात्मबोधप्रयोजनो यः समाधिरुपदिष्टः ।
द्रष्टव्यः श्रोतव्यो मन्तव्य इति श्रुतिप्रदेशेषु ॥ ३७१ ॥

असति च कर्तृत्वे कथमुपपन्नस्तस्य सोऽयमिह भवति ।
तस्माद्व्यय आत्मा कर्तेत्येतच्च युक्तमेव स्यात् ॥ ३७२ ॥

यथा च तक्षोभयथा ॥ ४० ॥

शास्त्रार्थवत्त्वपूर्वैर्हेतुभिरेतस्य यच्च कर्तृत्वम् ।
मीमांसकानुमत्या स्वाभाविकमेव तदिति संप्राप्ते ॥ ३७३ ॥
न स्वाभाविकमस्य च कर्तृत्वं स्यादितीह दर्शयति ।
तच्चेत्स्वाभाविकमिह न विमोक्षः स्यात्कथंचिदपि तेन ॥ ३७४ ॥
कर्तृत्वादविमुक्ते पुरुषार्थो वा कथं भवेत्को वा ।
ननु कर्तृत्वे सत्यप्यस्य च कर्तृत्वकार्यपरिहारात् ॥ ३७५ ॥
पुरुषार्थः स्यादस्य हि तत्परिहारो निमित्तपरिहारात् ।
अग्नेः शक्तस्यापि हि काष्ठवियोगे यथा न कार्यं स्यात् ॥ ३७६ ॥
तद्वदिहापि स्यादिति नेयं शङ्का हि भवति युक्ततमा ।
येन निमित्तानामपि संबन्धः शक्तिलक्षणेन स्यात् ॥ ३७७ ॥
तत्परिहारायोगादविमोक्षोऽसौ ततोऽस्य दुर्वारः ।
ननु मोक्षसाधनात्किल मोक्षः स्यादिति तु नैवमाशङ्क्यम् ॥ ३७८ ॥
साधनसापेक्षो यदि मोक्षस्तर्ह्ययमनित्य एव स्यात् ।
साधनसापेक्षं किल लोके सकल हि दृश्यतेऽनित्यम् ॥ ३७९ ॥
ब्रह्मात्व(त्म)भावबोधान्मोक्ष इति निरूपितं हि शास्त्रेऽस्मिन् ।
स हि नावकल्पते किल बोधः स्वाभाविके हि कर्तृत्वे ॥ ३८० ॥
तस्मादुपाधिधर्माध्यासेनैवास्य कर्तृता वाच्या ।
दर्शयति चेममथ श्रुतिरेषा ध्यायतीवशब्दमुखा ॥ ३८१ ॥
न विवेकिनां परस्मादन्यो जीवो हि विद्यते कर्ता ।
नान्योऽतोऽस्ति द्रष्टेत्याद्याः श्रुतयोऽपि दर्शयन्त्येवम् ॥ ३८२ ॥
पर एव तर्हि कर्ता भोक्ता च स्यात्तथैव संसारी ।
इति तु न दोष इह स्याद्यस्मादाविद्यकानि चैतानि ॥ ३८३ ॥
आविद्यकमेवेदं कर्तृत्वादिकमिति प्रदर्शयति ।
श्रुतिरन्या यत्रेति हि विद्यावसरे तु वारयत्यपरा ॥ ३८४ ॥
यत्र त्वस्येत्याद्या श्रुतिरपि तस्मान्न कश्चिदिह दोषः ।
तस्य स्वप्ने जाग्रत्युपाधिसंपर्कजनित एवासौ ॥ ३८५ ॥
श्रम आकाशे पततः श्येनस्येवेति दर्शयित्वैवम् ।
तदभावं च सुषुप्ते श्रावयति प्राज्ञसंपरिष्वक्ते ॥ ३८६ ॥

तद्वा अस्येत्याद्या श्रुतिः परानन्दरूपतामस्य ।
दर्शयितुमेतमर्थं प्राहाऽऽचार्यो यथा च तक्षेति ॥ ३८७ ॥
त्वर्थश्चेह चशब्दः पक्षव्यावृत्तिफलक एवासौ ।
स्वाभाविकमेव स्यात्कर्तृत्वादिकमितीह नाऽऽशङ्क्यम् ॥ ३८८ ॥
लोके तक्षा हि यथा गृहीतवास्यादिकरणहस्तः सन् ।
दुःखी भवति स एव स्वगृहं प्राप्तो विमुक्तवास्यादिः ॥ ३८९ ॥
स्वस्थो निर्वृत्तोऽसौ निर्व्यापारः सुखी भवत्येवम् ।
द्वैतमविद्यामूलकमालम्ब्य स्वप्नजाग्रतोरात्मा ॥ ३९० ॥
कर्ता दुःखी भवति हि स तच्छ्रमस्यापनुत्तये हि पुनः ।
प्रविशन्परमात्मानं प्रविलापितकार्यकरणसंघातः ॥ ३९१ ॥
स हि भवति संप्रसादावसरे च सुखी तथैव चाकर्ता ।
एवमविद्याध्वान्तं विद्यादीपेन मुक्त्यवस्थायाम् ॥ ३९२ ॥
आत्मा विधूय सकलं परमानन्दो हि केवलो भवति ।
तक्षा हि तक्षणादौ यथा हि वास्याद्यपेक्ष्य कर्ता स्यात् ॥३९३॥
एवं मनआदीनि ह्यपेक्ष्य कर्ता स्वतस्त्वकर्तैव ।
इत्यावेदयितुं किल दृष्टान्तोऽयं प्रदर्शितो भवति ॥ ३९४ ॥
बोधयितुं कर्तृत्वं स्वाभाविकमिति न चेह विधिशास्त्रम् ।
तदनूद्याऽऽविद्यकमिह कर्तव्यविशेषबोधनार्थं स्यात् ॥ ३९५ ॥
नन्विह संध्ये स्थाने प्रतीयते केवलस्य कर्तृत्वम् ।
कामं परिवर्तत इति विज्ञानेनेति वाक्ययुगलेन ॥ ३९६ ॥
इति चेन्नाय दोषो यतश्च तत्रापि करणसंबन्धः ।
श्रुतिवचनेन सधीरिति संध्यपरेण प्रतीयते हि यतः ॥ ३९७ ॥
स्मृतिरपि किलेन्द्रियाणामुपरम इत्येतमर्थमाचष्टे ।
तस्मात्समना एव हि विहरति संध्य इति युक्तमभिधातुम्॥३९८॥
सोऽय हि वासनामय एव विहारो न तथ्यरूपः स्यात् ।
श्रुतिरियमुतेवशब्दप्रमुखा तमिमं विहारमुपदिशति ॥ ३९९ ॥
एवमुपादानेऽपि हि कर्ता समना न केवलो भवति ।
करणविभक्तिरयुक्ता करणविशिष्टस्य कर्तृतायां स्यात् ॥ ४००
इति नात्र शङ्कनीयं लोकविवक्षा हि [illegible]
युध्यन्ते योधा इति योधैर्युध्यत इह [illegible] राजेति ॥ ४०

तस्मात्करणविभक्तिः सेह विवक्षावशेन युक्तैव ।
अपि चोपादानेऽस्मिन्व्यापारोपरम एव करणानाम् ॥ ४०२ ॥
न स्वातन्त्र्यं कस्यचिदबुद्धिपूर्वः स दृश्यते स्वापे ।
विज्ञानं यज्ञमिति व्यपदेशो यश्च दर्शितः पूर्वम् ॥ ४०३ ॥
स हि बुद्धेरेव स्यात्कर्तृत्वपरो न चाऽऽत्मनो भवति ।
मनसोऽनन्तरपठितं विज्ञानपदं तु बुद्धिरूढं हि ॥ ४०४ ॥
श्रद्धाद्यवयववत्त्वं बुद्धेरेवोपदर्शयत्येषा ।
तस्य श्रद्धेत्याद्या श्रुतिरत इह बुद्धिरेव विज्ञानम् ॥ ४०५ ॥
एवं स एष वाचश्चित्तस्येति श्रुतौ हि यज्ञस्य ।
वाग्बुद्धिसाध्यतोक्ता तस्माद्विज्ञानमत्र बुद्धिः स्यात् ॥ ४०६ ॥
शक्तिविपर्ययशङ्का न हि बुद्धेः कर्तृतामते भवति ।
करणानामपि लोके स्वस्वव्यापारकर्तृता हि यतः ॥ ४०७ ॥
उपलब्ध्यपेक्षयाऽपि हि करणानां नैव करणता युक्ता ।
नित्योपलब्धिरूपो ह्यात्मा यस्मादतो न तदपेक्षा ॥ ४०८ ॥
एवमहंकृतिपूर्वकमपि कर्तृत्वं न चोपलब्धुरिह ।
बुद्धेः कर्तृत्वे वा करणान्तरकल्पना न चेहास्ति ॥ ४०९ ॥
तस्य समाधिविधानं चाऽऽविद्यककर्तृतामुपादाय ।
तस्मादौपाधिकमिह कर्तृत्वं नैव तथ्यमिति सिद्धम् ॥ ४१० ॥

## परात्तु तच्छ्रुतेः ॥ ४१ ॥

यदिदमुपाधिनिबन्धनमस्य हि कर्तृत्वमभिहितं तत्किम् ।
ईश्वरमनपेक्ष्य स्यात्किंवा तमपेक्ष्य भवति चेत्येवम् ॥ ४११ ॥
एष ह्येवेत्यादिश्रुतिवचसामपि तथैव विधिवचसाम् ।
अन्योन्यं हि विरोधे शङ्का सेयं समुत्थिता भवति ॥ ४१२ ॥
सत्यामेतस्यां खल्विह मीमांसकमतेन चाऽऽक्षेपः ।
नापेक्षते हि जीवः परमात्मानं प्रयोजनाभावात् ॥ ४१३ ॥
रागद्वेषादियुतः कारकसंपत्तिसहकृतो जीवः ।
अनुभवितुं कर्तृत्वं शक्नोति यतः किमीश्वरेणास्य ॥ ४१४ ॥
कृष्यादिकेषु कर्मस्वीशापेक्षा न दृश्यते लोके ।
क्लेशदकर्तृत्वेन च जन्तून्सृजतोऽस्य निर्घृणत्वं स्यात् ॥ ४१५ ॥

विषमफलं कर्तृत्वं विदधत ईशस्य विषमताऽपि स्यात् ।
सापेक्षत्वान्नासौ दोषः स्यादिति तु नेह युक्ततमम् ॥ ४१६ ॥
सापेक्षता तदा स्याद्धर्माधर्मौ यदा हि जन्तूनाम् ।
जीवस्य कर्तृतायां सत्यां सद्भाव एतयोर्भवति ॥ ४१७ ॥
यदि चेदीशापेक्षं कर्तृत्वं स्यात्तदा हि किंविषयम् ।
सापेक्षत्वं तस्य स्यादकृताभ्यागमश्च दुर्वारः ॥ ४१८ ॥
इत्येतामाशङ्कामपनुदति हि सूत्रकृत्तुशब्देन ।
जीवोऽविद्यावसरे भवत्यविद्यातमोन्ध एव किल ॥ ४१९ ॥
स हि कार्यकरणसंघाविवेकदर्शी भवेदतस्तस्य ।
चेतयितुरीश्वरात्किल कर्माध्यक्षाच्च सर्वभूतस्थात् ॥ ४२० ॥
तदनुज्ञया किल स्यात्संसारः कर्तृभोक्तृतारूपः ।
तदनुग्रहैकहेतुकविज्ञानेनास्य मोक्षसिद्धिरपि ॥ ४२१ ॥
एष ह्येवेत्याद्या श्रुतिरिममर्थं यतः प्रदर्शयति ।
या च य आत्मनि तिष्ठन्निति श्रुतिः साऽपि दर्शयत्येवम् ॥४२२॥
नन्वीशः कारयिता यदा भवेत्तस्य विषमताऽप्येवम् ।
निर्घृणता जीवस्य स्यादकृताभ्यागमोऽप्यतः पठति ॥ ४२३ ॥

**कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ॥ ४२ ॥**

उक्ताक्षेपनिवृत्तिप्रयोजनोऽसौ तुशब्द इह भवति ।
जीवप्रयत्नसाध्यो धर्माधर्मैकलक्षणो योऽसौ ॥ ४२४ ॥
तदपेक्ष एव हीशः कारयति ततोऽत्र नैव दोषोऽयम् ।
धर्माद्यपेक्षयैव हि विषमं विभजेत्फलान्यसावीशः ॥ ४२५ ॥
तत्तद्बीजापेक्षो व्रीहियवादीन्यथा हि पर्जन्यः ।
सृजति तथा परमात्मा धर्माधर्मावपेक्ष्य कारयति ॥ ४२६ ॥
असति च पर्जन्येऽस्मिन्नसत्सु बीजेषु नोपजायेत ।
रसपुष्पफलपलाशाद्यखिलं यच्चोपदृश्यते तद्धि ॥ ४२७ ॥
एवं परमात्माऽसौ धर्माधर्मावपेक्ष्य जीवगतौ ।
जीवानामेतेषां शुभाशुभात्मकफलं हि विदधाति ॥ ४२८ ॥
नन्वेतत्कर्तृत्वं जीवस्य यदा भवेत्परायत्तम् ।
कथमिह कृतप्रयत्नापेक्षत्वं स्यादितीह नाऽऽशङ्क्यम् ॥ ४२९ ॥
कारयति हि परमात्मा कुर्वन्तं पूर्ववासनावशतः ।
पूर्वतरं चापेक्ष्य प्रयत्नमीशो ह्यकारयत्पूर्वम् ॥ ४३० ॥

पूर्वमपेक्ष्येदानीं कारयतीशो यतो ह्यनादिरसौ ।
संसारस्तस्मादिह सूत्रकृतोक्तं हि सकलमनवद्यम् ॥ ४३१ ॥
कथमवगम्यत ईशः कृतप्रयत्नाद्यपेक्ष इति चेन्न ।
विहितप्रतिषिद्धावैयर्थ्यादिभ्योऽवगम्यते ह्येवम् ॥ ४३२ ॥
एवं चेदेव स्यात्सुवर्गकामो यजेत च न हिंस्यात् ।
इति विहितं प्रतिषिद्धं सफलं नो चेत्तदेतदफलं स्यात् ॥ ४३३ ॥
ईश्वर एव विधौ वा प्रतिषेधे वा सदा नियुज्येत ।
यस्मात्परतन्त्रोऽसौ जीवः स कथं नियुज्यते तत्र ॥ ४३४ ॥
विधिविहितकारिणं वाऽनर्थेन निषिद्धकारिणं च तथा ।
अर्थेन संसृजेदिति वेदोऽसावप्रमाणमेव स्यात् ॥ ४३५ ॥
अनपेक्षश्चेदीशो लोके स्यात्पुरुषकारवैयर्थ्यम् ।
एवं हि देशकालादीनामकृतागमादिदोषः स्यात् ॥ ४३६ ॥
इति खलु दूषणजातं स्वादिग्रहणेन दर्शितं मुनिना ।
तस्मात्कर्मापेक्षः कारयतीश इति कोऽपि न विरोधः ॥ ४३७ ॥

अंशो नानाव्यपदेशादन्यथा चापि
दाशकितवादित्वमधीयत एके॥४३॥

एको जीवो नित्यो नाणुरकर्ता स्वयंप्रकाश इति ।
वर्णितमेतत्पूर्वं ब्रह्मैक्यं तस्य सुगममेवेति ॥ ४३८ ॥
संप्रति भेदाभेदश्रुतिवचसामिह विरोधशङ्कायाम् ।
तामपनीय हि सकलां ब्रह्मैक्यमिदं दृढं करोति मुनिः ॥ ४३९ ॥
उपकार्यो जीवोऽसावुपकारक एष भवति परमात्मा ।
इति तु पुरा निर्दिष्टं स भवति संबन्धिनोरयं धर्मः ॥ ४४० ॥
किं स्वामिभृत्ययोरिव किमसावग्निस्फुलिङ्गयोरिव वा ।
इति शङ्कायां सत्यां युक्तः स्यात्स्वामिभृत्यवच्चात्र ॥ ४४१ ॥
तत्र नियोज्यनियोजकभावोऽसौ सुप्रसिद्ध इह लोके ।
तद्वदिहापि स्यादित्याक्षेपो वै निरस्यते सपदि ॥ ४४२ ॥
ईशस्यांशो जीवो यथा स्फुलिङ्गो भवत्यसावग्नेः ।
नन्वीशो निरवयवः कथं हि तस्यांश एष जीवः स्यात् ॥ ४४३ ॥
तस्मान्नासावंशो नानाव्यपदेशदर्शनादपि च ।
नानाव्यपदेशोऽसौ सोऽन्वेष्टव्यो य आत्मनीत्यादिः ॥ ४४४ ॥

श्रुत्यन्तरेषु दृष्टो नासति भेदे स युज्यते क्वापि।
स स्वामिभृत्यसाम्ये युक्तः स्यादिति तु नेह शङ्का स्यात् ॥४४५॥
न हि नानाव्यपदेशादेकस्मादंशताऽत्र निर्दिष्टा।
किं त्वन्यथाऽपि तस्य व्यपदेशादंशतोपपन्ना स्यात् ॥ ४४६ ॥
व्यपदेशो नानात्वप्रतिपत्तिपरोऽपि भवति तस्येह।
दाशकितवादिभावं ब्रह्मण एके समामनन्ति यतः ॥ ४४७ ॥
इह चाऽऽथर्वणिकाः किल सूक्ते ब्रह्मात्मतत्त्वबोधपरे।
दाशा दासाः कितवा ब्रह्मैवेत्यर्थमुपदिशन्त्येते ॥ ४४८ ॥
त्वं स्त्रीति श्रुतिरन्या व्यपदिशति ब्रह्मतत्त्वमेवमिति।
स्त्री च पुमांश्च कुमारस्तथा कुमारी तथैव जीर्णोऽपि ॥ ४४९ ॥
यश्च हि जातो लोके सकलोऽयं ब्रह्म भवति नान्य इति।
सर्वाणीत्याद्या अपि कथयन्ति ब्रह्म सर्वरूपमिति ॥ ४५० ॥
चैतन्यं त्वविशिष्टं भवति हि जीवेशयोर्यतस्तस्मात्।
भेदाभेदावगमाभ्यामीशांशत्वमस्य युक्ततमम् ॥ ४५१ ॥

## मन्त्रवर्णाच्च ॥ ४४ ॥

तावानस्येत्याद्यो मन्त्रोऽप्यमुमर्थमेव दर्शयति।
मन्त्रे च भूतशब्दः स्थावरजङ्गमसजीवदेहपरः ॥ ४५२ ॥
तत्परताऽहिंसन्निति मन्त्रे दृष्टा हि भूतशब्दस्य।
अत्र च पादोंऽशः स्यात्तस्मादंशत्वमस्य युक्ततमम् ॥ ४५३ ॥

## अपि च स्मर्यते ॥ ४५ ॥

ईश्वरगीतास्वपि किल जीवस्येशांशता विनिर्दिष्टा।
तत्र ममैवांश इति व्यपदेशो येन जीवभूतस्य ॥ ४५४ ॥
अत्र नियोज्यनियोजकभावोऽसौ स्वामिभृत्ययोरेव।
लोके यद्यपि दृष्टस्तथाऽपि शास्त्रेण चांशता कथिता ॥ ४५५ ॥
हीनोपाधियुतानिह जीवान्मायासहायसंपन्नः।
परमात्माऽसौ शास्तीत्यत्र न काचिद्विरोधशङ्का स्यात् ॥४५६॥
नन्वीशांशो जीवो यदा तदीयेन दुःखभागेन।
अंशिन ईशस्यापि हि दुःखित्वं दुर्निवारमेव स्यात् ॥ ४५७ ॥
हस्ताद्यवयवसंगतदुःखेन यथाऽङ्गिनो भवेद्दुःखम्।
नानाजीवांशगतैर्दुःखैरीशस्य दुःखमाधिकं स्यात् ॥ ४५८ ॥

मुक्तौ तत्प्राप्तानां महत्तरं दुःखमपरिहार्यं स्यात् ।
सम्यग्दर्शनमफलं पूर्वः संसार एव वरमिति चेत् ॥ ४५९ ॥

प्रकाशादिवन्नैवं परः ॥ ४६ ॥

जीवो यथा हि दुःख संसारकृतं सदाऽनुभवति तथा ।
नैवं परो हि यस्माज्जीवो देहात्मभावमापन्नः ॥ ४६० ॥
तद्दुःखेनाविद्यावशतो दुःखित्वमात्मनो मनुते ।
देहात्मभावयोगो दुःख्यभिमानोऽपि नैवमीशस्य ॥ ४६१ ॥
जीवस्यापि च देहाद्यविवेकभ्रमनिबन्धनो भवति ।
दुःखाभिमान एष हि न तु स च परमार्थतोऽस्ति कश्चिदपि ॥४६२॥
इह पुत्रमित्रगोचरमपि दुःखं तदभिमानतो दृष्टम् ।
अभिनिविशमान एव स्नेहवशेनेह पुत्रमित्रादौ ॥ ४६३ ॥
तत्राभिमानयोगादनुभवति तदीयदुःखमखिलमपि ।
मिथ्याभिमानमूलो दुःखानुभवो हि भवति तेनासौ ॥ ४६४ ॥
ये पुत्रमित्रबन्धुष्वभिमानविवर्जिता हि यतिनः स्युः ।
तद्दुःखमूलकं किल दुःखं नैतेषु दृश्यते किमपि ॥ ४६५ ॥
किमुत प्रज्ञानघनात्परात्मनोऽन्यन्न वस्तुतो वस्तु ।
दुःखित्वं नेति ततो नैवाऽऽत्मज्ञानमफलमिति शङ्क्यम् ॥ ४६६ ॥
अत्र निदर्शनमेतत्प्रकाशवदिति प्रदर्शितं मुनिना ।
लोके यथा प्रकाशः सौरश्चान्द्रो द्युमण्डलव्यापी ॥ ४६७ ॥
ऋजुवक्रभावकलितेष्वङ्गुलिदार्वाद्युपाधिषु प्रायः ।
उपगततद्भाव इव प्रतिपन्नो न परमार्थतः सोऽयम् ॥ ४६८ ॥
तद्भावं प्रतिपद्यत एवं सर्वत्रगोऽपि चाऽऽकाशः ।
गच्छत्स्वपि च घटादिषु गच्छन्निव भाव्यमानरूपोऽपि ॥ ४६९॥
गच्छति न स परमार्थत एवं जलकम्पनेन तत्रत्ये ।
सूर्यादिप्रतिबिम्बेऽपि कम्पमाने न कम्पते सूर्यः ॥ ४७० ॥
एवमविद्यावस्थितबुद्ध्युपहितजीवसंज्ञके ह्यंशे ।
दुःखायितेऽपि तस्मिंस्तद्वद्दुःखायते न हीशोऽयम् ॥ ४७१ ॥
जीवस्यापि हि दुःखप्राप्तिरविद्यानिबन्धनेत्युक्तम् ।
एवमविद्यामूलकमेतं जीवात्मभावमुन्मूल्य ॥ ४७२ ॥
ब्रह्मात्मतां वदन्ति हि तत्त्वमसीत्यादिसकलवेदान्ताः ।
तस्मान्नो जैवेन च दुःखेनेशस्य दुःखितापत्तिः ॥ ४७३ ॥

## स्मरन्ति च ॥ ४७ ॥

व्यासादयः किलामी स्मरन्ति परमात्मतत्त्वमखिलमपि ।
तत्र च परमात्माऽयं स हि नित्यो निर्गुणश्च भवति यतः ॥ ४७४ ॥
न हि कर्मणा फलैर्वा न लिप्यते पद्मपत्रमिव पयसा ।
कर्मात्मा त्वपरोऽसौ स युज्यते मोक्षबन्धनैरिति हि ॥ ४७५ ॥
अत्र चशब्दश्रवणात्समामनन्तीति वाक्यशेषः स्यात् ।
नन्वत्र चान्तरात्मा भूतानामेक एव चेत्तर्हि ॥ ४७६ ॥
कथमत्रानुज्ञापरिहारौ तावर्थवत्तरौ भवतः ।
नन्वीशांशो जीवस्तद्भेदात्तौ समञ्जसौ भवतः ॥ ४७७ ॥
इति चेदनंशतामपि जीवस्याभेदबोधिकाः श्रुतयः ।
मृत्योः स मृत्युमाप्नोतीत्याद्या हि प्रदर्शयन्त्येवम् ॥ ४७८ ॥
नान्योऽतोऽस्तीत्याद्यास्तत्सृष्ट्वेत्येवमादिकाः श्रुतयः ।
नन्विह भेदाभेदावगमाभ्यामंशता हि निर्णीता ॥ ४७९ ॥
सत्यं तथाऽपि भेदाभेदौ नात्र च बुबोधयिषितौ हि ।
भेदमनूद्याऽऽविद्यकमभेद इह किल बुबोधयिषितो हि ॥ ४८० ॥
निरवयवस्य ब्रह्मण इह मुख्योंऽशः कथं भवेज्जीवः ।
तस्मात्पर एवैको भूतानां भवति चान्तरात्मा यः ॥ ४८१ ॥
सोऽयं हि जीवभावेनावस्थित इत्यवश्यमिह वाच्यम् ।
एवं चानुज्ञापरिहारानुपपत्तिरित्यतो ब्रूते ॥ ४८२ ॥

## अनुज्ञापरिहारौ देहसंबन्धाज्ज्योतिरादिवत् ॥ ४८ ॥

अग्नीषोमीयं पशुमित्याद्या किल भवेदिहानुज्ञा ।
परिहारश्च न हिंस्यादित्यादिस्तावुभावपि प्रथितौ ॥ ४८३ ॥
एवमृतौ भार्यामिति गुरुपत्नीं नैव संस्पृशेदिति च ।
एतौ चानुज्ञापरिहारौ भवतो हि देहसंबन्धात् ॥ ४८४ ॥
आत्मन एकत्वेऽपि च दृष्टोऽसावत्र देहसंबन्धः ।
देहेन्द्रियसंघाताविवेकमूलभ्रमात्मकः सोऽयम् ४८५ ॥
अहमन्धो मूढोऽहं गच्छाम्यहमेव चाऽऽगमिष्यामि ।
इति किल सम्यग्ज्ञानात्प्राक्प्रततोऽसौ हि सर्वजन्तुषु च ॥४८६॥
तस्मान्नेहानुज्ञापरिहारादौ न बाधकं किमपि ।
तर्ह्यानर्थक्यं स्यात्सम्यग्दर्शन इतीह नाऽऽशङ्क्यम् ॥ ४८७ ॥

हेये चोपादेये यस्त्वविवेकी नियुज्यते सोऽयम् ।
यस्त्वात्मव्यतिरिक्तं हेयमुपादेयमपि च नेक्षेत ॥ ४८८ ॥
ब्रह्मणि निरूढचित्तो विद्वान्स कथं नियुज्यते तत्र ।
सम्यग्दर्शिन इह यदि न नियोगः स्याद्यथेष्टचेष्टा स्यात् ॥ ४८९ ॥
इति तु न सर्वत्रैव ह्यभिमानोऽसौ प्रवर्तको यस्मात् ।
अभिमानाभावेन हि तत्त्वविदो न हि यथेष्टचेष्टा स्यात् ॥४९०॥
तस्माच्चानुज्ञापरिहाराविह देहयोगजावेव ।
इह च निदर्शनभूता ज्योतिष्प्रमुखा भवन्ति लोकेऽस्मिन् ॥४९१॥
ज्योतिष एकत्वेऽपि ह्यग्निः शा(पा)पो न गृह्यते लोके ।
परिवर्ज्यते हि सवितुः प्रकाश एकोऽप्यमेध्यदेशस्थः ॥ ४९२ ॥
वैडूर्याद्या भौमा गृह्यन्ते नरकलेवराणि न हि ।
मूत्रपुरीषं च गवां पवित्रमिति गृह्यते न चान्यस्य ॥ ४९३ ॥

असंततेश्चाव्यतिकरः ॥ ४९ ॥

नन्वेवमपि च दोषो भवति ह्येकात्मतामते सोऽयम् ।
स्वाम्येकत्वादिह किल कर्मफलव्यतिकरो भवेदिति चेत् ॥४९४ ॥
न हि कर्तुर्भोक्तुर्वा संबन्धः सर्वतनुभिरिह भवति ।
योऽसावुपाधितन्त्रः कर्मफलव्यतिकरो न तेनास्य ॥ ४९५ ॥

आभास एव च ॥ ५० ॥

जीवस्येशांशत्वं पूर्वमवच्छेदपक्षमाश्रित्य ।
करकाकाशस्येव हि वर्णितमिह चैवकारयोगेण ॥ ४९६ ॥
तत्रावच्छेदमते ह्यरुचिं कांचिदपि सूचयन्नेव ।
रूपं रूपमितिश्रुतिसिद्धं प्रतिबिम्बपक्षमनुसरति ॥ ४९७ ॥
आभास एव जीवः परात्मनो वारिसूर्यवद्भवति ।
साक्षान्न स एव स्यान्नापि च वस्त्वन्तरं हि जीवोऽसौ ॥ ४९८ ॥
यस्मादिह प्रविष्टः परः स एष इतिवाक्यनिर्दिष्टः ।
तस्मादिह बुद्ध्यादिप्रतिबिम्बो जीव एष इति युक्तम् ॥ ४९९ ॥
शुक्तौ रजतवदस्य हि न च स्वरूपेण कल्पितत्वं स्यात् ।
नेदं रजतमितीव हि नेदं मुखमिति न दृश्यते यस्मात् ॥ ५०० ॥
प्रतिबिम्बस्य च बाधो न दर्पणे मुखमितीह दृष्टः स्यात् ।
तस्मादुपाधिसक्तस्वरूपमात्रेण कल्पितोऽयं स्यात् ॥ ५०१ ॥

एकस्मिञ्जलसूर्ये प्रकम्पमाने न कम्पते चान्यः ।
एकस्मिन्किल जीवे कर्मणि न तदन्तरस्य तद्योगः ॥ ५०२ ॥
अत्र व्यतिकरशङ्का ह्येकात्म्येनैव कर्मफलयोः स्यात् ।
आभासोऽयमविद्याकृतस्तदालम्बनोऽपि संसारः ॥ ५०३ ॥
आविद्यक इत्येतं व्युत्क्रम्य परमार्थरूपमुपदिशति ।
बहवो विभवो येषामात्मानो व्यतिकरो हि तेषा स्यात् ॥५०४॥
चैतन्यमात्ररूपा बहवो विभवो भवन्ति चाऽऽत्मानः ।
साधारणं प्रधानं तदर्थमिति तन्निबन्धनैवैषाम् ॥ ५०५ ॥
भोगापवर्गसिद्धिर्भवतीति हि वर्णयन्ति किल सांख्याः ।
बहवः सर्वगता अप्यात्मानः स्वयमचेतना एव ॥ ५०६ ॥
उपकरणानि बहूनि हि मनांसि तान्यप्यचेतनान्येव ।
आत्ममनोयोगेन ह्युत्पद्यन्ते गुणा नवेच्छाद्याः ॥ ५०७ ॥
प्रत्येकमात्मसु यदा ह्यव्यतिरेकेण समवयन्त्येते ।
भवति तदा संसारस्तदुपरमो मोक्ष इति हि काणादाः ॥ ५०८ ॥
सांख्यनये जीवानां स्वतश्च चैतन्यमात्ररूपत्वात् ।
एकस्मिन्नपि देहे सर्वेषामात्मनां च सांनिध्यात् ॥ ५०९ ॥
एकस्मिन्सुखयोगे तत्सर्वेषां कुतो न जायेत ।
अविशेषेऽपि च पुंसां सर्वेषां प्रकृतिसंनिधानस्य ॥ ५१० ॥
नियमेन प्रकृतिरियं पुंसां भोगापवर्गसिद्ध्यर्थम् ।
उद्दिश्य प्रतिपुरुषं प्रवर्तते तेन तद्व्यवस्था स्यात् ॥ ५११ ॥
भोगो विषयमतिः स्यादपवर्गो गुणविलक्षणात्ममतिः ।
तत्साधनभूतेयं नियता प्रकृतिप्रवृत्तिरेव स्यात् ॥ ५१२ ॥
एतदनङ्गीकारे स्वमहत्त्वख्यापनार्थिका सा स्यात् ।
एवं चेदुद्देश्यव्याघातोऽत्राविमोक्षरूपः स्यात् ॥ ५१३ ॥
इति चेन्नैतत्सारं विनोपपत्तिं कथं व्यवस्था स्यात् ।
अयमुद्देश्यविवेको जडप्रधानस्य नैव युक्ततमः ॥ ५१४ ॥
नाचेतनस्य लोके नियामकत्वमपि दृश्यते क्वापि ।
तस्माच्च न व्यवस्था व्यतिकर इह दुर्निवार एव स्यात् ॥ ५१५ ॥
काणादानां च नये यद्येकेनाऽऽत्मना मनोयोगः ।
आत्मान्तरैस्तदाऽयं सांनिध्यस्याविशेषतो हि भवेत् ॥ ५१६ ॥

हेत्वविशेषात्तेषां समसुखदुःखत्वमपरिहार्यं स्यात् ।
इह चादृष्टनिमित्तो नियमः स्यादिति तु नेह युक्ततमम् ॥५१७॥

अदृष्टानियमात् ॥ ५१ ॥

यच्च मनोवाक्कायैरदृष्टमुत्पद्यते हि तच्च किल ।
सर्वात्मनां विभूनां प्रतिदेहं संनिधानसाम्येन ॥ ५१८ ॥
एतस्येदमदृष्टं नान्यस्येति हि न शक्यते ज्ञातुम् ।
सांख्यानां तु नये तत्प्रधानसमवेतमेव नाऽऽत्मगतम् ॥ ५१९ ॥
तस्य च सुखादिभोगे न प्रत्यात्मं नियामकत्वं स्यात् ।
नन्वित्थं करवाणीतीत्थं प्रयत इति चैवमाद्या हि ॥ ५२० ॥
अभिसंध्यादय इह ये प्रत्यात्मनि ते प्रवर्तमानाः स्युः ।
स्वस्वाभिमावममका भवन्त्यदृष्टात्मनामिति प्राप्ते ॥ ५२१ ॥

अभिसंध्यादिष्वपि चैवम् ॥ ५२ ॥

अभिसंध्यादीनामपि हेत्वविशेषाद्यथोक्तदोषः स्यात् ।

प्रदेशादिति चेन्नान्तर्भावात् ॥ ५३ ॥

देहप्रतिष्ठितेन हि मनसा योगस्तु तन्ववच्छिन्ने ॥ ५२२ ॥
आत्मप्रदेश एव हि भवत्यतः स्यादिह व्यवस्थेयम् ।
इति चेन्नेदं युक्तं यत इह सर्वात्मना विभुत्वेन ॥ ५२३ ॥
सर्वेष्वऽपि च शरीरेष्वन्तर्भावोऽयमप्रतीकारः ।
तेन च तदवच्छिन्नः सर्वेष्वात्मसु समो हि संयोगः ॥ ५२४ ॥
नापि च निरवयवस्य प्रदेशपरिकल्पनाऽपि युक्ततमा ।
यदि कल्पितः प्रदेशः कार्यं परमार्थतः कथं जनयेत् ॥ ५२५ ॥
सर्वात्मसंनिधाने शरीरमुत्पद्यमानमस्यैव ।
नान्यस्येति नियन्तुं न शक्यते केनचित्क्वचिद्वाऽपि ॥ ५२६ ॥
यत्राऽऽत्मनोर्द्वयोरपि समानसुखदुःखभोग इह दृष्टः ।
देहेनैकेनैव हि तयोर्द्वयोर्भोगसिद्धिरपि च स्यात् ॥ ५२७ ॥
तत्र हि तयोर्द्वयोरपि समप्रदेशं ह्यदृष्टमिति युक्तम् ।
सुखदुःखमन्वभूत्किल यस्मिन्देशे हि देवदत्तोऽसौ ॥ ५२८ ॥
अपयाते तस्मिन्किल काशीं दत्ते तमेव संप्राप्ते ।
तस्यापि चेतरेण हि समसुखदुःखानुभूतिरिह दृष्टा ॥ ५२९ ॥

सा न स्याद्यदि च तयोः समप्रदेशं त्वदृष्टमिह न स्यात् ।
स्वर्गाद्युपभोगस्यानुपपत्तिरपि प्रदेशवादिनये ॥ ५३० ॥
ब्राह्मणशरीरदेशावच्छिन्ने स्याददृष्टनिष्पत्तिः ।
स्वर्गाद्युपभोगः किल देवादिशरीरदेश एव स्यात् ॥ ५३१ ॥
लोके हि कार्यकारणभावो न विभिन्नदेशयोर्दृष्टः ।
इह चाऽऽत्मनां बहूनां सर्वगतत्वमपि नोपपन्नं स्यात् ॥ ५३२ ॥
सति दृष्टान्ते तदिदं बुद्ध्यारूढं भवेन्न चेतरथा ।
वद तावत्त्वं के ते बहवो जीवाः समानदेशाश्च ॥ ५३३ ॥
रूपरसाद्य इव ते समानदेशाश्च बहव इति चेन्न ।
तेषामपि धर्म्यंशेनाभेदात्तत्स्वरूपता युक्ता ॥ ५३४ ॥
अथवा लक्षणभेदात्तेषां भेदो न चाऽऽत्मनां स भवेत् ।
नेह बहूनां तेषां लक्षणभेदश्च वक्तुमपि शक्यः ॥ ५३५ ॥
अन्त्यविशेषादेव हि तेषां भेदोपपत्तिरित्यपि न ।
सति भेदेऽन्त्यविशेषस्तस्मिन्सति भेदकल्पना भवति ॥ ५३६ ॥
इति चेतरेतराश्रयतादोषोऽप्यत्र दुर्निवारः स्यात् ।
आकाशादीनामपि विभुत्वमस्माकमननुमतमेव ॥ ५३७ ॥
आत्मन आकाश इति श्रुतिवाक्येनास्य कार्यतावगमात् ।
आत्मैकत्वे दोषा वादिभिरुद्भाविताश्च ये सर्वे ॥ ५३८ ॥
ते निरसिता हि बुद्ध्याद्युपाधियोगावलम्बनेनैव ।
तस्मादस्मिन्पक्षे न दोषशङ्कावकाश इति सिद्धम् ॥ ५३९ ॥
शारीरकमीमांसा मुनिना व्यासेन विरचिता सेयम् ।
चतुरध्यायी तस्यां द्वितीयसंज्ञश्च योऽयमध्यायः ॥ ५४० ॥
तत्र च तृतीयपादे सूत्रार्थो यश्च भाष्यकारोक्तः ।
आर्यावृत्तैरमलैः प्रकाशितो भवतु सोऽयमनवद्यः ॥ ५४१ ॥

इति द्वितीयाध्यायस्य तृतीयः पादः ॥ ३ ॥

---

अथ चतुर्थपादप्रारम्भः ।

---

पूर्वस्मिन्नधिकरणे विचार्य कर्तुः स्वरूपमखिलमपि । ओम्
इह च तदुपकरणानां प्राणानां साधयत्यथोत्पत्तिम् ॥ १ ॥

पूर्वत्र भूतभोक्तृस्वरूपमखिलं विचार्य सम्यगिह ।
प्राणस्य भौतिकस्य हि विचार इति हेतुहेतुमद्भावः ॥ २ ॥
पादद्वयस्य संगतिरित्येतत्स्फुटयितुं हि वर्णयति ।
वियदादिगोचरश्रुतिविप्रतिषेधस्तृतीयपादेन ॥ ३ ॥
परिहृत इह तु चतुर्थे पादे प्राणादिगोचरो योऽसौ ।
श्रुतिविप्रतिषेधः स्यात्स चायमिह किल निरस्यते सम्यक् ॥ ४ ॥
तत्तेजोऽसृजतेति ह्यात्मन आकाश एवमाद्येषु ।
श्रुतिवचनेषूत्पत्तिः प्राणानां नोपलभ्यते क्वापि ॥ ५ ॥
किं चानुत्पत्तिः क्वचिदेषामाम्नायते ह्यसद्वेति ।
अस्मिन्मन्त्रे प्राणा ऋषिस्वरूपेण दर्शितास्तेषाम् ॥ ६ ॥
प्राणानां सद्भावः प्रागुत्पत्तेः प्रतीयतेऽन्यत्र ।
तेषां प्राणानामप्युत्पत्तिः पठ्यते यथेत्यस्मिन् ॥ ७ ॥
एतस्माज्जायत इति मन्त्रेऽपि च दृश्यते तदुत्पत्तिः ।
एवं सप्त प्राणाः प्रभवन्तीत्येवमादिमन्त्रेषु ॥ ८ ॥
एवं हि श्रुतिवचसां विप्रतिषेधोऽत्र भवति दुर्वारः ।
अत्र तदन्यतरस्य हि निर्धारणकारणं न किंचिदपि ॥ ९ ॥
तस्मादप्रतिपत्तिः श्रुतिवचनानामिह प्रसज्येत ।
अथवा प्रागुत्पत्तेः सद्भावश्रवणतो भवेद्गौणी ॥ १० ॥
प्राणानामुत्पत्तिश्रुतिरिति पक्षान्तरं प्रसज्येत ।
इति विचिकित्सायां किल सत्यां भगवांस्तदेतदिह पठति ॥११॥

## तथा प्राणाः ॥ १ ॥

नन्वक्षरानुलोम्यं तथेति कथमिह पुनर्निरूप्येत ।
प्रकृतोपमानमत्र हि न दृश्यते तेन तत्कथं भवति ॥ १२ ॥
पूर्वमतीतानन्तरपादान्ते वर्णितं हि भूयोऽपि ।
सर्वगतात्मबहुत्वप्रतिपादकवादिदूषणं हि परम् ॥ १३ ॥
सादृश्याभावेन हि तदिदं नैवोपमानमिह भवति ।
नापि ह्यदृष्टसाम्यप्रतिपादनपरमिदं तथेति स्यात् ॥ १४ ॥
सर्वात्मसंनिधाने ह्यदृष्टमुत्पन्नमनियतं यद्वत् ।
एवमनियताः प्राणाः सर्वेष्वात्मस्वितीह वक्तव्यम् ॥ १४ ॥
तत्किल देहानियमेनैवोक्तं भवति चेह पुनरुक्तम् ।
अपसिद्धान्तभयेन प्राणा जीवेन नोपमीयेरन् ॥ १६ ॥

प्राणानां तूत्पत्तिर्विवक्षिता भवति सा न जीवस्य।
तस्मादनुचितमेतत्तथेति सूत्रोक्तमिति तु नाऽऽशङ्क्यम् ॥ १७ ॥
एतस्मादात्मन इति यत्प्राणोत्पत्तिवाक्यमुपदिष्टम्।
तदिदमुदाहरणं स्यात्तद्गतमुपमानमत्र संग्राह्यम् ॥ १८ ॥
प्राणास्तथा परस्माद्यथा हि लोकादयो भवन्त्यस्मात्।
इति किल सूत्रार्थः स्यात्तत्र न पूर्वोक्तदूषणं किमपि ॥ १९ ॥
एतस्माज्जायत इति मन्त्रान्तरमपि भवेदुदाहरणम्।
तेन च खादिवदेव प्राणा जायन्त इति हि फलितं स्यात् ॥२० ॥
अथवा व्यवहितमेव हि वियदादि तृतीयपादनिर्दिष्टम्।
उपमानमत्र भवति व्यवहितयोगोऽपि दृश्यतेऽन्यत्र ॥ २१ ॥
पानव्यापच्चेति हि सूत्रेऽस्मिन्दृश्यते तथैवासौ।
यज्ञे हि सोमपाने क्रियमाणे सति भवेद्यदा वमनम् ॥ २२ ॥
सोमेन्द्रदेवताकं श्यामाकचरुं स निर्वपेत्तद्वत्।
इति खलु सूत्रार्थः स्यात्तत्र हि तच्छब्दयोगतो हि यथा ॥ २३ ॥
अश्वप्रतिग्रहेष्टिन्यायोऽसौ व्यवहितः परामृष्टः।
तद्वदिहापि व्यवहितसंबन्धे नैव बाधकं किमपि ॥ २४ ॥
तस्मादुत्पद्यन्ते प्राणा वियदादिवदिति सिद्धमिह।
अत्र श्रुतत्वमेव प्राणोत्पत्तौ हि साधको हेतुः ॥ २५ ॥
ननु केषुचित्प्रदेशेष्वियमुत्पत्तिर्हि न श्रुतेत्युक्तम्।
तदयुक्तं किल यस्मात्प्राणोत्पत्तिः श्रुतैव चान्यत्र ॥ २६ ॥
क्वचिदश्रुतमपि तदिदं न श्रुतमन्यत्र वारयितुमीष्टे।
तस्माच्छ्रुतिनिर्देशात्प्राणा जायन्त इति तु सूक्तमिदम् ॥ २७ ॥

गौण्यसंभवात् ॥ २ ॥

प्राणानामुत्पत्तिर्गौणीति न चेह शङ्कितुं शक्यम्।
गौण्या असंभवादिति तत्पुरुषसमास इह च निर्दिष्टः ॥ २८ ॥
सेयं प्राणोत्पत्तिर्गौणी कथमपि न चेह संभवति।
सेयं गौणी चेत्स्यात्तदा प्रतिज्ञोपमर्द एव स्यात् ॥ २९ ॥
कस्मिन्नु भगव इत्यत एकज्ञानेन सर्वविज्ञानम्।
आदिश्य तदुपपत्तय एतस्मादिति हि वाक्यमाम्नातम् ॥ ३० ॥
यदि च ब्रह्मविकारः प्राणाद्यखिलं तदा प्रतिज्ञेयम्।
प्रकृतिविकाराभेदन्यायेनैव हि समर्थिता भवति ॥ ३१ ॥

ब्रह्मैवेत्येतस्मिञ्श्रुतिवाक्येऽप्येवमात्मनो वेति ।
श्रुत्यन्तरेऽपि तेन न्यायेनैषा समर्थनीया हि ॥ ३२ ॥
नन्वेवं प्राणानामप्युत्पत्तिर्यथा भवेत्तर्हि ।
प्राणानां सद्भावः प्रागुत्पत्तेः श्रुतो विरुध्येत ॥ ३३ ॥
इति चेदेतद्वाक्यं न हि मूलप्रकृतिगोचरं भवति ।
यस्मादप्राणत्वं श्रुतिरप्राण इति दर्शयति तस्याः ॥ ३४ ॥
तस्मादेतद्वाक्यं ह्यवान्तरप्रकृतिगोचरं भवति ।
प्राक्सद्भावश्रवणं स्वविकारापेक्षमेव तेषां स्यात् ॥ ३५ ॥
व्याकृतविषयाणां हि प्रकृतित्वमपि श्रुतिस्मृतिप्रथितम् ।
यदधिकरणे तदिद सूत्रं किल पूर्वपक्षसूत्रमिति ॥ ३६ ॥
गौणी जन्मश्रुतिरियमसंभवादिति हि वर्णितं तत्र ।
तत्र च भवेत्प्रतिज्ञाहानिरतोऽसावुपेक्षितः पक्षः ॥ ३७ ॥
इह पुनरेतत्सूत्रं भवति हि सिद्धान्तसूत्रमिति मत्वा ।
गौण्या असंभवादिति वर्णितमत्र च[न] कोऽपि दोषः स्यात्॥३८॥

## तत्प्राक्श्रुतेश्च ॥ ३ ॥

एतस्मादपि हेतोर्वियदादीनामिवात्र मुख्यैव ।
प्राणानामपि चैषा जन्मश्रुतिरिति ह युक्तमाभाति ॥ ३९ ॥
वियदादिष्वनुवृत्तं जायत इत्येतदेकमेव पदम् ।
मुख्यं चेद्वियदादौ प्राणेषु प्राक्श्रुतं तथा मुख्यम् ॥ ४० ॥
स प्राणमसृजतेतिश्रुतिगतसृजतेस्तथाऽनुषङ्गः स्यात् ।
प्राणे श्रुतस्य तस्य श्रद्धादिष्वपि परेषु संबन्धः ॥ ४१ ॥

## तत्पूर्वकत्वाद्वाचः ॥ ४ ॥

यद्यपि तेजोबन्नानामेवोत्पत्तिरभिहिता ह्यस्मिन् ।
छान्दोग्ये प्राणानामुत्पत्तिर्नोपलभ्यतेऽथापि ॥ ४२ ॥
ब्रह्मप्रकृतिकतेजोबन्नमयत्वं हि वर्णितं येन ।
अन्नमयं हीत्यस्मिन्मन्त्रे वाक्प्राणमानसानां स्यात् ॥ ४३ ॥
तेन च तेषां ब्रह्मप्रभवत्वमपीह वर्णितप्रायम् ।
मयडिह विकारवाची भवत्यतो ब्रह्मकार्यता तेषाम् ॥ ४४ ॥
यदि मयडिह भाक्तः स्यात्तदाऽपि कार्यत्वमनपवादं हि ।
तदधीनस्थितिकत्वे तत्कार्यत्वस्य सहजसिद्धत्वात् ॥ ४५ ॥

येनाश्रुतमित्यस्मादुपक्रमादेतदात्म्यमित्यस्मात् ।
उपसंहाराच्च तथा श्रुत्यन्तरदर्शनेन चैतेषाम् ॥ ४६ ॥
ब्रह्मविकारत्वं स्यान्मनआदीनामिति प्रदर्शयितुम् ।
अन्नमयत्वाद्युक्तिर्मनआदीनामिति स्फुटं भवति ॥ ४७ ॥
प्राक्सद्भावश्रुत्यविरोधादिह कारणे परात्मनि हि ।
तस्मात्प्राणोत्पत्तिश्रुतिवचसामपि समन्वयः सिद्धः ॥ ४८ ॥

सप्त गतेर्विशेषितत्वाच्च ॥ ५ ॥

लिङ्गविचारपराणां फलमिह लिङ्गित्वमर्थभेदमतिः ।
प्राणानामुपजीव्योपजीवकत्वस्वरूपसंगत्या ॥ ४९ ॥
उत्पत्तौ सिद्धायामपि श्रुतीनां विरोधतो जाते ।
संख्यासंदेहे किल तां निर्णेतुं हि पूर्वपक्षयति ॥ ५० ॥
उत्पत्तिगोचरः किल विप्रतिषेधस्तु परिहृतः पूर्वम् ।
संख्याविषय इदानीं विप्रतिषेधो निरस्यते ह्यत्र ॥ ५१ ॥
मुख्यप्राणो योऽसौ स चोपरिष्टान्निरूप्यते सपदि ।
ये च तदितरे प्राणास्ते च कतीति हि विचार इह भवति ॥५२॥
अत्र श्रुतिवचसां किल विप्रतिपत्तिस्तु बहुविधा दृष्टा ।
सप्त प्राणाः प्रभवन्तीत्यत्र हि सप्त दर्शिताः प्राणाः ॥ ५३ ॥
अष्टावतिग्रहा इति मन्त्रे चाष्टौ हि कीर्तितास्ते स्युः ।
क्वचिदिह नव ते प्राणा सप्तेत्यस्मिन्प्रदर्शिता मन्त्रे ॥ ५४ ॥
क्वचिदिह दश निर्दिष्टा नव वै पुरुष इति मन्त्रभागे हि ।
क्वचिदेकादश कथिता दशेमे पुरुष इति मन्त्रवाक्येण ॥ ५५ ॥
क्वचिदुपदिष्टा द्वादश सर्वेषामेवमादिवाक्येन ।
एवं त्रयोदशापि क्वचिदुपदिष्टा हि चक्षुरित्यादौ ॥ ५६ ॥
एवं विप्रतिपत्तौ प्राणाः सप्तेति वक्तुमिह युक्तम् ।
यस्मात्तावन्तस्ते गम्यन्ते वेदवचसि सप्तेति ॥ ५७ ॥
यस्माद्विशेषितास्ते शीर्षण्या इति पदेन सप्तैव ।
नन्वतिरिक्ताः प्राणा गुहाशयाः सप्त सप्त निर्दिष्टाः ॥ ५८ ॥
अत्र च वीप्साश्रवणात्कथमिह सप्तत्वसिद्धिरिति चेन्न ।
वीप्सा हि पुरुषभेदाभिप्राया नैव तत्त्वभेदपरा ॥ ५९ ॥
श्रुत्यन्तरोपदिष्टा नन्वष्टत्वादिकाऽपि सख्येह ।
इति चेन्नेह विरोधादन्यतमा भवति चेह निर्णेया ॥ ६० ॥

स्तोकाधिककल्पनयोर्मध्ये हि स्तोककल्पना युक्ता ।
इति सप्तैव प्राणाः संख्यान्तरमत्र वृत्तिभेदेन ॥ ६१ ॥

हस्तादयस्तु स्थितेऽतो नैवम् ॥ ६ ॥

सप्तैव प्राणा इति यदुक्तमेतन्न युक्तमत्र यतः ।
हस्तादयोऽपि चान्ये हस्तो वै ग्रह इति श्रुतिप्रथिताः ॥ ६२ ॥
एकादश ते प्राणा ह्युत्तरसंख्यानुरोधतस्तस्मात् ।
दशेमे पुरुषे प्राणा आत्मैकादश इति श्रुतावुक्ताः ॥ ६३ ॥
करणाधिकारतोऽसावात्माऽन्तःकरणमेव नान्यः स्यात् ।
नन्वेकादशताया अधिका संख्याऽपि दर्शिता पूर्वम् ॥ ६४ ॥
सत्यं तथाऽपि कार्यं नाधिकमेकादशभ्य इह दृष्टम् ।
रूपरसगन्धशब्दस्पर्शार्थाः पञ्च बुद्धिभेदाः स्युः ॥ ६५ ॥
बुद्धीन्द्रियाणि चक्षुष्प्रमुखाणि सदर्थकानि पञ्च स्युः ।
वचनादानविहारोत्सर्गानन्दा हि कर्मभेदाः स्युः ॥ ६६ ॥
पञ्च तदर्थानि तथा वागादीनीन्द्रियाणि पञ्चैव ।
सर्वार्थगोचरं स्यादनेकवृत्तिकमिहैकमपि च मनः ॥ ६७ ॥
तच्च मनो बुद्धिरहंकारश्चित्तमिति वृत्तिभेदेन ।
उपदिश्यते चतुर्धा श्रुतिरेषाऽनेकवृत्तिकं वक्ति ॥ ६८ ॥
कामः संकल्पो विचिकित्सेति श्रुतिरनेकरूपतया ।
एतत्सर्वं मन एवेत्यन्तेनोपदर्शयति हि मनः ॥ ६९ ॥
अपि चेमे सप्तेति हि वदतश्चत्वार एव ते च स्युः ।
स्थानविभेदादेते चत्वारः सप्तसंख्यया गणिताः ॥ ७० ॥
द्वे नासिके तथैव द्वे श्रोत्रे चक्षुषी तथैका वाक् ।
इति खलु न ह्येतेषामितरे प्राणा हि वृत्तिभेदाः स्युः ॥ ७१ ॥
हस्तादिवृत्तयः किल वागादिभ्यो यतो विजातीयाः ।
नाभिर्दशमीति श्रुतिरपि देहच्छिद्रभेदमभिधत्ते ॥ ७२ ॥
नैतस्य तत्त्वभेदं न प्राणः कश्चिदस्ति नाभिरिति ।
मुख्यस्य प्राणस्य ह्यायतनं नाभिरपि च भवतीति ॥ ७३ ॥
नाभिर्दशमीत्येवं प्रदर्शितमतो न कश्चिदिह दोषः ।
तत्र ह्युपासनार्थं [ प्रदर्शनार्थं ] प्रपञ्चिता ह्येते ॥ ७४ ॥
ते कार्यजातवशतः प्राणा एकादशैव न न्यूनाः ।
सूत्रद्वयस्य पुनरियमपराऽपीहार्थयोजना भवति ॥ ७५ ॥

सप्तानामेव गतिर्यतः श्रुता तेन ते हि सप्तैव ।
इह च तमुत्क्रामन्तं प्राणोऽनूत्क्रामतीति वाक्यान्ते ॥ ७६ ॥
प्राणमनूत्क्रामन्तं सर्वे प्राणा इति श्रुतिर्दृष्टा ।
नन्वत्र सर्वशब्दश्रवणात्प्राणाः कथं हि सप्त स्युः ॥ ७७ ॥
इति चेद्यतस्त एव हि विशेषिताश्चक्षुरादयः सप्त ।
ते हि स यत्रैष इति श्रुतौ विशिष्योपदर्शिता हि खलु ॥ ७८ ॥
प्रायणसमये चाक्षुषपुरुषादौ स्वाशिनं समुपयाते ।
एकी भवन्ति मनसि हि लिङ्गांशाश्चक्षुरादयः सप्त ॥ ७९ ॥
अत एनं पार्श्वस्था नायं पश्यति न जिघ्रतीत्यपि च ।
न वदति न रसयते न च शृणोति नाप्येष मनुत इत्येवम् ॥ ८० ॥
न स्पृशति नो विजानातीत्याहुरिति प्रपञ्चिताः सप्त ।
सर्वे द्विजा हि भोज्या इति वाक्यगतो हि सर्वशब्दोऽयम् ॥ ८१ ॥
यद्वन्निमन्त्रितद्विजमात्रपरः स्यात्तथैव चेहापि ।
प्रकृता एव प्राणाः प्रतिपाद्यन्ते हि सर्वशब्देन ॥ ८२ ॥
विज्ञानमष्टमं ननु दृष्टं प्राणाः कथं हि सप्त स्युः ।
इति तु न चेहाऽऽशङ्का कार्या भेदो यतो मनोबुद्ध्योः ॥ ८३ ॥
तस्मात्सप्तैवैते प्राणा इति पक्षमत्र वारयति ।
हस्तादयोऽपि चान्ये हस्तो वै ग्रह इति श्रुतौ दृष्टाः ॥ ८४ ॥
ग्रहसंज्ञका हि ते स्युः क्षेत्रज्ञमिमं यतश्च बध्नन्ति ।
हस्तादिभिरिह देहे क्षेत्रज्ञो बध्यते यथा तद्वत् ॥ ८५ ॥
देहान्तरेऽपि बध्यत इति बन्धनरूपता भवेत्तेषाम् ।
आवश्यका इमे खल्वतिरिक्ता एव नैव सप्त स्युः ॥ ८६ ॥
पुर्यष्टकेन लिङ्गेनेति स्मृतिरेवमेव दर्शयति ।
प्राज्ञोऽक्षादवियोगो ग्रहसंज्ञेनास्य दुस्तरोऽयमिति ॥ ८७ ॥
तद्वदथर्वणवाक्यं चक्षुश्चेत्यादितो विनिर्दिश्य ।
हस्तौ चेति ह्यन्ते हस्तादीन्यपि च निर्दिशत्येवम् ॥ ८८ ॥
एवं दशेमे पुरुषे प्राणा आत्मेति मन्त्रवर्णोऽपि ।
प्राणानामेकादशसंख्यानामनुगतिं प्रदर्शयति ॥ ८९ ॥
प्राणेषु सर्वशब्दः सर्वे प्राणा इति श्रुतौ दृष्टः ।
स हि सर्वप्राणपरो न केवलं सप्तमात्रपर एव ॥ ९० ॥

प्रकरणमपेक्ष्य शब्दो बलवानिति शास्त्रसिद्धमेवैतत् ।
सर्वे विप्रा भोज्या इत्यादौ सर्वभोजनायोगात् ॥ ९१ ॥
प्रकृतनिमन्त्रितपरता तत्र हि युक्त्यैव सर्वशब्दस्य ।
इह तु पुनः संकोचे न दृश्यते कारणं हि किंचिदपि ॥ ९२ ॥
अत इह सर्वे ग्राह्याः सप्तग्रहण प्रदर्शनार्थं स्यात् ।
ते तेन शब्दतोऽपि हि कार्यत एकादशेति सिद्धमिह ॥ ९३ ॥

अणवश्च ॥ ७ ॥

अणवश्चैते प्रकृताः प्राणा एकादशेति वक्तव्यम् ।
सौक्ष्म्यपरिच्छेदात्मकमणुत्वमिह न परमाणुतुल्यत्वम् ॥ ९४ ॥
परमाणुतुल्यता चेत्कृत्स्नतनुव्यापि कार्यमिह न स्यात् ।
सूक्ष्मा एते प्राणा निर्गमसमये यतो न दृश्यन्ते ॥ ९५ ॥
उत्क्रान्त्यादिश्रवणादेते प्राणास्तथा परिच्छिन्नाः ।
सर्वगताश्चेदेते तद्गुणसारत्वमात्मनो न स्यात् ॥ ९६ ॥
सर्वगतानामपि किल वृत्तिर्देहे भवेत्परिच्छिन्ना ।
भवति तयैव हि तद्गुणसारत्वमिहेति नैव युक्तमिदम् ॥ ९७ ॥
यदि च परिच्छिन्नेयं वृत्तिः स्यात्करणमपि च नैव स्यात् ।
तत एव कार्यसिद्धौ करणव्यापित्वकल्पना हि वृथा ॥ ९८ ॥
भवति ह्युपासनार्था प्राणानन्त्यश्रुतिस्तया तस्मात् ।
प्राणोत्क्रान्त्यादिश्रुतिवचसामविरोध इति तु सिद्धमिह ॥ ९९ ॥

श्रेष्ठश्च ॥ ८ ॥

इतरप्राणवदेव ब्रह्मविकारो भवेदसौ मुख्यः ।
नन्वेतत्प्रागेव प्रथमे सूत्रे प्रपञ्चितं भूयः ॥ १०० ॥
एतस्मादित्येतैरप्युपदिष्टं वृथाऽतिदेशोऽयम् ।
इत्येतदत्र सत्यं तथाऽपि किंचिन्निमित्तमिह दृष्टम् ॥ १०१ ॥
मन्त्रो न मृत्युरासी[दि]त्याद्यो भवति नासदासीये ।
ब्रह्मप्रधानसूक्ते तत्र ह्यानीदवातमिति पठितम् ॥ १०२ ॥
आसीदिति शब्देन प्रतीयते प्राणकर्म तेनेह ।
प्रागुत्पत्तेरस्य हि सत्त्वं प्राणस्य सूचितं भवति ॥ १०३ ॥
प्राणस्तस्मादज इति जायेत मतिर्हि कस्यचित्पुंसः ।
मतिभेतां निरसितुमयमतिदेशोऽयं प्रदर्शितो मुनिना ॥ १०४ ॥

प्राक्प्राणस्य हि सत्त्वं नाऽऽनीच्छब्दो निरूपयत्यत्र ।
यस्मादवातमिति किल विशेषणं तस्य दर्शितं मन्त्रे ॥ १०५ ॥
अप्राणो ह्येत्यादिर्मन्त्रः प्राणादिराहिततां ब्रूते ।
तस्मादानीच्छब्दः कारणसद्भावगमक एवेह ॥ १०६ ॥
प्राणो वावेत्येतन्मन्त्रबलाज्ज्येष्ठताऽस्य युक्तैव ।
यस्माच्छुक्रनिषेकप्रभृत्यसौ लब्धवृत्तिकः प्राणः ॥ १०७ ॥
शुक्रं पूयेत न चेदेवं श्रोत्रादिकरणजातस्य ।
स्थानविभागोत्पत्तेरनन्तरं तस्य वृत्तिलाभः स्यात् ॥ १०८ ॥
तस्माच्छ्रोत्रादीनामज्येष्ठत्वं प्रसिद्धमपि चायम् ।
मुख्यः प्राणः श्रेष्ठः श्रुतिप्रदर्शितगुणाधिकत्वेन ॥ १०९ ॥

## न वायुक्रिये पृथगुपदेशात् ॥ ९ ॥

स पुनर्मुख्यः प्राणः किंरूप इतीह भवति चिन्तेयम् ।
तत्र प्राप्तं तावद्योऽसौ प्राणः स वायुरेवेति ॥ ११० ॥
उपदिशति श्रुतिरेनं प्राणं यस्मात्स एष वायुरिति ।
अथवा तन्त्रान्तरतः प्राणोऽयं सकलकरणवृत्तिरिति ॥ १११ ॥
सामान्यकरणवृत्तिः प्राणापानादिवायवः पञ्च ।
तन्त्रान्तरावलम्बिन एव प्राणान्निरूपयन्ति यतः ॥ ११२ ॥
तस्माद्वायुरयं स्यादित्याशङ्का निरस्यते सपदि ।
नासौ प्राणो वायुर्भवति हि न समस्तकरणवृत्तिर्वा ॥ ११३ ॥
पृथगुपदिशति प्राणं वायोर्यस्मात्स वायुनेत्याद्या ।
श्रुतिरेषा स कथं वा पृथगुपदिश्येत वायुरूपश्चेत् ॥ ११४ ॥
तद्वच्च करणवृत्तेः पृथगुपदेशोऽस्य दृश्यतेऽन्यत्र ।
एतस्मादिति मन्त्रे प्राणमनःप्रभृतयः पृथग्दृष्टाः ॥ ११५ ॥
नाप्येका सर्वेषां करणानां वृत्तिरत्र संभवति ।
एकैकवृत्तिकतया वागादीनां हि करणता दृष्टा ॥ ११६ ॥
प्रत्येकं व्यूहस्य त्वकारकत्वान्न वृत्तिरेका स्यात् ।
नन्विह पञ्जरचालननयेन समुदायवृत्तिरेका स्यात् ॥ ११७ ॥
प्रतिनियतव्यापाराः पतगाः संभूय पञ्जरे निहिताः ।
एकादशसंख्याकाः पञ्जरमेकं हि चालयन्ति यथा ॥ ११८ ॥
एवं शरीरनिहिताः प्राणा एकादशापि संभूय ।
प्राणाख्यवृत्तिमेकां भजन्ति चेदेकवृत्तिका अपि ते ॥ ११९ ॥

इति तु न युक्तः पञ्जरचालनसमता न चेह संभवति ।
सदृशव्यापाराः किल पतगाः सर्वेऽपि पञ्जरे निहिताः ॥ १२० ॥
तस्माच्च चालयेयुः पञ्जरमेतच्च दृष्टमपि लोके ।
श्रवणादिव्यापारैरवान्तरैरन्विता विजातीयैः ॥ १२१ ॥
प्राणाः संभूय कथं प्राण्युर्नेह प्रमाणमपि किंचित् ।
तच्छ्रैष्ठत्वाद्युक्तिः संप्रति वागादिकरणजातस्य ॥ १२२ ॥
गुणभावोपगमो वा न युज्यते करणवृत्तिमात्रेऽस्मिन् ।
तस्मादन्यः प्राणो भवत्ययं वायुकरणवृत्तिभ्याम् ॥ १२३ ॥
ननु तर्हि कथमिमं यः प्राण इति श्रुतिरिहोपपद्येत ।
इति चेन्न वायुरेव ह्यध्यात्मं लब्धपञ्चवृत्तिरसौ ॥ १२४ ॥
प्राण इति कथ्यते न हि तत्त्वान्तरमिह न वायुमात्रं वा ।
तस्मादुभे इमे अपि भेदाभेदश्रुती हि न विरुद्धे ॥ १२५ ॥
स्यादेतन्नन्वेष प्राणो जीववदिह स्वतन्त्रः स्यात् ।
श्रेष्ठत्वादिभिरस्य ह्यनेकधा वर्ण्यते विभूतिरपि ॥ १२६ ॥
सुप्तेषु हि वागादिष्वेको जागर्ति मृत्युनाऽनाप्तः ।
वागादीन्संवृङ्क्ते पुत्रान्मातेव रक्षति प्राणान् ॥ १२७ ॥
इत्येवं किल तस्मात्प्राणस्यापीह भोक्तृता देहे ।
जीववदेव स्यादिति शङ्कामेतां निवारयत्यधुना ॥ १२८ ॥

चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॥ १० ॥

प्राणस्य स्वातन्त्र्यं व्यावर्तयितुं तुशब्द इह पठितः ।
जीवस्य कर्तृतां प्रति यथोपकरणानि चक्षुरादीनि ॥ १२९ ॥
राजामात्यवदेव हि भवन्ति चैतानि न स्वतन्त्राणि ।
जीवोपकरणभूतः प्राणोऽपि तथेह न स्वतन्त्रः स्यात् ॥ १३० ॥
सह शिष्यते यतोऽसौ प्राणस्तैश्चक्षुरादिभिः सर्वैः ।
सह शासनं यदेतत्तत्संवादादिषूपलब्धं तत् ॥ १३१ ॥
समधर्मेष्वेवैतद्युक्तं हि बृहद्रथन्तरेषु यथा ।
अस्वातन्त्र्ये कारणमचेतनत्वादि सुप्रसिद्धं यत् ॥ १३२ ॥
सूत्रेऽयमादिशब्दस्तदेतदखिलं प्रदर्शयितुमेव ।
ननु चक्षुरादिसाम्यादस्य च जीवोपकरणता तर्हि ॥ १३३ ॥
तद्वद्विषयान्तरमपि रूपादिवदस्य किमपि वक्तव्यम् ।
तत्प्राणकार्यजातान्येकादश वर्णितानि पूर्वत्र ॥ १३४ ॥

तानि च परिगणितानि हि रूपालोकनपुरःसराण्येव ।
द्वादशमपरं कार्यं न दृश्यतेऽतो वृथाऽयमिति चेन्न ॥ १३५ ॥

## अकरणत्वाच्च न दोषस्तथा हि दर्शयति ॥ ११ ॥

विषयपरिच्छेदेन प्राणस्य च करणता न चेहास्ति ।
एतावताऽस्य कार्यं किमपि च नास्तीति वक्तुमिह शक्यम् ॥ १३६ ॥
प्राणान्तरेष्वदृष्टं वैशेषिकमस्य कार्यमुपदिशति ।
यस्मिन्नुत्क्रान्त इदं शरीरमित्यादिका श्रुतिर्ह्येवम् ॥ १३७ ॥
यस्मिन्नुत्क्रान्ते सति पापिष्ठतरं शरीरमेतत्स्यात् ।
स भवति वः श्रेष्ठ इति प्रजापतेर्वाक्यमेतदाकर्ण्य ॥ १३८ ॥
उत्क्रान्तेष्वपि वागादिषु तेषां वृत्तिमात्रलोपेऽपि ।
जीवनमेतस्य यथापूर्वं जीवस्य दर्शयत्येव ॥ १३९ ॥
प्राणोच्चिक्रमिषायां वागादीनां हि शिथिलतापत्तिम् ।
तद्वच्छरीरपातप्रसङ्गमस्योपदर्शयित्वैव ॥ १४० ॥
प्राणनिमित्तामेव हि देहेन्द्रियसंस्थितिं प्रदर्शयति ।
प्राणेनेति श्रुतिरपि सुप्ते वागादिकरणजाते हि ॥ १४१ ॥
प्राणनिमित्तैवेयं शरीररक्षेति बोधयत्येवम् ।
यस्मात्कस्माच्चाङ्गात्प्राण इति श्रुतिरपीह दर्शयति ॥ १४२ ॥
प्राणनिमित्तामेव हि देहेन्द्रियपुष्टिमेवमपराऽपि ।
प्राणनिमित्ते एव हि जीवोत्क्रान्तिस्थिती विनिर्दिशति ॥ १४३ ॥

## पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॥ १२ ॥

एतस्मादपि हेतोर्मुख्यप्राणस्य दृष्टमिह कार्यम् ।
व्यपदिश्यते हि यस्माच्छ्रुतिषु प्राणो हि पञ्चवृत्तिरसौ ॥ १४४ ॥
प्राणोऽपानश्चेति व्यान उदानः समान इत्येवम् ।
प्राणः प्राग्वृत्तिरसौ तद्वदपानो भवेदवाग्वृत्तिः ॥ १४५ ॥
वर्तत इह तत्संधौ व्यानोऽसौ वीर्यकर्महेतुः स्यात् ।
ऊर्ध्वमुखवृत्तिरेष ह्युदान उत्क्रान्तिकर्महेतुः स्यात् ॥ १४६ ॥
स समानो योऽन्नरसं सर्वेष्वङ्गेषु समतया नयति ।
एवं हि पञ्चवृत्तिः प्राणो व्यपदिश्यते मनोवदसौ ॥ १४७ ॥
मनसो यथा प्रसिद्धाः श्रोत्रादिनिमित्तवृत्तयः पञ्च ।
शब्दादिगोचरास्तास्तथैव चास्यापि वृत्तयः पञ्च ॥ १४८ ॥

कामादयस्तु मनसो न पञ्चसंख्यातिरेकतो ग्राह्याः ।
नन्विह भूतभविष्यद्विषयाऽप्यपरा भवेन्मनोवृत्तिः ॥ १४९ ॥
एवं च पञ्चसंख्यातिरेक इह दुर्निवार इति चेन्न ।
परमतमप्रतिषिद्धं ह्यनुमतमेवेति नयमुपाश्रित्य ॥ १५० ॥
इह योगशास्त्रसिद्धाः परिगृह्यन्ते हि वृत्तयः पञ्च ।
स्मृत्यवसाना मनसः प्रमितिविपर्ययविकल्पनिद्राख्याः ॥ १५१ ॥
अथवा बहुवृत्तित्वात्प्राणस्य निदर्शनं मनो भवति ।
मनस इव प्राणस्याप्युपकरणत्वं हि पञ्चवृत्तित्वात् ॥ १५२ ॥

अणुश्च ॥ १३ ॥

इतरप्राणवदेव च मुख्योऽप्यणुरेव भवति हि प्राणः ।
सौक्ष्म्यपरिच्छेदौ खल्वत्राणुत्वं न चाणुतुल्यत्वम् ॥ १५३ ॥
कृत्स्नशरीरव्यापी येनासौ पञ्चवृत्तिभिः प्राणः ।
सूक्ष्मश्च प्राणोऽसावुत्क्रान्तावनुपलभ्यमानत्वात् ॥ १५४ ॥
भवति परिच्छिन्नोऽसावुत्क्रान्तिगत्यागतिश्रुतिभ्यश्च ।
नन्विह विभुताऽपि समः प्लुषिणेत्यादिश्रुतौ विनिर्दिष्टा ॥ १५५ ॥
इति चेहाऽऽधिदैविकसमष्टिरूपो हिरण्यगर्भो यः ।
प्राणात्मा तत्त्वेन हि विभुत्वमाम्नायतेऽस्य नेतरथा ॥ १५६ ॥

ज्योतिराद्यधिष्ठानं तु तदामननात् ॥ १४ ॥

आध्यात्मिकाधिदैविकविभागतोऽणुत्वमपि विभुत्वं च ।
प्राणस्य पूर्वमुक्तं तेषामिह सपदि तत्प्रसङ्गेन ॥ १५७ ॥
इदमाधिदैविकाधीनत्वं वर्णयति सूत्रकारोऽयम् ।
अत्र हि वाचा नामान्यभिवदतीतिश्रुतिप्रदेशेषु ॥ १५८ ॥
निरपेक्षसाधनत्वं वागादीनां प्रतीयते हि तया ।
अग्निर्वागित्यादिश्रुतेर्विरोधे समुत्थिते सेयम् ॥ १५९ ॥
नाधिष्ठातृपराऽग्नेस्तदुपादानत्वबाधनार्थैव ।
ते च प्राणाः प्रकृताः स्वकार्यशक्ता यतः प्रतीयन्ते ॥ १६० ॥
तस्मात्स्वमहिम्नैव ह्येते प्राणा इह प्रवर्तेरन् ।
अपि चाधिष्ठातृत्वे देवानां भोक्तृताऽपि दुर्वारा ॥ १६१ ॥
भोक्तृत्वं चेत्तेषां शारीरस्यास्य भोक्तृता न स्यात् ।
इति शङ्कां वारयितुं तदेतदभिधीयते हि सूत्रकृता ॥ १६२ ॥

इह पूर्वपक्षनिरसनः सोऽयं तुशब्द इह पठितः।
वागादिकरणजातं ह्यग्न्याद्यभिमानिदेवतोपकृतम् ॥ १६३ ॥
तदनुग्रहावलम्बात्स्वीये कार्ये प्रवर्तते सततम्।
अग्निर्वागित्यादिश्रुतिरप्यमुमर्थमेव दर्शयति ॥ १६४ ॥
अग्नेर्वाग्भावोऽयं मुखप्रवेशश्च नान्य इह भवति।
किंत्विह तदधिष्ठातृत्वाधिष्ठेयत्वरूप एवासौ ॥ १६५ ॥
एवं वायुः प्राणो भूत्वेत्यादावसौ भवेदर्थः।
वागेव ब्रह्मण इति मन्त्रे वाचोऽग्निभावकथनमपि ॥ १६६ ॥
उक्तार्थकं हि तस्मात्प्रत्यासत्तिस्तयोर्भवेदेवम्।
वागध्यात्ममिति स्मृतिवचनैर्वागादिकरणजातस्य ॥ १६७ ॥
अग्न्याद्यधिष्ठितत्व स्फुटतरमेव प्रपञ्चितं भवति।
स्वमहिम्नैव प्राणाः स्वकार्यशक्ता इतीह यच्चोक्तम् ॥ १६८ ॥
तच्चायुक्तं लोके शक्तानामपि भवेत्परापेक्षा।
अश्वाद्यधिष्ठितानामेव रथाना यतः प्रवृत्तिः स्यात् ॥ १६९ ॥
अग्न्याद्यधिष्ठितत्व तस्माद्वागादिकरणजातस्य।
युक्तं तदागमादपि तेषां भोक्तृत्वमिह निराक्रियते ॥ १७० ॥

## प्राणवता शब्दात् ॥ १५ ॥

सत्स्वेवाधिष्ठातृष्वग्न्यादिषु देवतात्मसु प्रथितः।
प्राणवता शारीरेणैवैषां भवति नित्यसंबन्धः ॥ १७१ ॥
अथ यत्रैतदिति श्रुतिरपि शारीरेण सर्वकरणानाम्।
भोक्तृभोक्तृतादिस्वरूपसंबन्धमत्र दर्शयति ॥ १७२ ॥
अपि चाधिष्ठातॄणामनेकभावान्न चेह भोक्तृत्वम्।
अवकल्पते ततोऽसावेकः शारीर एव भोक्ता स्यात् ॥ १७३ ॥
प्रतिसंधानादिबलादपि शारीरोऽयमत्र भोक्ता स्यात्।
भोक्तृत्वं देवानामिह न कदाचिदिति दर्शयत्यधुना ॥ १७४ ॥

## तस्य च नित्यत्वात् ॥ १६ ॥

शारीरस्यैवास्मिन्नित्यत्वं भवति भोक्तृभावेन।
पुण्यापुण्यार्जनतस्तथैव सुखदुःखभोगयोगाच्च ॥ १७५ ॥
या देवताः परस्मिन्नैश्वर्यपदेन तिष्ठमानाः स्युः।
ता हि निहीने देहे लब्धुं भोक्तृत्वमत्र नार्हन्ति ॥ १७६ ॥

श्रुतिरपि च पुण्यमेवामूनीत्याद्या निरूपयेत्येवम् ।
प्राणानां संबन्धः शारीरेणैव भवति नित्यतया ॥ १७७ ॥
येन तमुत्क्रामन्तं प्राण इति श्रुतिरपीह दर्शयति ।
शारीरेणैवेषामुत्क्रान्तौ तदनुवृत्तितामेव ॥ १७८ ॥
तस्मादासु सतीष्वपि न हि शारीरस्य भोक्तृताहानिः ।
देवा हि करणपक्षे दीपवदे[व] हि न भोक्तृपक्षेऽपि ॥ १७९ ॥
तस्माच्च चक्षुषेति श्रुतिरेषा भवति साधनत्वपरा ।
तदधिष्ठातृपरैव ह्यग्निर्वागिति तयोश्च न विरोधः ॥ १८० ॥

## त इन्द्रियाणि तव्द्यपदेशादन्यत्र श्रेष्ठात् ॥ १७ ॥

एको मुख्यास्त्वितरे प्राणा एकादशेति निर्दिष्टम् ।
मुख्यस्य वृत्तिभेदा इतरे प्राणा भवन्ति किं वा ते ॥ १८१ ॥
तत्त्वान्तराणि तस्मादिति संदेहे समुत्थिते तत्र ।
मुख्यस्य वृत्तिभेदा इतरे प्राणा इतीह युक्ततमम् ॥ १८२ ॥
हन्तास्यैवेत्याद्या श्रुतिरपि मुख्यात्मतां ब्रवीत्येषाम् ।
एकत्र मुख्यवृत्तिरितरत्र च लक्षणा तु न हि युक्ता ॥ १८३ ॥
तस्मादेकस्यैव प्राणाद्याः पञ्च वृत्तयो हि यथा ।
एवं वागाद्या इति शङ्कामेतां निवारयत्यत्र ॥ १८४ ॥
वागादीन्येतानि हि भवन्ति तत्त्वान्तराणि तानि यतः ।
एकादशेन्द्रियाणीत्युच्यन्ते श्रेष्ठमेकत्र विना ॥ १८५ ॥
एकस्मादिति मन्त्रे प्राणाः पृथगेवमिन्द्रियाण्यपि च ।
व्यपदिश्यन्ते हि यतस्तस्मात्तत्त्वान्तराणि तानि स्युः ॥ १८६ ॥
प्राणस्येव हि मनसो नन्वेवं सत्यनिन्द्रियत्वं स्यात् ।
व्यपदिश्यते हि यस्मात्पृथङ्मनोऽपीन्द्रियेभ्य इति चेन्न ॥ १८७ ॥
व्यपदेशोऽसौ यद्यपि मनसः पृथगेव दृश्यतेऽथापि ।
मनसोऽपि चेन्द्रियत्वं स्मृतिप्रसिद्धं श्रुतिप्रसिद्धमपि ॥ १८८ ॥
प्राणस्य चेन्द्रियत्वं न च श्रुतौ न स्मृतौ प्रसिद्धं स्यात् ।
व्यपदेशभेद एष हि तत्त्वैकत्वे ह्ययुक्त एव स्यात् ॥ १८९ ॥

## भेदश्रुतेः ॥ १८ ॥

भेदेन व्यपदेशो वागादिभ्यो हि दृश्यते प्राणे ।
नेहेति श्रुतिवाक्ये वागादीनसुरपाप्मविध्वस्तान् ॥ १९० ॥

निर्दिश्य सकलमेतद्वागादिप्रकरणं च संक्षिप्य ।
श्रुत्याऽथ हेममिति किल मुख्योऽसावसुरपाप्मविध्वंसी ॥ १९१ ॥
व्यपदिष्टः पृथगेव हि तस्मात्तत्त्वान्तराणि करणानि ।
तत्त्वान्तरतामेतामधुना हेत्वन्तरेण वर्णयति ॥ १९२ ॥

वैलक्षण्याच्च ॥ १९ ॥

वैलक्षण्यं दृष्टं मुख्यप्राणस्य चेतरेषां च ।
सुप्तेषु हि वागादिषु मुख्यो जागर्ति नेतरे प्राणाः ॥ १९३ ॥
तस्य स्थित्योत्क्रान्त्या तनुधारणपतनकार्यमिह भवति ।
एतच्च नेन्द्रियाणां विषयपरिच्छेदहेतुता तेषाम् ॥ १९४ ॥
तस्मादप्येतेषां तत्त्वान्तरभावसिद्धिरिति युक्तम् ।
एतस्यैव हि सर्वे रूपमितिश्रुतिबलेन तत्त्वैक्यम् ॥ १९५ ॥
न हि वर्णयितुं शक्यं यस्मात्तत्र प्रतीयते भेदः ।
इह च वदिष्याम्येवाहमिति श्रुत्या व्रतं विनिर्दिष्टम् ॥ १९६ ॥
वागादीनामेवं कथितश्रममृत्युकवलितत्वमपि ।
पश्चादथेममेवेत्यनया श्रुत्या हि मध्यमः प्राणः ॥ १९७ ॥
पृथगेव मृत्युनाऽनभिभूतोऽसौ वर्णितस्तथैवास्य ।
वाक्येनायं वै नः श्रेष्ठ इति श्रेष्ठताऽपि निर्दिष्टा ॥ १९८ ॥
तस्माद्बहुभिर्लिङ्गैरत्र विरोधे समुत्थिते तेषाम् ।
तद्रूपभवनमेतत्तदधीनस्थितिकतात्मकं वाच्यम् ॥ १९९ ॥
मुख्ये प्राणे शक्तो लाक्षणिकः प्राणशब्द इह भवति ।
तस्माद्वागादीनां प्राणात्तत्वान्तरत्वमिह सिद्धम् ॥ २०० ॥

संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥ २० ॥

तन्नामरूपभेदात्प्राणोऽसौ करणभिन्न इत्युक्तम् ।
तन्नामरूपक्लृप्तिर्भवति हि किंकर्तृकेति चिन्तेह ॥ २०१ ॥
सत्प्रकरणे हि तेजोबन्नाना सृष्टिसरणिमभिधाय ।
एकैकं करवाणीत्यन्तं वाक्यं हि सेयमित्यादि ॥ २०२ ॥
एतदनन्तरपठितं तस्मात्संदेह एष संभूतः ।
किं जीवकर्तृकमिदं किं वा परमेशकर्तृकं वेति ॥ २०३ ॥
तत्रेह नामरूपव्याकरणं जीवकर्तृकं युक्तम् ।
यस्मादनेन जीवेनेति श्रुतिरात्मभावमुपदिश्य ॥ २०४ ॥

व्याकरवाणीत्यस्माद्व्याकर्तृत्वं हि तस्य दर्शयति ।
लोके चारेणाहं परसैन्यमनुप्रविश्य कलयानि ॥ २०५ ॥
एवंविधप्रयोगे तत्कर्तृकमेव सैन्यसंकलनम् ।
अध्यारोपयति यथा स्वात्मनि राजा हि हेतुकर्तृत्वात् ॥ २०६ ॥
संकलयानीत्येवं तथेदमपि जीवकर्तृकं सदिह ।
स्वात्मन्यारोपयति व्याकरवाणीति देवता ह्येषा ॥ २०७ ॥
अपि किल डित्थादिषु वा नामस्वेवं घटादिरूपेषु ।
जीवस्यैव हि दृष्टं व्याकर्तृत्वं न चेतरस्येह ॥ २०८ ॥
तस्माच्च जीवकर्तृकमिदमिति शङ्का निराकरोत्यधुना ।
सूत्रस्थो हि तुशब्दः प्रकृताशङ्कानिवर्तनार्थः स्यात् ॥ २०९ ॥
यच्चेह नामरूपव्याकरण तत्परेश्वरस्यैव ।
तस्येह निरपवादं कर्तृत्वं स्यान्न चेतरस्येदम् ॥ २१० ॥
येयं संज्ञामूर्तिप्रकल्पनाऽग्न्यादिषूपलब्धा हि ।
सा तेजोबन्नानां निर्मातुर्भवति कृतिरिहेशस्य ॥ २११ ॥
सेयमिति श्रुतिरेषा व्याकरवाणीति चरमवाक्येण ।
परमात्मन एव यतो व्याकर्तृत्वं तदेतदुपदिशति ॥ २१२ ॥
नन्विह जीवेनेति व्यपदेशाज्जीवकर्तृकं तत्स्यात् ।
इति न यतो जीवेनेत्यनुप्रविश्येत्यनेन संबन्ध्यम् ॥ २१३ ॥
अव्यवधानान्नेह व्याकरवाणीत्यनेन संबध्येत ।
स्यादौपचारिकोऽसावुत्तमपुरुषश्च तेन संबन्धे ॥ २१४ ॥
अपि गिरिनदीसमुद्रादिषु नानारूपनिवहेषु ।
व्याकरणकर्तृता कथमनीश्वरस्यास्य भवति जीवस्य ॥ २१५ ॥
येष्वपि सामर्थ्यं स्यात्तेष्वपि तदिदं भवेत्परस्यैव ।
राज्ञश्चार इवायं न परस्माद्भिन्न एव जीवः स्यात् ॥ २१६ ॥
यस्मादिहाऽऽत्मनेति च विशेषणं दृश्यते हि जीवस्य ।
तस्योपाधिनिबन्धन एवासौ जीवभाव इत्युक्तम् ॥ २१७ ॥
तेन च तत्कृतमेतत्परात्मकृतमेव भवति सर्वमपि ।
परमेश्वर एवासौ व्याकर्ता नामरूपयोरिति हि ॥ २१८ ॥
आकाशो हेत्याद्यैः श्रुतिवचनैर्व्यक्तमेतदुपदिष्टम् ।
प्रत्येकनामरूपव्याकरणं भूतसर्गवाक्येण ॥ २१९ ॥

निर्दिष्टमत्र तु पुनर्विवक्षते भौतिकेषु तदिदं हि ।
तेजोबन्नानां किल भवेत्त्रिवृत्करणपूर्वकं यस्मात् ॥ २२० ॥
तस्मादग्न्यादिष्वियमुपदिशति श्रुतिरिदं त्रिवृत्करणम् ।
श्रुतिरेषा हि यदग्नेरित्याद्या सकलमेतदुपदिशति ॥ २२१ ॥
अग्न्यादित्यादीनां यदुदाहरणं श्रुतौ विनिर्दिष्टम् ।
तेनैतेषु त्रिष्वपि भौमांभसतैजसेषु तत्सिद्धम् ॥ २२२ ॥
यस्मादविशेषेण श्रुताविमा इत्युपक्रमो दृष्टः ।
यदु रोहितमित्यादावुपसंहारोऽपि चाविशेषेण ॥ २२३ ॥
तासां बहिस्तिसृणां त्रिवृत्कृतानां तु देवतानां हि ।
अध्यात्ममपरमेषा श्रुतिस्त्रिवृत्करणमत्र दर्शयति ॥ २२४ ॥
सा चेमास्तिस्र इति प्रथिता हि तथैव दर्शयत्येतत् ।
भगवानाचार्योऽसावाशङ्कितदोषमपहरिष्यन्हि ॥ २२५ ॥

मांसादि भौमं यथाशब्दमितरयोश्च ॥ २१ ॥

भूमेस्त्रिवृत्कृतायाः पुरुषेणेहोपभुज्यमानायाः ।
निष्पद्यते हि कार्यं मांसादि हि भवति तद्यथाशब्दम् ॥ २२६ ॥
दर्शयति चान्नमशितं त्रेधेत्याद्या श्रुतिर्यथोक्तार्थम् ।
भूमेरुपभुक्तायाः स्थविष्ठरूपं पुरीषभावेन ॥ २२७ ॥
निर्गच्छति बहिरेव हि मध्यममध्यात्ममेव मांसादि ।
वर्धयति यच्च चाणिष्ठं भवति मनो ह्येवमितरयोरपि च ॥ २२८ ॥
मूत्रं लोहितमेवं प्राणश्च तथा भवेदपां कार्यम् ।
अस्थि च मज्जा वागपि तेजस एतत्त्रयं भवेत्कार्यम् ॥ २२९ ॥
ननु भूतं भौतिकमप्यविशेषेण त्रिवृत्कृतं चेत्स्यात् ।
योऽयं विशेषवादस्तेजोबन्नेषु स च विलुप्येत ॥ २३० ॥
इदमिह तेज इमाः खल्वाप इदं चान्नमेवमादिरसौ ।
अध्यात्ममपि तथेदं कार्यं मांसादि चाशितान्नस्य ॥ २३१ ॥
एवमपां पीतानां कार्यं चैतद्धि लोहितादीति ।
अशितस्य तेजसोऽपि ह्यस्थ्याद्येवास्य कार्यमिति चेन्न ॥ २३२ ॥

वैशेष्यात्तु तद्वादस्तद्वादः ॥ २२ ॥

चोदितमेतं दोषं तुशब्दयोगेन सम्यगपनुदति ।
अत्र हि विशेषभावो वैशेष्यं तच्च भवति भूयस्त्वम् ॥ २३३ ॥

यद्यपि सकलं चेदं त्रिवृत्कृतं स्यात्तथापि वैशेष्यम् ।
एकस्य भूतधातोर्भूयस्त्वं चोपलभ्यते क्वापि ॥ २३४ ॥
तेजोभूयस्त्वं खल्वग्नेर्दृष्टं तथोदकस्यापि ।
अब्भूयस्त्वं दृष्टं तथा पृथिव्या इहान्नभूयस्त्वम् ॥ २३५ ॥
व्यवहारसिद्ध्यै खल्विदं त्रिवृत्करणमाश्रितं भवति ।
इह च पदाभ्यासोऽसावध्यायसमाप्तिमाशु बोधयति ॥ २३६ ॥
शारीरकमीमांसा मुनिना व्यासेन विरचिता सेयम् ।
चतुरध्यायी तस्यां द्वितीयसंज्ञश्च योऽयमध्यायः ॥ २३७ ॥
तत्र च चतुर्थपादे सूत्रार्थो यश्च भाष्यकारोक्तः ।
आर्यावृत्तैरमलैः प्रकाशितो भवतु सोऽयमनवद्यः ॥ २३८ ॥
भाष्यार्थरत्नमाला वैयासिकसूत्रजालसंग्रथिता ।
भगवति परमानन्दे समर्पिता जयतु जगति निरवद्या ॥ २३९ ॥

इति श्रीभाष्यार्थरत्नमालायां द्वितीयाध्यायस्य
चतुर्थः पादः ॥ ४ ॥

---

समाप्तश्च द्वितीयाध्यायः ॥ २ ॥

---

## भाष्यार्थरत्नमालायां तृतीयाध्यायस्य प्रथमः पादः ॥

---

### तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ १ ॥

पूर्वस्मिन्नध्याये कपिलादिस्मृतिनयैर्विरोधोऽसौ ।
वेदान्तवाक्यविहितब्रह्मावगमे हि परिहृतः सकलः ॥ १ ॥
अनपेक्षत्वं च तथा परपक्षाणां प्रपञ्चितं भवति ।
विप्रतिषेधश्चायं श्रुतिवचसामपि निराकृतः सकलः ॥ २ ॥
जीवव्यतिरिक्तानि हि यानि च जीवोपकरणभूतानि ।
तानि परस्माद्ब्रह्मण उत्पद्यन्त इति दर्शितं पूर्वम् ॥ ३ ॥
एवं वेदान्तार्थे विरोधशङ्कानिरासतो विमले ।
लब्धावसरा सेयं जाता तज्ज्ञानसाधने चिन्ता ॥ ४ ॥
इति हेतुहेतुमद्भावात्मकसंगतिमिहावलम्ब्यैव ।
तन्निर्णयाय संप्रत्यध्यायोऽसौ तृतीय आरब्धः ॥ ५ ॥

लिङ्गोपाधेः सिद्धा भवति हि तदुपहितजीवसंसारे।
चिन्तेति पादयोरपि संगतिरिह हेतुहेतुमद्भावः॥ ६॥
एतस्मिन्नध्याये योऽसावुपकरणपरिहृतो जीवः।
तस्य हि संसारगतिस्तदवस्था ब्रह्मतत्त्वयाथात्म्यम्॥ ७॥
विद्याभेदाभेदौ गुणोपसहारतद्विपर्यासौ।
सम्यग्दर्शनयोगात्पुंसां पुरुषार्थसिद्धिरप्येवम्॥ ८॥
सम्यग्दर्शनसाधनविधिप्रभेदो हि मुक्त्यनियमश्च।
एतन्निरूपयिष्यत इह प्रसङ्गागत तथाऽन्यदपि॥ ९॥
प्रथमे तावत्पादे पञ्चस्वग्नित्वगोचरां विद्याम्।
आश्रित्य विरतिहेतोः संसारगतेः प्रदर्श्यते भेदः॥ १०॥
तस्य जुगुप्सेतेति ह्यन्ते दृष्टा विरक्तिसाधनता।
मुख्यप्राणसहायो जीवोऽसौ सेन्द्रियश्च समनस्कः॥ ११॥
विद्याकर्मपुरस्कृतपूर्वप्रज्ञापरिग्रहोपेतः।
पूर्वं विहाय देहं देहान्तरमभिनवं हि लभत इति॥ १२॥
इत्येतदवगतं खल्वथैनमित्यादिवेदवाक्येषु।
धर्माधर्मफलानामुपभोक्तृत्वेन तस्य तद्युक्तम्॥ १३॥
स हि देहबीजभूतैः सूक्ष्मैर्भूतैरसंपरिष्वक्तः।
गच्छत्याहोस्वित्किं स संपरिष्वक्त एव यातीति॥ १४॥
चिन्तेयमत्र युक्ता ह्यसंपरिष्वक्त एव यातीति।
करणोपादानवदिह भूतोपादानमत्र न हि दृष्टम्॥ १५॥
इह च स एतास्तेजोमात्रा इत्यत्र करणमात्रपरः।
तेजोमात्राशब्दः श्रूयत एवं न भूतपरशब्दः॥ १६॥
अपि चेह वाक्यशेषे कथितानि हि चक्षुरादिकरणानि।
एवं न भूतमात्रोपादानस्येह कीर्तन दृष्टम्॥ १७॥
सुलभाश्च भूतमात्रा यस्मात्तासां हि निष्फलं नयनम्।
तस्मादसंपरिष्वक्तो यातीत्यत इदं पठत्यार्यः॥ १८॥
व्यवहारसिद्धये किल पञ्चीकरणं प्रदर्शितं पूर्वम्।
संप्रति स व्यवहारो निरूप्यत इतीह हेतुफलभावः॥ १९॥
देहान्तरसंपत्तौ सूक्ष्मैर्भूतैः सहैव संयाति।
जीवोऽत्र भवति हेतुः प्रश्नप्रतिवचनरूप एवेति॥ २०॥

राज्ञः प्रवाहणस्य प्रश्नोऽसौ श्वेतकेतुमुद्दिश्य ।
वेत्थ यथा पञ्चत्वमित्यादिस्तस्य चोत्तराज्ञाने ॥ २१ ॥
तत्पितरं राजाऽसौ पप्रच्छोद्दालकं यथापूर्वम् ।
तेनासौ वावेति वचनं हीद प्रदर्शितं राज्ञे ॥ २२ ॥
इह खल्वग्नावेताः श्रद्धाख्याः श्रद्धया हुता आपः ।
आज्यपयोदधिरूपा भवन्ति यजमानसगतास्ताभिः ॥ २३ ॥
सोमाख्यदिव्यदेहात्मना स्थिताः स्वर्गलोकमासाद्य ।
कर्मान्ते पर्जन्ये हुतास्ततो वृष्टिभावमुपयान्ति ॥ २४ ॥
एवं हुताः पृथिव्यां ताश्चान्नत्वेन परिणतास्तद्वत् ।
पुरुषे रेतोरूपा योषिति च हुता हि पुरुषपदवाच्याः ॥ २५ ॥
दर्शयतीति त्वाद्या श्रुतिरेषा सकलमेतमर्थमिह ।
तस्मादद्भिर्जीवो व्रजति परिष्वक्त इति तु युक्तमिह ॥ २६ ॥
नन्विह पूर्वं देहं त्यक्त्वा जीवस्तदन्तरं लभते ।
इत्यत्र वर्णितं तत्प्रतिकूलं तृणजलायुकेत्यस्याः ॥ २७ ॥
पूर्वतनुत्यागोऽसौ तदन्तरप्राप्त्यनन्तरं तत्र ।
निर्दिष्ट इह तु पूर्वं तस्मादेतद्विरुद्धमिति चेन्न ॥ २८ ॥
भावनयैव गृहीत्वा कर्मायत्तं हि भाविदेहमसौ ।
पूर्वं देहं त्यजतीत्येव जलूकानिदर्शनेनैषा ॥ २९ ॥
बोधयति सूत्रदर्शितमर्थं श्रुतिरिति न कश्चिदिह दोषः ।
देहान्तरसंपत्तिप्रकार एवं श्रुतिस्मृतिप्रथितः ॥ ३० ॥
तत्राऽऽत्मनस्तथैव हि करणानां व्यापिनां भवेद्वृत्तिः ।
इति सांख्यकल्पना वा तथैव सुगतादिकल्पना याऽसौ ॥ ३१ ॥
केवलमात्मन एव हि तदन्तरे भवति वृत्तिलाभ इति ।
एवं काणादानां मन एवाभिप्रतिष्ठते तादिदम् ॥ ३२ ॥
उत्पद्यन्ते देहवदभिनवरूपाणि चेन्द्रियाणीति ।
या कल्पना तथेयं शुक इव वृक्षात्तदन्तरं हि यथा ॥ ३३ ॥
उत्प्लुत्य जीव एकस्तदन्तरं लभत एवमाद्या हि ।
जैनानां ताः सकला नाऽऽदर्तव्या यतश्च निर्मूलाः ॥ ३४ ॥
श्रुतिविप्रतिषेधाश्चेत्यत एतासु ह्यनादरो युक्तः ।
प्रश्नप्रतिवचनाभ्यां नन्वद्भिः केवलाभिराकलितः ॥ ३५ ॥

रंहति परलोकमिति प्रतीयते कथमिह प्रतिज्ञातम् ।
सर्वैर्हि भूतसूक्ष्मैः सह प्रयातीत्यतस्त्विदं पठति ॥ ३६ ॥

त्र्यात्मकत्वात्तु भूयस्त्वात् ॥ २ ॥

अत्रत्यश्च तुशब्दो यथोक्तशङ्कानिवर्तनार्थः स्यात् ।
प्रश्ननिरूपणवाक्यप्रदर्शितास्त्रिस्वरूपका ह्यापः ॥ ३७ ॥
यस्मात्त्रिवृतमिति श्रुतिरिह तिस्रस्तास्त्रिवृत्कृता ब्रूते ।
तासामारम्भकतासिद्धावितरद्वयस्य सा सिद्धा ॥ ३८ ॥
तेजोबन्नानामिह यस्मात्कार्यं च दृश्यते देहे ।
तस्माद्देहस्त्र्यात्मक एव पुनस्त्र्यात्मकस्त्रिधातुत्वात् ॥ ३९ ॥
यस्माच्च वातपित्तश्लेष्मभिराकलित एव देहोऽसौ ।
न च केवलाभिरद्भिर्विनैव भूतान्तराणि चाऽऽरब्धुम् ॥ ४० ॥
नैव हि शक्यस्तस्मादब्भूयस्त्वापेक्षयेह चाप्शब्दः ।
दृश्यत एव हि यस्मादब्भूयस्त्वं हि सर्वदेहेषु ॥ ४१ ॥
ननु पार्थिवोऽपि धातुर्भूयिष्ठो दृश्यते शरीरेषु ।
मैवमपां बाहुल्यं त्विहेतरस्माद्धि दृश्यते लोके ॥ ४२ ॥
यद्देहबीजभूतं शुक्रं शोणितमिति प्रसिद्धं तत् ।
द्रवबहुलमेव दृष्ट कर्मापि निमित्तकारण यत्स्यात् ॥ ४३ ॥
तदपि च सोमाज्यादिद्रवबहुलद्रव्यसंश्रितं भवति ।
तत्समवेता ह्यापः श्रद्धाशब्दोदिता भवन्त्येताः ॥ ४४ ॥
सह कर्मभिर्द्युसंज्ञे ह्यग्नौ हूयन्त इति च वक्ष्यति हि ।
तस्माद्बाहुल्यमपामप्शब्देनेह देहबीजानाम् ॥ ४५ ॥
युक्तमुपादानं किल सर्वेषामेव भूतसूक्ष्माणाम् ।
यच्चेह भूतसूक्ष्मैः सहगमनं तस्य तदपि निरवद्यम् ॥ ४६ ॥

प्राणगतेश्च ॥ ३ ॥

देहान्तरसंपत्तौ प्राणानामपि गतिः श्रुता ह्येवम् ।
इह च तमुत्क्रामन्तं प्राणोऽनूत्क्रामतीति वाक्येन ॥ ४७ ॥
सा हि गतिः प्राणानां नैवाऽऽश्रयमन्तरेण संभवति ।
अत इह तद्गत्यर्थं तदाश्रयाणामपीह सा वाच्या ॥ ४८ ॥
न प्राणानां दृष्टा निराश्रयाणां क्वचिद्गतिस्तस्मात् ।
भूतान्तरसहितानामपामपि गतिस्त्ववश्यमिह वाच्या ॥ ४९ ॥

अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥ ४ ॥

ननु देहान्तरयोगे नैव प्राणाः सहैव जीवेन ।
गच्छन्त्यग्न्यादिगतिश्रुतेस्तथेयं श्रुतिः प्रदर्शयति ॥ ५० ॥
देहावसानसमये प्राणा वागादयो हि गच्छन्ति ।
अग्न्यादीन्देवानिति यत्रास्येति श्रुतिर्हि दर्शयति ॥ ५१ ॥
इति चेद्वागादीनामग्न्यादिगतिश्रुतिर्हि गौणीयम् ।
लोमसु केशेषु च सा न दृश्यते श्रुतिरिहेत्थमुपदिशति ॥ ५२ ॥
लोमानि चौषधीरिति केशाश्च वनस्पतीन्प्रयान्तीति ।
न हि लोमानि च केशा उत्प्लुत्यौषधिवनस्पतीन्यान्ति ॥ ५३ ॥
न च जीवस्य प्राणोपाधित्यागेन गमनमपि युक्तम् ।
देहान्तरे हि भोगो वाऽपि प्राणैर्विनोपपद्येत ॥ ५४ ॥
जीवेन च सह गमनं प्राणानामपि च दृश्यतेऽन्यत्र ।
तस्मादग्न्यादीनां वागाद्युपकारिणां हि देवानाम् ॥ ५५ ॥
उत्क्रमसमये केवलमुपकारनिवृत्तिमात्रमालक्ष्य ।
वागादयः प्रयान्ति ह्यग्न्यादीनिति तु भाक्तमेव स्यात् ॥ ५६ ॥

प्रथमेऽश्रवणादिति चेन्न ता
एव ह्युपपत्तेः ॥ ५ ॥

नन्वेतत्कथमापः पञ्चम्यामाहुतौ हि पुरुषाख्याः ।
यस्मादग्नौ प्रथमे नैवापां श्रवणमस्ति किंचिदपि ॥ ५७ ॥
आहुत्याधारतया पञ्चाधीतास्त्विहाग्नयो द्युमुखाः ।
तेषां प्रथमे त्वग्नौ तस्मिन्नित्येवमादिकां श्रद्धाम् ॥ ५८ ॥
होम्यद्रव्यतया हि श्रुतिः प्रदर्शयति तेन तदयुक्तम् ।
पर्जन्यादिषु सोमप्रभृतीनां होमकरणभूतानाम् ॥ ५९ ॥
द्रवबाहुल्येनापां होम्यद्रव्यत्वमुचितमेव स्यात् ।
प्रथमे त्वग्नौ श्रद्धा श्रुतां परित्यज्य चाश्रुता आपः ॥ ६० ॥
कथमिह होतव्याः स्युः पञ्चम्यामित्ययुक्तमिति चेन्न ।
यस्मात्प्रथमेऽप्यग्नौ ता एवाऽऽपो भवन्ति होतव्याः ॥ ६१ ॥
श्रद्धाशब्देनापि च ता एवाऽऽपो विवक्षिताः स्युरिह ।
एवं चेदेवं स्यात्तदादिमध्यावसानसंबन्धात् ॥ ६२ ॥
एकं वाक्यमनाकुलमुपपद्यत इतरथाऽऽहुतावस्याम् ।
पञ्चम्यामेवापां पुरुषवचस्त्वप्रकार इह पृष्टे ॥ ६३ ॥

प्रतिवचनावसरे हि प्रथमेऽग्नौ प्रथममाहुतिस्थाने।
अनपो होम्यद्रव्यं श्रद्धा मामावतारयेत्तर्हि ॥ ६४ ॥
नात्रैकवाक्यता स्यात्प्रश्नप्रतिवचनवैपरीत्येन।
उपसंहारोऽपीति त्वित्याद्या चैकवाक्यतां वक्ति ॥ ६५ ॥
लक्ष्यत एवाब्बहुलं श्रद्धाकार्यं च सोमवृष्ट्यादि।
कार्यानुरूपमेव [ च ] लोके दृष्टं हि कारणं सकलम् ॥ ६६ ॥
मनसो जीवस्यायं श्रद्धाख्यः प्रत्ययोऽत्र धर्मः सन्।
पश्वादिभ्यो हृदयानीवाय धर्मिणो निकृष्य कथम् ॥ ६७ ॥
होतुमुपादेयः स्याच्छ्रद्धाशब्दा इहाऽऽप एवातः।
श्रद्धाशब्दश्चाप्सु श्रद्धा वा आप एवमादिषु च ॥ ६८ ॥
वाक्येषु वैदिकेष्वपि दृष्टस्तस्मात्तनुत्वयोगेन।
श्रद्धासमानरूपाः श्रद्धाशब्दा इहाऽऽप एव स्युः ॥ ६९ ॥
अथवा श्रद्धाशब्दः श्रद्धासवलितकर्मसमवायात्।
श्रद्धाहेतुत्वाद्वा श्रद्धाशब्दोऽयमप्सु युक्तः स्यात् ॥ ७० ॥
आपो ह्यस्मै श्रद्धा इत्याद्या हि श्रुतिः प्रदर्शयति।
श्रद्धाहेतुत्वेन श्रद्धाशब्दोपपत्तिमप्सु यतः ॥ ७१ ॥

अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥ ६ ॥

प्रश्नप्रतिवचनाभ्यामापः श्रद्धादिभावमापन्नाः।
प्रतिपद्येरन्पुरुषाकारं ताश्चाऽऽहुतौ हि पञ्चम्याम् ॥ ७२ ॥
ताभिस्तु संपरिष्वक्ता जीवाश्चेह नैव रंहेयुः।
न हि जीवानां कश्चिच्छ्रावयिताऽपामिवेह शब्दोऽस्ति ॥ ७३ ॥
तस्मादयुक्तमेव ह्यद्भिः परिवेष्टितस्य गमनमिदम्।
इतिचेत्प्रतीयते तद्रंहणमिष्टादिकारिणामत्र ॥ ७४ ॥
अथ य इमे ग्राम इति श्रुतिरिह धूमादिवर्त्मनैतेषाम्।
इष्टादिकारिणां गतिमपि चन्द्रप्राप्तिमत्र दर्शयति ॥ ७५ ॥
यात्याकाशाच्चन्द्रं चन्द्रमसो भवति सोमराज इति।
एवमिहापि हि तस्मिन्नित्याद्यावेतदेव निर्दिष्टम् ॥ ७६ ॥
तस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तदाहुतेरेषः।
सोमो राजा भवतीत्यत्र श्रुतिवचनसाम्यतो लब्धम् ॥ ७७ ॥
तेषां च कर्मसाधनभूता एते हि दधिपयःप्रमुखाः।
द्रवभूयस्त्वादापः प्रत्यक्षेणैव ता हि दृश्यन्ते ॥ ७८ ॥

आहवनीये च हुताः सूक्ष्मास्तानाश्रयन्ति यजमानान् ।
तेषां शरीरमपि खल्वन्तेऽग्नावृत्विजोऽत्र जुह्वति हि ॥ ७९ ॥
आपश्चाऽऽहुतिमय्यः सूक्ष्माश्चेष्टादिकारिणो जीवान् ।
परिवेष्ट्यामुं लोकं फलदानाय च नयन्ति ता इति हि ॥ ८० ॥
अग्नौ देवा श्रद्धामित्याद्येन प्रतीयते ह्येवम् ।
श्रुत्यन्तरेऽग्निहोत्रप्रकरणपठितेन वाक्यशेषेण ॥ ८१ ॥
फलजननायाऽऽहुत्योर्लोकान्तरगमनमभिहितं भवति ।
जनकेन याज्ञवल्क्यं प्रति षट्प्रश्नाः प्रदर्शितास्तत्र ॥ ८२ ॥
पुरुषस्योत्क्रामत इह ते एते आहुती हुते भवतः ।
यश्चान्तरिक्षलोकस्तद्द्वारा ते दिवं हि गच्छन्त्यौ ॥ ८३ ॥
दिवमेवाऽऽहवनीयप्रतिष्ठयोपेतमातनुत एते ।
ते हि दिवं तर्पयतस्त्वावर्तेते ततो हि पुनरपि च ॥ ८४ ॥
ते च पृथिव्यां पुरुषे योषिति च हुते हि पुरुषरूपेण ।
उपतिष्ठत इत्येतत्कर्मिषु सर्वत्र दर्शयित्वैव ॥ ८५ ॥
त्वमनुत्क्रान्तिं न गतिं न च प्रतिष्ठां न तृप्तिमपि चैवम् ।
न च पुनरावृत्तिं वा न च लोकं प्रत्युपस्थितं वेत्थ ॥ ८६ ॥
इति षट्प्रश्नैर्विवृते न हि पुनरावृत्तिवर्जितः पन्थाः ।
तस्मादद्भिश्चाऽऽहुतिमयीभिरेवैष संपरिष्वक्तः ॥ ८७ ॥
रंहति परलोकमसौ फलभोगायेति युज्यते तदिदम् ।
इष्टादिकारिणां ननु फलोपभोगाय रंहणं यदिह ॥ ८८ ॥
धूमादिवर्त्मनोक्तं तदयुक्तमिव प्रतीयते यस्मात् ।
इष्टादिकारिणां किल शशधरमण्डलमुपागतानां हि ॥ ८९ ॥
तद्देवानामन्नं तं देवा एवमादिका तेषाम् ।
श्रुतिरन्नतां हि कथयति कथमेतेषां फलोपभोगः स्यात् ॥ ९० ॥
ते चन्द्रं प्राप्यान्नं भवन्ति तानेवमादिकाऽप्यपरा ।
श्रुतिरिममर्थं ब्रूते कथमिह तेषां स्वकर्मफलभोगः ॥ ९१ ॥
तस्माद्व्याघ्रादिभिरिव देवैः सर्वत्र भक्ष्यमाणानाम् ।
उपभोगाशंसनमिह कथमिति शङ्कां निराकरोत्यधुना ॥ ९२ ॥

भाक्तं वाऽनात्मवित्त्वात्तथाहि दर्शयति ॥ ७ ॥

अत्र च वाशब्दोऽसौ यथोक्तशङ्कानिरासफलकः स्यात् ।
एतेषामन्नत्वं न हि मुख्यं किंतु भाक्तमेव स्यात् ॥ ९३ ॥

मुख्ये किलान्नभावे विधिवाक्यं स्वर्गकामपरमखिलम् ।
असमञ्जसमुपभोगो यदि तेषां चन्द्रमण्डले न स्यात् ॥ ९४ ॥
अधिकारिणः किमर्थं कर्म यदायासबहुलमिह कुर्युः ।
लोके किलान्नशब्दोऽनन्नेऽप्युपचर्यमाण इह दृष्टः ॥ ९५ ॥
राज्ञां यथा विशोऽन्नं विशामिहान्नं यथा हि पशव इति ।
तस्मादिष्टतमस्त्रीपुत्रादिभिरिव गुणत्वमुपयातैः ॥ ९६ ॥
इष्टादिकारिभिर्यत्सुखविहरणमेतदेव देवानाम् ।
भक्षणमभिमतमेतन्न चर्वणं नापि निगरणं वाऽपि ॥ ९७ ॥
श्रुतिरिह न ह वै देवा इत्याद्याऽप्येवमेव दर्शयति ।
नाश्नन्ति नैव देवाः पिबन्ति दृष्ट्वाऽमृतं हि तृप्यन्ति ॥ ९८ ॥
इति तेषां देवानां वारयति हि चर्वणादिकं सकलम् ।
इष्टादिकारिणां पुनरुपभोगोऽयं हि भवति युक्ततमः ॥ ९९ ॥
राजोपजीविनामिह जगति यथैवैष परिजनानां स्यात् ।
युक्तो ह्यनात्मवित्त्वात्तेषां देवोपभोग्यभावोऽसौ ॥ ॥ १०० ॥
अथ योऽन्यामित्येषा श्रुतिरपि देवोपभोग्यतां ब्रूते ।
स च न हि वेद यथाऽसौ पशुरेवं स खलु देवतानां स्यात्॥१०१॥
स हि यस्मिन्नपि लोके कर्मभिरिष्टादिभिश्च देवादीन् ।
परितोषयन्निह पशुवद्देवानामुपकरोति चाविरतम् ॥ १०२ ॥
एवममुष्मिँल्लोके फलं तदादिष्टमेव भुञ्जानः ।
पशुवदसौ देवानामुपकुरुत इतीह गम्यते हि ततः ॥ १०३ ॥
अर्थान्तरपरमपि खल्वनात्मवित्त्वादितीह यच्चोक्तम् ।
इष्टादिकारिणः खल्वनात्मविद एव केवलं ते स्युः ॥ १०४ ॥
यस्मात्समुच्चयानुष्ठानविहीना हि कर्ममात्रपराः ।
तस्माद्गुणवादेन हि तेषामन्नत्वमत्र निर्दिष्टम् ॥ १०५ ॥
पञ्चाग्निविद्यया खलु विधुरास्तस्मादनात्मविद एते ।
दर्शयति कर्मभोगं स सोमलोके विभूतिमनुभूय ॥ १०६ ॥
पुनरावर्तत इति हि श्रुतिरेषा चन्द्रमण्डले तेषाम् ।
श्रुत्यन्तरमथ ये शतमित्यादिकमेवमेव दर्शयति ॥ १०७ ॥
इष्टादिकारिणामिह भाक्तत्वादन्नभाववचनस्य ।
रंहति फलोपभुक्त्यै स संपरिष्वक्त इति हि युक्तमिदम् ॥ १०८ ॥

कृतात्ययेऽनुशयवान्दृष्टस्मृतिभ्यां यथेतमनेवं च ॥ ८ ॥

धूमादिवर्त्मना किल शशधरमण्डलमुपागतानां हि ।
इष्टादिकारिणामिह तत्रैव च भुक्तसकलभोगानाम् ॥ १०९ ॥
प्रत्यवरोहस्तस्मिन्यावत्संपातमित्यनेनोक्तः ।
येनाध्वना गतास्ते पुनस्तमध्वानमनु निवर्तन्ते ॥ ११० ॥
यदि रमणीयाचरणा रमणीयां योनिमेव ते यान्ति ।
यदि चेत्कपूयचरणाः कपूययोनिं प्रयान्ति हीत्युक्तम् ॥ १११ ॥
ते किं निरनुशया वा सानुशया वा ततोऽवरोहन्ति ।
इति शङ्कायां प्राप्तं निरनुशया एव केवलं त इति ॥ ११२ ॥
यावत्संपातमुषित्वेति विशेषणमपीह निर्दिष्टम् ।
येनैव संपतत्ययमस्माल्लोकादसौ हि संपातः ॥ ११३ ॥
स च कर्मानुशयः स्याद्यावत्संपातमित्यनेनोक्तः ।
कृत्स्नस्य कर्मणो हि प्रतीयते भुक्तता हि तत्रैव ॥ ११४ ॥
श्रुत्यन्तरेण तेषां यदेत्यनेन प्रतीयते ह्येवम् ।
नन्विह यावदमुष्मिँल्लोके कर्मोपभोगयोग्यं स्यात् ॥ ११५ ॥
तावत्युपभुक्त इति श्रुत्यर्थश्चेह कल्प्यतामिति चेत् ।
यावत्पदसंकोचोऽप्यनुचित इह कल्पनीय एव स्यात् ॥ ११६ ॥
यत्किंचेह करोत्ययमित्यादिश्रुतिभिरपि विरोधः स्यात् ।
अपि चानारब्धफलं यत्कर्माभिव्यनक्ति कृत्स्नं तत् ॥ ११७ ॥
प्रायणमेतस्मात्प्रागारब्धफलेन कर्मणा तस्य ।
प्रतिबन्धादेव स्यादनभिव्यक्तिरिति तद्वियोगे तु ११८ ॥
सामग्र्या अविशेषाद्यादिदं प्रायणमिहोपपन्नं तत् ।
यावदनारब्धफलं तावदभिव्यञ्जकं भवत्येव ॥ ११९ ॥
साधारणे निमित्ते नैमित्तिकमपि च तादृशं दृष्टम् ।
घटपटयोरुपलब्धौ न तारतम्यं हि दीपसांनिध्ये ॥ १२० ॥
तस्मान्निरनुशयास्ते ह्यवरोहन्तीति पक्षमपनुदति ।
येनैव कर्मणा ते शशिमण्डलमुपगता हि भोगाय ॥ १२१ ॥
उपभोगेन क्षपिते तस्मिंस्तेषां यदम्मयं गात्रम् ।
उपभोगायाऽऽरब्धं तद्ध्युपभोगक्षये हि संनद्धे ॥ १२२ ॥
शोकाग्निज्वालाभिः प्रतीयते सवितृकिरणसंपर्कात् ।
हिमकरकादिरिवेदं तत इष्टादेः कृतस्य सर्वस्य ॥ १२३ ॥

कर्मण उपभोगेन क्षये समुत्पन्न एव सानुशयाः।
अपरोहन्त्येत इति श्रुतिस्मृतिभ्यां प्रतीयते तदिदम् ॥ १२४ ॥
तद्य इहेति श्रुतिरिह तमेतमर्थं हि सकलमुपदिशति।
ये रमणीयाचरणास्ते चावश्यं प्रयान्ति रमणीयाम् ॥ १२५ ॥
ब्राह्मणयोनिं वा ते क्षत्रिययोनिं च वैश्ययोनिं वा।
ये हि कपूयाचरणास्ते हि कपूयामवश्यमुपयान्ति ॥ १२६ ॥
सूकरयोनिं वा ते श्वयोनिमथवाऽन्त्यजातियोनिं वा।
अत्रत्यचरणशब्देनानुशयः सूच्यते न चान्यदिह ॥ १२७ ॥
दृष्टो हि जन्मनैव प्राणिषु सर्वेषु चोपभोगोऽयम्।
प्रविभज्यमान एव ह्यनुशयसद्भावमेष सूचयति ॥ १२८ ॥
वर्णा इत्याद्याऽपि स्मृतिरिममेव प्रदर्शयत्यर्थम्।
ननु योऽसावनुशय इह सूत्रोक्तः स खलु किंविधोऽयमिति ॥ १२९ ॥
स्वर्गार्थकर्मणोऽयं भुक्तफलस्यावशेष एव स्यात्।
भाण्डानुसारितैलवदयमिति केचित्तु वर्णयन्तीह ॥ १३० ॥
भुक्तफलकर्मशेषावस्थानं ननु न युक्तमिह भाति।
यद्यच्च कर्म लोके तत्सकलं भोगनाश्यमिति चेन्न ॥ १३१ ॥
सर्वात्मना हि कर्मण इह भुक्तफलत्वमनुपपन्नं स्यात्।
इष्टादिकर्मफलमिह यद्यपि भोक्तुं हि चन्द्रमारूढाः ॥ १३२ ॥
सत्यं तथाऽपि चाल्पावशेषमात्रं न शक्यते स्थातुम्।
इह सेवको हि कश्चित्समग्रसेवोपकरणसंपन्नः ॥ १३३ ॥
राजकुलमनुसृतोऽसौ चिरप्रवासाच्चिरप्रसादाच्च।
अपगतबहूपकरणः कतिपयसेवोपकरणमात्रेण ॥ १३४ ॥
राजकुले हि स्थातुं यथा न शक्नोति तद्वदेवायम्।
अनुशयमात्रेण पुनः शक्नोति न चन्द्रमण्डले स्थातुम् ॥ १३५ ॥
इति पक्षो हि न युक्तो यस्मादिष्टादिकं हि यत्कर्म।
भवति हि तत्स्वर्गार्थं भोक्तृफलं तत्र तस्य भवति कथम् ॥ १३६ ॥
लेशानुवृत्तिरेषा स्वर्गादन्यत्र फलमसौ जनयेत्।
शब्दप्रमाणकानां न चेदृशी कल्पनाऽपि युक्ततमा ॥ १३७ ॥
दृष्टा हि तैलभाण्डे तल्लेशस्यानुवृत्तिरिह लोके।
सेवोपकरणलेशानुवृत्तिरपि सेवकस्य दृष्टैव ॥ १३८ ॥

लेशानुवृत्तिरेषा न स्वर्गार्थस्य कर्मणो दृष्टा ।
स्वर्गफलशास्त्रबाधान्नाप्येषा कल्पनाऽपि युक्ततमा ॥ १३९ ॥
स्वर्गफलस्येष्टादेर्लेशस्तस्मान्न चानुशय एषः ।
यदि तस्य लेश एव ह्यनुशय इति कल्प्यते तदा चायम् ॥१४०॥
रमणीय एक एव स्यादनुशय इह च नैव विपरीतः ।
अनुशयसद्भावपरा तद्य इहेत्यादिका श्रुतिश्चेह ॥ १४१ ॥
अनुशयमुभयाविधं किल रमणीयकपूयभेदतो ब्रूते ।
तस्मात्तत्राऽऽमुष्मिककर्मफले निरवशेषमुपभुक्ते ॥ १४२ ॥
यच्चेदमैहिकफलं कर्मान्तरजातमनुशयस्तत्स्यात् ।
तद्वन्तस्ते स्वर्गादवरोहन्तीति युक्तमेवोक्तम् ॥ १४३ ॥
सर्वस्येह कृतस्य च कर्मण उपभोगतोऽन्तमासाद्य ।
निरनुशया एवैते ह्यवरोहन्तीति यच्च पूर्वोक्तम् ॥ १४४ ॥
यत्किंचेतिश्रुतिबलमालम्ब्य तदुत्तरं हि भवतीदम् ।
आमुष्मिकफलमिह कृतमपि यच्चाऽऽरब्धभोगमपि कर्म ॥१४५॥
उपभोगेन च सकलं तत्क्षपयित्वेति गम्यते हि ततः ।
यच्चानारब्धफलं कर्म प्राक्प्रायणान्न तमि(दि)दम् ॥ १४६ ॥
प्रायणमित्यनुशयसद्भावश्रुत्यैव परिहृतं तदपि ।
यच्चानारब्धफलं कृत्स्नमभिव्यज्यते हि तस्येह ॥ १४७ ॥
वृत्तिप्रतिबन्धः स्यादारब्धफलेन कर्मणा तस्य ।
युगपदनारब्धफलं कृत्स्नमभिव्यज्यते हि तदुपशमे ॥ १४८ ॥
इति तत्पूर्वं कथितं तदपि च निर्युक्तिकं हि निर्मूलम् ।
प्राक्प्रायणाद्यथैव ह्यारब्धफलेन कर्मणाऽन्यस्य ॥ १४९ ॥
प्रतिबद्धस्य हि युगपन्न वृत्तिलाभस्तथैव चेहापि ।
कर्मानेकविधं तद्विरुद्धफलमपि च दृश्यते शास्त्रे ॥ १५० ॥
तस्य च सर्वस्यैव हि युगपदभिव्यक्तिरनुपपन्नैव ।
प्रबलेन दुर्बलस्य प्रतिबद्धस्य च न वृत्तिरिह दृष्टा ॥ १५१ ॥
तस्मात्प्रायणसमये कस्यचिदेव हि भवेदभिव्यक्तिः ।
जात्यन्तरोपभोग्यं कर्मानारब्धफलमनेकं च ॥ १५२ ॥
एकस्मिन्प्रायण इह युगपदभिव्यज्यते कथं वा तत् ।
यस्मात्सकलं कर्म प्रतिनियतफलं हि दृश्यते शास्त्रे ॥ १५३ ॥

नापि प्रायणसमये कस्यचिदिह कर्मणो ह्यभिव्यक्तिः ।
कस्यचिदुच्छेदः स्यादिति किल वक्तुं न शक्यते यस्मात्॥१५४॥
सकलमपि कर्म भवति ह्यैकान्तिकमतो न किंचिदिदम् ।
प्रायश्चित्तादिकमिह विना कथं कर्मणां समुच्छेदः ॥ १५५ ॥
इह च विरुद्धफलेन प्रतिबद्धस्यास्य चिरमवस्थानम् ।
कर्मण इह दर्शयति स्मृतिरेषा खलु कदाचिदित्याद्या ॥ १५६ ॥
यदि च प्रायणसमये कृत्स्नमनारब्धफलमिदं कर्म ।
युगपदभिव्यक्तं सत्तच्चैकां जातिमारभेत ततः ॥ १५७ ॥
नारकतिर्यग्योनिषु देवमनुष्यादियोनिभेदेषु ।
अधिकारासंपत्ताविहोत्तरा जातिरुद्भवेच्च कथम् ॥ १५८ ॥
ब्रह्महननादिकर्मण एकस्यानेकजन्महेतुत्वम् ।
स्मृतिवाक्यदर्शितं यत्तदेतदखिलं विरुद्धमेव स्यात् ॥ १५९ ॥
वृष्टफलं कारीरिप्रभृति प्रायणमभिव्यनक्ति कथम् ।
दीपोपन्यासोऽपि हि कर्मबलत एव परिहार्यः ॥ १६० ॥
इह दीपसंनिधाने स्थूलमभिव्यज्यते न सूक्ष्ममपि ।
प्राप्तावसरे कर्मणि कृत्स्ने प्रायणमभिव्यनक्त्येवम् ॥ १६१ ॥
कर्म यदेतद्बलवत्तदेव नैवेह दुर्बलं किमपि ।
तस्मादशेषकर्माभिव्यक्तिकथा प्रमाणपरिभूता ॥ १६२ ॥
यदि भवति कर्मशेषस्तदा कथं मोक्ष इति वृथा प्रश्नः ।
ब्रह्मात्मदर्शने सत्यशेषकर्मक्षयः श्रुतो यस्मात् ॥ १६३ ॥
तस्मादनुशयवन्तस्ततोऽवरोहन्ति सोमलोकगताः ।
ते च यथेतमनेवं ह्यवरोहन्तस्ततोऽवरोहन्ति ॥ १६४ ॥
अवरोहे पितृयाणे धूमाकाशश्रुतेर्यथेतमिति ।
अभ्राद्युपसंख्यानाद्रात्र्यादेरकथनादनेवमिति ॥ १६५ ॥

चरणादिति चेन्नोपलक्षणा-
र्थेति कार्ष्णाजिनिः ॥ ९ ॥

नन्वनुशयसद्भावप्रदर्शनाय श्रुतिः पुरा कथिता ।
सा खलु चरणाद्योन्यापत्तिं दर्शयति न हि तथाऽनुशयात्॥१६६॥
चरणं चारित्रमिति ह्याचारः शीलमिति च पर्यायाः ।
भूतेषु कर्मणा वा मनसा वाचाऽपि सततमद्रोहः ॥ १६७ ॥

तदनुग्रहस्तथैव ज्ञानं शीलमिति वर्णयन्ति बुधाः ।
भुक्तफलादतिरिक्तं कर्मानुशयं हि वर्णयन्त्यार्याः ॥ १६८ ॥
व्यपदिशति कर्मचरणे भेदेन श्रुतिरियं यथेत्याद्या ।
यान्यनवद्यानीति श्रुतिरन्याऽप्येवमेव दर्शयति ॥ १६९ ॥
चरणाद्योन्यापत्तौ कथमनुशयसिद्धिरित्यतो ब्रूते ।
कार्ष्णाजिनिराचार्यः श्रुतिरेषा तदुपलक्षणार्थेति ॥ १७० ॥

## आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ १० ॥

स्यादेतत्कस्मादिह पुनरत्रत्येन चरणशब्देन ।
श्रौतं विहाय शीलं लाक्षणिकोऽसौ हि गृह्यतेऽनुशयः ॥ १७१ ॥
शीलस्यैव शुभाशुभयोन्यापत्तिः फलं भवेदत्र ।
अभ्युपगन्तव्यं किल शीलस्यावश्यमेव किंचिदिह ॥ १७२ ॥
नो चेदानर्थक्यं शीलस्य स्यादिहेति चेन्मैवम् ।
इष्टादिकर्म यस्माच्चरणापेक्षं हि वीर्यवदृष्टम् ॥ १७३ ॥
नाप्याचारविहीनः कर्मणि कुत्रापि दृश्यतेऽधिकृतः ।
स्मृतिराचारविहीनं न पुनन्तीत्येवमादिकाऽप्येवम् ॥ १७४ ॥
आचारविरहितस्य हि कर्मानधिकारमेव दर्शयति ।
इष्टादिकर्मजाते त्वारभमाणे फलं हि विधिदृष्टम् ॥ १७५ ॥
आचारस्तदपेक्षस्तत्रैव च कंचिदतिशयं जनयेत ।
सर्वार्थकारि कर्म श्रुतिस्मृतिभ्योऽवगम्यते यस्मात् ॥ १७६ ॥
तस्मादनुशयभूतं तदेव शीलोपलक्षितं कर्म ।
योन्यापत्तौ कारणमिति कार्ष्णाजिनिमतं हि युक्ततमम्॥ १७७ ॥
कर्मणि संभवति च सति योन्यापत्तिर्न शीलतो युक्ता ।
पद्भ्यां पलायिता किल जानुभ्यां रंहितु हि नोत्सहते ॥ १७८ ॥

## सुकृतदुष्कृते एवेति तु बादरिः ॥ ११ ॥

इह सुकृतदुष्कृते द्वे प्रत्याय्येते हि चरणशब्देन ।
इति बादरिराचार्यो मन्यत एवं हि चरणशब्दार्थम् ॥ १७९ ॥
चरणं हि कर्म यस्मादविशेषेणैव कर्ममात्रे च ।
चरतिः प्रयुज्यमानः सर्वत्रैवेह दृश्यते लोके ॥ १८० ॥
योऽसौ हि नियतवृत्त्या करोति चेष्टादिलक्षणं कर्म ।
धर्मं चरति महात्मेत्येवं त लौकिका वदन्ति ततः ॥ १८१ ॥

भेदव्यपदेशोऽयं ब्राह्मणतापसनयेन नेतव्यः ।
इह निर्मलकर्माणो निन्दितकर्माण एव निर्दिष्टाः ॥ १८२ ॥

## अनिष्टादिकारिणामपि च श्रुतम् ॥ १२ ॥

इष्टादिकारिणो ये ते चन्द्रमसं प्रयान्ति हीत्युक्तम् ।
संप्रति पुनरत्रैव हि ये चानिष्टादिकारिणस्तेऽपि ॥ १८३ ॥
चन्द्रमसं गच्छन्त्युत नैव हि गच्छन्ति त इति चिन्तेयम् ।
गच्छन्ति चन्द्रमण्डलमेतेऽपीत्येतदत्र युक्तं स्यात् ॥ १८४ ॥
कौषीतकिनो यस्माद्येवै के चेत्यनेन वाक्येन ।
प्रयतां सर्वेषामपि चन्द्रप्राप्तिं हि वर्णयन्त्येते ॥ १८५ ॥
तत्प्राप्तिमन्तरेण च देहारम्भोऽपि दुर्लभोऽन्येषाम् ।
आहुतिसंख्यानियमादपि चन्द्रप्राप्तिरत्र युक्ततमा ॥ १८६ ॥
इष्टादिकारिणामपि नन्वितरेषां समानमार्गत्वम् ।
कथमिति चेदितरेषां न हि भोगश्चन्द्रमण्डले भवति ॥ १८७ ॥

## संयमने त्वनुभूयेतरेषामारोहाव-रोहौ तद्गतिदर्शनात् ॥ १३ ॥

एतत्पक्षं निरसितुमेष तुशब्दो हि सूत्रनिर्दिष्टः ।
चन्द्रमसं गच्छन्ति हि सर्वेऽपीत्येतदनुपपन्नं हि ॥ १८८ ॥
चन्द्रारोहणमेतद्भोगायैव हि न निष्फलं भवति ।
नापि प्रत्यवरोहायैव तदारोहणं हि युक्तमिह ॥ १८९ ॥
आरोहति किल वृक्ष पुष्पफलादेः परिग्रहाय नरः ।
नापि च निष्फलमेव हि न चापि पतनाय वृक्षमारोहेत् ॥१९०॥
चन्द्रमसि भोगवार्ता नैवानिष्टादिकारिणामस्ति ।
तस्मादिष्टादिकरा एवाऽऽरोहन्ति चन्द्रमितरे तु ॥ १९१ ॥
यमनिलयमाशु गत्वा दुश्चरितफलं च सम्यगनुभूय ।
पुनरेवेमं लोकं प्रत्यवरोहन्त्यनिष्टकर्मकृतः ॥ १९२ ॥
तेषामेवभूतावेवाऽऽरोहावरोहसंज्ञौ स्तः ।
अत्रानिष्टादिकृतां प्रयतां यमवश्यतां गतिं यामीम् ॥ १९३ ॥
श्रुतिरिह न सांपरायः प्रतिभातीत्येवमादिका ब्रूते ।
श्रुतिरन्या वैवस्वतमित्याद्याऽप्येवमेव दर्शयति ॥ १९४ ॥

स्मरन्ति च ॥ १४ ॥

अपि च मनुव्यासाद्या ये खलु शिष्टाः पुरे हि संयमने ।
ते च स्मरन्ति दुष्कृतकर्मविपाकं चिरं यमायत्तम् ॥ १९५ ॥

अपि च सप्त ॥ १५ ॥

अपि चेह सप्त नरका दुष्कृतफलभोगभूमयो ह्येते ।
गच्छन्ति ताननिष्टादिकृतश्चन्द्रं कथं हि गच्छेयुः ॥ १९६ ॥
ननु दुरितकारिणस्ते यमनियमितयातना भवन्तीति ।
नैतद्यस्मादन्ये स्मर्यन्ते तत्र चित्रगुप्ताद्याः ॥ १९७ ॥

तत्रापि च तद्व्यापारादविरोधः ॥ १६ ॥

तेष्वपि च सप्तनरकेष्वस्याधिष्ठा कृता यमस्यैव ।
अन्ये यमप्रयुक्ताधिष्ठातारो न हि स्वतन्त्रास्ते ॥ १९८ ॥

विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ १७ ॥

पञ्चाग्निगोचरायां विद्यायामेष दृश्यते प्रश्नः ।
वेत्थ[यथाऽ]साविति किल तस्य प्रति[व]चस(न)समय इदमुक्तम्॥
ये चैतयोः पथोर्यद्यन्यतरेणापि साधनेन युताः ।
ते जननमरणसंततिसंकलितानि हि भवन्ति भूतानि ॥ २०० ॥
तत्रैकयोः पथोरिति विद्याकर्मप्रदर्शनार्थमिदम् ।
देवपितृयाणयोस्ते प्रतिपत्तौ मुख्यसाधने प्रकृते ॥ २०१ ॥
विद्या हि तद्य इत्थं विदुरिति गदिता तयोर्हि गन्तव्यः ।
सोऽयं हि देवयानः पन्था एवात्र दर्शितो भवति ॥ २०२ ॥
कर्म त्विष्टापूर्ते दत्तमिति निरूपितं हि तेनायम् ।
प्रतिपत्तव्यः पन्थाः पितृयाण इति प्रदर्शितो भवति २०३ ॥
तत्प्रकरण एवैतच्छ्रुतं किलाथैतयोः पथोरिति च ।
ये विद्यासाधनता न देवयानेन कर्मणाऽपि च ये ॥ २०४ ॥
पितृयाणेऽधिकृताः स्युस्तेषां पन्थास्तृतीय एवासौ ।
क्षुद्रतरजन्तुलक्षण इति दर्शयति श्रुतिर्हि तानीति ॥ २०५ ॥
तस्मादपि चानिष्टादिकारिभिश्चन्द्रमा न लभ्येत ।
ननु तेऽपि चन्द्रमण्डलमारुह्य ततोऽवरुह्य पुनरपि च ॥ २०६ ॥
क्षुद्रतरजन्तुभावं प्रतिपत्स्यन्त इति युक्तमिति चेन्न ।
भोगाभावादेषामारोहोऽनर्थकः प्रसज्येत ॥ २०७ ॥

अपि च प्रयत्सु सर्वेष्वपि चन्द्रं प्राप्नुवत्स्वसौ लोकः ।
सर्वैरपि प्रयद्भिः संपूर्येतेत्यतो न युक्तमिदम् ॥ २०८ ॥
प्रश्नविरुद्धं तदिदं प्रतिवचनं च प्रसज्यते तत्र ।
अवरोहादेवेहासंपूरणमिति तु नेह युक्ततमम् ॥ २०९ ॥
यस्माच्छ्रुतिस्मृतीयस्थानोक्त्या पूरणं हि दर्शयति ।
तस्माच्चानारोहादेवासंपूरणं हि युक्तमिह ॥ २१० ॥
इष्टादिकारिणामप्यवरोहान्याविशिष्टतायां हि ।
इह च तृतीयस्थानप्रतिपादनमेतदफलमेव स्यात् ॥ २११ ॥
या खल्वशेषगमनाशङ्का शाखान्तरीयवाक्यात्था ।
तामेतामाशङ्कामुन्मूलयितुं तुशब्द इह पठितः ॥ २१२ ॥
शाखान्तरीयवाक्ये त्वधिकृतविषयो हि सर्वशब्दः स्यात् ।
ये च प्रयान्त्यधिकृता अस्माल्लोकात्त एव चन्द्रमसम् ॥ २१३ ॥
सर्वे गच्छन्तीति श्रुत्यर्थे न हि विरोधलेशोऽपि ।
देहोद्भवाय चन्द्रारोहणमिति यत्तदत्र परिहरति ॥ २१४ ॥

न तृतीये तथोपलब्धेः ॥ १८ ॥

आहुतिसंख्यानियमो न तृतीये भवति देहलाभाय ।
यस्मादिह च तृतीयस्थानप्राप्तिर्विनैव तन्नियमम् ॥ २१५ ॥
उपलभ्यते हि जायस्वेतिश्रुत्यन्तरस्थवाक्येषु ।
अपि चेहाऽऽहुतिसंख्या कथिता मानुषशरीरहेतुतया ॥ २१६ ॥
नेतरहेतुतयाऽसौ पुरुषपदस्यास्य मनुजवचनत्वात् ।
अपि चेह पुरुषभावः पञ्चम्यामाहुतावपां कथितः ॥ २१७ ॥
प्रतिषिध्यते न चेहापञ्चाम्यामाहुतौ हि तद्भावः ।
उभयार्थकतायां किल वाक्यस्य द्व्यर्थतादिदोषः स्यात् ॥ २१८ ॥
आहुतिसंख्या तेषा येष्वारोहावरोहणे भवतः ।
अन्येषां तु विनैव हि सख्यानियमं शरीरमुद्भवति ॥ २१९ ॥

स्मर्यतेऽपि च लोके ॥ १९ ॥

धृष्टद्युम्नद्रोणप्रभृतीनां जगति सुप्रसिद्धानाम् ।
सीताप्रभृतीनामप्ययोनिजत्वं हि विश्रुतं लोके ॥ २२० ॥

दर्शनाच्च ॥ २० ॥

अपि च चतुर्विधभूतग्रामे हि स्वेदजोद्भिदोरेवम् ।
उत्पत्तिरन्तरेण ग्राम्यं धर्मं हि दृश्यते लोके ॥ २२१ ॥

तत्राऽऽहुतिसंख्याया भवति यथाऽनादरस्तथाऽन्यत्र ।
ननु तेषां खल्वेषां भूतानामेवमादिके मन्त्रे ॥ २२२ ॥
अण्डजमिह जीवजमित्युद्भिज्जमिति त्रिधैव निर्दिष्टः ।
भूतग्रामः स कथं चतुर्विध इतीह कथितमिति चेन्न ॥ २२३ ॥

तृतीयशब्दावरोधः संशोकजस्य ॥ २१ ॥

संशोकजशब्देन स्वेदज एवात्र गृह्यते तत्र ।
इह चोद्भिज्जपदेन श्रुतिवाक्यस्थेन संग्रहो भवति ॥ २२४ ॥

साभाव्यापत्तिरुपपत्तेः ॥ २२ ॥

एवं हि पापिनां खल्वेते गत्यागती विचार्यैव ।
इष्टादिकारिणामिह संप्रत्यवरोहलक्षणं ब्रूते ॥ २२५ ॥
अवरोहलक्षणपरा श्रुतिरत्रार्थतमेवमाद्या हि ।
चन्द्रमसो हि निवृत्तास्ते पुनराकाशमेव गच्छन्ति ॥ २२६ ॥
आकाशादपि वायुं वायुर्भूत्वाऽपि भवति धूमोऽसौ ।
धूमो भूत्वा चाभ्रं ह्यभ्रं भूत्वा हि भवति मेघोऽसौ ॥ २२७ ॥
मेघो भूत्वा चासौ प्रवर्षतीत्येतमर्थमुपदिशति ।
अवरोहन्तस्त्वेते ह्याकाशादिस्वरूपमुपयान्ति ॥ २२८ ॥
किंवाऽप्याकाशाद्यैः साम्यं यान्तीति संशये प्राप्ते ।
तत्रैतद्युक्तं स्यादाकाशाद्यात्मतां प्रयान्तीति ॥ २२९ ॥
श्रुतिरिह मुख्यार्था स्यादेवं चेदन्यथा हि गौणी स्यात् ।
श्रुतिलक्षणयोर्विशये न्याय्या श्रुतिरेव लक्षणा न तथा ॥ २३० ॥
धूमो भूत्वेत्यादीन्यवकल्पन्तेऽक्षराणि चेहैव ।
तस्मादाकाशादिस्वरूपतापत्तिरत्र युक्तेति ॥ २३१ ॥
एवं प्राप्ते ब्रूते यान्त्याकाशादिसाम्यमेवेति ।
चन्द्रमसि भोगफलकं यदम्मयं गात्रमेतदारब्धम् ॥ २३२ ॥
उपभोगापाये हि प्रविलीनं तद्वियत्समं भवति ।
वायोर्वशमेति ततो धूमादिभिरेव भवति संपृक्तः ॥ २३३ ॥
इममर्थमेव कथयति यथैवमित्यादिका श्रुतिर्यस्मात् ।
उपपद्यतेऽयमर्थो न ह्यन्यस्यान्यरूपता युक्ता ॥ २३४ ॥
यदि चेदाकाशादिस्वरूपतापत्तिरिह भवेत्तर्हि ।
वाय्वादिवर्त्मना हि क्रमावरोहोऽपि नोपपद्येत ॥ २३५ ॥

आकाशस्य विभुत्वात्तेन च तस्येह सततसंयोगात् ।
संयोगलक्षणायां भवति श्रुत्याऽनुवाद एव स्यात् ॥ २३६ ॥
तत्सादृश्यादन्यस्तत्सम्बन्धो हि न घटते तस्मात् ।
यल्लक्षणानुसरणं तदपीह श्रुत्यसंभवे न्याय्यम् ॥ २३७ ॥
तस्मादाकाशाद्यैः साभाव्यापत्तिरेव तद्भावः ।
साभाव्यं समभावस्तत्खलु सादृश्यमेव नान्यः स्यात् ॥ २३८ ॥

## नातिचिरेण विशेषात् ॥ २३ ॥

व्रीह्यादिप्रतिपत्तेः प्रागाकाशादिसाम्यसंपत्तौ ।
किं दीर्घं कालमसौ पूर्वसमत्वेन वर्तमानः सन् ॥ २३९ ॥
उत्तरसमतां गच्छत्युतालपकालमिति सशयो भवति ।
अत्रानियमो न्याय्यो न चेह किंचिन्नियामकं यस्मात् ॥ २४० ॥
एवं प्राप्ते पठति हि नातिचिरेणेति सूत्रकारोऽयम् ।
अल्पं ह्यल्पं कालं ते चाऽऽकाशादिसमतया स्थित्वा ॥ २४१ ॥
भुवमापतन्ति पश्चादेते हि सहैव वर्षधाराभिः ।
इत्येतदेव युक्त यस्माद्व्रीह्यादिभावतः पश्चात् ॥ २४२ ॥
श्रुतिरेषाऽतो वै खलु दुर्निष्प्रपतरमिति प्रदर्शयति ।
छान्दस्या प्रक्रियया ह्यत्र तकारो हि लुप्त इह भवति ॥ २४३ ॥
इह दुर्निष्प्रपततरं दुर्निष्क्रमणं स्वरूपमेव स्यात् ।
व्रीह्यादिभावपरतो दुर्निःसरणं प्रदर्शयन्ती सा ॥ २४४ ॥
पूर्वेष्वाकाशादिषु सुखनिष्क्रमणं हि सूचयत्येव ।
सुखदुःखताविशेषो निष्क्रमणस्य हि चिराचिरत्वकृतः ॥ २४५ ॥
न हि भोगमूलकोऽसौ तस्मिन्नवधौ तनोरनिष्पत्तेः ।
व्रीह्यादिभावतः प्रागचिरेणैवावरोह इह तस्मात् ॥ २४६ ॥

## अन्याधिष्ठिते पूर्ववदभिलापात् ॥ २४ ॥

तस्मिन्नवरोहे हि प्रवर्षणानन्तरं तु पठितेयम् ।
त इह व्रीहियवा इत्याद्या श्रुतिरत्र संशयोऽयं स्यात् ॥ २४७ ॥
स्थावरजात्यापन्नास्तत्सुखदुःखानुशायिन एते स्युः ।
अन्यस्वामिकतनुषु हि किंवा संश्लेषमेव यान्तीति ॥ २४८ ॥
अत्र किलैतद्युक्त स्थावरभावानुशायिन एत इति ।
स्थावरजात्यापत्तौ जनेर्हि मुख्यार्थतोपपन्ना स्यात् ॥ २४९ ॥

उपभोगः किल दृष्टः स्थावरजातावपि श्रुतिस्मृत्योः ।
पशुविशसनादियोगादनिष्टफलता भवेदिहेष्टादेः ॥ २५० ॥
तस्मादनुशयिनामिह भवति व्रीह्यादिजन्म मुख्यं हि ।
अनुशयिनां हि यथा वा मुख्य स्याच्छ्वादिजन्म तद्वदिह॥ २५१ ॥
इति शङ्कायां ब्रूते ह्यन्यैर्जीवैरधिष्ठितेष्वेषु ।
व्रीह्यादिष्वनुशयिनः संसर्गं केवलं प्रपद्यन्ते ॥ २५२ ॥
न हि तत्सुखदुःखभुजो यथा ह्ययं वायुधूमभावः स्यात् ।
व्रीह्यादिभाव एवं भवति हि संश्लेषमात्रमेवात्र ॥ २५३ ॥
यस्माच्च तद्वदेव ह्यभिलापोऽत्रापि दृश्यते भूयः ।
सकीर्तनं यदेतत्कर्मव्यापारमन्तरेणैव ॥ २५४ ॥
तद्वद्भावः सोऽयं ह्याकाशादिप्रवर्षणान्तेषु ।
भवति हि तत्र न किंचित्कर्मव्यापारकीर्तनं यस्मात् ॥ २५५ ॥
कर्मव्यापारोऽयं कपूयचरणा इति प्रदेशेषु ।
संकीर्तितो हि तत्र त्वनुशयिनां मुख्यमेव जन्म स्यात् ।
अपि यद्यनुशयिनां चेन्मुख्यं व्रीह्यादिजन्म भवति तदा ।
तेष्वेव लूयमानेष्वपि किल तेष्वेव पच्यमानेषु ॥ २५७ ॥
व्रीह्यादिष्वनुशयिनः प्रवसेयुस्तदभिमानिनो ये स्युः ।
यच्चाभिमन्यते किल जीवस्तस्मिन्ह पीड्यमाने तु ॥ २५८ ॥
प्रवसति स चेत्ततः खल्वनुशयिनामेष नाभिलप्येत ।
इह रेतःसिग्भावो योऽसौ व्रीह्यादिभावतः पश्चात् ॥ २५९ ॥
तस्मादनुशयिनां तत्सङ्गो व्रीह्यादिभाव इह भवति ।
स्थावरजन्मान्येषामपुण्ययोगेन भवति तच्च किल ॥ २६० ॥
उपभोगस्थानं स्यात्तेषामेव हि न चानुशयिनां स्यात् ।
तस्मादनुशयिनस्ते स्थावरभावं न चेह गच्छन्ति ॥ २६१ ॥

अशुद्धमिति चेन्न शब्दात् ॥ २५ ॥

पशुविशसनादियोगादाध्वरिकं कर्म चाविशुद्धं स्यात् ।
तस्य त्वनिष्टफलमपि युक्तं व्रीह्यादिजन्म मुख्यमिति २६२ ॥
यच्चैतत्पूर्वोक्तं तदेतदत्र हि निरस्यते सूत्रे ।
नाऽऽध्वरिकं कर्म स्यादशुद्धमेतस्य शास्त्रमूलत्वात् ॥ २६३ ॥
यस्माद्धर्माद्धर्मावतीन्द्रियावेतयोश्च विज्ञानम् ।
न हि शास्त्रमन्तरेण च कस्यचिदपि किल सुमेधसो भवति ॥२६४॥

यस्मिन्देशे काले तथा निमित्ते च भवति यो धर्मः।
भवति स एवाधर्मो यथोक्तदेशादिवैपरीत्येन ॥ २६५ ॥
न ह्येवंविधयोरिह विज्ञानं शास्त्रमन्तरेण स्यात्।
हिंसानुग्रहरूपो ज्योतिष्टोमो हि धर्म इत्युक्तः ॥ २६६ ॥
शास्त्रेणैव हि तस्मात्स कथमधर्म इति शक्यते वक्तुम्।
ननु च न हिंस्यात्सर्वा भूतानीत्येवमादिकं शास्त्रम् ॥ २६७ ॥
अवगमयति हिंसामयमधर्म इति भूतगोचरामिति चेत्।
बाढं तदिदमथापि ह्युत्सर्गो भवति नापवादः स्यात् ॥ २६८ ॥
अग्नीषोमीयं पशुमित्याद्यं भवति चापवादो हि।
अपवादशास्त्रविषयं हित्वा ह्युत्सर्गशास्त्रमखिलमपि ॥ २६९ ॥
अवगमयति किल पुरुषं प्रवर्तयति तद्वदेव नान्यत्र।
न हि भिन्नविषययोरिह विरोधशङ्का प्रवर्तते शास्त्रे ॥ २७० ॥
तस्मादिदमाध्वरिकं कर्म विशुद्धं हि शिष्टजनसेव्यम्।
शास्त्रैरनिन्द्यमानं स्थावरभावो न तस्य फलमुचितम् ॥ २७१ ॥
व्रीह्यादिजन्म यदिदं तत्किल न श्वादिजन्मवद्भवति।
इह किल कपूयचरणानधिकृत्य श्वादिजन्म निर्दिष्टम् ॥ २७२ ॥
नैवमिह किंचिदपि वाकर्म परामर्शलिङ्गमुपलब्धम्।
तस्माद्व्रीह्यादिष्वनुशायिना संश्लेषमात्रमेव स्यात् ॥ २७३ ॥

## रेतःसिग्योगोऽथ ॥ २६ ॥

व्रीह्यादिभाव इह किल तत्संश्लेषो न चान्यदिह भवति।
यस्मात्ततोऽनुशयिनां रेतःसिग्भाव एष आम्नातः ॥ २७४ ॥
यो ह्यन्नमत्ति रेतः सिञ्चति तद्भूय एव भवतीति।
रेतःसिग्भावोऽसौ मुख्यो नैवेह तस्य संभवति ॥ २७५ ॥
स च रेतःसिग्भवति हि चिरजातः प्राप्तयौवनो योऽसौ।
कथमद्यमानभक्तानुगतोऽनुशयी हि मुख्यतद्भावम् ॥ २७६ ॥
प्रतिपद्येत स तस्माद्रेतःसिग्योग एव तद्भावः।
आत्माऽवश्यं वाच्यस्तद्वद्व्रीह्यादिभाव इह भवति ॥ २७७ ॥

## योनेः शरीरम् ॥ २७ ॥

अथ रेतःसिग्भावोत्तरमिह योनौ हि रेतसि निषिक्ते।
योनेरध्यनुशयिनां फलभोगायोपजायते देहः ॥ २७८ ॥

इममर्थमेव सकलं तद्य इहेत्यादिका श्रुतिर्ब्रूते ।
व्रीह्यादिभावसमये तस्मादचिरान्न चावरोहेत्सः ॥ २७९ ॥
योनिजमेव शरीरं तत्सुखदुःखान्वितं भवेन्नान्यत् ।
व्रीह्यादिजन्म तस्मात्तत्सश्लेषो न चान्यदिति सिद्धम् ॥ ॥
गत्यागतिसंसारो दुर्वारः कर्मिणामितीह स्यात् ।
अनुसंधानात्तत्त्वज्ञानफलं कर्मफलविरागित्वम् ॥ २८१ ॥
शारीरकमीमांसा मुनिना व्यासेन विरचिता सेयम् ।
चतुरध्यायी तस्या तृतीयसंज्ञश्च योऽयमध्यायः ॥ २८२ ॥
तत्र प्रथमे पादे सूत्रार्थो यश्च भाष्यकारोक्तः ।
आर्यावृत्तैरमलैः प्रकाशितो भवतु सोऽयमनवद्यः ॥ २८३ ॥

इति तृतीयाध्यायस्य प्रथमः पादः ॥ १ ॥

---

अथ द्वितीयपादप्रारम्भः ।

---

पूर्वोक्तवर्त्मना किल निरूढवैराग्यममलचित्तस्य ।
यश्च पदार्थविवेको वाक्यार्थज्ञानसाधनीभूतः ॥ १ ॥
सोऽयं द्वितीयपादे निरूप्यत इतीह पादयोरुभयोः ।
हेतुफलभावरूपा संगतिरित्येतदत्र दर्शयति ॥ २ ॥
गत्यागतिप्रभेदो जीवस्यास्य प्रपञ्चितः पूर्वम् ।
तदवस्थाभेदोऽसावस्मिन्पादे प्रपञ्च्यते सकलः ॥ ३ ॥
अत्रोद्देश्यतया हि प्रथमं जिज्ञासितस्त्वमर्थः स्यात् ।
तेनावस्थाद्वारा तमेव चाऽऽदौ विवेचयित्वाऽन्ते ॥ ४ ॥
आ पादपरिसमाप्तेर्विविच्यतेऽत्रैव तत्पदार्थोऽसौ ।
पूर्वं जाग्रदवस्था गत्यागतिचिन्तया विनिर्दिष्टा ॥ ५ ॥
सपदि स्वप्नावस्थां तदनन्तरभाविनीं प्रदर्शयति ।
श्रुतिरेषा हि स यत्र स्वपितीत्याद्या रथादिसृष्टिमिह ॥ ६ ॥
स्वप्ने प्रपञ्चयति सा प्रबोध इव पारमार्थिकी किंवा ।
मायामयी हि सैषा सृष्टिरिति प्रभवतीह संदेहः ॥ ७ ॥
तत्र च युक्तः पक्षः सृष्टिः सा पारमार्थिकीत्येतत् ।
इत्येतमेव पक्षं भगवानत्र प्रदर्शयत्यादौ ॥ ८ ॥

संध्ये सृष्टिराह हि ॥ १ ॥

संध्यमिह स्वप्नः स्याद्यतः स जाग्रत्सुषुप्तयोः संधौ ।
भवति तथैवासाविहपरयोश्च लोकयोः संधौ ॥ ९ ॥
तस्मिन्संध्ये स्थाने सृष्टिरियं भवति तथ्यरूपैव ।
यस्मात्प्रमाणभूता श्रुतिरेवेमां हि सृष्टिमुपदिशति ॥ १० ॥
साऽथ रथान्रथयोगान्पथः सृजत एवमादिका भवति ।
स हि कर्तेत्याद्याऽपि श्रुतिरिममेव प्रदर्शयत्यर्थम् ॥ ११ ॥

निर्मातारं चैके पुत्रादयश्च ॥ २ ॥

निर्मातारमिहैके शाखिनमात्मानमामनन्त्यपि च ।
प्रकटीकृतोऽयमर्थो य एष इत्यादिकेन वाक्येन ॥ १२ ॥
कामपदेनानेन च पुत्रादय एव तत्र गृह्यन्ते ।
नैवेच्छारूपास्ते यत इह तेष्वेव कामशब्दोऽयम् ॥ १३ ॥
यस्मात्कठवल्ल्यां किल कामाना त्वेवमादिवाक्ये हि ।
पुत्रादिषु प्रयुक्तः पूर्वप्रकृतेषु कामशब्दोऽयम् ॥ १४ ॥
अत्र च निर्मातारं प्राज्ञं प्रकरणबलेन निश्चिनुमः ।
इह च प्रकरणमन्यत्रेत्याद्यं प्राज्ञविषयकं दृष्टम् ॥ १५ ॥
तद्गोचर एवासौ तदेव शुक्रमिति वाक्यशेषोऽपि ।
या प्राज्ञकर्तृका स्यात्सृष्टिः सा पारमार्थिकी दृष्टा ॥ १६ ॥
जागरितसंश्रिता किल भवति स्वप्नाश्रिताऽपि तद्वदियम् ।
श्रुतिरपि चाथो खल्विति तुल्यन्यायत्वमेतयोर्वक्ति ॥ १७ ॥
तस्मात्संध्ये स्थाने या सृष्टिर्दर्शिता रथादीनाम् ।
सा भवति तथ्यरूपेत्येवं प्राप्ते त्विदं पठति चाऽऽर्यः ॥ १८ ॥

मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॥ ३ ॥

इह पूर्वपक्षमेनं व्यावर्तयितुं तुशब्द इह पठितः ।
येयं संध्ये सृष्टिः सा किल मायैव केवलं भवति ॥ १९ ॥
तस्मात्कार्त्स्न्येनासावनभिव्यक्तस्वरूपतो दृष्टा ।
कार्त्स्न्येनाभिव्यक्तस्वरूप इह नैव दृश्यते स्वप्नः ॥ २० ॥
इह देशकालसाधनसंपत्तिरबाध एव कार्त्स्न्यं स्यात् ।
परमार्थवस्तुगोचरदेशादीनि हि न चास्य विद्यन्ते ॥ २१ ॥
स्वप्ने रथादिकानामुचितो देशो न चेह संभवति ।
न हि संवृते हि देहे रथादयस्ते लभेयुरवकाशम् ॥ २२ ॥

ननु देहाद्बहिरेव स्वप्नः स्याद्बाह्यवस्तुसाहाय्यात् ।
श्रुतिरपि बहिष्कुलायादित्याद्या ह्येवमेव दर्शयति ॥ २३ ॥
स्थितिगतिभेदश्चासौ नानिष्क्रान्ते समञ्जसो भवति ।
इति तु न युक्तं यस्माज्जन्तोः सुप्तस्य हि क्षणेनैव ॥ २४ ॥
अतिदूरपथं देशं पर्येतुं वा तथा विपर्येतुम् ।
सामर्थ्यं कथमपि किल संपादयितुं न शक्यते तस्य ॥ २५ ॥
प्रत्यागतिवर्जितमपि तं च स्वप्नं क्वचिच्च कथयन्ति ।
अहमिह कुरुषु शयानस्तथैव निद्रापरिप्लुतः स्वप्ने ॥ २६ ॥
पञ्चालानभिगतवास्तत्रैत्याहं प्रबुद्ध इत्येवम् ।
यदि देहादपयातः पञ्चालेषु हि तदा प्रबुध्येत ॥ २७ ॥
नैवं प्रबुध्यतेऽसौ किंत्वत्रैव प्रबुध्यते कुरुषु ।
येन च देहेनायं देशान्तरमश्नुवान इति मनुते ॥ २८ ॥
तं शयनदेश एव हि पश्यन्त्यन्ये हि पार्श्वदेशस्थाः ।
देशान्तराणि चायं सुप्तः स्वप्ने यथैव पश्यति हि ॥ २९ ॥
तानि च न तथाभूतान्यपि तद्देशे भवन्ति सर्वेषाम् ।
दर्शयति चान्तरेव हि देहे स्वप्नं श्रुतिः स यत्रेति ॥ ३० ॥
श्रुत्युपपत्तिविरोधाद्बहिष्कुलायश्रुतिर्हि गौणी स्यात् ।
बहिरिव स कुलायादित्येवं तत्रेवशब्दयोगेन ॥ ३१ ॥
यो हि वसन्नपि देहे न तेन कार्यं करोति किंचिदपि ।
सोऽयं बहिरिव देहाद्भवतीत्येतच्च युक्तमेवास्य ॥ ३२ ॥
स्थितिगत्यादिप्रत्ययभेदः सकलोऽपि विप्रलम्भः स्यात् ।
कालविसंवादोऽपि स्वप्ने दृष्टो निशि प्रसुप्तः सन् ॥ ३३ ॥
भारतवर्षे वासरमेकं मनुते कदाचिदिह मर्त्यः ।
एवं क्षणिके स्वप्ने कदाचिदब्दानिहातिवाहयति ॥ ३४ ॥
अत्र निमित्तान्यपि वा न बुद्धये समुचितानि विद्यन्ते ।
तत्र रथादिग्रहणे न चक्षुरादीनि तस्य विद्यन्ते ॥ ३५ ॥
निर्वर्तने रथादेः कुतोऽन्यशक्तिर्निमेषमात्रेण ।
नापि रथादेः स्रष्टा तदाऽस्य दारूणि वा कुतस्तस्य ॥ ३६ ॥
बाध्यन्ते खल्वेते स्वप्ने दृष्टाः प्रबोधसमये हि ।
एते हि सुलभबाधास्तत्रैवाऽऽद्यन्तयोर्हि दृश्यन्ते ॥ ३७ ॥

स्वप्ने रथोऽयमिति किल निर्णीतः स्यात्क्षणेन मनुजोऽयम् ।
मनुजोऽयमिति च तत्र हि निर्णीतः स्यात्क्षणेन वृक्षोऽयम् ॥३८॥
स्वप्ने रथाद्यभावं श्रावयति श्रुतिरियं न तत्रेति ।
तस्मान्मायामात्रं न हि स्वतः स्यात्क्षणेन वृक्षोऽयम् ॥ ३९ ॥
इह यदि मायामात्रः स्वप्नः स्यात्तर्हि कश्चिदपि तत्र ।
न च परमार्थोऽस्तीति प्राप्तं तस्येदमुत्तरं ब्रूते ॥ ४० ॥

सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥ ४ ॥

स्वप्नो हि सूचकः स्यात्स भाविनोः साध्वसाधुनोरुभयोः ।
अत्र श्रुतिरेव यदा कर्मसु काम्येष्विति प्रदर्शयति ॥ ४१ ॥
स्त्रियमिह कार्ये कर्मण्यनुकूलां यः प्रपश्यति स्वप्ने ।
स्वेष्टार्थलाभरूपां समृद्धिमस्मिन्स एष जानीयात् ॥ ४२ ॥
यश्च स्वप्ने पुरुषं पश्यति कृष्णं च कृष्णदन्तं च ।
न च खल्वेनं हन्तीत्यवगमयति साध्वसाधुसूचकताम् ॥ ४३ ॥
स्वप्नाध्यायविदोऽपि स्वप्नस्याऽऽचक्षते हि सूचकताम् ।
स्वप्ने हि कुञ्जरारोहणादिकानि च भवन्ति धन्यानि ॥ ४४ ॥
यानि च खरयानादीन्यत्राधन्यानि वर्णयन्त्येवम् ।
मन्त्रादिमूलकाश्च स्वप्नाः सत्यार्थगन्धिनः स्युरिति ॥ ४५ ॥
तत्रापि सत्यता किल सूच्यार्थस्यैव सूचकस्य न हि ।
तस्मात्स्वप्नस्यास्य हि मायामात्रत्वमेतदुपपन्नम् ॥ ४६ ॥
यच्चोक्तमाह हीति व्याख्यातव्यं तदत्र भाक्तमिति ।
लाङ्गलमुद्वहतीदं यथा गवादीनि तर्हि भाक्तं स्यात् ॥ ४७ ॥
तत्र च गवादिजीवननिमित्तता लाङ्गलस्य भवति यथा ।
कृषिकर्मद्वारैव हि तथैव चेहापि भवति हि स्वप्ने ॥ ४८ ॥
भोः कुरु वृष्टद्वारा स्वाप्निकदृष्टां निमित्तितामत्र ।
रथकारस्येव रथं प्रति साक्षात्स्वप्नकर्तृता नास्य ॥ ४९ ॥
रथतुरगभानमूलकमोदत्रासादिदर्शनादस्य ।
तद्धेतुसुकृतदुष्कृतकर्तृत्वेन च निमित्तता तस्य ॥ ५० ॥
अपि जागरिते तस्य हि विषयेन्द्रिययोश्च सततसंयोगात् ।
आदित्यादिज्योतिर्व्यतिकरतश्च स्वयंप्रकाशत्वम् ॥ ५१ ॥
इह दुर्विवेचनं स्यादिति मत्वा तद्विवेचनायैव ।
स्वप्न उपन्यस्तोऽयं श्रुतिरियमिह यदि रथादिसृष्टिपरा ॥ ५२ ॥

तर्हि स्वयंप्रभत्वं यत्प्रकृतं तच्च नैव निर्णीतम् ।
तस्माद्रथादिसृष्टिप्रतिपादनमेतदखिलमपि भाक्तम् ॥ ५३ ॥
यच्चोक्तं प्राज्ञमिमं निर्मातारं समामनन्तीति ।
तदपि च न समीचीनं यतः श्रुतिश्चैवमत्र दर्शयति ॥ ५४ ॥
जाग्रद्देहं हत्वा निर्माय च वासनामयं देहम् ।
आत्मीयबुद्धिवृत्त्या चैतन्येनानुभवति हि स्वप्नम् ॥ ५५ ॥
जीवव्यापारं हि श्रुतिः स्वयमिति प्रदर्शयति तत्र ।
दर्शयति चेममर्थं श्रुत्यन्तरमपि य एष इत्यादि ॥ ५६ ॥
तस्यैव वाक्यशेषे तदेव श्रुत्य( शुक्रं ) तदेवमाद्ये हि ।
व्यावर्त्य जीवभावं चिरंतनं ब्रह्मभाव उपदिष्टः ॥ ५७ ॥
तत्त्वमसीत्यादिवदिह न ब्रह्मप्रकरणं विरुध्येत ।
न प्राज्ञव्यापारः स्वप्नेऽपि निषिध्यते यतस्तस्य ॥ ५८ ॥
सर्वेशत्वात्सर्वाधिष्ठातृत्वादि सकलमुपपन्नम् ।
वियदादिसर्गवदयं न तथ्यरूपो हि संध्यसर्ग इति ॥ ५९ ॥
प्रतिपादितमेतावन्न च वियदादेरपीह सत्यत्वम् ।
यत आरम्भणसूत्रे मिथ्यात्वं दर्शितं हि सकलस्य ॥ ६० ॥
ब्रह्मात्मताववबोधात्प्राग्वियदादिव्यवस्थितात्मा स्यात् ।
संध्याश्रयस्तु न तथेत्यत इह मायामयत्वमुपदिष्टम् ॥ ६१ ॥
सामग्र्याः क्लृप्ताया विरहेऽपि स्वाप्निके हि सृष्टिरियम् ।
सांकल्पिके हि सत्या स्यादिति शङ्कां निवारयत्यधुना ॥ ६२ ॥

पराभिध्यानात्तु तिरोहितं ततो
ह्यस्य बन्धविपर्ययौ ॥ ५ ॥

नन्वात्मनः परस्य ह्यंशो जीव इति दर्शितं पूर्वम् ।
दहनप्रकाशशक्ती समे यथाऽग्निस्फुलिङ्गयोर्भवतः ॥ ६३ ॥
ज्ञानेश्वरताशक्ती अपीह जीवेशयोः समे स्याताम् ।
जीवस्यैश्वर्यवशात्स्वप्ने सांकल्पिकी रथादीनाम् ॥ ६४ ॥
सृष्टिर्हि तथ्यरूपा स्यादिति शङ्का न चेह कर्तव्या ।
यद्यपि जीवेश्वरयोरंशांशित्वं तथाऽपि जीवस्य ॥ ६५ ॥
प्रत्यक्षेणैवैषा परात्मविपरीतधर्मता दृष्टा ।
ईश्वरसमधर्मत्वाभावेनेयं न चास्य संप्राप्ता ॥ ६६ ॥

किं त्वीश्वरसाधर्म्यं निरन्तरं तस्य विद्यमानमपि ।
तदनाद्यविद्यया किल तिरोहितं तत्तिरोहितं सदपि ॥ ६७ ॥
ध्यायत ईश्वरमनिशं यतमानस्य हि विधूतपापस्य ।
तिमिरतिरस्कृतदृष्टेर्दृक्शक्तिरिवौषधादिवीर्येण ॥ ६८ ॥
परमेश्वरप्रसादात्सिद्धस्याऽऽविर्भवेन्न चेतरथा ।
यस्मात्ततः परेशादस्य च जीवस्य बन्धमोक्षौ स्तः ॥ ६९ ॥
अपरिज्ञानाद्बन्धो मोक्षस्तस्य स्वरूपविज्ञानात् ।
ज्ञात्वा देवमिति श्रुतिरिममेवार्थं प्रदर्शयत्यत्र ॥ ७० ॥
देवं साक्षात्कृत्वा विद्यादिक्लेशमूलनाशः स्यात् ।
क्लेशापाये जनिमृतिरूपो बन्धः स्वतो निवर्त्येत ॥ ७१ ॥
सविशेषाभिध्यानाद्विश्वैश्वर्यं तृतीयमणिमादि ।
सिद्धतनौ भवति ततस्त्वात्मज्ञानेन केवलोऽयमिति ॥ ७२ ॥

देहयोगाद्वा सोऽपि ॥ ६ ॥

जीवः परमात्मांशस्तिरस्कृतज्ञानपारमैश्वर्यः ।
इति तु न युक्तं यस्मादतिरोभावस्तयोर्हि युक्तः स्यात् ॥ ७३ ॥
दहनप्रकाशयोरिह यथा स्फुलिङ्गस्य तद्वदिति चेन्न ।
सत्यं तथाऽपि तस्य ज्ञानेश्वर [भावयोस्तिरो]भावः ॥ ७४ ॥
भव[ति हि देहयोगाद्देहेन्द्रियवेदनादि]युक्तस्य ।
वह्नेररणिगतस्य हि ते एते द्वे तिरस्कृते भवतः ॥ ७५ ॥
[ दहनप्रकाशने ये तयोर्यथा भस्मना तिरोभावः ।
एवमविद्यामूलकदेहमनोबुद्ध्युपाधियोगेन ॥ ७६ ॥
अविवेकभ्रान्तिकृतो ज्ञानेश्वरभावयो]स्तिरोभावः ।
वाशब्दो जीवेश्वरभेदाशङ्कानिवारणार्थः स्यात् ॥ ७७ ॥
नन्वन्य एव जीव[स्तिरस्कृतज्ञानपारमैश्वर्यः ।
किं देहयोगकल्पनयाऽनन्यत्वोपपादनादिति चेत् ॥ ७८ ॥
अन्यत्वं हि परेशात्कथमपि जीवस्य नोपपद्येत ।
यत्सेयमितिश्रुतिरिह सदात्मभावेन जीवमुपदिशति ॥ ७९ ॥
तत्त्वमसीति श्रुतिरपि जीवस्योपदिशतीश्वरात्मत्वम् ।
तस्माद्योऽसौ जीवः स भवति परमेश्वरादनन्यो हि ॥ ८० ॥
स च भवति देहयोगात्तिरस्कृतज्ञानपारमैश्वर्यः ।
सांकल्पिकेन तस्मात्तस्य स्वप्ने रथादिसृष्टिः स्यात् ॥ ८१ ॥

सांकल्पिकी यदि स्यात्सृष्टिरियं स्वाप्निकी तथाऽनिष्टम् ।
स्वप्नं कथमिह पश्येत्संकल्पयतीह कोऽपि नानिष्टम् ॥ ८२ ॥
जागरितदेश एवेत्येषा श्रुतिरेव सत्यतां ब्रूते ।
स्वप्नस्येति यदुक्तं तच्छ्रुतिवचनं न सत्यताकुलितम् ॥ ८३ ॥
यस्माच्छ्रुत्यैवायं रथाद्यभावः प्रदर्शितः स्वप्ने ।
यस्माच्च स्वप्नोऽयं जागरितप्रभववासनामूलः ॥ ८४ ॥
जागरिततुल्यनिर्भासत्वाभिप्रायमत इदं वचनम् ।
तस्मात्स्वप्नस्यैवं मायामात्रत्वमेतदुपपन्नम् ॥ ८५ ॥
एवमविद्याविलसितमेनं स्वप्नं विचार्य सम्यगिह ।
वर्णयति तां सुषुप्तिं प्रतियोग्यनुयोगिभावसंगत्या ॥ ८६ ॥

तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ ७ ॥

तत्र च तद्यत्रैतत्सुप्त इति सुषुप्तविषयकाः श्रुतयः ।
ताभिः प्रत्यवसृप्येत्यपराऽपि श्रुतिरियं सुषुप्तपरा ॥ ८७ ॥
तासु तदा भवतीति श्रुतिरन्याऽपि हि सुषुप्तविषयैव ।
अन्यत्रापि य एषोऽन्तर्हृदय इति श्रुतिस्तदर्थैव ॥ ८८ ॥
तद्विषयाऽन्याऽपि सता सोम्य तदेत्यादिका श्रुतिर्भवति ।
तत्र च नाड्यादीनि हि निरपेक्षाण्येव भिन्नभिन्नानि ॥ ८९ ॥
सुप्तिस्थानानि स्युः परस्परापेक्षितानि तानीह ।
एकं सुप्तिस्थानं स्यादिति वा भवति चात्र संदेहः ॥ ९० ॥
सुप्तिस्थानानि स्युर्भिन्नानीत्येतदत्र युक्तं स्यात् ।
यस्मादेकार्थकता नाड्यादीनां प्रतीयते ह्यत्र ॥ ९१ ॥
एकार्थानां क्वचिदपि परस्परापेक्षता तु न हि दृष्टा ।
व्रीहियवादीनां न ह्येकार्थानां समुच्चयो दृष्टः ॥ ९२ ॥
सुप्तावेकार्थकता नाड्यादीनामपीह दृष्टैव ।
नाडीषु सुप्त इत्यपि पुरीततीत्येवमत्र निर्देशात् ॥ ९३ ॥
नाडीषु सप्तमीयं तथा पुरीतति च दृश्यते सा हि ।
ननु सप्तमी न दृष्टा सति किंतु सतेति दृष्टमिति चेन्न ॥ ९४ ॥
अत्रापि वाक्यशेषात्सप्तम्यर्थोऽवगम्यते योऽसौ ।
आयतनैषी जीवः सदेतदुपसर्पतीति दर्शयति ॥ ९५ ॥
अन्यत्राऽऽयतनमिति श्रुतिरियमायतनभावमस्य सतः ।
अत्र सदेव प्राणो ह्यायतनत्वं च सप्तमीवाच्यम् ॥ ९६ ॥

दृष्टा च सप्तमीयं सति संपद्येति वाक्यशेषे हि ।
तस्मादेकार्थकता नाड्यादीनां प्रतीयते ह्यत्र ॥ ९७ ॥
एवं च सति विकल्पात्स कदाचित्किंचिदेव हि स्थानम् ।
सुप्तय उपसरतीति प्राप्ते तद्भाव इति हि पठतीह ॥ ९८ ॥
अत्र च तदभावपदं स्वप्नाभावं सुषुप्तमाचष्टे ।
इह च चशब्दान्नाड्यादीन्यात्मानं समुच्चयेनैव ॥ ९९ ॥
स्वप्नापायेऽपैति हि न विकल्पेनेति दर्शितं भवति ।
यस्मान्नाड्यादीनां सुप्तिस्थानत्वमभिहितं श्रुत्या ॥ १०० ॥
व्रीहियवादीनामिव नन्वेकार्थत्वमत्र पूर्वोक्तम् ।
तेन विकल्पो युक्तो न समुच्चय इति तु नेह वक्तव्यम् ॥ १०१ ॥
एकविभक्तिश्रवणान्नैकार्थत्वं भवेद्विकल्पश्च ।
नानार्थतासमुच्चययोरेकविभक्तिरत्र दृष्टा हि ॥ १०२ ॥
प्राकारे प्रासादे पर्यङ्के शेत एवमादिषु हि ।
तद्वन्नाडीषु पुरीतति च ब्रह्मणि समुच्चयेनायम् ॥ १०३ ॥
स्वपितीत्येतद्युक्तं यस्माच्छ्रुतिरिह समुच्चयं ब्रूते ।
तासु तदा भवति यदा सुप्तः स्वप्नं न कंचनेत्याद्या ॥ १०४ ॥
सा चैकवाक्यभावान्नाडीप्राणादिकस्य दर्शयति ।
सुप्तिस्थानत्वमिदं प्राणस्य ब्रह्मता तु समधिगता ॥ १०५ ॥
ननु सुप्तिस्थानत्वं नाडीनामेव दर्शयत्येषा ।
तासु तदा भवतीति श्रुतिरिति शङ्का न चेह कर्तव्या ॥ १०६ ॥
श्रुत्यन्तरप्रसिद्धं ब्रह्म प्रतिषेद्धुमनुचितं यस्मात् ।
ब्रह्मणि नाडीद्वारा स्वपितीत्येतच्च युक्तमभिधातुम् ॥ १०७ ॥
नाडीषु सप्तमीयं कथमिति शङ्का न चेह कर्तव्या ।
नाडीभिरपि ब्रह्मणि सुप्तो नाडीषु सुप्त एव स्यात् ॥ १०८ ॥
[ यो गङ्गया हि सागरमभिगच्छति स गत एव ग]ङ्गायाम् ।
अपि चेह रश्मिनाडीसमन्वितब्रह्मलोकमार्गस्य ॥ १०९ ॥
[ वक्तव्यत्वान्नाडीस्तुत्यर्थं सुप्तिकीर्तनं ज्ञेयम् ।
एतच्च तं न कश्च]न पाप्मा स्पृशतीति दर्शयन्तीयम् ॥ ११० ॥
[ श्रुतिरपि नाडीः शंसति सुप्तो भवतीत्यनन्तरं पठिता ।
पाप्मास्पर्शे हेतुं श्रुतिरेव तेजसा हीति वक्ति ॥ १११ ॥ ]
इह तेजसेति नाडीगतं हि पित्ताख्यमत्र निर्दिशति ।
अथवाऽत्र तेजसेति ब्रह्मण एवैष भवति निर्देशः ॥ ११२ ॥

ब्रह्मणि तेजःशब्दो दृष्टो ब्रह्मैव तेज एवेति ।
नाडीद्वारा चासौ संपन्नो ब्रह्मणा तदा भवति ॥ ११३ ॥
तस्माच्च तं न कश्चन पाप्मा स्पृशतीति दर्शितं भवति ।
पाप्मस्पर्शाभावे परात्मसंपत्तिरेव हेतुरिति ॥ ११४ ॥
सर्वे पाप्मान इति श्रुतिवचनेनैव दर्शितं भवति ।
एवं सति प्रदेशान्तरासिद्धेन च परात्मनाऽनुगुणम् ॥ ११५ ॥
नाडीनामपि सुप्तिस्थानत्वमिदं समाश्रितं भवति ।
नाडीपरात्मनोरिह समुच्चयोऽसौ गुणप्रधानतया ॥ ११६ ॥
तस्याः पुरीततोऽपि हि सुप्तिस्थानत्वमेवमेव स्यात् ।
हृदयपरिवेष्टनं किल पुरीतदेतन्न चान्यदिह भवति ॥ ११७ ॥
आकाशे हि तदन्तर्वर्तिनि परमे शयान एवासौ ।
शेते पुरीततीति व्यपदेष्टुं शक्यते यथा लोके ॥ ११८ ॥
नृपतिरिह वर्तमानः परितः प्राकारवेष्टिते हि पुरे ।
प्राकारे नृपतिरसौ वर्तत इति वर्ण्यते जनैः सर्वैः ॥ ११९ ॥
ब्रह्मत्वमुक्तमेव हि हृदयाकाशस्य दहरवाक्येण ।
एवं त्रीणि श्रुतिभिः सुप्तिस्थानानि कीर्तितानीह ॥ १२० ॥
नाड्यः पुरीतद्ब्रह्म च नाडी पुरीतदुभयं हि ।
स्याद्द्वारमात्रमेतद्ब्रह्मैवैकं तु सुप्त्यधिष्ठानम् ॥ १२१ ॥
नाड्यः पुरीतदपि वा तदुपाध्याधार एव भवतीह ।
यस्मात्करणान्यखिलान्यपि जीवस्यास्य तत्र वर्तन्ते ॥ १२२ ॥
नोपाधिमन्तरेण स्वत एतस्यास्ति कश्चिदाधारः ।
ब्रह्माधारत्वोक्तिः सत्तादात्म्यप्रदर्शनार्थैव ॥ १२३ ॥
स्वमपीतो भवतीति श्रुतिरियमुक्तार्थमेव दर्शयति ।
अपि च न कदाचिदपि वा जीवस्य ब्रह्मणाऽस्त्यसंपत्तिः ॥१२४॥
किंतु स्वप्ने जाग्रत्युपाधिसंपर्कतोऽस्य संप्राप्ताम् ।
पररूपापत्तिमिवावेक्ष्य श्रुत्याऽनया हि तदुपशमात् ॥ १२५ ॥
सुप्ता हि तस्य सेयं स्वरूपसंपत्तिरेवमुपदिष्टा ।
एवं च सति कदाचित्सता स संपद्यते कदाचिदयम् ॥ १२६ ॥
न हि संपद्यत इति यत्तदेतदखिलं ह्ययुक्तमेवात्र ।
सति संपन्नस्तावन्न विजानातीह किंचिदपि यच्च ॥ १२७ ॥

सत्संपत्तावनयोरेकत्वात्तदपि युक्तमेवेह ।
एतन्नाडीषु पुरीतति च शयानस्य नैव युक्तं स्यात् ॥ १२८ ॥
नाविज्ञाने कारणमिह सति भेदे हि दृश्यते किमपि ।
तत्रान्योऽन्यत्पश्येदिति श्रुतिश्चैवमेव दर्शयति ॥ १२९ ॥
दूरादिवशादेवाविज्ञानं यद्यपि क्वचिद्दृष्टम् ।
इह तु तथा नैव स्यान्न हि जीवोऽसौ स्वतः परिच्छिन्नः ॥१३०॥
तस्य परिच्छेदोऽसावुपाधियोगेन संप्रवृत्तो हि ।
उपशान्ते चोपाधौ सति संपन्नस्य तदिदमिह युक्तम् ॥ १३१ ॥
न हि नाड्यादिसमुच्चयमभिधातुं सूत्रमेतदारब्धम् ।
नाड्यः सुप्तिस्थानं भवति तथैतत्पुरीतदथवेति ॥ १३२ ॥
न ह्येतद्विज्ञानात्प्रयोजनं किमपि वक्तुमिह शक्यम् ।
नैतदविज्ञानप्रतिबद्धं वा फलमिहास्ति किंचिदिह ॥ १३३ ॥
न ह्येतद्विज्ञानं कस्यचिदङ्गं हि फलवतो भवति ।
ब्रह्मानपायि सुप्तिस्थानमितीदं विवक्षितं भवति ॥ १३४ ॥
ब्रह्मात्मतावबोधः स्वप्नाद्यस्पृष्टतावबाधश्च ।
तेन फलं स्यात्तस्मात्सुप्तिस्थानं स एष आत्मैव ॥ १३५ ॥

अतः प्रबोधोऽस्मात् ॥ ८ ॥

यस्मादात्मैवायं सुप्तिस्थानं न चान्यदत एव ।
तस्मादात्मन एव प्रबोध उपदिश्यते हि सर्वत्र ॥ १३६ ॥
श्रुतिरेषा हि यथाऽग्नेः क्षुद्रा इत्यादिका प्रदर्शयति ।
अग्नेर्यथा स्फुलिङ्गास्तथाऽऽत्मनो व्युच्चरन्ति सर्व इति ॥ १३७ ॥
एव सत आगम्येत्याद्या श्रुतिरेतमर्थमुपदिशति ।
अत्र विकल्पाश्रयणे नाडीभ्योऽपि क्वचित्प्रबुध्येत ॥ १३८ ॥

स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥ ९ ॥

अत्र प्रबुध्यमानः सत्संपन्नो य एष जीवः स्यात् ।
प्रतिबुध्यते स एव हि किंवाऽन्य इतीह भवति चिन्तेयम् ॥१३९॥
तत्रानियमेनैव प्रबोध इति वक्तुमत्र युक्तं हि ।
लोके जलराशौ हि प्रक्षिप्तो यश्च भवति जलबिन्दुः ॥ १४० ॥
जलराशिरेव स भवति पुनरुद्धरणे स एव जलबिन्दुः ।
भवतीति दुर्विवेचनमिदमत्र यथा तथैव देहोऽपि ॥ १४१ ॥

सुप्तो हि संप्रसन्नः परात्मनैकात्मभावमापन्नः ।
योऽसौ भवति कथं वा पुनरुत्थातुं स एव शक्नोति ॥ १४२ ॥
तस्मात्स वेश्वरोऽन्यो जीवो वाऽत्र प्रबुध्यते कश्चित् ।
[इति शङ्काऽत्र न कार्योत्तिष्ठति जीवः स एव सुप्त] इति ॥१४३॥
एवं कर्मानुस्मृतिशब्दविधिभ्योऽवगम्यते यस्मात् ।
लोके हि कर्म[णोऽनुष्ठितस्य शेषं तु दृश्यते कुर्वन्] ॥ १४४ ॥
उपदेशमन्तरेणाप्यन्योत्थाने न युज्यते तदिदम् ।
न ह्यन्येन च लोके सा[मिकृतं कर्म विद्यते तस्य] ॥ १४५ ॥
कथमन्यः स्वयमेव हि कर्तुं शेषक्रिया प्रवर्तेत ।
तस्मादेकः कर्ता पूर्वोत्तरवासरेष्विहैकस्य ॥ १४६ ॥
एवमदोऽद्राक्षमिति प्रागनुभूतस्य भवति यत्पश्चात् ।
स्मरणं स्मरामि तदिति ह्यन्योत्थाने तु नोपपद्येत ॥ १४७ ॥
प्रतियोन्याद्रवतीति च तथैव सर्वाः प्रजा इति प्रथिताः ।
स्वापप्रबोधवाक्यप्रदर्शिता ये भवन्ति शब्दास्ते ॥ १४८ ॥
असमञ्जसा भवेयुः स एव तस्मात्प्रबुध्यते नान्यः ।
एवं कर्मविधिभ्यः स एव चोत्तिष्ठतीति भातीह ॥ १४९ ॥
अन्योत्थाने विधयः कर्मपरा ये निरर्थकाः स्युस्ते ।
अपि चेह सुप्तमात्रो मुच्येत तदा हि कर्मणा किं स्यात् ॥ १५० ॥
अन्योत्थाने यदि किल जीवो देहान्तरीय उत्तिष्ठेत् ।
तत्रत्यव्यवहारः सकलो निर्लेपमेष लुप्येत ॥ १५१ ॥
अन्यत्र सुप्त एव ह्यन्यत्रोत्तिष्ठतीति कल्प्येत ।
नास्यां हि कल्पनायां कश्चन लाभो निरर्थिकैवैषा ॥ १५२ ॥
विध्वस्ताविद्यस्य च मुक्तस्योत्थानमीश्वरस्य तथा ।
दूरापेतं तस्मादसंगतैषा हि कल्पना सकला ॥ १५३ ॥
अकृतागमकृतनाशावन्योत्थाने तु दुर्निवारौ हि ।
तस्माद्य एव सुप्तः स एव चोत्तिष्ठतीति युक्तमिह ॥ १५४ ॥
जलराशौ निक्षिप्तो जलबिन्दुरिवैकतां गतो योऽसौ ।
सति संपन्नो जीवो नार्हत्युत्थातुमिति हि यच्चोक्तम् ॥ १५५ ॥
तत्र च दृष्टान्तोऽयं जलबिन्दुर्विषम एष भातीह ।
जलबिन्दोरुद्धरणे न हि तत्र विवेककारणं किमपि ॥ १५६ ॥

तदनुद्धरणं तस्मात्तत्र च युक्तं न चैवमत्रापि ।
इह किल विवेककारणमस्ति हि कर्म च तथैव चाविद्या ॥१५७॥
किंचेह दुर्विवेचनयोरन्यैरस्मदादिभिर्जगति ।
मिलितक्षीरोदकयोर्हंसेन यथा विवेचनं भवति ॥ १५८ ॥
प्राणिकृतसुकृतकर्माद्यपेक्ष्यैवेश्वरः करोतीदम् ।
न हि जीवोऽत्र परस्माद्विभिन्नरूपो य एष निर्दिष्टः ॥ १५९ ॥
न हि जलबिन्दुरिवायं जलराशेर्न हि यथा पृथग्भूतः ।
न तथाऽसौ जीवः स्यात्किंतु स बुद्ध्याद्युपाधियोगेन ॥ १६० ॥
परमात्मा सन्नप्ययमुपचर्यत एष जीव इति लोके ।
बन्धानुवृत्तिरेषा यद्येकोपाधिसंगता भवति ॥ १६१ ॥
तदुपाधिकजीवस्य व्यवहारस्तावदेव भवतीह ।
सा यदि तदन्तरगता व्यवहारोऽयं तदन्तरस्यैव ॥ १६२ ॥
सोऽयमुपाधिः स्वापप्रबोधयोः स्थूलसूक्ष्मभावेन ।
सततानुवृत्त एव हि स एव तस्मात्प्रबुध्यते नान्यः ॥ १६३ ॥

मुग्धेऽर्धसंपत्तिः परिशेषात् ॥ १० ॥

अस्ति हि मुग्धः कश्चिद्यं मूर्छित इति जना हि कथयन्ति ।
स च खलु किमवस्थः स्यादिति चिन्तायां निरूप्यते सेयम्॥१६४॥
शारीरस्यावस्था भवन्ति तिस्रस्तथा हि जागरितम् ।
स्वप्नः सुषुप्तिरेवं देहादपसृप्तिरिह चतुर्थी स्यात् ॥ १६५ ॥
इह पञ्चमी त्ववस्था श्रुतौ स्मृतौ वाऽपि न प्रसिद्धाऽस्ति ।
तस्मादेषाऽवस्था भवति हि तिसृणां हि काचिदन्यतमा ॥१६६॥
इत्याशङ्का सकला निरस्यते सपदि सूत्रकारेण ।
न हि जागरितावस्थो मुग्धो योऽसौ कदाचिदपि भवति ॥१६७॥
यस्मात्स हीन्द्रियैरिह विषयान्नैवेक्षते कदाचिदपि ।
नन्विषुकारन्यायाज्जाग्रदवस्थो भवेदसौ मुग्धः ॥ १६८ ॥
इष्वासक्तमनस्को यदेषुकारो हि जाग्रदपि चायम् ।
नैवान्यान्विषयानिह समीक्षते तद्वदेव मुग्धोऽपि ॥ १६९ ॥
मुसलाभिघातजनितप्रभूतदुःखानुभूतिविकलमनाः ।
जाग्रदपि चायमन्यान्विषयानीक्षत इतीह न हि युक्तम्॥ १७० ॥
व्यापृतमना ब्रवीति ह्ययमिषुकारः स्वकृत्यमखिलमपि ।
इषुमुपलभमानो ह्ययमेतावत्कालमासमत्रेति ॥ १७१ ॥

मुग्धस्तु लब्धसंज्ञो ब्रवीति न मयाऽत्र चेतितं किमपि ।
एतावन्तं कालं प्रक्षिप्तोऽन्धे तमस्यभूवमिति ॥ १७२ ॥
तस्मान्न हि जागर्त्ययमपि च स्वप्नान्न पश्यति ह्येषः ।
निःसंज्ञत्वादयमिह नापि मृतः स्यादिहोष्मसद्भावात् ॥ १७३ ॥
मुग्धे जन्तौ हि मृतो न वा मृतोऽयमिति संशयानास्तु ।
ऊष्माऽस्ति नास्ति वेति स्पृशन्ति हृदयं तदत्र निर्णेतुम् ॥ १७४॥
प्राणोऽस्ति नास्ति वेति हि निर्णेतुं नासिकाप्रदेशमपि ।
प्राणं चोष्माणं वा प्रतिपद्यन्ते यदा हि तत्रैव ॥ १७५ ॥
नायं मृत इति मत्वा संज्ञालाभाय तं भिषज्यन्ति ।
नन्विह निःसंज्ञत्वात्सुषुप्त एवास्तु मुग्ध इति चेन्न ॥ १७६ ॥
मुग्धोऽयं चिरमपि किल नोच्छ्वसिति सवेपथुश्च देहोऽस्य ।
वदनं भयानकं स्यान्नेत्रे विष्फारिते हि भवतोऽस्य ॥ १७७ ॥
सुप्तः प्रसन्नवदनः पुनः पुनस्तुल्यकालमुच्छ्वसिति ।
नेत्रे निमीलिते किल न च देहो वेपमान इह दृष्टः ॥ १७८ ॥
सुप्तं हि पाणिपेषणमात्रेणोत्थापयन्ति न तथेमम् ।
मुद्गरपातेनापि च निमित्तभेदश्च भवति चेह तयोः ॥ १७९ ॥
मुसलाभिघातमूलो मोहः स्वापः श्रमादिमूलः स्यात् ।
परिशेषादिह तदिदं मुग्धत्वं भवति चार्धसंपत्तिः ॥ १८० ॥
यत इह निःसंज्ञोऽयं संपन्नः स्यादथाप्यसंपन्नः ।
इतरविलक्षणभावात्तस्माद्युक्तेयमर्धसंपत्तिः ॥ १८१ ॥
ननु मुग्धता कथं वा पुनरिह भवतीयमर्धसंपत्तिः ।
इह सता सोम्येति श्रुत्या सुप्तं प्रतीत्थमुपदिष्टम् ॥ ८२ ॥
अस्य च सति संपत्तिः स्तेनत्वाद्यखिलधर्मराहित्यम् ।
सुकृतादिकर्मबन्धनवियोगमपि यत्सुखित्वदुःखादेः ॥ १८३ ॥
अननुभवः सकलोऽयं सुप्ते पुरुषे प्रदर्शितो हि तया ।
स च खलु मुग्धे तुल्यो ह्येवमुपाध्युपशयोऽपि तुल्यः स्यात्॥१८४॥
तस्मात्सुप्तवदेव हि मुग्धे युक्ता हि कृत्स्नसंपत्तिः ।
इति चेन्न वयं ब्रूमः संपत्तिर्ब्रह्मणाऽस्य भवतीति ॥ १८५ ॥
किंत्वेतन्मुग्धत्वं सुषुप्तधर्मार्धधर्मयोगेण ।
भवतीत्येतावत्किल सूत्राभिप्रेतमिति तु निर्णीतम् ॥ १८६ ॥

दर्शितमेव हि पूर्वं वैलक्षण्यं हि सुप्तिमुग्धतयोः।
द्वारमभिभवति चैतन्मुग्धत्वं मृत्युलोकसंक्रमणे ॥ १८७ ॥
तस्माद्ब्रह्मविदोऽत्र हि वदन्ति मुग्धत्वमर्धसंपत्तिम्।
नैवेह पञ्चमी किल काचिदवस्थेति यच्च पूर्वोक्तम् ॥ १८८ ॥
नासौ दोषो यस्मात्कादाचित्की भवेदवस्थेयम्।
तेन श्रुतौ स्मृतौ वा मुग्धावस्था न हि प्रसिद्धाऽस्ति ॥ १८९ ॥
यदि मुग्धताऽप्रसिद्धा कथं विचार इति नेह शङ्का स्यात्।
यस्मादेषाऽवस्था लोकायुर्वेदयोः प्रसिद्धैव ॥ १९० ॥
अत्र च सुषुप्तिमृत्योर्धर्माणामर्धधर्मसंपत्त्या।
इह मुग्धता हि लोके न गण्यते पञ्चमीति केनापि ॥ १९१ ॥
सर्वावस्थाभिरसावलिप्त एव त्वमर्थ इत्येवम्।
सम्यग्विचार्य संप्रति निरूपयति तत्पदार्थमीशानम् ॥ १९२ ॥

## न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥ ११ ॥

अत्र त्वमर्थजिज्ञासोपरमानन्तरं हि तस्यैव।
अवसरसंगत्या हि स्वरूपभूतं विचार्यते ब्रह्म ॥ १९३ ॥
सन्त्यत्रोभयलिङ्गाः श्रुतयो ब्रह्मस्वरूपबोधपराः।
अत्र किल सर्वकर्मेत्याद्याः सविशेषगोचराः श्रुतयः ॥ १९४ ॥
अस्थूलमेवमाद्याः श्रुतयः किल निर्विशेषबोधपराः।
श्रुतिषु सतीष्वेतासु ब्रह्मोभयलिङ्गमेव किंवा स्यात् ॥ १९५ ॥
अन्यतरलिङ्गमथ वा यदाऽपि चान्यतरलिङ्गमेतत्स्यात्।
सविशेषलिङ्गमेतत्किंवा तन्निर्विशेषमेवेति ॥ १९६ ॥
संदेहे सति तत्र ब्रह्मोभयलिङ्गमिति तु युक्तं स्यात्।
पूर्वत्र सुप्तिमरणोभयरूपं वर्णितं हि मुग्धत्वम् ॥ १९७ ॥
तद्वच्छ्रुत्यनुसाराद्ब्रह्मात्र ध्येयमुभयरूपं स्यात्।
इति दृष्टान्तालम्बाद्ब्रह्मण्युभयात्मकत्वशङ्कायाम् ॥ १९८ ॥
तामेतामाशङ्कां निरसितुमेतत्प्रवर्तितं सूत्रम्।
अत्रोभयलिङ्गत्वं स्वत एव परस्य नोपपन्नं स्यात् ॥ १९९ ॥
वस्त्वेकमेव लोके भवति हि रूपादिगुणगणोपेतम्।
तद्विपरीतं चेति ह्यवधारयितुं कथं हि शक्येत ॥ २०० ॥
नोपाधियोगतोऽन्यादृशस्य चान्यादृशः स्वभावः स्यात्।
न स्वच्छः स्फटिकोऽसावस्वच्छोऽलक्तकादियोगेन ॥ २०१ ॥

तत्रास्वच्छत्वव्यपदेशोऽयं भ्रान्तिमूलको दृष्टः ।
ये चोपाधय इह ते भवन्त्यविद्यासमुत्थिता एव ॥ २०२ ॥
तन्मूलकं हि तदिदं भ्रान्त्यायत्तं न वस्तुवृत्तमतः ।
अन्यतराश्रयणेऽपि प्रतिपाद्यं ब्रह्म निर्विशेषमिह ॥ २०३ ॥
ब्रह्मप्रतिपत्तिपरेष्वशब्दमस्पर्शमेवमाद्येषु ।
यस्मादपास्तसर्वोपाधिविशेषं प्रपञ्चितं ब्रह्म ॥ २०४ ॥

न भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥ १२ ॥

यन्निर्विशेषमेव ब्रह्म प्रतिपाद्यमिति तु पूर्वोक्तम् ।
तन्नोपपद्यतेऽत्र ब्रह्माकारास्तु भिन्नभिन्ना हि ॥ २०५ ॥
उपदिश्यन्ते ते हि प्रतिविद्यं सकलनिगमवाक्येषु ।
ब्रह्म चतुष्पादित्यपि षोडशकलमिति च वर्णितं ब्रह्म ॥ २०६ ॥
तद्वच्च वामनीत्वादिलक्षणं ब्रह्म सकलभुवनतनु ।
वैश्वानरशब्दितमपि कथयन्ति ब्रह्म सर्ववेदान्ताः ॥ २०७ ॥
तस्मात्सविशेषत्वं परात्मनोऽवश्यमभ्युपेयमिह ।
नो चेन्निर्विषयं स्यात्सकलमिदं भेदशास्त्रमिति चेन्न ॥ २०८ ॥
यस्मादभेदमेव प्रत्येकं ब्रह्मणः श्रुतिर्ब्रूते ।
यश्चायमेवमाद्या श्रुतिरस्याभेदमेवमुपदिशति ॥ २०९ ॥
तेजोमयोऽमृतमयः पुरुषो योऽस्यां भवेत्पृथिव्यां सः ।
यश्चाध्यात्मं पुरुषः शारीरः सोऽपि तादृशो गदितः ॥ २१० ॥
तावेवंविधरूपौ निर्दिश्याभेदमेव हि ब्रूते ।
अयमेव स योऽयमिति श्रुतिरध्यात्मादिभेदमपवार्य ॥ २११ ॥

अपि चैवमेके ॥ १३ ॥

अपि चेह भेददर्शननिन्दापूर्वकमभेददृष्टिमिमाम् ।
एके हि शाखिनः किल मनसैवेत्यादिना पठन्तीह ॥ २१२ ॥
अन्येऽपि भोक्तृभोग्यप्रेरितृरूपस्य सकलजगतोऽपि ।
ब्रह्मात्मतां वदन्ति हि भोक्ता भोग्यमिति वाक्यनिचयेन ॥२१३॥
सविशेषनिर्विशेषब्रह्मपरासु च सतीष्वपि श्रुतिषु ।
ननु निर्विशेषमेव ब्रह्म कथं स्यादितीह नाऽऽशङ्क्यम् ॥ २१४ ॥
अत्रातत्परतत्परविप्रतिषेधे हि तत्परं बलवत् ।
एतन्न्यायाश्रयणान्नासौ दोष इति पठति सूत्रमिदम् ॥ २१५ ॥

अरूपवदेव हि तत्प्रधानत्वात् ॥ १४ ॥

रूपादिरहितमेव ब्रह्म परं स्यात्ततो न विपरीतम् ।
श्रुतिवचनानि च सर्वाण्यपि दृश्यन्ते हि तत्प्रधानानि ॥ २१६ ॥
अस्थूलमेवमाद्यं ह्यशब्दमस्पर्शमेवमाद्यपि च ।
आकाशो हेत्यादिकमपि किल दिव्यो ह्यमूर्त इत्याद्यम् ॥ २१७ ॥
यच्चान्यदपि तदेतद्ब्रह्मापूर्वमिति निगमवाक्यं स्यात् ।
परतत्त्वबोधकानि ह्येतानि भवन्ति तत्प्रधानानि ॥ २१८ ॥
तस्माच्च निर्विशेषं श्रुतिवचनेषु हि यथाश्रुतं ग्राह्यम् ।
आकारवत्पराणि श्रुतिवचनानि तु न तत्प्रधानानि ॥ २१९ ॥
किंत्वेतानि भवन्ति हि सविशेषोपासनाप्रधानानि ।
असति विरोधे तेषामाश्रयितव्यं यथाश्रुतं भवति ॥ २२० ॥
सति च विरोधे कल्पितविशेषसालम्बनानि तानि स्युः ।
न हि निर्विशेषवाक्याण्येवं कुत्रापि सावकाशानि ॥ २२१ ॥
तस्माद्भवन्ति तानि हि परात्मतत्त्वप्रधानवाक्यानि ।
इममर्थमेव सकलं बोधयितुं सूत्रमेतदिह पठति ॥ २२२ ॥

प्रकाशवच्चावैयर्थ्यात् ॥ १५ ॥

लोके यथा प्रकाशः सौरश्चान्द्रो नभस्थलव्यापी ।
ऋजुवक्रभावकलिते ह्यङ्गुल्यादावुपाधिसंबन्धात् ॥ २२३ ॥
तद्भावं प्राप्त इव प्रतिपन्नो न प्रपद्यते हि तथा ।
तत्तूपाधिवशेनाऽऽयातीव हि तत्तदाकृतिं ब्रह्म ॥ २२४ ॥
एवमुपास्त्यङ्गतया साकारब्रह्मविषयवाक्याणाम् ।
न च वैयर्थ्याशङ्का भवति हि नैवेह वेदवाक्यानाम् ॥ २२५ ॥
कस्यचिदनर्थकत्वं कस्यचिदिह सार्थकत्वमिति युक्तम् ।
सर्वस्य वेदराशेः प्रमाणभावे यतो हि न विशेषः ॥ २२६ ॥
नोपाधियोगतोऽपि ब्रह्मोभयलिङ्गमिति तु यच्चोक्तम् ।
इह तद्विरुद्धमुक्तं भवतीत्येवं न शङ्कनीयमिह ॥ २२७ ॥
यच्चोपाध्यायत्तं तदिदं नैवेह वस्तुधर्मः स्यात् ।
आविद्यका ह्युपाधय इत्येतत्सकलमेव पूर्वोक्तम् ॥ २२८ ॥

आह च तन्मात्रम् ॥ १६ ॥

स यथा सैन्धवघन इत्येषा श्रुतिरेवमत्र दर्शयति ।
ब्रह्म प्रज्ञानघनं रूपान्तररहितमेकमविशेषम् ॥ २२९ ॥

यद्वत्सैन्धवघन इह बहिरन्तश्चैकलवणरस एव ।
चैतन्यमात्रमेव ब्रह्म निरन्तरमिदं तथैवेति ॥ २३० ॥

## दर्शयति चाथो अपि स्मर्यते ॥ १७ ॥

दर्शयति श्रुतिरेषा ह्यथात आदेश एवमाद्या हि ।
इतरप्रतिषेधेन ब्रह्मण एतस्य निर्विशेषत्वम् ॥ २३१ ॥
श्रुतिरन्यदेव तद्विदितादित्याद्याऽपि दर्शयत्येवम् ।
अन्याऽप्यत्र यतो वाच इति श्रुतिरपि तथैव दर्शयति ॥ २३२ ॥
बाष्कलिना बाभ्रव्यः पृष्टः सन्नेतमवचनेनैव ।
ब्रह्म प्रोवाचेति श्रुयत इह निगमवाक्य एव किल ॥ २३३ ॥
तत्र स होवाचाधीहीति प्रथमं स एष पृष्टः सन् ।
नोवाच किंचिदयमिति तेन प्रश्नद्वये कृते पश्चात् ॥ २३४ ॥
त्वं तु न जानास्येवं भवति ह्युपशान्त एष आत्मेति ।
आत्माऽपास्तद्वैतो ह्यवचनमत उत्तरं भवेत्तस्य ॥ २३५ ॥
सौत्रश्चाथोशब्दस्तदर्थको नान्यमर्थमाचष्टे ।
गीतादिस्मृतिवचनैर्ब्रह्म परं निर्विशेषमुपदिष्टम् ॥ २३६ ॥
एतच्चानादिमदिति वाक्येषु स्पष्टमेवमन्यत्र ।
नारायणोपदिष्टे माया ह्येषा मयेति वाक्ये हि ॥ २३७ ॥

## अत एव चोपमा सूर्यकादिवत् ॥ १८ ॥

यत एवाऽऽत्मा सोऽयं चैतन्यैकस्वरूप एव स्यात् ।
वाङ्मनसातीतः स्यादितरप्रतिषेधसमुपदेशश्च ॥ २३८ ॥
तस्योपाधिनिमित्तामपारमार्थिकविशेषवत्तां हि ।
आलम्ब्य मोक्षशास्त्रे ह्युपमा जलसूर्यकादिभिः कथिता ॥ २३९ ॥
दर्शयति श्रुतिरेषा यथा ह्ययं ज्योतिरेवमाद्या हि ।
सूर्यो यथाऽनुगच्छन्नपो हि भिन्ना उपाधियोगेन ॥ २४० ॥
भिन्नस्तथाऽयमात्मा क्षेत्रेषूपाधितो हि भिन्न इति ।
श्रुतिरेक एव हीति च भूते भूते व्यवस्थितो ह्यात्मा ॥ २४१ ॥
बहुधैकधा च दृश्यत एको जलचन्द्रवदिति वर्णयति ।
सूर्यक इति कप्रत्यय इह सूत्रे द्योतनार्थको भवति ॥ २४२ ॥

अम्बुवदग्रहणात्तु न तथात्वम् ॥ १९ ॥

ननु जलसूर्याद्युपमा न चाऽऽत्मनः कथमपीह संभवति ।
सूर्यादिभ्यो भवति हि जलमेतद्विप्रकृष्टदेशस्थम् ॥ २४३ ॥
रूपवतः सूर्यस्य प्रतिबिम्बस्तत्र युक्त एव स्यात् ।
अत्र च मायाबुद्ध्याद्युपाधयो नैव दूरदेशस्थाः ॥ २४४ ॥
ब्रह्मस्वरूपमेव हि सर्वात्मकमपि च सर्वदेशगतम् ।
तस्माद्दृष्टान्तोऽसावयुक्त इत्यस्य चोत्तर पठति ॥ २४५ ॥

वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ॥ २० ॥

दृष्टान्तोऽसौ युक्तो विवक्षितांशो यतोऽत्र संभवति ।
दार्ष्टान्तिकस्य लोके दृष्टान्ते न च सर्वसाम्य स्यात् ॥ २४६ ॥
नैतत्स्वमनीषिकया दृष्टान्तप्रणयनं कृतं किंतु ।
शास्त्रोपदर्शितस्य हि फलमात्रमिहोपदिश्यते तस्य ॥ २४७ ॥
तदिदं प्रयोजनं स्याद्यदात्मनो निर्विशेषतारूपम् ।
अत्र च विवक्षित यत्सारूप्यं तदिदमीदृशं भवति ॥ २४८ ॥
जलगतमिह सूर्यादिप्रतिबिम्बं यच्च दृश्यते तदिदम्।
वर्धत इह जलवृद्धौ तद्ध्रासे ह्रसति किंच जलचलने ॥ २४९ ॥
चलति च जलभेदे किल भिद्यत इति चैतदेवमिह भवति ।
जलधर्मानुविधायि हि न तथात्व भवति चास्य सूर्यस्य ॥२५०॥
एवं ब्रह्माविकृतं परमार्थत एकरूपमपि सदिह ।
देहाद्युपाधियोगाद्भजत इहोपाधिधर्मवृद्ध्यादीन् ॥ २५१ ॥
दार्ष्टान्तिकदृष्टान्तोभययोरेव यथोक्तधर्मेण ।
सारूप्याद्दृष्टान्तः समञ्जसोऽयं तथा च न विरोधः ॥ २५२ ॥

दर्शनाच्च ॥ २१ ॥

अत्र पुरश्चक्र इति श्रुतिः परस्य प्रवेशमभिधत्ते ।
द्विपदशरीराणि तथा चतुष्पदानि च वपूंषि सृष्ट्वा सा ॥ २५३ ॥
पूर्वं हि चक्षुरादेः पक्षित्वेनाविशत्स तानीति ।
श्रुतिरन्याऽनेनेति प्रवेशमत्र च परं प्रदर्शयति ॥ २५४ ॥
तस्माद्युक्तः सोऽयं योऽसौ जलसूर्यकादिदृष्टान्तः ।
ब्रह्म न चोभयलिङ्गं नापि च सविशेषलिङ्गमिति सिद्धम्॥२५५॥

इह कल्पयन्ति केचिद्वे अधिकरणे हि तत्र च प्रथमम् ।
किंवा प्राप्तविशेषं सविशेषं ब्रह्म किं भवेदिति हि ॥ २५६ ॥
पूर्वस्मादधिकरणात्प्रत्यस्तमितप्रपञ्चता सिद्धा ।
किं सल्लक्षणमेतद्ब्रह्म भवेद्बोधलक्षणं वेति ॥ २५७ ॥
अथवा तदुभयलक्षणमिति शङ्कायां द्वितीयमधिकरणम् ।
इह सर्वथाऽप्यनर्थकमधिकरणान्तरमिदं ह्यनारब्धम् ॥ २५८ ॥
यद्याधिकरणमिदं स्यादनेकलिङ्गत्वनिरसनार्थं हि ।
तत्किल पूर्वेणैव हि न स्थानत इत्यनेन परिभूतम् ॥ २५९ ॥
उत्तरमधिकरणमिदं प्रकाशवच्चेति विफलमेव स्यात् ।
सल्लक्षणमेवेदं न बोधलक्षणमिदं भवेद्ब्रह्म ॥ २६० ॥
इति शङ्कितुं न शक्यं विज्ञानघनश्रुतेर्विरोधेन ।
अवगतचैतन्यं तद्ब्रह्म कथं वाऽपि चेतनस्यास्य ॥ २६१ ॥
जीवस्य श्रुतिवचनैस्तदात्मभावेन चोपदिश्येत ।
नाप्यत्र बोधलक्षणमेव न सल्लक्षणं तदेतदिति ॥ २६२ ॥
वक्तुं शक्यमिह स्यादस्तीत्यादिश्रुतेर्विरोधेन ।
तदुभयलक्षणमेव ब्रह्मेत्यपि नेह शङ्कितुं शक्यम् ॥ २६३ ॥
तस्यैकलिङ्गतायाः पूर्वोक्ताया विरोध एव स्यात् ।
सत्तात्यावृत्तेन च बोधेन तथैव सत्तयोपेतम् ॥ २६४ ॥
तत्प्रतिजानानस्य हि पूर्वप्रतिषिद्धसप्रपञ्चत्वम् ।
पुनरपि तस्य स्यादित्यसमञ्जसमेव तदिदमखिलं स्यात् ॥ २६५ ॥
न श्रुतिवचनशतेनाप्येकस्यानेकरूपता भवति ॥
यदि बोध एव सत्ता बोधः सत्तैव न हि तयोर्भेदः ॥ २६६ ॥
भवतु तदा सल्लक्षणमित्यादिविकल्पना निरालम्बाः ।
निर्णीतान्यस्माभिः सूत्राण्येकाधिकरणभावेन ॥ २६७ ॥
अपि चान्योन्य श्रुतिषु हि विप्रतिपन्नासु निर्विशेषेऽस्मिन् ।
ब्रह्मणि तत्र गृहीते गतिरितरासामवश्यमिह वाच्या ॥ २६८ ॥
तत्परतयाऽर्थवन्ति प्रकाशवच्चैवमादिमात्राणि ।
इह केचिदेवमाहुः साकारपरा भवन्ति याः श्रुतयः ॥ २६९ ॥
प्रविलयमुखेन ता अपि भवन्त्यनाकारतत्परा इति हि ।
तदपि च न समीचीनं याः पराविद्याप्रपञ्चिताः श्रुतयः ॥ २७० ॥

युक्ता ह्यस्येत्याद्याः प्रविलयफलिका भवन्ति ता एव ।
यस्मात्तदेतदित्ययमुपसंहारोऽत्र निर्विशेषपरः ॥ २७१ ॥
ये च श्रुतेः प्रपञ्चा उपासनाप्रक्रियासु दृश्यन्त ।
छान्दोग्ये हि मनोमय इत्याद्यास्ते कथं प्रविलयार्थाः ॥ २७२ ॥
स क्रतुमित्येतेन ह्युपासनातत्परेण विधिनैव ।
यत एषां संबन्धे श्रुत्यैव यथाक्तगुणकृदम्बस्य ॥ २७३ ॥
तदुपासनार्थकत्वे प्रतीयमाने च लक्षणा दूरगा ।
तस्यापि च प्रपञ्चप्रविलयपरता कथं हि युक्ता स्यात् ॥ २७४ ॥
यच्चोपदिष्टमेतद्विनिगमकारणमरूपवदितीह ।
तच्चेदमनवकाशं सर्वस्य प्रविलयार्थकत्वे स्यात् ॥ २७५ ॥
फलमप्युपासनानां भिन्नं भिन्नं प्रतीयते शास्त्रे ।
दुरितक्षयः क्वचित्स्यात्क्वचिदैश्वर्यं क्वचित्क्रमान्मुक्तिः ॥ २७६ ॥
तस्मात्पृथगर्थकता ज्ञेयोपास्यप्रधानवाक्यानाम् ।
नन्वेकवाक्यता किल यथैव चाङ्गप्रधानवाक्यानाम् ॥ २७७ ॥
भवति हि योगस्यैकयात्परमापूर्वस्य तद्वदेवेह ।
प्रविलयविषयक एको नियोग आत्मावबोधकामस्य ॥ २७८ ॥
अविलापिते प्रपञ्चे कथमपि न ब्रह्मतत्त्वबोधः स्यात् ।
योगोऽनुष्ठातव्यो भवति यथा स्वर्गलोककामस्य ॥ २७९ ॥
एवं प्रपञ्चविलयो विमोक्षकामस्य भवति संपाद्यः ।
तमसि यथा घटतत्त्वं बुभुत्सुनाऽऽदौ विलाप्यते हि तमः ॥ २८० ॥
एवं प्रपञ्चविलयः कर्तव्यो ब्रह्मतत्त्वविविदिषुणा ।
अत्रेदं प्रष्टव्यं प्रपञ्चविलयो हि किंविधोऽयमिति ॥ २८१ ॥
यदि पावकसंपर्काद्घृतकाठिन्यस्य विद्यमानस्य ।
प्रविलय इव चेदयमपि विलयस्तस्यैव विद्यमानस्य ॥ २८२ ॥
व्यर्थस्तदोपदेशः स खलु न शक्यो हि पुरुषमात्रेण ।
यदि मुक्तेनैकेन प्रपञ्चविलयः श्रुतस्तदेदानीम् ॥ २८३ ॥
प्रत्यक्षदृष्टमेतज्जगत्पृथिव्यादिशून्यमेव स्यात् ।
यदि चाविद्याध्वस्तः सकलोऽयं विद्यया विलाप्य इति ॥ २८४ ॥
तत एतदेव लब्धं तत्सत्यज्ञानलक्षणं ब्रह्म ।
आविद्यकप्रपञ्चप्रत्याख्यानेन वेदितव्यमिति ॥ २८५ ॥

आवेदिते हि तस्मिन्विद्या स्वयमेव जायते तस्य ।
प्रविलीयते तया चाविद्या ध्वस्तो हि सकल एवायम् ॥ २८६ ॥
स्वप्नप्रपञ्च इव किल न वैपरीत्ये हि जायते विद्या ।
रज्जुप्रदर्शनेनैव च भवति हि तत्स्वरूपविज्ञानम् ॥ २८७ ॥
तेनाविद्यारोपितसर्पादिप्रविलयश्च भवति यथा ।
भवति तथैवेहापि ब्रह्मण्यावेदिते स्वयं विद्या ॥ २८८ ॥
नापि नियोगशतेन च विद्याऽनावेदिते भवेत्तस्मिन् ।
अपि च प्रपञ्चपक्षे जीवः किं ब्रह्मपक्ष एव स्यात् ॥ २८९ ॥
प्रथमे हि निष्प्रपञ्चब्रह्मप्रतिपादनेन जीवेऽपि ।
प्रविलापिते जगद्वत्कस्य नियोगः कुतोऽस्य मोक्षो वा ॥ २९० ॥
जीवो द्वितीयपक्षे ह्यनियोज्यब्रह्मरूप एव स्यात् ।
जीवत्वं चाविद्याकल्पितमेवेति बोधिते तस्मिन् ॥ २९१ ॥
इह च नियोज्याभावान्नियोगनिष्ठा न कस्यचिद्भवति ।
द्रष्टव्याद्याः शब्दास्तत्त्वाभिमुखीकृतिप्रधानाः स्युः ॥ २९२ ॥
यदि चाऽऽम्नायः सकलः पर्यवसन्नो नियोगनिष्ठतया ।
जीवस्य यदनियोज्यब्रह्मात्मत्वं तदप्रमाणं स्यात् ॥ २९३ ॥
कृत्स्नस्याऽऽम्नायस्य हि नियोगपरता यदोपवर्ण्येत ।
श्रुतहानिरश्रुतार्थप्रकल्पना चात्र दुर्निवारैव ॥ २९४ ॥
मोक्षस्यानित्यत्वं ह्यदृष्टफलताऽपि कर्मफलवत्स्यात् ।
तस्माद्ब्रह्मपराणि ह्यवगतिनिष्ठानि सकलवाक्यानि ॥ २९५ ॥
तस्माच्चैकनियोगप्रतीतितश्चैकवाक्यतेत्येतत् ।
अनुचितमेतत्सकलं यदि चाभ्युपगम्यते नियोगोऽयम् ॥ २९६ ॥
ब्रह्मपरेष्वपि वाक्येष्वसिद्धमेव हि तदा तदेकत्वम् ।
सविशेषनिर्विशेषप्रतिपादनतत्परेषु तेषु स्यात् ॥ २९७ ॥
शब्दान्तरैः प्रमाणैर्नियोगभेदेऽवगम्यमानेऽपि ।
सर्वत्रापि ह्येको नियोग इति नैव शक्यमाश्रयितुम् ॥ २९८ ॥
दर्शप्रयाजवाक्येष्वधिकाराभेदतस्तदेकत्वम् ।
साङ्गे प्रधानयागे ह्येकस्य स्वर्गलोककामस्य ॥ २९९ ॥
अधिकारात्परमापूर्वैक्यात्तत्रैकवाक्यता युक्ता ।
न त्वत्र सगुणनिर्गुणवाक्येष्वेकत्वसाधकोंऽशोऽस्ति ॥ ३०० ॥

भारूपत्वादिगुणा न हि प्रविलयोपकारिणो दृष्टाः ।
नापि प्रपञ्चविलयो भारूपत्वादिसहचरो दृष्टः ॥ ३०१ ॥
यस्मात्परस्परं ते दृश्यन्ते किल विरुद्धरूपतया ।
मुक्त्यभ्युदयार्थिन इह भवन्ति विद्याधिकारिणो भिन्नाः ॥३०२॥
नैवाङ्गाङ्गित्वं वा मिथोविरुद्धार्थविद्ययोर्भवति ।
कृत्स्नप्रपञ्चविलयस्तदेकदेशाद्यपेक्षण चापि ॥ ३०३ ॥
न ह्येकस्मिन्धर्मिणि तच्च समावेशयितु शक्यम् ।
साकृतिवाक्यानामिह न भवत्याकारविलयनद्वारा ॥ ३०४ ॥
निर्गुणवाक्यैकत्व तस्मादस्मत्प्रपञ्चितं युक्तम् ।

प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥ २२ ॥

तदिदं ब्रह्म श्रुतिभिर्निर्दिष्टं निर्विशेषचिन्मात्रम् ॥ ३०५ ॥
सकलप्रतिषेधावधि सद्रूप तदिति वर्ण्यते सपदि ।
मूर्तममूर्तं चेति द्वे रूपे ब्रह्मणो विनिर्दिश्य ॥ ३०६ ॥
पञ्च महाभूतानि द्वैराश्येन च विभज्य तत ऊर्ध्वम् ।
तस्यामूर्तरसस्य हि पुरुषस्य च यानि सकलरूपाणि ॥ ३०७ ॥
तानि महारजनादीन्यप्येतस्यैव वर्णयित्वाऽन्ते ।
वाक्यं तदत्र पठितं ह्यथात आदेश एवमादि किल ॥ ३०८ ॥
तत्र च वाक्ये नेतीत्येतद्वाक्यं द्विवारमुपदिष्टम् ।
न ह्येतस्मादित्यपि वाक्य तत्रोपलभ्यते किंच ॥ ३०९ ॥
नेत्यन्यत्परमस्तीत्येवं वाक्यानि तत्र दृश्यन्ते ।
अत्र प्रतिषेध्यं किल विशेषतो नोपलभ्यते किमपि ॥ ३१० ॥
अत्र च नञ्शब्दोऽसावितिशब्दपरः स चायमितिशब्दः ।
संनिहितकृत्स्नवस्तुप्रदर्शनार्थः प्रतीयते लोके ॥ ३११ ॥
प्रकरणसामर्थ्यादिह रूपद्वयमत्र भवति सनिहितम् ।
तस्यैव सप्रपञ्चब्रह्मण एतद्द्वयं यदुपदिष्टम् ॥ ३१२ ॥
तत्र च संदेहः किं प्रतिषेधति रूपरूपवद्युगलम् ।
किंवा रूपं यदिदं किंवाऽप्येतच्च रूपवद्ब्रह्म ॥ ३१३ ॥
तत्र च रूपं रूपवदुभयं प्रतिषिध्यतीति युक्तं स्यात् ।
नञ्शब्दद्वययोगादथ वा ब्रह्मैव रूपवद्यदिदम् ॥ ३१४ ॥
तद्वाङ्मनसातीतं किंचासंभाव्यमानसद्भावम् ।
तन्न प्रतिषेधार्हं प्रतिषेधार्हो न हि प्रपञ्चोऽसौ ॥ ३१५ ॥

प्रत्यक्षगोचरत्वादभ्यासस्त्वादरार्थ इह भवति ।
एवं प्राप्ते ब्रूमः प्रतिषेधो नोभयस्य भवतीह ॥ ३१६ ॥
प्रतिषेधः सकलोऽयं किंचित्परमार्थतत्त्वमालम्ब्य ।
यश्चापरमार्थः स्यात्स खलु प्रतिषिध्यते न सर्वमपि ॥ ३१७ ॥
सर्वस्य प्रतिषेधे भवेदसौ शून्यवाद एव तदा ।
रज्ज्वादौ सर्पाद्याः प्रतिषिध्यन्तेऽवशिष्यमाणेऽस्मिन् ॥ ३१८ ॥
कृत्स्नप्रतिषेधे किल कोऽन्यस्तत्रावशिष्यते भावः ।
अन्यस्यानवशेषे कृत्स्नस्यैवास्य शून्यताप्राप्त्या ॥ ३१९ ॥
प्रतिषेद्धुरप्यभावे प्रतिषेधः कथमिहोपपद्येत ।
ब्रह्मप्रतिषेधो वा कथमपि नैवेह शक्यते वक्तुम् ॥ ३२० ॥
येनोपक्रमवाक्ये ब्रह्मप्रतिपादनं प्रतिज्ञातम् ।
किंचासन्नेवेति श्रुतिरसदात्मत्वमस्य निन्दति च ॥ ३२१ ॥
अस्तीत्येवेत्यपरा श्रुतिरास्तित्वेन वक्ति तद्ब्रह्म ।
श्रुतिवचसां व्याकोपो ब्रह्मासत्त्वे हि दुर्निवारः स्यात् ॥ ३२२ ॥
वाङ्मनसातीतत्वं यच्चोक्तं ब्रह्मणस्तदेतदपि ।
नाभावाभिप्रायं किंतु प्रतिपादनप्रकारोऽयम् ॥ ३२३ ॥
तद्वाङ्मनसातीतं सर्वेषां प्रत्यगात्मभूतमपि ।
नित्यं शुद्धं भूतं ब्रह्मैतन्नित्यमुक्तरूपमिति ॥ ३२४ ॥
प्रतिपादयन्ति सर्वे वेदान्ताः कथमभावशङ्काऽस्य ।
तस्माद्ब्रह्मण एतत्प्रतिषेधति रूपमेव न ब्रह्म ॥ ३२५ ॥
प्रतिषेधावधिभूतं यत एतद्ब्रह्म परिशिनष्टि ततः ।
प्रकृतं यच्चैतावन्मूर्तामूर्तैकलक्षणं रूपम् ॥ ३२६ ॥
तच्च प्रतिषेधति किल नेति च शब्दो न रूपवद्ब्रह्म ।
रूपं तदिदं प्रकृतं पूर्वग्रन्थे प्रपञ्चितं चैतत् ॥ ३२७ ॥
अधिदैवतमध्यात्मं तदधीनं वासनामयं त्वपरम् ।
रूपममूर्तरसात्मकमपि लिङ्गात्मकव्यपाश्रयं यच्च ॥ ३२८ ॥
वर्णितमत्र महारजनाद्युपमाभिर्यथेति वाक्येन ।
तच्चापनीयते खल्विवितिशब्देन च नञ्ञं प्रतीत्येवम् ॥ ३२९ ॥
अवगम्यते यतोऽत्र हि रूपविशेषणतयैव तद्ब्रह्म ।
षष्ठ्या किल निर्दिष्टं रूपं तत्तु प्रधानभावेन ॥ ३३० ॥

रूपवतो जिज्ञासायामेवैतत्प्रदर्शितं वाक्यम् ।
कल्पितरूपप्रत्याख्यानेन ब्रह्मणः स्वरूपमिह ॥ ३३१ ॥
निर्णीयते तदास्पदमखिलं नेति हि निषिध्यते तस्मात् ।
वाचारम्भणशब्दादिभ्यः कार्यस्य चानृतत्वेन ॥ ३३२ ॥
युक्तः प्रतिषेधोऽयं न ब्रह्मण इह भवेदसौ युक्तः ।
तस्य कथं वा स भवेद्ब्रह्म यतः सर्वकल्पनामूलम् ॥ ३३३ ॥
स्वयमेव शास्त्रमेतद्रूपद्वयमस्य दर्शयित्वाऽऽदौ ।
प्रतिषेधतीह कथमिति नैषा शङ्काऽत्र भवति युक्ततमा ॥ ३३४ ॥
रूपद्वयमिह शास्त्रं प्रतिपाद्यत्वेन नैव निर्दिशति ।
रूपद्वयं प्रसिद्धं ब्रह्मणि कल्पितमिदं परामृशति ॥ ३३५ ॥
प्रतिषेध्यत्वाय तथा शुद्धब्रह्मस्वरूपबोधाय ।
द्वावेतौ प्रतिषेधौ मूर्तामूर्ते निषेधतः क्रमतः ॥ ३३६ ॥
एको हि भूतराशि प्रतिषेधति वासनात्मकं त्वपरः ।
अथवाऽपि नेति नेतीत्येषा वीप्सा हि किमपि नेतीति ॥ ३३७ ॥
परिगणितप्रतिषेधे किंवैतद्ब्रह्म किमथवाऽन्यदिति ।
स्यादेषा जिज्ञासा वीप्सायां सकलविषयजातस्य ॥ ३३८ ॥
प्रतिषेधाच्चाविषयः प्रत्यग्ब्रह्मेति सा निवर्तेत ।
तस्मात्कल्पितमेतत्प्रतिषेधति परिशिनष्टि तद्ब्रह्म ॥ ३३९ ॥
अन्यत्परमस्तीति ब्रवीति भूयो यतस्तदिह सत्यम् ।
आदिश्य नेति नेतीत्यादेशं किल पुनश्च निर्वक्ति ॥ ३४० ॥
ब्रह्मण एतस्माद्धि व्यतिरिक्तं नेह किंचिदस्तीति ।
उक्तार्थबोधनाय हि नेतीत्युक्तं तदेव दर्शयति ॥ ३४१ ॥
अन्यच्च प्रतिषिद्धं ब्रह्मपर यत्तदेतदस्तीति ।
न ह्येतस्मादिति यद्व्यपदेशान्तरनिषेधनार्थं स्यात् ॥ ३४२ ॥
सूत्रे ततो ब्रवीतीत्येतत्स्यान्नामधेयपरमेव ।
अथ नामधेयमिति हि ब्रवीति सत्यमिति तत्परं तत्स्यात्॥३४३॥
प्रतिषेधोऽयं सफलो यदि च ब्रह्मावसान एष स्यात् ।
यदि चाभावावधिकः कथमिह सत्यस्य सत्यमुच्येत ॥ ३४४ ॥
तस्मात्प्रतिषेधोऽयं भवति ब्रह्मावसान इति सिद्धम् ।

तदव्यक्तमाह हि ॥ २३ ॥

अन्यत्प्रपञ्चजातात्प्रतिषिद्धाद्यदि भवेत्परं ब्रह्म ॥ ३४५ ॥

तच्च कुतो न हि गृह्यत इत्यत एतस्य चोत्तरं ब्रूते ।
तदिदं ब्रह्माव्यक्तं भवति हि तत्सर्वदृश्यसाक्ष्यपि च ॥ ३४६ ॥
तेनेन्द्रियैर्न गृह्यत इत्येतच्छ्रुतिरिह प्रदर्शयति ।
सा हि श्रुतिः किलैषा न चक्षुषेत्यादिका ब्रवीत्येवम् ॥ ३४७ ॥
अन्याऽपि श्रुतिरेवं स एष नेत्यादिका प्रदर्शयति ।
इयमपराऽपि यदा ह्येवैष इति श्रुतिरिति प्रदर्शयति ॥ ३४८ ॥
अव्यक्तोऽयमचिन्त्योऽयमिति स्मृतिरपि तथैव दर्शयति ।

अपि संराधने प्रत्यक्षानुमानाभ्याम् ॥ २४ ॥

अपि चेह योगिनस्तं सराधनसमय एव पश्यन्ति ॥ ३४९ ॥
संराधन हि भक्तिध्यानानुष्ठानमेव न तदन्यत् ।
तद्धयेवमेव यस्माच्छ्रुतिस्मृती चैवमेव दर्शयतः ॥ ३५० ॥
श्रुतिरिह पराञ्चि खानि व्यतृणदितीत्येवमत्र दर्शयति ।
बहिरर्थमेव सर्वे पश्यन्ति न कश्चिदन्तरात्मानम् ॥ ३५१ ॥
यो धीमान्मोक्षार्थी स हि त पश्यति निरुद्धचक्षुरिति ।
अपराऽपि शुद्धसत्त्वस्तत इत्याद्याऽपि दर्शयत्येवम् ॥ ३५२ ॥
स्मृतिरत्र यं विनिद्रा इत्याद्या योगिनस्तमित्याद्या ।
परमात्मनोऽस्य केवलयोगिध्यानाभिगम्यतां ब्रूते ॥ ३५३ ॥
ननु संराध्यः संराधक इति भिन्नत्वमेतयोरिति चेत् ।

प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ॥ २५ ॥

लोके प्रकाशरूपा ये सवितृप्रभृतयो हि वर्तन्ते ॥ ३५४ ॥
ते खलु सविशेषा इव भासन्ते परमुपाधियोगेन ।
एवं ध्यानोपाधिषु कर्मसु भिद्यत इहैष परमात्मा ॥ ३५५ ॥
परमार्थतोऽयमात्मा न भिद्यते नापि सविशेषः ।
भेद उपाधिकृतोऽसौ स्वतस्त्वभेद इति वर्णयन्त्येते ॥ ३५६ ॥
अभ्यासेनासकृदिह जीवप्राज्ञौ हि सर्ववेदान्ताः ।

अतोऽनन्तेन तथा हि लिङ्गम् ॥ २६ ॥

येनाविद्यामूलो भेदः सकलोऽपि तेन जीवोऽसौ ॥ ३५७ ॥
सकलमविद्याध्वान्तं विद्यादीपेन संनिरस्यैव ।
प्राज्ञेनानन्तेन हि परात्मना सोऽयमेकतां याति ॥ ३५८ ॥
श्रुतिलिङ्गमेवमेव हि स यो ह वै तदिति वर्णयत्यत्र ।

उभयव्यपदेशात्त्वहिकुण्डलवत् ॥ २७ ॥

स्वमतविशुद्ध्यै इह किल मतान्तरं किमपि दर्शयत्यत्र ॥ ३५९ ॥
क्वचिदिह जीवेश्वरयोर्ध्यातृध्यातव्यभावमालम्ब्य ।
व्यपदिश्यते हि भेदस्ततस्तु तं पश्यतेति वाक्येन ॥ ३६० ॥
व्यपदिश्यते क्वचित्किल परात्परं पुरुषमेवमाद्येन ।
वाक्येन गन्तृगन्तव्यत्वेनापि च तयोरसौ भेदः ॥ ३६१ ॥
एवं नियन्तृनियमनकर्मत्वेनापि भेद उपदिष्टः ।
यः सर्वाणीत्याद्यैर्वाक्यैः क्वचिदिह तयोरभेदोऽपि ॥ ३६२ ॥
तत्त्वमसि ब्रह्मास्मीत्याद्यैर्वाक्यैस्तथेतरैरपि च ।
एष त आत्माऽन्तर्याम्यमृत इति प्रथितवेदवाक्यैश्च ॥ ३६३ ॥
अत उभयव्यपदेशादहिकुण्डलवद्भवेदिदं तत्त्वम् ।

प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ २८ ॥

अथवाऽत्र यः प्रकाशः सवितुर्योऽसौ तदाश्रयः सविता ॥ ३६४ ॥
तेजस्त्वेनाभिन्नौ भेदव्यपदेशिनौ तथेहापि ।

पूर्ववद्वा ॥ २९ ॥

पूर्वप्रकाशवच्चाविशेष्यमिति प्रदर्शितं यत्स्यात् ॥ ३६५ ॥
भवति तदेव हि तत्त्वं येनाविद्याकृतो हि बन्धोऽयम् ।
ब्रह्मात्मविद्यया किल बन्धापायेऽत्र भवति मोक्षो हि ॥ ३६६ ॥
अहिकुण्डलवद्बन्धः परस्य संस्थानभूत एव यदि ।
किंवा स हि प्रकाशाश्रयवद्व्येकदेशभूतः स्यात् ॥ ३६७ ॥
भवति तदा परमार्थो बन्धस्तस्य च तिरस्कृतिर्न भवेत् ।
एवं चेद्वैयर्थ्यं दुर्वारं भवति मोक्षशास्त्रस्य ॥ ३६८ ॥
भेदाभेदौ तुल्यवदिह न व्यपदिशति किंत्वभेदमिह ।
प्रतिपाद्यत्वेन श्रुतिरेषा निर्दिशति तत्त्वमस्याद्या ॥ ३६९ ॥
भेदं त्वनुवदति ततः प्रकाशवच्चेति भवति सिद्धान्तः ।

प्रतिषेधाच्च ॥ ३० ॥

नान्योऽतोऽस्तीत्याद्याऽप्यथात आदेश एवमाद्याऽपि ॥ ३७० ॥
प्रतिषेधति प्रपञ्चं ब्रह्मव्यतिरिक्तमखिलमेव यतः ।
तद्ब्रह्म परिशिनष्टि हि यदिदं सन्निर्विशेषचिन्मात्रम् ॥ ३७१ ॥

तस्मात्प्रकाशवच्चेत्युपदिष्टो भवति चात्र सिद्धान्तः ।

परमतः सेतून्मानसंबन्धभेदव्यपदेशेभ्यः ॥ ३१ ॥

यदिदं निरस्तसकलप्रपञ्चमत्रोपवर्णितं ब्रह्म ॥ ३७२ ॥
तस्मादन्यत्तत्त्वं किमस्ति नास्तीति भवति संदेहः ।
तत्र परस्मादन्यत्तत्त्वं स्यादिति तु युक्तमाभाति ॥ ३७३ ॥
सेत्वादिव्यपदेशा यस्मात्तत्साधका हि दृश्यन्ते ।
आत्मा स सेतुरिति हि श्रुतिः परस्यास्य सेतुतां ब्रूते ॥ ३७४ ॥
मृद्दार्वादिप्रचये जलगतिविच्छेदसाधने सोऽयम् ।
रूढो हि सेतुशब्दः प्रयुक्त आत्मनि यतो भवेदेषः ॥ ३७५ ॥
लौकिकसेतोरिव किल गमयति वस्त्वन्तरास्तितामस्य ।
उन्मानव्यपदेशोऽप्यत्र तथा दृश्यते तदेतदिति ॥ ३७६ ॥
ब्रह्म चतुष्पादष्टाशफं च षोडशकलं च तत्रोक्तम् ।
कार्षापणादि लोके यदुन्मितं स्यात्ततोऽन्यदस्तीति ॥ ३७७ ॥
भवति प्रसिद्धमत इह भवितव्यमिति प्रतीयतेऽन्येन ।
सोम्य तदा संपन्नो भवतीत्याद्येषु निगमवाक्येषु ॥ ३७८ ॥
संबन्धव्यपदेशोऽप्ययमुक्तार्थस्य बोधको भवति ।
संबन्धः किल लोके भवति मितानां मितेन यत एवम् ॥ ३७९ ॥
सोऽयं सुप्तौ दृष्टस्तस्मात्परमस्ति किंचिदिति भाति ।
व्यपदिश्यते परात्मा भिन्नत्वेनैव सोऽन्तरादित्ये ॥ ३८० ॥
एवं स चान्तरक्षिणि सावधिकं चेश्वरत्वमुपदिष्टम् ।
भवति तयोरिह तस्मात्परमन्यद्ब्रह्मणोऽस्ति किंचिदिति॥ ३८१ ॥
इत्येतामाशङ्कां निरसितुमेतत्प्रदर्शित सूत्रम् ।

सामान्यात्तु ॥ ३२ ॥

अत्र तुशब्देन हि खल्वाक्षेपोऽयं निरस्यते सकलः ॥ ३८२ ॥
न ब्रह्मणः परस्मादन्यत्तत्त्वं कदाऽपि संभवति ।
न ह्यन्यस्यास्तित्वे प्रमाणमुपलभ्यतेऽत्र किंचिदपि ॥ ३८३ ॥
सर्वस्य जनिमतः किल जगतो जन्मादिकारणं ब्रह्म ।
निर्धारितं हि तस्यानन्यत्वं च प्रदर्शितं भवति ॥ ३८४ ॥
नह्येतद्व्यतिरिक्तं किंचिदज तत्त्वमत्र संभवति ।
यस्मात्सदेव सोम्येत्यस्मादवधारित हि सद्ब्रह्म ॥ ३८५ ॥

येनाश्रुतमिति वाक्यादेकज्ञानेन सर्वविज्ञानम् ।
दर्शितमिह तेन कथं ब्रह्मव्यतिरिक्तवस्तुसत्त्वं स्यात् ॥ ३८६ ॥
सेत्वादिव्यपदेशात्स्यादन्यत्तत्त्वमिति तु यच्चोक्तम् ।
तदयुक्तमेव यस्माच्छ्रुतिरेषा वक्ति सेतुरात्मेति ॥ ३८७ ॥
न ततः परमस्तीति श्रुत्या चैवोपदिष्टमेवात्र ।
सेत्वादिव्यपदेशादन्यास्तित्वप्रतीतिरित्यपि न ॥ ३८८ ॥
लिङ्गेन चाद्वितीयश्रुतिबाधोऽयं यतो न हि न्याय्यः ।
सेतुनिदर्शनमात्रेणान्यत्तत्त्वास्तितता यदोच्येत ॥ ३८९ ॥
तद्दृष्टान्तेन तदा मृद्दारुमयत्वमस्य कल्प्येत ।
नैतन्न्याय्यं यस्मादजत्वमुपदिशति शास्त्रमेतस्य ॥ ३९० ॥
इह सेतुशब्द आत्मनि तत्सामान्यात्प्रयुक्त इति युक्तम् ।
जगतस्तद्धर्माणां विधारकत्वमिह सेतुसामान्यम् ॥ ३९१ ॥
सेतुं तीर्त्वेत्यत्र च तरतिर्नातिक्रमार्थको भवति ।
आत्मा यतो विभुः स्यात्किंतु प्राप्त्यर्थ एव तरतिरसौ ॥ ३९२ ॥
प्राप्त्यर्थे दृष्टोऽयं व्याकरणं तीर्ण एवमादौ हि ।

बुद्ध्यर्थः पादवत् ॥ ३३ ॥

उन्मानव्यपदेशादपि नान्यास्तित्वकल्पना युक्ता ॥ ३९३ ॥
स भवति किल बुद्ध्यर्थः सा बुद्धिरुपासनैव नान्या स्यात् ।
ब्रह्मण्यपरिच्छिन्ने स्थापयितुं बुद्धिरियमशक्येति ॥ ३९४ ॥
ब्रह्म चतुष्पात्षोडशकलमित्युन्मानकल्पनाऽत्र कृता ।
पादवदित्येतत्किल निदर्शनं स्याद्यथोपदिष्टार्थे ॥ ३९५ ॥
ब्रह्मप्रतीकयोरिह मनआकाशस्वरूपयोर्हि यथा ।
वागादयश्च पादाश्चत्वारस्ते च मनस उपदिष्टाः ॥ ३९६ ॥
आकाशस्याग्न्यादय आध्यानायैव ते हि निर्दिष्टाः ।
तद्वदिहापि स्यादियमथवाऽप्यन्यार्थकं हि पादपदम् ॥ ३९७ ॥
कार्षापणे यथा वा पादविभागस्तु कल्प्यते लोके ।
व्यवहारप्राचुर्यं न भवति कार्षापणेन सकलेन ॥ ३९८ ॥
तस्मात्क्रयादिसिद्ध्यै पादविभागो यथा तथेहापि ।

स्थानविशेषात्प्रकाशादिवत् ॥ ३४ ॥

सम्बन्धव्यपदेशाद्भेदव्यपदेशदर्शनाच्च तथा ॥ ३९९ ॥

परमन्यत्तत्त्वं स्यादिति यच्चोक्तं निरस्यते तदिदम् ।
व्यपदेशावेतौ हि स्थानविशेषावलम्बनौ भवतः ॥ ४०० ॥
बुद्ध्याद्युपाधियोगादुद्भूतं यद्विशेषविज्ञानम् ।
बुद्ध्युपशमे हि तस्योपशमो यः स हि परेण संबन्धः ॥ ४०१ ॥
सोऽयमुपाध्यायत्तो भाक्तो न हि परिमितत्वसापेक्षः ।
भेदव्यपदेशोऽपि ह्युपाधिभेदप्रयुक्त एवास्य ॥ ४०२ ॥
न हि वस्तुभेदमूलो यथा प्रकाशादिषूपलब्धोऽयम् ।
लोके यथा प्रकाशाकाशप्रभृता उपाधियोगेन ॥ ४०३ ॥
संबन्धव्यपदेशो भेदव्यपदेश एवमेवात्र ।

## उपपत्तेश्च ॥ ३५ ॥

इह चैतादृश एव हि संबन्धो युज्यते न चान्यविधः ॥ ४०४ ॥
स्वमपीतो भवतीति स्वरूपसंबन्धमामनन्त्येवम् ।
तच्च स्वरूपमन्यत्त्वनपायीति श्रुतिस्मृतिप्रथितम् ॥ ४०५ ॥
तस्माद्यदुपाधिकृतं स्वरूपमागन्तुकं भवेदस्य ।
तस्य तिरोभावे हि स्वमपीत इतीह युक्तमुपदिष्टम् ॥ ४०६ ॥
भेदव्यपदेश उपाधिकृतो नान्यादृशोऽत्र संभवति ।
अन्यादृशो यदि स्याच्छ्रुतिसिद्धैकेश्वरत्वबाधः स्यात् ॥ ४०७ ॥
आकाशे दृष्टोऽसावुपाधियोगेन भेदनिर्देशः ।

## तथाऽन्यप्रतिषेधात् ॥ ३६ ॥

सेत्वादिव्यपदेशान्हेतूनुन्मथ्य पक्षमात्मीयम् ॥ ४०८ ॥
हेत्वन्तरेण संप्रत्युपसंहरति ह्यनेन सूत्रेण ।
अत्रान्यप्रतिषेधादन्यन्नास्तीति गम्यते तस्मात् ॥ ४०९ ॥
यस्मादहमेवाधस्तादात्मैवेति वेदवाक्येन ।
अन्यैश्च नेह नानेत्याद्यैरेतैरनन्यपरवाक्यैः ॥ ४१० ॥
ब्रह्मव्यतिरिक्तं किल किंचिन्नास्तीति निश्चितं भवति ।

## अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥ ३७ ॥

परपक्षहेतुनिरसनमन्यप्रतिषेधवर्णनं च कृतम् ॥ ४११ ॥
सर्वगतत्वमनेन ह्यात्मन एतस्य सिद्धमिह भवति ।
सेत्वादिव्यपदेशा यदि मुख्याः स्युस्तदा परिच्छेदः ॥ ४१२ ॥

आत्मन एतस्य स्यात्सेत्वाद्या एवमात्मका हि यतः।
अन्यप्रतिषेधेऽपि ह्यसति परिच्छेद एव तस्य स्यात् ॥ ४१३ ॥
आयामशब्दतः किल सर्वगतत्वं प्रतीयते तस्य।
आयामशब्द इह किल सर्वव्यापिस्वरूपवचनः स्यात् ॥ ४१४ ॥
यावान्वेति श्रुतिरिह तथैव चाऽऽकाशवदिति चान्याऽपि।
ज्यायान्दिव इत्यपरा श्रुतिरप्यायाममस्य दर्शयति ॥ ४१५ ॥
नित्यः सर्वगतः स्थाणुरिति स्मृतिरपि तमस्य दर्शयति।

फलमत उपपत्तेः ॥ ३८ ॥

पूर्वोपदर्शितस्य हि परात्मनो व्यावहारिकी येयम् ॥ ४१६ ॥
ईशेशितव्यभावावस्था तस्या निरूप्यते तदिदम्।
इष्टानिष्टव्यामिश्रलक्षणं कर्मफलमिदं त्रिविधम् ॥ ४१७ ॥
संसारगोचरं तज्जन्तुषु सर्वेषु सुप्रसिद्धं हि।
तत्कर्मणः किमीशात्स्यादिति संदेहनिरसनार्थमिह ॥ ४१८ ॥
पूर्वोपदर्शितस्य हि परात्मनो निर्विशेषभावेन।
फलदातृत्वं कथमिति शङ्काया निरसनार्थमपि किंच ॥ ४१९ ॥
फलदातृत्वं कर्मण एवेत्याक्षेपमखिलमुन्मूल्य।
लक्ष्यार्थबोधसाधनवाच्यार्थसतत्त्वनिर्णयार्थं च ॥ ४२० ॥
सर्वं हि संगमयितुं फलमत इत्यादिसूत्रमारब्धम्।
अस्मात्परात्मनः किल भवति फलं तदिति युक्तमाश्रयितुम् ॥ ४२१ ॥
यस्मादसौ परात्मा सर्वाध्यक्षस्तथैव सर्वज्ञः।
स हि देशकालभेदाभिज्ञः सृष्ट्यादिचित्रमारचयन् ॥ ४२२ ॥
कर्मानुरूपफलमिह दातुं तस्मात्स एव शक्नोति।
कर्म विनाशि क्षणिकं जनयति कालान्तरे फलं तदिति ॥ ४२३ ॥
इदमनुपपन्नमेव हि नाभावाद्भावसंभवो येन।
ननु कर्मेह विनश्यत्फलमनुरूपं हि किंचिदुत्पाद्य ॥ ४२४ ॥
नश्यति कालान्तरितं तच्च फलं भोक्ष्यते हि भोक्त्रेति।
इदमपि न युक्तमेव हि यतः फलत्वं न चास्य संभवति ॥ ४२५ ॥
लोके यथा सुखं वा दुःखं वा यदुपभुज्यते पुंसा।
तदिदं हि कर्मणः फलमिति च तदा वर्णयन्ति न हि पूर्वम् ॥ ४२६ ॥
यदि कर्मजादपूर्वात्फलमुत्पत्स्यत इतीह कल्प्येत।
तदपि न युक्तं यत इदमचेतनं काष्ठलोष्टसममेव ॥ ४२७ ॥

तच्चेतनाप्रवर्तितमचेतनं कथमिह प्रवर्तेत ।
इह चापूर्वास्तित्वे प्रमाणमुपलभ्यते न किंचिदपि ॥ ४२८ ॥
अर्थापत्तिर्या स्यादीश्वरसिद्ध्यैव साऽन्यथासिद्धा ।

श्रुतत्वाच्च ॥ ३९ ॥

उपपत्त्यैव न चासावीश्वर इह भवति कर्मफलहेतुः ॥ ४२९ ॥
श्रुतिबलसमाश्रयादपि भवति परात्मैव कर्मफलहेतुः ।
या हि स वा एष महानज आत्माऽन्नाद एवमाम्नातः ॥ ४३० ॥
अन्नादं वसुदानं परमेश्वरमेनमुपदिशन्ती सा ।
श्रुतिरेवेश्वरमेनं फलस्य दातारमुपदिशत्यत्र ॥ ४३१ ॥

धर्मं जैमिनिरत एव ॥ ४० ॥

इह जैमिनिराचार्यः फलदातारं हि धर्ममाचष्टे ।
श्रुत्युपपत्ती यस्मादिह धर्मपरत्वसाधिके दृष्टे ॥ ४३२ ॥
यत्स्वर्गकामवाक्यं तत्र च विध्यर्थभावनाविषयः ।
यागः स्वर्गोत्पादक इति खल्वर्थः प्रतीयते तस्मात् ॥ ४३३ ॥
नोचेदेवं यागो ह्यननुष्ठातृक इह प्रसज्येत ।
तत्र यजेतेत्येषामुपदेशः सकल एव विफलः स्यात् ॥ ४३४ ॥
क्षणिकस्य कर्मणः किल फलं न किंचिदिति मनसि निश्चित्य ।
पूर्वं निराकृतोऽसौ पक्षः कथमत्र युक्त इति चेन्न ॥ ४३५ ॥
श्रुतिरिह यदि प्रमाणं फलसंबन्धोऽपि कल्पनीयोऽस्य ।
ना [ नुत्पा ] द्यापूर्वं कर्म यदेतद्विनश्यदन्वक्षम् ॥ ४३६ ॥
फलमिह कालान्तरितं दातुं तत्कर्म नैव शक्नोति ।
या हि फलस्य च पूर्वा तथोत्तरा कर्मणो ह्यवस्था या ॥ ४३७ ॥
सैवापूर्वं तेन च फलसंबन्धोऽस्य निरपवादः स्यात् ।
ईशः फलं ददातीत्येतन्नात्रोपपद्यते हि यतः ॥ ४३८ ॥
अविचित्रः परमात्मा कार्यं सकलं विचित्रमाभाति ।
तदनुष्ठानं विफलं वैषम्याद्यपि च तस्य दुर्वारम् ॥ ४३९ ॥

पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ ४१ ॥

फलहेतुमीशमेव हि मन्यत इह बादरायणाचार्यः ।
कर्मण एव फलं स्यादिति तु तुशब्देन परिहृतं भवति ॥ ४४० ॥

यस्मादसौ परात्मा हेतुर्व्यपदिश्यते हि शास्त्रेषु ।
कर्मण इह कारयिता फलस्य दाता च भवति परमात्मा ॥४४१॥
एष ह्येवेत्याद्या श्रुतिरिममर्थं हि सकलमुपदिशति ।
स्मृतिरपि यो यो यां यामित्याद्याऽप्येतमर्थमाचष्टे ॥ ४४२ ॥
सृष्ट्यादिकारणत्वं तस्योपदिशन्ति सर्ववेदान्ताः ।
तेन च फलदातृत्वं परमात्मन एव निश्चितं भवति ॥ ४४३ ॥
सृजति हि परमात्माऽसौ प्रजाः स्वकर्मानुरूपतो यस्मात् ।
तस्य च सापेक्षत्वाद्विचित्रसृष्टौ न बाधकं किमपि ॥ ४४४ ॥
शारीरकमीमांसा मुनिना व्यासेन विरचिता सेयम् ।
चतुरध्यायी तस्यां तृतीयसंज्ञश्च योऽयमध्यायः ॥ ४४५ ॥
तत्र द्वितीयपादे सूत्रार्थो यश्च भाष्यकारोक्तः ।
आर्यावृत्तैरमलैः प्रकाशितो भवतु सोऽयमनवद्यः ॥ ४४६ ॥

इति तृतीयाध्याये द्वितीयपादः समाप्तः ॥ २ ॥

---

## अथ तृतीयपादः ।

---

पूर्वस्मिन्किल पादे ब्रह्म परं निर्विशेषचिन्मात्रम् ।
श्रुत्युपपत्तिभ्यां तन्निर्णीतं किल तृतीयपादेऽत्र ॥ १ ॥
तदुपासनास्वरूप तज्ज्ञाने मुख्यसाधन यत्स्यात् ।
चित्तैकाग्र्यद्वारा तदेतदत्रोपवर्ण्यते सकलम् ॥ २ ॥
तस्मात्संगतिमेनां फलफलिभावात्मिकामिहाऽऽलम्ब्य ।
सविशेषविषयिणीयं विद्याचिन्ता हि सपदि संजाता ॥ ३ ॥

### सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ १ ॥

शाखान्तरोदितानि हि तद्विज्ञानानि चैकरूपाणि ।
किंवा तानि विभिन्नानीति प्रथमं विचार्यते तत्र ॥ ४ ॥
ननु निणीतं पूर्वं पूर्वापरभेदरहितमेकरसम् ।
विज्ञानघनं तत्किल विज्ञेयं ब्रह्म भवति नान्यदिति ॥ ५ ॥
तद्विज्ञाने हि कथं भेदाभेदैकविषयिणी चिन्ता ।
कर्मबहुत्ववदेव ब्रह्मबहुत्वं न चेह संभवति ॥ ६ ॥
कथमेकस्मिन्ब्रह्मणि विज्ञानानि ह्यनेकरूपाणि ।
अन्यविधेऽपि ह्यर्थे कथमन्यविधं भवेदिद ज्ञानम् ॥ ७ ॥

ब्रह्मण्येकस्मिन्नपि तानि बहून्युत्तिपादयिषितानि ।
तेषां तदेकमवाभ्रान्तं भ्रान्तानि चेतराणीति ॥ ८ ॥
वेदान्तेष्विह सर्वेष्वपि दुर्वारो भवेदनाश्वासः ।
तस्मात्कर्तुमशक्या ब्रह्मणि विज्ञानभेदशङ्केयम् ॥ ९ ॥
नैवेह चोदनाद्यविशेषात्तदभेदवर्णनं युक्तम् ।
ब्रह्मज्ञानं यस्मादचोदनालक्षणं विनिर्दिष्टम् ॥ १० ॥
अविधिप्रधानवाक्यैस्तज्जन्यत इति समन्वये तस्मात् ।
विज्ञानभेदचिन्ता न कर्तुमत्रोचितेति चेन्मैवम् ॥ ११ ॥
सविशेषविषयकेयं चिन्ता प्राणादिविषयका च तथा ।
तद्विषये विज्ञाने चिन्ता सेयं हि भवति युक्ततमा ॥ १२ ॥
कर्मवदुपासनानां भेदाभेदौ यतोऽत्र संभवतः ।
दृष्टादृष्टफलानि हि कर्मवदेतान्युपासनान्यपि च ॥ १३ ॥
क्रममुक्तिसाधनान्यप्युपासनानीह कानिचित्सन्ति ।
सम्यग्ज्ञानद्वारा साक्षान्मुक्तिप्रयोजनानि तथा ॥ १४ ॥
तेष्वेषा खलु चिन्ता तत्तद्वेदान्तवाक्यनिर्दिष्टम् ।
ब्रह्मज्ञानं यदिदं किं भिन्नमभिन्नमेव वेत्येवम् ॥ १५ ॥
यदि भिन्नं विज्ञानं गुणोपसंहारकारणं नेह ।
तत्रैतद्विज्ञानं प्रतिवेदं भिन्नमिति तु युक्ततमम् ॥ १६ ॥
यस्माज्जैमिनिना किल शाखाभेदेन कर्मभेदे हि ।
नामादिहेतवः किल ये निर्दिष्टास्त एव चेहापि ॥ १७ ॥
नाम च रूपं धर्मविशेषः पुनरुक्तिरपि च निन्दा च ।
प्रायश्चित्तमशक्तिः समाप्तिरन्यार्थदर्शनं चेति ॥ १८ ॥
तत्र च नाम्नस्तावद्भेदप्रतिपत्तिहेतुता दृष्टा ।
ज्योतिष्टोमपरेऽस्मिन्नथैष इत्यादिवेदवाक्ये हि ॥ १९ ॥
ज्योतिष्पदं द्विवारं पठितं तत्कर्मभेदमाचष्टे ।
वेदान्तान्तरविहितेष्वपि विज्ञानेषु भिन्नाभिन्नं हि ॥ २० ॥
नामेह तैत्तिरीयकमपि वाजसनेयकं च कौथुमकम् ।
शाट्यायनकं चेति हि तेन च विज्ञानभेद इह भवति ॥२१ ॥
यश्चापि रूपभेदः स कर्मभेदस्य बोधको दृष्टः ।
अत्रैव वैश्वदेव्यामिक्षा वाजिभ्य एवमादौ हि ॥ २२ ॥

पञ्चाग्निगोचरायां विद्यायामपि च दृश्यते स खलु ।
केचित्तु षष्ठमग्निं ह्यन्ये त्वग्नीन्पठन्ति पञ्चैव ॥ २३ ॥
प्राणानां संवादेऽप्येवं केचित्पठन्ति वागादीन् ।
ऊनानधिकान्केचित्तेन च विज्ञानभेद इह युक्तः ॥ २४ ॥
योऽसौ धर्मविशेषः स कर्मभेदस्य साधको दृष्टः ।
कारीर्यध्ययने किल ये च स्युस्तैत्तिरीयकास्तेषाम् ॥ २५ ॥
भूमौ भोजनरूपो धर्मः सोऽयं हि भवति नान्येषाम् ।
तत्राऽऽथर्वणिकानां शिरोव्रतं धर्म इति हि निर्दिष्टम् ॥ २६ ॥
अन्येषां तदभावाद्विद्याभेदः प्रतीयते तेन ।
पुनरुक्त्यादय एवं विद्याभेदप्रदर्शनार्थाः स्युः ॥ २७ ॥
तस्मात्प्रतिवेदान्तं विज्ञानं भिन्नभिन्नमेवेति ।
एवं प्राप्ते ब्रूते विज्ञानमभिन्नमेव तत्रेति ॥ २८ ॥
सकलैरपि वेदान्तैर्विज्ञानानि प्रतीयमानानि ।
तत्तद्वेदान्तेष्वपि तानि न भिन्नानि किंत्वभिन्नानि ॥ २९ ॥
यस्माच्च चोदनाभिरविशेषोऽत्र प्रतीयते तस्मात् ।
इह चोदना विधायकशब्दः पुरुषप्रयत्नरूपो वा ॥ ३० ॥
सूत्रे चाऽऽदिग्रहणात्तत्तच्छाखाधिकरणसिद्धान्ते ।
सूत्रमपञ्चिता ये ह्यभेदहेतव इहानुकृष्यन्ते ॥ ३१ ॥
धात्वर्थावच्छिन्नो यत्नोऽसौ चोदनाऽत्र निर्दिष्टा ।
सा खल्विहाग्निहोत्रे शाखाभेदेऽपि तुल्यरूपैव ॥ ३२ ॥
जुहुयादिति प्रतीयत एवं प्राणाद्युपास्तिवाक्येऽपि ।
ज्येष्ठं च श्रेष्ठं चेत्यादौ छन्दोगवाजिशाखायाम् ॥ ३३ ॥
सा चोदनैकरूपा दृष्टान्तेन च न भेदशङ्काऽत्र ।
ज्येष्ठश्च श्रेष्ठश्च स्वानां भवतीति वाक्यनिर्दिष्टम् ॥ ३४ ॥
फलमपि तुल्यं तद्वद्विज्ञानस्यास्य रूपमपि तुल्यम् ।
ज्यैष्ठ्यश्रैष्ठ्यादिगुणैर्यदन्वितं प्राणतत्त्वमिह रूपम् ॥ ३५ ॥
विज्ञानस्य च रूपं विज्ञेयं द्रव्यदेवते हि यथा ।
यागस्य या समाख्या साऽपि समा प्राणविद्येति ॥ ३६ ॥
तस्माद्विज्ञानमिदं शाखाभेदेऽप्यभिन्नमेव स्यात् ।
विद्यान्तरेषु पञ्चाग्निप्रभृतिष्वेवमखिलमपि योज्यम् ॥ ३७ ॥

ये भेदहेतवः किल नामाद्या दर्शिता हि पूर्वत्र ।
ते परिहृता न नाम्नेत्याद्येन प्रथम एव काण्डे हि ॥ ३८ ॥
अत्रापि परिहरिष्यति भेदान्नेत्येवमादिसूत्रेण ।

भेदान्नेति चेन्नैकस्यामपि ॥ २ ॥

ननु सकलनिगमगम्यं विज्ञानमभिन्नमिति हि यच्चोक्तम् ॥ ३९ ॥
पञ्चाग्न्युपासनादौ गुणभेदान्नोपपद्यते तदिदम् ।
विद्यायामेतस्यां केचित्षष्ठं समामनन्त्यग्निम् ॥ ४० ॥
पञ्चैवाग्नीनपरे छन्दोगाः किल पठन्ति न च षष्ठम् ।
कथमुभयेषामेषामेका विद्योपपद्यते तत्र ॥ ४१ ॥
नाप्यत्र शक्यते हि प्रत्येतुमसौ गुणोपसंहारः ।
अपि च तथा प्राणानां संवादे श्रेष्ठवर्जिताश्चतुरः ॥ ४२ ॥
छन्दोगाः प्राणान्वाचं चक्षुः श्रोत्रमामनन्ति मनः ।
वाजिन इह रेतो वै प्रजापतिरितीह पञ्चमं त्वन्यम् ॥ ४३ ॥
वेद्यमपि भिन्नमेव ह्यावापोद्वापभेदतो भाति ।
वेद्यस्वरूपभेदे विद्याभेदोऽत्र युक्त इति चेन्न ॥ ४४ ॥
विद्यायामेकस्यामेवंजातीयको हि गुणभेदः ।
युक्तो यद्यपि षष्ठस्याग्नेरुपसंहृतिर्न चेह स्यात् ॥ ४५ ॥
भवतु तथाऽपि न विद्याभेदोऽसावत्र शङ्कितुं शक्यः ।
द्युप्रमुखाः पञ्चाग्नय उभयत्र प्रत्यभिज्ञया हि समाः ॥ ४६ ॥
न हि षोडशिनो ग्रहणाग्रहणाभ्यां भिद्यतेऽतिरात्रोऽसौ ।
अग्नय एव हरन्तीत्येवं षष्ठाग्निमपि पठन्त्येते ॥ ४७ ॥
वाजसनेयिन इह खल्वग्निषु सांपादिकेषु पञ्चसु च ।
समिदादिकल्पनाया अनुवृत्ताया निवृत्तये चैवम् ॥ ४८ ॥
अग्निर्भवति समित्समिदित्यन्तं वाक्यमामनन्ति हि ते ।
तस्माच्छन्दोगैरप्युपसंहर्तुं हि शक्यते स गुणः ॥ ४९ ॥
न ह्यत्र पञ्चसंख्याविरोधशङ्काऽपि भवति युक्ततमा ।
सांपादिकाग्न्यभिप्रायैवैषा भवति पञ्चसंख्याऽत्र ॥ ५० ॥
प्राणाद्युपासनेष्वप्युपसंहारोऽधिकस्य न विरुद्धः ।
रेतस आवापोऽयं छान्दोग्ये नैव दृश्यते किंतु ॥ ५१ ॥

वाजसनेयक एव च्छान्दोग्ये भवति तस्य चोद्वापः।
नैतावन्मात्रेण हि विद्याभेदोऽत्र शङ्कितुं शक्यः ॥ ५२ ॥
वेद्यांशस्य च कस्यचिदावापोद्वापयोस्तथैवेह।
प्राचुर्येणाभेदापगमान्नैवेह भिद्यते विद्या ॥ ५३ ॥

स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च

सववच्च तन्नियमः ॥ ३ ॥

यच्चाऽऽथर्वणिकानां विद्यां प्रति किल शिरोव्रतं विहितम्।
अन्येषां न तथेति हि विद्याभेदोऽत्र युक्त इत्युक्तम्॥ ५४ ॥
तत्तु न युक्तं यस्मात्स्वाध्यायस्यैव भवति धर्मोऽयम्।
नासौ विद्याधर्मो यतस्तथैवावगम्यते तदिदम् ॥ ५५ ॥
आथर्वणिका इदमपि वेदव्रतरूपमुपदिशन्त्यत्र।
ते हि समाचाराख्ये ग्रन्थे स्वाध्यायधर्मरूपतया ॥ ५६ ॥
नैतदचीर्णव्रत इति वाक्यं यच्चोपदर्शित तत्र।
अधिकृतविषयादेतच्छब्दादध्ययनशब्दतश्चापि ॥ ५७ ॥
निर्धार्यते तदेतत्स्वोपनिषदधीतिधर्म एवेति।
ननु तेषामिति वाक्ये व्रतमिह विद्याङ्गमेव निर्दिष्टम् ॥५८॥
अध्ययनधर्म एतत्कथमिति नैवेह शङ्कितुं शक्यम्।
तत्रैतामित्यस्मात्प्रकृतस्यैव हि भवेत्परामर्शः ॥ ५९ ॥
इह च प्रकृतो ग्रन्थस्तत्संयोग्येव भवति धर्मोऽयम्।
अत्र च सववच्चेति हि निदर्शनं स्याद्यथा सवाः सप्त ॥ ६० ॥
सौर्यादयः शतौदनपर्यन्ता विश्रुता हि ते च किल।
वेदान्तरोपदिष्टत्रेताग्निभिरनुपदिष्टसंबन्धाः ॥ ६१ ॥
किंत्वाथर्वणिकैकाग्न्यभिसंबन्धाच्च ते नियम्यन्ते।
आथर्वणिकानामेवेत्येवमिहापि यस्त्वयं धर्मः ॥ ६२ ॥
अध्ययनशब्दयोगात्तत्रैव नियम्यते न विद्यायाम्।
तस्मादिदमनवद्यं विद्यैकत्वं यदेतदुपदिष्टम् ॥ ६३ ॥

दर्शयति च ॥४॥

वेद्यैकत्वादेव च विद्यैकत्वं हि दर्शयति वेदः।
सर्वे वेदा इति खलु तथैतेमेवाति वेदभागोऽपि ॥ ६४ ॥

एवं कठवल्ल्यामपि महद्भयं वज्रमेवमाद्येन ।
वाक्येन चेश्वरस्य हि भयहेतुत्वं यदेतदुपदिष्टम् ॥ ६५ ॥
तस्यैव तैत्तिरीयेऽप्यथ तस्येत्यादिना परामर्शः ।
एवं वाजसनेयकवाक्ये वैश्वानरो यथैवोक्तः ॥ ६६ ॥
प्रादेशमात्ररूपश्छान्दोग्येऽपि च तथैव निर्दिष्टः ।
यस्त्वेतमेवमाद्यैस्तस्मात्सर्वत्र भवति विद्यैका ॥ ६७ ॥

उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ॥ ५ ॥

वेदान्तेष्वखिलेष्वपि विज्ञानं त्वेकरूपमुपदिष्टम् ।
विज्ञानैकत्वे यत्प्रयोजनं तदिह वर्ण्यते सूत्रे ॥ ६८ ॥
विज्ञानैकत्वे किल ये चान्यत्रोपदर्शिता हि गुणाः ।
उपसंहर्तव्यास्ते सर्वत्रैव च समानविज्ञाने ॥ ६९ ॥
अर्थाभेदादित्ययमुक्तार्थस्यैव साधको हेतुः ।
यश्चैकत्र गुणाना विशिष्टविद्योद्भवो भवेदेषः ॥ ७० ॥
ये चाग्निहोत्रधर्मा विधिशेषाः श्रुतिषु दर्शितास्तेषाम् ।
तत्राग्निहोत्रकर्मण्येकस्मिन्साध्यतोपसंहारः ॥ ७१ ॥

अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥ ६ ॥

वाजसनेयिब्राह्मणवाक्यं ते हेति दृश्यते तत्र ।
सत्त्वैकवृत्तिरूपा देवा असुरान्रजस्तमोरूपान् ॥ ७२ ॥
उद्गीथकर्मणा तानतीत्य देवत्वमाशु गच्छामः ।
इति निश्चित्य हि देवा ऊचुस्त्वं न इति वाचमादौ हि ॥ ७३ ॥
तत एते देवाः किल वागाद्या असुरपाप्मना विद्धाः ।
इति निन्दित्वा मुख्यं प्राणं त्वं न इति तत्र तानूचुः ॥ ७४ ॥
तच्छ्रुत्वा तत एष प्राणस्तेभ्यस्तथोदगायदिति ।
छान्दोग्येऽपि तथैव प्रक्रम्य ततस्तदेतदुपदिष्टम् ॥ ७५ ॥
उद्गीथमुपासांचाक्रिर इत्यवसानमथ ह इत्यादि ।
उभयत्रापि प्राणप्रशंसनं तुल्यमेव भाति यतः ॥ ७६ ॥
तेन प्राणस्येयं विद्या स्यात्तत्र संशयो भवति ।
किंवा विद्याभेदो विद्यैकत्वमिह भवेदिति वा ॥ ७७ ॥
तत्र च विद्यैकत्वं पूर्वन्यायेन युक्तमाभाति ।
प्रक्रमभेदान्नन्विह विद्यैकत्वं कथं भवेद्युक्तम् ॥ ७८ ॥

वाजिभिरुपदिष्टोऽसौ प्राणश्चोद्गीथकर्तृभावेन।
उद्गीथत्वेनैव च्छन्दोगैः प्राण एष निर्दिष्टः ॥ ७९ ॥
कथमियमेका विद्या स्यादिति चेन्नैष दोष इह भवति।
एतावन्मात्रेण च न हि विद्यैकत्वमपगतं भवति ॥ ८० ॥
यस्माद्विशेषोऽपि हि बहुतर उपलभ्यतेऽयमुभयत्र।
देवासुरसङ्ग्रामोपक्रमणं ह्यसुरविजयतात्पर्यम् ॥ ८१ ॥
उद्गीथोपन्यासस्तथैव वागादिकीर्तनं चापि।
तन्निन्दया च मुख्यप्राणस्यास्य व्यपाश्रयस्तद्वत् ॥ ८२ ॥
तद्वीर्यादसुरलयश्चाश्मादिनिदर्शनेन चेत्येवम्।
बहवोऽर्था उभयत्राप्यविशिष्टा एव चोपलभ्यन्ते ॥ ८३ ॥
सामानाधिकरण्यं श्रुतमुद्गीथेन वाजिवाक्येऽपि।
प्राणस्यैष उ वेति च्छन्दोगानां तथोपनिषदिह [ हि ] ॥ ८४ ॥
अस्योद्गीथपदस्य च लक्षयितव्यं हि भवति कर्तृत्वम्।
तस्माद्विद्यैकत्वं वाजिच्छान्दोग्यशाखयोरिति चेत् ॥ ८५ ॥

न वा प्रकरणभेदात्परोवरीयस्त्वादिवत् ॥ ७ ॥

इह विद्याभेदः स्याद्विद्यैकत्वं हि न न्याय्यम्।
हेतुप्रकरणभेदः प्रक्रमभेदात्मको हि भवतीह ॥ ८६ ॥
छान्दोग्ये खल्वादावोमित्येतदिति वाक्यमुपलब्धम्।
अक्षरमुद्गीथमुपासीतेत्योंकारमत्र निर्दिश्य ॥ ८७ ॥
रसतमतादिगुणोपव्याख्यानं चापि तत्र कृत्वैव।
अथ खल्वेतस्योपव्याख्यानमितीह पुनरपि ह्येनम् ॥ ८८ ॥
उद्गीथावयवात्मकमोंकारान्तं किलानुवृत्यैव।
देवासुरवृत्तान्तद्वारा तं प्राणमिति हि निर्दिष्टम् ॥ ८९ ॥
यदिदं वाक्यं तत्र च यद्युद्गीथो हि सकलभक्तिः स्यात्।
तस्याः कर्तोद्गाताऽप्युपरुध्येत ह्युपक्रमे सोऽयम् ॥ ९० ॥
स्याल्लक्षणा तदाऽत्र ह्युपसंहारोऽप्युपक्रमायत्तः।
तेनोद्गीथावयवे ह्योंकारे प्राणदृष्टिरिह वाच्या ॥ ९१ ॥
वाजसनेये चोद्गीथावयवग्रहणकारणाभावात्।
सकलैव साममक्तिर्ह्युद्गीथपदेन बोध्यते तत्र ॥ ९२ ॥
उद्गायेत्यपि तस्याः कर्ता ह्युत्विक्च योऽयमुद्गाता।

स खलु प्राणत्वेन हि निरूप्यत इतीह भिन्नगतिरेषा ॥ ९३ ॥
सामानाधिकरण्यं यच्चोद्गीथेन तत्र निर्दिष्टम् ।
तदपि प्राणस्योद्गातृत्वेन निदर्शयिषितरूपस्य ॥ ९४ ॥
सर्वात्मत्वप्रतिपत्त्यर्थमतो नेह भवति विद्यैक्यम् ।
उद्गीथभाव इव पुनरुद्गातृत्वं ह्युपासनार्थतया ॥ ९५ ॥
उपदिश्यते यतोऽसावुद्गाता प्राणवीर्यमालम्ब्य ।
औद्गात्रकर्म कुरुते तस्मान्नेहास्त्यसंभवाशङ्का ॥ ९६ ॥
वाचा प्राणेनासावुद्गायेदिति हि वर्णितं चैतत् ।
भेदेऽवगम्यमाने वाक्यच्छायानुकारमात्रेण ॥ ९७ ॥
नैव समानार्थत्वाध्यवसानं स्याद्यथाऽभ्युदयवाक्ये ।
त्रेधेति वाक्यमुक्तं तथैव पशुकामवाक्यमुपदिष्टम् ॥ ९८ ॥
त्रेधा तण्डुलकरणं तथैव चैतन्यदेवतापनयः ।
उभयत्र तुल्यमेतत्तथाऽपि यागो विभिद्यते तत्र ॥ ९९ ॥
पूर्वत्र देवतान्तरविनियोगो नैव कर्मभेदः स्यात् ।
उत्तरवाक्ये तु पुनर्यागान्तरमेव दर्शितं तत्र ॥ १०० ॥
प्रथमे किलाभ्युदेति त्रेधेत्येवं ह्युपक्रमो दृष्टः ।
उत्तरवाक्ये यः पशुकामः स्यादित्युपक्रमो भवति ॥ १०१ ॥
सोऽमावस्यामिष्ट्वेत्यनेन यागान्तरं च तत्रोक्तम् ।
एवमुपक्रमभेदात्तत्र यथा यागभेद उपदिष्टः ॥ १०२ ॥
तद्वदुपक्रमभेदाद्विद्याभेदोऽत्र भवति युक्ततरः ।
अत्र च परोवरीयस्त्वादिवदिति दर्शितो हि दृष्टान्तः ॥ १०३ ॥
उद्गीथे परमेश्वरदृष्ट्यध्यासे समानरूपेऽपि ।
आकाशो ह्येवैभ्यो ज्यायानित्यादिवाक्यनिर्दिष्टम् ॥ १०४ ॥
तत्तद्गुणसंवलितोद्गीथोपासनमिति प्रसिद्धं यत् ।
अक्ष्यादिगतहिरण्यश्मश्रुत्वहिरण्यकेशतादिगुणैः ॥ १०५ ॥
अथ य इतिवाक्यदृष्टादुद्गीथोपासनाद्यथा भिन्नम् ।
शाखायामेकस्यां नेह यथा स्याद्गुणोपसंहारः ॥ १०६ ॥
शाखान्तरस्थितेष्वप्युपासनेष्वेवमनुपसंहारः ।

संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॥ ८ ॥

नन्विह संज्ञैकत्वाद्विद्यैकत्वं हि युक्तमाश्रयितुम् ॥ १०७ ॥

उभयत्राप्येकैव ह्युद्गीथोपासनेति संज्ञेयम् ।
इति चेदेतस्योत्तरमुक्तं प्राक्किल न वेतिसूत्रेण ॥ १०८ ॥
श्रुत्यनुगतं हि तत्स्यात्संज्ञैकत्वं श्रुतेर्बहिर्भूतम् ।
तच्च प्रसिद्धभेदासूपास्तिषु हि प्रदर्शितं पूर्वम् ॥ १०९ ॥
इह चाग्निहोत्रदर्शप्रभृतीना हि प्रसिद्धभेदानाम् ।
काठकपठितानां किल काठकसंज्ञा भवत्यसावेका ॥ ११० ॥
तद्वदिहापि भविष्यति संज्ञा यत्र तु न भेदहेतुः स्यात् ।
संवर्गोपास्त्यादिषु विद्यैकत्वं हि तत्र तेन स्यात् ॥ १११ ॥

व्याप्तेश्च समञ्जसम् ॥ ९ ॥

अत्र च्छान्दोग्ये खल्वोमित्येतदिति वाक्यमुपदिष्टम् ।
अक्षरमुद्गीथमुपासीतेति च तत्र दृश्यते वाक्यम् ॥ ११२ ॥
सामानाधिकरण्यं त्विहाक्षरोद्गीथशब्दयोर्दृष्टम् ।
तेनात्राध्यासो वा किंवाऽप्यपवाद उत तदेकत्वम् ॥ ११३ ॥
किंवा विशेषणं स्यादिति संदेहे विचार्यते तदिदम् ।
अध्यासो नामायं यत्र च वस्तुद्वये हि बुद्धिस्ते ॥ ११४ ॥
अनिवर्तितात्मबुद्धावेकस्मिन्नन्यबुद्धिरेव स्यात ।
नामप्रतिमादौ वा यथा भवेद्ब्रह्मविष्णुबुद्धिरियम् ॥ ११५ ॥
एवमिहाक्षरबुद्धिः स्यादुद्गीथे किमक्षरे वा स्यात् ।
उद्गीथबुद्धिरिति पुनरपवादो यत्र पूर्वनिर्दिष्टे ॥ ११६ ॥
पूर्वनिविष्टायां खलु बुद्धौ मिथ्येति निश्चितायां या ।
पश्चादुपजाता किल यथार्थबुद्धिर्हि पूर्वसिद्धायाः ॥ ११७ ॥
मिथ्याबुद्धिर्भवति हि निवर्तिका सैव चायमपवादः ।
देहेन्द्रियसंघाते चाऽऽत्ममतिः किल चिरंतनीया स्यात् ।' ११८ ॥
सा चाऽऽत्ममात्रगोचरयथार्थबुद्ध्या निवर्त्यते हि यथा ।
एवमिहाक्षरबुद्ध्या चोद्गीथमतिस्तथैव तद्बुद्ध्या ॥ ११९ ॥
अक्षरबुद्धिर्वैयं निवर्त्यत इति ह्यवश्यमिह वाच्यम् ।
उद्गीथाक्षरपदयोरेकत्वं ह्यनतिरिक्तवृत्तित्वम् ॥ १२० ॥
भूदेवोऽसौ ब्राह्मण इत्यादौ दृष्टमेतदेकत्वम् ।
सामान्यवाचकस्य च विशेषपरता विशेषणं प्रकृते ॥ १२१ ॥
यत्सर्ववेदसाधारणमोमित्यक्षरं हि तस्येह ।
ग्रहणापत्तावौद्गात्रे विषये तत्समर्पणं यदिदम् ॥ १२२ ॥

नीलं यदुत्पलं स्यात्तदानयेत्यत्र दृष्टमेतत्स्यात् ।
य इहोद्गीथोंकारस्तमुपासीतेति योजनेह स्यात् ॥ १२३ ॥
सामानाधिकरण्ये विमृश्यमाने त एत इह मान्ति ।
तत्रान्यतरावधृतौ कारणविरहादनिश्चये पठति ॥ १२४ ॥
व्याप्तेश्चेति चशब्दस्तुशब्दतुल्यार्थको भवेदत्र ।
स हि पक्षत्रयनिरसनफलो यतस्ते त्रयो निरस्यन्ते ॥ १२५ ॥
तत्र विशेषणपक्षो निरवद्य इतीह गृह्यते नान्यः ।
अध्यासे किल तावद्यद्बुद्धिर्यदि परत्र चाध्यस्ता ॥ १२६ ॥
तच्छब्दलक्षणाऽपि च फलमपि कल्प्येत यदुचितं तत्र ।
आपयितेति श्रुतमपि फलं तदाप्त्यादिदृष्टिफलमेव ॥ १२७ ॥
अध्यासे तु यथा वा न फलं किंचित्तथाऽपवादेऽपि ।
मिथ्याज्ञानापायो न चेह पुरुषार्थसाधको भवति ॥ १२८ ॥
नाप्यत्र वस्तुतत्त्वप्रतिपादनपरमिदं भवेद्वाक्यम् ।
किंतूपासनाविधिपरमेतद्वाक्यं ततो न युक्तोऽयम् ॥ १२९ ॥
एकत्वपक्ष इह यदि पदद्वयोच्चारण वृथैव स्यात् ।
एकेनैव पदेन हि विवक्षितार्थः समर्प्यते यस्मात् ॥ १३० ॥
न च हौत्रविषयभूतोंकारे ह्युद्गीथशब्द इह दृष्टः ।
नैवेह सकलभक्तावोंकारस्य प्रसिद्धिरपि दृष्टा ॥ १३१ ॥
तेन विशेषणपक्षः परिशेषादेष गृह्यते नान्यः ।
इह सर्ववेदसाधारणमक्षरमेतदिति विचार्यैव ॥ १३२ ॥
उद्गीथेनाक्षरमिह विशिष्यते तेन सकलमुपपन्नम् ।
नन्वेतस्मिन्पक्षेऽप्युद्गीथपदस्य लक्षणा तुल्या ॥ १३३ ॥
यस्मादुद्गीथपदं ह्यवयवलक्षकमितीह वक्तव्यम् ।
सत्यं हि लक्षणायामपि किल दृष्टो हि संनिकर्षोऽत्र ॥ १३४ ॥
अध्यासे चार्थान्तरबुद्धिश्चार्थान्तरे विनिक्षिप्ता ।
तेनेह विप्रकृष्टा भवतीय लक्षणा हि तत्पक्षे ॥ १३५ ॥
अत्र विशेषणपक्षे ह्यवयविवचनेन गृह्यतेऽवयवः ।
इति भवति संनिकर्षो लोके समुदायवाचकाः शब्दाः ॥ १३६ ॥
अवयवमात्रपरास्ते पटनगरादिषु तथैव दृश्यन्ते ।
तस्माद्व्याप्तेर्हेतोरोमित्यस्याक्षरस्य भवतीदम् ॥ १३७ ॥

उद्गीथमिति विशेषणमत इह सकलं समञ्जसं भवति ।

सर्वाभेदादन्यत्रेमे ॥ १० ॥

प्राणानां संवादे छन्दोगानां च वाजिनां च तथा ॥ १३८ ॥
श्रैष्ठ्यादिगुणविशिष्टप्राणस्योपास्यता विनिर्दिष्टा ।
वागादयो वसिष्ठत्वादिगुणैरन्विता हि तत्रोक्ताः ॥ १३९ ॥
ते च वसिष्ठत्वाद्याः प्राणे प्रत्यर्पिता हि पुनरपि च ।
यद्वाऽहमिह वसिष्ठस्त्वमिह वसिष्ठोऽस्यथापि तेनेति ॥ १४० ॥
अन्येषां कौषीतकिमुख्यानां प्राणकरणसंवादे ।
प्राणश्रैष्ठ्य कथित न वसिष्ठत्वादयो गुणास्तत्र ॥ १४१ ॥
क्वचिदुक्ता हि वसिष्ठत्वादय एते गुणाः किमन्यत्र ।
अस्येरन्नुत नास्येरन्निति संदेह एष भवति यतः ॥ १४२ ॥
एवं विद्वान्प्राणे निःश्रेयसमिति पठन्ति वाक्यं ते ।
एवंशब्देन च खलु वेद्यं वस्त्विह निवेद्यते किमपि ॥ १४३ ॥
एवंशब्दः संनिहितालम्बो दृश्यते हि सर्वत्र ।
शाखान्तरपठितं गुणजातं नार्हति निवेदयितुमेषः ॥ १४४ ॥
यस्मात्स्ववाक्यदर्शितगुणैर्निराकाङ्क्षमेव तद्दृष्टम् ।
इत्याक्षेपे प्राप्ते प्रतिवचनं तस्य चैवमाचष्टे ॥ १४५ ॥
अस्येरन्क्वचिदुक्ता वसिष्ठताप्रभृतयो गुणा एते ।
अन्यत्रापि च सर्वाभेदादेवं प्रतीयते ह्येतत् ॥ १४६ ॥
सर्वत्रैवाभिन्नं प्रतीयते प्राणविषयविज्ञानम् ।
संवादवाक्यमेतत्स्वरूपमुपलभ्यते हि सर्वत्र ॥ १४७ ॥
यदि विज्ञानमभिन्नं तदा कुतोऽन्यत्र ते हि नास्येरन् ।
नन्वेवंशब्दोऽयं स्ववाक्यनिर्दिष्टमेव गुणजातम् ॥ १४८ ॥
वेद्यत्वाय समर्पयतीत्युक्तं कथमिहैवमिति चेन्न ।
कौषीतकिवाक्यगतेनैवशब्देन वाजिवाक्यगतम् ॥ १४९ ॥
तद्गुणजातमसंशब्दितमेवासंनिकृष्टभावेन ।
एवमपि वाजिशाखीयैवंशब्देन परिगृहीतं तत् ॥ १५० ॥
न हि परशाखागतमप्यभिन्नविज्ञानसक्तगुणजातम् ।
तत्रैव च स्वशाखागताद्विशिष्येत कथमिदं शास्त्रे ॥ १५१ ॥
श्रुतहानिरश्रुतार्थप्रकल्पना वा न चेह संभवति ।
एकत्र च श्रुता ये ते सर्वत्र श्रुता भवन्त्येव ॥ १५२ ॥

न हि देवदत्त एकः शौर्यादिगुणैः स्वदेशविख्यातः ।
देशान्तरे विभावितशौर्यगुणोऽप्यतद्गुणो भवति ॥ १५३ ॥
परिचयवशतो देशान्तरे गुणास्ते यथा विभाव्यन्ते ।
अभियोगादेवैते गुणाश्च शाखान्तरे तथाऽस्येरन् ॥ १५४ ॥
तस्मादेकत्रोक्ता गुणा य एकप्रधानसंबन्धाः ।
उपसंहर्तव्यास्ते सर्वत्रैवेति निश्चितं भवति ॥ १५५ ॥

आनन्दादयः प्रधानस्य ॥ ११ ॥

ब्रह्मप्रतिपादनपरवेदान्तेषु प्रदर्शिता ह्येते ।
आनन्दरूपता विज्ञानघनत्वं च सर्वगत्वमपि ॥ १५६ ॥
सर्वात्मत्वमितीदृग्विधाः क्वचिद्ब्रह्मणो गुणास्तत्र ।
यत्र श्रूयन्ते ते प्रतिपाद्याः किं भवन्ति तत्रैव ॥ १५७ ॥
किंवा सर्वत्रैते प्रतिपाद्या इति तु भवति संदेहः ।
प्राणस्य विशेषोऽसाविति युक्तः प्राग्गुणोपसंहारः ॥ १५८ ॥
ब्रह्मापास्तविशेषं तदद्वितीयमिति दर्शितं श्रुत्या ।
तत्र च शाखान्तरगतपदोपसंहारकारणं न भवेत् ॥ १५९ ॥
इत्याशङ्कां निरसितुमिदमधिकरणं प्रदर्शितं मुनिना ।
आनन्दत्वादीनि ब्रह्मण्येतानि कल्पितान्येवं ॥ १६० ॥
तदभिव्यञ्जकवृत्तिप्रभेदतस्तानि भान्ति भिन्नानि ।
तेषामुपसंहारस्तदर्थकानन्दिपदकदम्बस्य ॥ १६१ ॥
उच्चारणं यदेतत्सर्वत्रैवैकवाक्यभावेन ।
तेन च तद्धर्माणां विरोधशङ्का निवर्तिता भवति ॥ १६२ ॥
उपसंहृतानि तानि च पदान्यखण्डं हि लक्षयन्ति परम् ।
एकस्मिन्हि पदे न हि विरोधशङ्का न लक्षणावतरः ॥ १६३ ॥
धर्मा आनन्दादय इह ये ते ब्रह्मणः प्रधानस्य ।
धर्मास्तस्मादेते प्रतिपत्तव्या भवन्ति सर्वत्र ॥ १६४ ॥
पूर्वाधिकरणदर्शितनिदर्शिताद्भवति तदुपसंहारः ।
ब्रह्मैक्यादानन्दत्वादीनां ननु यथोपसंहारः ॥ १६५ ॥
सर्वत्र सगुणविद्यागतधर्माणां तथा स किं न स्यात् ।
ये तैत्तिरीयके हि प्रियशीर्षत्वादयो विनिर्दिष्टाः ॥ १६६ ॥
उपसंहारस्तेषामपि युक्तो ब्रह्मणीत्यतः पठति ।

प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ १२ ॥

प्रियशीर्षत्वादीनां धर्माणां तैत्तिरीयकोक्तानाम् ॥ १६७ ॥
नान्यत्र प्राप्तिः स्याद्यत एते ह्युपचितापचितरूपाः ।
इह चोपचयापचयौ सति भेदे सगुण एव संभवतः ॥ १६८ ॥
ब्रह्म तु निरस्तभेदं श्रुतिवाक्यैरेकमित्युपन्यस्तम् ।
तरतमभावोपेता निर्भेदे प्राप्नुयुः कथं हीमे ॥ १६९ ॥
ब्रह्मात्मका न चैते ब्रह्मज्ञानोपयोगिनो नापि ।
एते हि कोशधर्मा एवेत्येतत्प्रपञ्चितं पूर्वम् ॥ १७० ॥
अपि च परस्मिन्ब्रह्मणि चित्तावतरणनिमित्तरूपतया ।
परिकल्पितास्त एते तस्मान्नान्यत्र भवति तत्प्राप्तिः ॥ १७१ ॥
आलम्ब्यैतान्धर्मानिह सूत्रे न्यायमात्रमुपदिष्टम् ।
स च निश्चितेशधर्मेषूपास्तय इह किलोपदिष्टेषु ॥ १७२ ॥
संयद्वामत्वादिषु नेतव्यः सत्यकामतादिषु च ।
सत्येवोपास्यैक्ये प्रक्रमभेदादुपासनाभेदः ॥ १७३ ॥
तेनेतरधर्माणां न भवेदितरत्र कथमपि प्राप्तिः ।
छत्रेणैका नारी नृपमेकमुपासते यथा लोके ॥ १७४ ॥
अपरा तु चामरेण हि तत्रोपास्ये ह्यभिन्नरूपेऽपि ।
भवति ह्युपासनाया भेदो धर्मव्यवस्थितिश्चापि ॥ १७५ ॥
एवमिहोपचितापचितगुणत्वं सगुण एव संभवति ।
क्वचिदुक्तसत्यकामत्वादीनां प्राप्तिरपि न सर्वत्र ॥ १७६ ॥

इतरे त्वर्थसामान्यात् ॥ १३ ॥

आनन्दादय इतरे प्रतिपाद्यस्य हि परस्य चैकत्वात् ।
सर्वत्रैव च ते स्युर्ब्रह्मज्ञानप्रयोजना हि यतः ॥ १७७ ॥

आध्यानाय प्रयोजनाभावात् ॥ १४ ॥

इह चेन्द्रियेभ्य इति किल काठकवाक्यं हि दृश्यते तत्र ।
अर्थादयो हि पुरुषान्ता हि परत्वेन वर्णिताः श्रुत्या ॥ १७८ ॥
तत्र च संदेहोऽयं किं ये ह्यर्थादयो विनिर्दिष्टाः ।
ते सर्वेऽपि ततस्तत इह तु परत्वेन वेदनीयाः स्युः ॥ १७९ ॥
किंवा परमात्माऽसौ सर्वपरत्वेन वेदनीय इति ।
तत्र च सर्वेषामप्यर्थादीनां परत्वमिह वेद्यम् ॥ १८० ॥

तस्मात्तस्माद्धि परं यस्माच्छ्रुतिरेव बोधयत्येषा ।
अत्र परत्वेनार्थादिषु बहुषु प्रतिपादयिषितेषु ॥ १८१ ॥
सिद्धे हि वाक्यभेदे न चैकवाक्यत्वभङ्गशङ्का स्यात् ।
तस्मादर्थादीनां प्रत्येकपरत्वकथनमिह युक्तम् ॥ १८२ ॥
इति शङ्कासंप्राप्तावेतत्सूत्रं प्रदर्शितं भवति ।
इह सर्वेभ्योऽपि परः पुरुषः प्रतिपाद्यत इति युक्तं स्यात्॥ १८३ ॥
प्रतिपन्नेषु परत्वेनान्येषु फलं न किंचिदपि दृष्टम् ।
सर्वेभ्योऽपि परस्मिन्प्रतिपन्ने पुरुष इह फलं मोक्षः ॥ १८४ ॥
श्रुतिरपि निचाय्य तमिति ज्ञानफलं मोक्षमेव दर्शयति ।
अपि चेह पुरुषविषये ह्यनल्पमादरमियं प्रदर्शयति ॥ १८५ ॥
पुरुषान्न परमिति श्रुतिरितरप्रतिषेधकाष्ठशब्दाभ्याम् ।
पुरुषप्रतिपत्त्यर्थैवैषा पूर्वोक्तिरिति हि दर्शयति ॥ १८६ ॥
आध्यानायेतिपदं तत्राऽऽध्यानं हि दर्शितं भवति ।
आध्यानपूर्वकं किल सम्यग्दर्शनमिहोपदिष्टं स्यात् ॥ १८७ ॥

आत्मशब्दाच्च ॥ १५ ॥

इह चेन्द्रियादयः किल पुरुषप्रतिपत्तये विनिर्दिष्टाः ।
यस्मादिहैष सर्वेष्वितिश्रुतिः पुरुषमात्मशब्देन ॥ १८८ ॥
निर्दिश्य चेतरेषामनात्मतामेव सूचयत्येषा ।
तस्य च दुर्बोधत्वं संस्कृतमतिगम्यतां च दर्शयति ॥ १८९ ॥
तज्ज्ञानायाऽऽध्यानं यच्छेदित्यादिना विनिर्दिष्टम् ।
अपि चेह सोऽध्वनः पारमिति च निर्दिश्य परमपदमेतत्॥१९०॥
तद्बोधनाय देहेन्द्रियाद्यनुक्रमणमादृतं भवति ।
तस्मादात्मप्रतिपत्त्यर्थो ह्याम्नाय एष इति सिद्धम् ॥ १९१ ॥

आत्मगृहीतिरितरवदुत्तरात् ॥ १६ ॥

इह चैतरेयके खल्वात्मा वेत्यादिवाक्यमुपलब्धम् ।
अम्भःप्रभृतीनामिह लोकानां सृष्टिरात्मनोऽभिहिता ॥ १९२ ॥
अत्राऽऽत्मशब्दबोध्यः पर एवाऽऽत्माऽथ वेतरः कश्चित् ।
इति संदेहे नासौ परमात्मेत्येव युक्तमिह वक्तुम् ॥ १९३ ॥
यद्यपि चेक्षणपूर्वं स्रष्टृत्वादिकमिहास्य निर्दिष्टम् ।
एवमपि लोकसृष्टिस्त्वादावेवेह दर्शिता यस्मात् ॥ १९४ ॥

तस्मादपरः कश्चित्स्रष्टाऽसौ भवति नैष परमात्मा ।
स्रष्टा परमात्मा चेत्पञ्चमहाभूतसृष्टिरिह वाच्या ॥ १९५ ॥
नैवेह भूतसृष्टिः प्रदर्शिता किंतु लोकसृष्टिरिह ।
ते संनिवेशरूपा लोकाः सर्वेऽपि पञ्चभूतानाम् ॥ १९६ ॥
ब्रूते चाम्भःप्रभृतींल्लोकत्वेन ह्ययोऽम्भ इत्याद्या ।
स्याल्लोकसृष्टिरेषा परमेशाधिष्ठितेन पुरुषेण ॥ १९७ ॥
आत्मैवेदमिति श्रुतिरपि पुरुषविधं तमेतमाचष्टे ।
स्मृतिरपि स वै शरीरी प्रथम इति ह्येतमर्थमाचष्टे ॥ १९८ ॥
इह चैतरेयिणोऽपि ह्यथात इत्यादिकेन कथयन्ति ।
देवादिसृष्टिमखिलां रेतोमूलां प्रजापतिप्रसृताम् ॥ १९९ ॥
आत्मैवेदमिति श्रुतिरस्यैवाऽऽत्मत्वमपि च दर्शयति ।
जगतः प्रागुत्पत्तेरात्मैकत्वावधारणं यदपि ॥ २०० ॥
तत्स्वविकारापेक्षं हीक्षणमपि तस्य चेतनत्वेन ।
उपपन्नमपि च ताभ्यो गामानयदेवमादिको भूयान् ॥ २०१ ॥
व्यापारोऽपि च लोके विशेषवत्सु प्रसिद्ध इह भाति ।
तस्मादात्मेह स्याद्विशेषवान्कश्चिदित्यतो ब्रूते ॥ २०२ ॥
अत्रोपदिश्यते किल परमात्मा सोऽयमात्मशब्देन ।
तस्माद्वा एतस्मादात्मन आकाश एवमाद्येषु ॥ २०३ ॥
सृष्टिश्रवणेष्वितरेष्वात्मा हि परो यथा तथेहापि ।
लोकेऽपि चाऽऽत्मशब्दात्प्रत्यग्रूपो हि मुख्य आत्मैव ॥ २०४ ॥
परिगृह्यते यथा वा तथैव चेहापि भवितुमर्हति हि ।
यत्र च पुरुषविध इति हि विशेषणं किमपि दृश्यते तत्र ॥२०५॥
भवतु विशेषवदात्मग्रहणं नात्र तु तथाऽस्ति किंचिदपि ।
ईक्षणपूर्वकसृष्ट्युपदेशादपि गृह्यतेऽत्र परमात्मा ॥ २०६ ॥

अन्वयादिति चेत्स्यादवधारणात् ॥ १७ ॥

नन्वेतस्मिन्वाक्ये निर्दिष्टा लोकसृष्टिरादौ हि ।
साऽपि च रेतःपूर्वा कथिता सेयं प्रजापतिप्रभवा ॥ २०७ ॥
वाक्यस्यैतस्य स्यात्तात्पर्यं हि प्रजापतौ युक्तम् ।
पूर्वत्र पुरुषवाक्यादर्थादपरस्य वाक्यजातस्य ॥ २०८ ॥
भेदापत्तिभयेन ह्यतदर्थकतैव तस्य निर्दिष्टा ।
तद्वद्रेतो देवा इति पूर्वस्मादिहास्य वाक्यस्य ॥ २०९ ॥

भेदापत्त्यैतस्य च तात्पर्यं स्यात्प्रजापतौ युक्तम् ।
इति चेन्नैवं यस्मादवधारणमेतदत्र निर्दिष्टम्॥ २१० ॥
आदाविहाऽऽत्मशब्दः प्रागेकत्वावधारणं च तथा ।
ब्रह्मपदं प्रज्ञानं ब्रह्मेत्युपसंहृतौ च दृष्टमतः ॥ २११ ॥
एतैरन्यैर्लिङ्गैरेकस्य च लोकसृष्टिलिङ्गस्य ।
बाधेनास्मिन्वाक्ये प्रत्यग्ब्रह्मैव गृह्यते नान्यः ॥ २१२ ॥
यल्लोकसृष्टिवचनं तदपि श्रुत्यन्तरानुगुण्येन ।
पञ्चमहाभूतानां सृष्ट्युत्तरभाविसृष्टिपरमेव ॥ २१३ ॥
छान्दोग्यतैत्तिरीयकवाक्येषु च सृष्टिवचनभेदेऽपि ।
योजनयैकार्थत्वं यथोपपन्नं तथैव चेहापि ॥ २१४ ॥
व्यापारोऽपि च योऽसौ ताभ्यो गामानयदिति विख्यातः ।
सोऽपि च विविक्षितार्थानुगुणत्वेनैव संग्रहीतव्यः ॥ २१५ ॥
सकलः कथाप्रबन्धो न विवक्षितविषय एष भवति यतः ।
तत्प्रतिपत्ताविह खलु पुरुषार्थो नोपलभ्यते कश्चित् ॥ २१६ ॥
इह च ब्रह्मात्मत्वं विवक्षितमिति प्रतीयते येन ।
अम्भःप्रभृतीनां किल लोकानां लोकपालकानां च ॥ २१७ ॥
अग्न्यादीनां सृष्टिं शिष्ट्वा करणानि चाऽऽयतनमेषाम् ।
उपदिश्य देहमेतं स्रष्टा हि स एव कथमिदं मद्दृते ॥ २१८ ॥
स्यादिति वीक्ष्य शरीरं प्रविवेशेति श्रुतिः प्रदर्शयति ।
नैषा स एतमेवेत्याद्या हीत्थं प्रवेशमुपदिशति ॥ २१९ ॥
पुनरपि यदि वाचाऽभिव्याहृतमित्यादिना च करणानाम् ।
तत्तद्व्यापारानपि विवेचयित्वाऽथ कोऽहमिति वीक्ष्य ॥ २२० ॥
एतं त्वमर्थमेव ब्रह्म व्याततमयमपश्यदिति ।
श्रुतिरिह स एतमेवेत्याद्या ब्रह्मात्मतां प्रदर्शयति ॥ २२१ ॥
उत्तरवाक्यं यदिदं ह्येष ब्रह्मैष इन्द्र इत्यादि ।
तेन महाभूतैः सह समस्तमपि भेदजातमनुकीर्त्य ॥ २२२ ॥
सर्वं तत्प्रज्ञानेत्रं प्रज्ञाने प्रतिष्ठितं हीति ।
प्रज्ञानं ब्रह्मेति ह्यन्ते ब्रह्मात्मतामियं ब्रूते ॥ २२३ ॥
तस्मादिहायमात्मा भवति परात्मैव नान्य इति सिद्धम् ।
एतस्मिन्व्याख्याने न हि स्फुटः स्याद्गुणोपसंहारः ॥ २२४ ॥

न हि पादसंगतिः स्यादिति हि व्याख्यान्तरं प्रदर्शयति ।

आत्मगृहीतिरितरवदुत्तरात् ॥ १६ ॥

वाजसनेयक एतद्वाक्यं दृष्टं हि कतम आत्मेति ॥ २२५ ॥
योऽयं विज्ञानमयः प्राणेष्वित्यादिना च तत्रैव ।
हृद्यन्तर्ज्योतिरसौ पुरुषो निर्धारितश्च तस्यैव ॥ २२६ ॥
उपदिश्य सर्वसंगतिमुक्तत्वं ब्रह्मरूपतां ब्रूते ।
उपसंहारोऽपि स वा एष महानज इतीह दृष्टोऽयम् ॥ २२७ ॥
छान्दोग्ये तु सदेवेत्येतद्वाक्यं ह्युपक्रमे दृष्टम् ।
तत्र हि न चाऽऽत्मशब्दः स खलु स आत्मेत्युदर्क एवास्ति॥२२८॥
तत्त्वमसीत्याद्यैरपि तादात्म्यं चोपदिशति तत्रैव ।
तुल्यार्थत्वं वा स्यात्किमतुल्यार्थत्वमेतयोरिति हि ॥ २२९ ॥
संदेहे सत्यनयोः प्राप्तमतुल्यार्थकत्वमुचितमिति ।
आम्नानयोर्द्वयोरप्यतुल्यतैव प्रतीयते यस्मात् ॥ २३० ॥
न ह्याम्नाने विषमे युक्तं स्यादर्थसाम्यमिह वक्तुम् ।
वाजसनेयकवाक्यं ह्युपक्रमस्थात्मशब्दयोगेन ॥ २३१ ॥
सकलमपि चाऽऽत्मतत्त्वप्रतिपत्तिपरं प्रतीयते वाक्यम् ।
छान्दोग्ये तूपक्रमविपर्ययात्तद्विपर्ययो भवति ॥ २३२ ॥
यद्यप्युपसंहारे तत्राप्युपदिष्टमेव तादात्म्यम् ।
सत्यं तथाऽप्युपक्रमतन्त्रोऽयं स्यादिहोपसंहारः ॥ २३३ ॥
तस्मात्तत्त्वमसीति स्यात्संपदुपास्तिपरमिदं वाक्यम् ।
इत्याक्षेपप्राप्तावस्य प्रतिवचनमत्र निर्दिशति ॥ २३४ ॥
छान्दोग्येऽपि सदेवेत्यत्र परात्मैव गृह्यते नान्यः ।
आत्मगृहीतिरियं स्याद्यथेतरेषां हि वाजिनां तद्वत् ॥ २३५ ॥
यस्मादिहोत्तरत्र च तादात्म्यं समुपदिश्यते भूयः ।

अन्वयादिति चेत्स्यादवधारणात् ॥ १७ ॥

इह चोपक्रमवाक्ये न चाऽऽत्मशब्दो हि दृश्यते सोऽयम्॥ २३६ ॥
उपसंहृतिवाक्यं यत्तदिदं भवति ह्युपक्रमायत्तम् ।
तस्मादात्मगृहीतिः कथमित्यस्योत्तरं हि भवतीदम् ॥ २३७ ॥
आत्मगृहीतिरिहापि स्यादत्र यतोऽवधारणं दृष्टम् ।
येनाश्रुतमितिवाक्यादेकज्ञानेन सर्वविज्ञानम् ॥ २३८ ॥

अवधार्येह सदेवेत्येतत्तत्संपिपादयिषयोक्तम् ।
आत्मगृहीतौ सत्यां तदेतदखिलं समञ्जसं नोचेत्॥ २३९ ॥
मुख्यो योऽसावात्मा स न विज्ञात इति कथमिदं युक्तम् ।
एवं प्रागुत्पत्तेः सत एकत्वावधारणं यच्च ॥ २४० ॥
जीवस्य चाऽऽत्मशब्देन परामर्शः सुषुप्त्यवस्थायाम् ।
सत्संपत्त्यनुकीर्तनमपि च परिप्रश्नपूर्वकं च पुनः ॥ २४१ ॥
तत्त्वमसीत्यवधारणमेतत्तादात्म्यबोधने युक्तम् ।
तादात्म्यसंपदीदं पूर्वोक्तं सकलमनुपपन्नं स्यात् ॥ २४२ ॥
नेहोपक्रमतन्त्रत्वोपन्यासोऽपि भवति युक्ततरः ।
आत्मत्वकीर्तनं वाऽप्यनात्मताकीर्तनं च नेहास्ति ॥ २४३ ॥
सामान्योपक्रम इह स वाक्यशेषगविशेषसाकाङ्क्षः ।
सच्छब्दार्थोऽपि तथा विमृश्यमानस्तु मुख्य एवाऽऽत्मा ॥२४४॥
सच्छब्दोऽसौ दृष्टो भावावधिभूतवस्तुपर एव ।
वाचारम्भणशब्दादिभ्यः सर्वस्य चामृतत्वेन ॥ २४५ ॥
सच्छब्दार्थो मुख्यः परमात्मा स्यान्न चान्यदिह वस्तु ।
आम्नानविषमताऽपि हि न चार्थवैषम्यमावहत्यत्र ॥ २४६ ॥
आहर पात्रं तदिदं पात्रमिहाऽऽहर तदेतदिति वाक्ये ।
आम्नानविषमतायां सत्यामप्यर्थसाम्यमुपलब्धम् ॥ २४७ ॥
कथितो हि वाजिवाक्ये त्वमर्थ एव तु तदर्थपर्यन्तः ।
छान्दोग्ये तु तदर्थस्त्वमर्थपर्यन्त एव निर्दिष्टः ॥ २४८ ॥
प्रतिपादनप्रकारे भिन्नेऽपि तदर्थतस्त्वभेदेन ।
एकैवेयं विद्या युक्तो ह्यत्र च गुणोपसंहारः ॥ २४९ ॥

## कार्याख्यानादपूर्वम् ॥ १८ ॥

छन्दोगा अपि वाजिन एते हि प्राणकरणसंवादे ।
आम्नाय प्राणस्य श्वक्रिमिमर्यादमन्नमादौ हि ॥ २५० ॥
तस्यैव प्राणस्य ह्यापो वासः समामनन्त्येते ।
छन्दोगास्तस्माद्वा एतदिति पुनः समामनन्तीह ॥ २५१ ॥
प्रागुपरिष्टादद्भिः परिदधतीत्येवमादि तत्रोक्तम् ।
वाजसनेयिन इह किल विद्वांसः श्रोत्रिया अशिष्यन्तः ॥ २५२ ॥

आचामन्तीत्यादिकमेतद्वाक्यं समामनन्त्यत्र ।
अशिशिषतामशितवतामाचमनमनग्नचिन्तनं चापि ॥ २५३ ॥
प्राणस्य दृश्यते किल किमेतदुभयं विधीयते किंवा ।
आचमनमेव केवलमनग्नताचिन्तनं विधीयेत ॥ २५४ ॥
इति संदेहे तत्रोभयं विधीयत इति प्रशस्तं हि ।
उभयमपि गम्यमानं तद्वदपूर्वं ततो हि विध्यर्हम् ॥ २५५ ॥
केवलमाचमनं वा विस्पष्टविधिविभक्तिरत्र यतः ।
आचमनस्तुत्यर्थं ह्यनग्नताकीर्तनं भवेदत्र ॥ २५६ ॥
एवं प्राप्ते ब्रूते नैवाऽऽचमनं विधेयमत्रेति ।
कार्यत्वेनाऽऽचमनं शुद्ध्यर्थतया स्मृतिप्रसिद्धं हि ॥ २५७ ॥
न च विध्यर्हं तस्मादत्रान्वाख्यायते किलाऽऽचमनम् ।
नन्वेषा श्रुतिरस्याः स्मृतेर्भवेन्मूलमिति तु न हि युक्तम् ॥ २५८ ॥
इह मूलमूलिभावो योऽसौ न विभिन्नविषययोर्भवति ।
सर्वेषामाचमनं शुध्यर्थं स्मृतिरियं प्रदर्शयति ॥ २५९ ॥
या प्राणविषयविद्याप्रकरणपठिता श्रुतिर्हि सा चेह ।
तद्विषयमेव केवलमाचमनं विदधती विदध्यात्तत् ॥ २६० ॥
न प्राणविषयविद्यासंयोग्याचमनमिह विधेयमिति ।
नैवाऽऽश्रयितुं शक्यं पूर्वस्यैवोपलभ्यमानत्वात् ॥ २६१ ॥
न विधेयमुभयमत इदमुभयविधाने हि वाक्यभेदः स्यात् ।
तस्मात्स्मृतिनिर्दिष्टं प्रायत्यार्थं यदेतदाचमनम् ॥ २६२ ॥
अशिशिषतामशितवतामनूद्य तत एतमेव तदनमिति ।
आचमनीयास्वप्सु ह्यनग्नताचिन्तनं हि विद्याङ्गम् ॥ २६३ ॥
उपदिश्यते हि यस्मादपूर्वमेतत्ततो हि विध्यर्हम् ।
आचमनस्तुत्यर्थो ह्यनग्नतावाद इति तु न न्याय्यम् ॥ २६४ ॥
आचमनविध्यभावे स्तुत्यर्थत्वं कथं भवेत्तस्य ।
किंच विधेयत्वमपि ह्यनग्नताचिन्तनस्य भातीह ॥ २६५ ॥
प्रायत्यार्थत्वं किल परिधानार्थत्वमिति तु या चास्य ।
एकस्याऽऽचमनस्योभयार्थता सेह नाभ्युपेतेह ॥ २६६ ॥
यस्मादाचमनं तत्प्रायत्यार्थं क्रियान्तरं भवति ।
आचमनीयास्वप्सु च वासःसंकल्पनं क्रियाऽन्यैव ॥ २६७ ॥

परिधानार्थं प्राणस्याभ्युपगम्यत इतीदमनवद्यम् ।
अपि चेह पूर्ववाक्यं यदिदं ह्या श्वभ्य आ क्रिमिभ्य इति ॥२६८॥
तेन च सर्वान्नाभ्यवहारश्चोद्यत इतीह न हि युक्तम् ।
नासौ हि शब्दलभ्यः स शक्यते नापि मानुषैः कर्तुम् ॥ २६९ ॥
किंतु प्राणस्यान्नं सकलमितीहान्नदृष्टिरुपदिष्टा ।
तत्साहचर्यतोऽस्मिन्नापो वास इति वाक्यशेषेऽपि ॥ २७० ॥
तादिदमपामाचमनं न चोद्यते किंतु सुप्रसिद्धासु ।
आचमनीयास्वप्सु हि विहिता परिधानदृष्टिरिति युक्तम् ॥२७१॥
यदि चात्रैवं न स्यात्तदा भवेदर्थवैशसं प्रकृते ।
पूर्वत्र ध्यानविधिस्तदुत्तरत्र क्रियाविधिश्चेति ॥ २७२ ॥
अपि चाऽऽचामन्तीति हि नायं शब्दो विधिक्षमो भवति ।
लट्प्रत्ययो यतोऽसौ स वर्तमानाभिधायको दृष्टः ॥ २७३ ॥
यद्यपि च वर्तमानार्थताऽत्र मन्यन्त इति हि तुल्यैव ।
सत्यं तथाऽपि वासः कार्याख्यानाद्विधीयते तादिदम् ॥ २७४ ॥
वासःसंकल्पनमिदमपामपूर्वं न चाऽऽचमनमेतत् ।
आचमनं हि तदेतत्पूर्ववदिति दर्शितं हि पूर्वत्र ॥ २७५ ॥
यच्चोक्तं ह्याचमने विस्पष्टा विधिविभक्तिरिति तदपि ।
आचमनस्यैतस्य प्रत्युक्तं पूर्ववत्त्वलिङ्गेन ॥ २७६ ॥
अत एव चेह काण्वास्तस्मादेवमिति नाऽऽमनन्तीह ।
कुर्वन्तो मन्यन्त इति ह्यत्रैव च किलाध्यवस्यन्ति ॥ २७७ ॥
तस्मादिह माध्यंदिनपाठे चानूद्य तादिदमाचमनम् ।
एवं वासोवित्त्वं विधीयत इतीह युक्तमाश्रयितुम् ॥ २७८ ॥
आपो वास इतीयं दृष्टा वाक्यप्रवृत्तिरेकैव ।
तस्माद्विधेयमत्र च वासोविज्ञानमेतदिति सिद्धम् ॥ २७९ ॥

## समान एवं चाभेदात् ॥ १९ ॥

वाजसनेयकशाखायामग्निरहस्यसंज्ञके ग्रन्थे ।
शाण्डिल्यनामकलिता काचन विद्या प्रदर्शिता भवति ॥ २८० ॥
तत्र स आत्मानमुपासीतेत्यादि प्रदर्शितं वाक्यम् ।
तत्र च मनोमयत्वं प्राणशरीरत्वमात्मनस्तस्य ॥ २८१ ॥
भारूपतेति चैते श्रूयन्ते किल गुणास्तथैवान्ये ।
शाखायामेतस्यां बृहदारण्ये पुनश्च पठितमिदम् ॥ २८२ ॥

वाक्यं मनोमयोऽयं पुरुषो भाः सत्य एवमाद्यं हि।
स च पुरुषोऽन्तर्हृदये व्रीहियवाभ्यां समो हि तत्रोक्तः॥ २८३॥
स हि सर्वस्येशानः सर्वाधिपतिः प्रशास्ति सर्वमिदम्।
यदिदं किंचेत्यन्ते तस्मिन्वाक्ये प्रदर्शितः पुरुषः॥ २८४॥
तत्र किमग्निरहस्ये बृहदारण्ये भवेदसावेका।
विद्या तत्र गुणानामुपसंहारोऽथ वा किमन्यैव॥ २८५॥
विद्या तत्र गुणानुपसंहारश्चेति भवति संदेहः।
तत्र च विद्याभेदो गुणव्यवस्थेति युक्तमाभाति॥ २८६॥
यद्येका विद्येयं भवति तदा पौनरुक्त्यमनिवार्यम्।
भिन्नासु च शाखासु हि वेदित्रध्येतृभेदमालम्ब्य॥ २८७॥
परिहृत्य पौनरुक्त्यं विद्यैकत्वं च तत्र निर्धार्य।
उपसंह्रियन्त एते गुणा इहान्यत्र येऽतिरिक्ताः स्युः॥ २८८॥
प्राणेन्द्रियादिसंवादादिष्वेवं हि दर्शितं पूर्वम्।
एकस्यां शाखायां वेदित्रध्येतृभेदबाधेन॥ २८९॥
जाग्रति च पौनरुक्त्ये कथमिह विद्याभवेदसावेका।
एकं विद्याविधिपरमपरं स्यादत्र गुणविधानार्थम्॥ २९०॥
इत्याम्नानविभागाद्विद्यैकत्वं न वक्तुमिह युक्तम्।
तर्ह्यतिरिक्ता एव ह्याम्नायेरन्गुणा इहान्योन्यम्॥ २९१॥
इह च समाना अपि ते ह्याम्नायन्ते मनोमयत्वाद्याः।
तस्मादिह नान्योन्यं गुणोपसंहार इत्यतो ब्रूते॥ २९२॥
शाखासु विभिन्नास्वपि विद्यैकत्वं गुणोपसंहारः।
भवति यथैवैकस्यां शाखायामपि तथैव भवतीदम्॥ २९३॥
यस्मादुपास्यमेतन्मनोमयत्वादिगुणकमुभयत्र।
ब्रह्माभिन्नं प्रत्यभिजानीमोऽतो न भिद्यते विद्या॥ २९४॥
रूपाभेदे सत्यपि विद्याभेदो न शङ्कितुं शक्यः।
यस्मादुपासनाया रूपमुपास्यं न चान्यदिह किंचित्॥ २९५॥
ननु पौनरुक्त्यभीत्या विद्याभेदोऽत्र युक्त इति चेन्न।
अर्थविभागेनोभयमप्याम्नानं हि भवति युक्तमिह॥ २९६॥
विद्याविधिपरमेकं त्वपरं गुणविधिपरं भवेदिति हि।
नन्वेवं सत्यपठितमग्निरहस्ये स एष इत्यादि॥ २९७॥

पठितव्यमेतदेव हि बृहदारण्ये तु यच्च तत्रान्यत् ।
पठितं मनोमयोऽयं पुरुषो मा इति तु नैव पठितव्यम् ॥ २९८ ॥
इति चेन्नायं दोषो विद्या या विप्रकृष्टदेशस्था ।
अत्र समानगुणाम्नानबलात्तां प्रत्यभिज्ञाप्य ॥ २९९ ॥
तस्यामीशानत्वाद्युपदिश्यत इति हि सकलमनवद्यम् ।
श्रूयन्ते यत्र गुणा बहवस्तत्र प्रधानविधिरेव ॥ ३०० ॥
अन्यत्र तदनुवादाद्गुणविधिरेव हि न च प्रधानविधिः ।
बृहदारण्ये गुणविधिरग्निरहस्ये प्रधानविधिरेव ॥ ३०१ ॥
अप्राप्तांशार्थतया वाक्यं यत्रार्थवत्तरं तत्र ।
प्राप्तपरामर्शः किल भवति हि नित्यानुवाद इति तेन ॥ ३०२ ॥
तस्मान्नोपेक्षितुमिह शक्या स्यात्प्रत्यभिज्ञैषा ।
एकस्यां शाखायां विद्यैकत्वं गुणोपसंहारः ॥ ३०३ ॥

संबन्धादेवमन्यत्रापि ॥ २० ॥

अत्र च बृहदारण्ये सत्यं ब्रह्मेति चोपदिश्याऽऽदौ ।
तद्यत्तत्सत्यमसावित्याद्यं वाक्यमेतदाम्नातम् ॥ ३०४ ॥
तस्य च सत्यस्यास्य ब्रह्मण एवाधिदैवमध्यात्मम् ।
आयतनभेदमुपदिश्य व्याहृतिदेहतां च संपाद्य ॥ ३०५ ॥
द्वे उपनिषदावादिश्येते तस्योपनिषदिहाहरिति ।
अधिदैवं हि तथैवाध्यात्मं तस्योपनिषदिहाहमिति ॥ ३०६ ॥
तत्र च संदेहोऽसावुपनिषदौ ये प्रदर्शिते भवतः ।
अविभागेनैवैते किमुभे उभयत्र चानुसंधेये ॥ ३०७ ॥
एकाऽधिदैवमपरा त्वध्यात्ममितीह किं विभागेन ।
इति संदेहे तदिदं सूत्रेणैव हि निरूप्यते सपदि ॥ ३०८ ॥
शाण्डिल्यसंज्ञिकायां विद्यायां किल गुणोपसंहारः ।
यद्वत्तद्वदिहापि च गुणोपसंहार एष युक्ततमः ॥ ३०९ ॥
एका हि सत्यविद्या किलाधिदैवं तथैव चाध्यात्मम् ।
अत्राधीता यस्मादुपक्रमश्चाप्यभिन्न इह दृष्टः ॥ ३१० ॥
पाठश्च व्यतिषक्तो दृष्टस्तस्मात्कथं ह्ययं धर्मः ।
तस्यामुदितः सन्नपि न स्यात्तस्यामितीदमुचितं स्यात् ॥ ३११ ॥
योऽप्याचारश्चोदित इहानुगमनादिरूप आचार्यैः ।
ग्रामगतेऽरण्यगते स च तुल्यवदेव भवति न विभिन्नः ॥ ३१२ ॥

तस्मादुभयोरप्युपनिषदोरुभयत्र भवति संबन्धः।
एवं प्राप्ते तमिमं पक्षं संप्रति निराकरोतीह ॥ ३१३ ॥

न वा विशेषात् ॥ २१ ॥

नैवोभयोस्तयोरियमुभयत्र प्राप्तिरत्र युक्ता स्यात्।
स्थानविशेषनिबन्धो यत एतस्यामुपासनायां स्यात् ॥ ३१४ ॥
एतस्मिन्मण्डल इति निर्दिश्य ह्याधिदैविकं पुरुषम्।
उपनिषदहरित्येवं श्रावयति हि दक्षिणेऽक्षिपुरुषं हि ॥ ३१५ ॥
आध्यात्मिकं प्रकृत्याहमिति च तस्योपनिषदुपन्यस्ता।
तस्येति सर्वनाम च संनिहितालम्बनं हि सर्वत्र ॥ ३१६ ॥
तस्मादायतनविशेषालम्बने [नं] ह चोपदिश्येते।
एते उपनिषदाविति कुत उभयत्रैतयोर्भवेत्प्राप्तिः ॥ ३१७ ॥
नन्वेक एव पुरुषो भवति ह्यधिदैवमेवमध्यात्मम्।
ब्रह्मण एकस्यैव च सत्यस्याऽऽयतनयुग्ममुपदिष्टम् ॥ ३१८ ॥
इति चेदेकस्यापि हि तत्तदवस्थाविशेषयोगेण।
उपनिषदुपदेशोऽसावहरहमिति किल विशेषतो दृष्टः ॥ ३१९ ॥
तस्मादुपनिषदेषा तदवस्थस्यैव भवति युक्ततमा।
आचार्यस्यैकस्याप्यनुवर्तनमिह यथा विभिन्नं स्यात् ॥ ३२० ॥
तत्तिष्ठतो हि न भवेदासीनस्यानुवर्तनं यत्स्यात्।
यत्तिष्ठत उपदिष्टं न तदासीनस्य भवति तद्वदिह ॥ ३२१ ॥
यश्च स्वरूपमात्रानुबद्धधर्मो भवेदिहाऽऽर्यस्य।
तस्य ग्रामारण्यविशेषाभावेन तुल्यवद्भावः ॥ ३२२ ॥
अत इह दृष्टान्तोऽयं न प्रकृतार्थैकसाधनो भवति।
तस्मादुपनिषदोरिह युक्तैव स्यात्तयोर्व्यवस्थेयम् ॥ ३२३ ॥

दर्शयति च ॥ २२ ॥

अपि चैवंजातीयकधर्माणां स्याद्व्यवस्थितत्वमिति।
दर्शयति लिङ्गमेतत्तस्यैतस्य हि तदेव रूपमिति ॥ ३२४ ॥
विद्यैक्यादेव यदा गुणोपसंहार इह भवेत्तर्हि।
तस्यैतस्य तदेवेत्यतिदेशोऽयं वृथैव तत्र स्यात् ॥ ३२५ ॥
तस्माद्विद्यैक्येऽपि स्थानं भिन्नं यथा भवेत्तत्र।
अतिदेशादेव स्याद्गुणोपसंहार इति हि सिद्धमिह ॥ ३२६ ॥

तस्यैतस्येत्यादावतिदेशबलाद्गुणोपसंहारः ।
उपनिषद्दहरित्यादौ तदसत्त्वात्ते व्यवस्थिते भवतः ॥ ३२७ ॥

संभृतिद्युव्याप्त्यपि चातः ॥ २३ ॥

ब्रह्मज्येष्ठा वीर्येत्याद्या राणायनीयशाखायाम् ।
श्रुतिराम्नाता तत्र ब्रह्म ज्येष्ठत्वगुणकमुपदिष्टम् ॥ ३२८ ॥
वीर्याणि संभृतानि प्रदर्शितान्यस्य तत्पुनर्ब्रह्म ।
प्राग्देवाद्युत्पत्तेर्द्युलोकमेतं समाततानेति ॥ ३२९ ॥
एषा खिलेषु पठिता ब्रह्मविभूतय इमाश्च तत्रोक्ताः ।
तेषामेवोपनिषदि शाण्डिल्यपदाङ्किताश्च परविद्याः ॥ ३३० ॥
पठिता हि तासु किमिमाः संभृत्याद्या विभूतयो यास्ताः ।
उपसंगृह्येरन्नुत नेति विचारे तदेतदिह पठति ॥ ३३१ ॥
संभृत्यादिविभूतय इह शाडिल्यादिसंज्ञविद्यासु ।
आयतनभेदयोगादुपसंहर्तुं न ता हि शक्यन्ते ॥ ३३२ ॥
शाण्डिल्यदहरवाक्ये हृदयायतनत्वमस्य निर्दिष्टम् ।
उपकोसलविद्यायामक्ष्यायतनत्वमेव तस्योक्तम् ॥ ३३३ ॥
आध्यात्मिकमायतनं प्रतीयते ह्येवमासु विद्यासु ।
संभृत्यादिविभूतय एताः केवलमिहाऽऽधिदैविक्यः ॥ ३३४ ॥
श्रूयन्ते न त्वेतास्वपि च विभूतय इहाऽऽधिदैविक्यः ।
ज्यायान्दिव इत्यादावेव हि सर्वेष्विति श्रुतिष्वपि च ॥ ३३५ ॥
यावान्वा अयमाकाश इति श्रुतिषु च तथा प्रतीयन्ते ।
सन्त्यायतनविहीनाः षोडशकलसंज्ञिकाश्च परविद्याः ॥ ३३६ ॥
तस्मात्संभृत्यादेरुपसंहारोऽत्र युक्त इति चेन्न ।
संभृत्यादेरत्रानुपसंहारेऽस्ति कारणं किंचित् ॥ ३३७ ॥
कतिपयसमानगुणसक्तोपास्यैक्ये हि भवति विद्यैक्यम् ।
तत्किल गुणोपसंहृतिकारणमेतन्न दृश्यते प्रकृते ॥ ३३८ ॥
तदभावात्संभृत्याद्युपसंहारो न चेह संभवति ।
अत्रोपास्यैकत्वं विद्यैकत्वे नियामकं न भवेत् ॥ ३३९ ॥
तच्चोपास्यैकत्वं विद्याभेदेऽपि दृश्यते शास्त्रे ।
ब्रह्मैकरूपमपि किल विभूतिभेदैरुपास्यते बहुधा ॥ ३४० ॥
इह किल परोवरीयस्त्वादौ दृष्टो ह्युपासनाभेदः ।
तस्माद्विद्यैकत्वं यदिदं तत्प्रत्यभिज्ञयैव स्यात् ॥ ३४१ ॥

तदभावात्संभृत्यादीनामेतासु नोपसंहारः।

पुरुषविद्यायामिव चेतरेषामनाम्नानात् ॥ २४ ॥

अस्ति रहस्यब्राह्मणसंज्ञं किल ताण्डिपैङ्गिशाखासु ॥ ३४२ ॥
तत्र रहस्यब्राह्मण इयमाम्नाता हि पुरुषविद्याख्या।
तत्र च पुरुषो यज्ञः कल्पित एवं तदीयमायुश्च ॥ ३४३ ॥
त्रेधा विभज्य सवनत्रयं च यान्यशिशिषादिकान्यपि च।
दीक्षाद्यात्मतया किल तानि च तत्रैव कल्पितानि तथा ॥३४४॥
आशीर्मन्त्रजपाद्या अन्ये धर्माश्च तत्र निर्दिष्टाः।
इह तैत्तिरीयका अपि पठन्ति कमपीह पुरुषयज्ञं हि ॥ ३४५ ॥
तस्यैवंविदुषो यज्ञस्याऽऽत्मेत्यादिकेन वाक्येन।
ये ताण्डिपैङ्गिवाक्यप्रदर्शिताः पुरुषयज्ञधर्माः स्युः ॥ ३४६ ॥
इह तैत्तिरीयके तेऽप्युपसंहार्या न वेति संदेहे।
इह पुरुषयज्ञताया उभयत्रैव च समानरूपत्वात् ॥ ३४७ ॥
उपसंहारः स्यादित्याक्षेपे तस्य चोत्तरं ब्रूते।
उपसंहर्तुं नार्हन्त्येते धर्मा यतोऽत्र वैषम्यम् ॥ ३४८ ॥
इह पुरुषयज्ञकीर्तनमेकेषां ताण्डिपैङ्गिनां हि यथा।
न हि तैत्तिरीयकाणामाम्नानं दृश्यते तथैवेह ॥ ३४९ ॥
तेषां हि यज्ञसंपादनमितरविलक्षणं हि दृष्टमिह।
पत्नीयजमानादिकमितरविलक्षणमुदाहृतं तत्र ॥ ३५० ॥
यत्प्रातर्मध्यंदिनमित्येवं सवनकल्पनं तेषाम्।
इतरविलक्षणमेव हि मरणावभृथत्वसाम्यमपि यच्च ॥ ३५१ ॥
तदपि ह्यल्पीयस्त्वाद्वैलक्षण्येन भूयसाऽभिभवे।
न च तत्प्रत्यभिसंधिक्षमं भवेन्नापि तैत्तिरीयेऽस्मिन् ॥ ३५२ ॥
पुरुषस्य यज्ञभावः श्रुतोऽस्ति किंत्वत्र वाक्यमिदमस्ति।
विदुषो यज्ञस्येति व्यधिकरणे एव भवति (त) इह षष्ठ्यौ ॥३५३॥
सामानाधिकरण्ये षष्ठ्यावेते न चेह संभवतः।
न हि विदुषो यज्ञत्वं मुख्यं केनापि वक्तुमिह शक्यम् ॥ ३५४॥
विद्वत्संबन्धी यो यज्ञस्तस्येत्यवश्यमिह वाच्यम्।
आत्मा यजमान इति श्रुतिर्हि यजमानभावमुपदिश्य ॥ ३५५ ॥
व्यधिकरणत्वेनैव हि विदुषो दर्शयति यज्ञसंबन्धम्।
तत्र च तस्यैवमिति स्फुटमनुवादश्रुतौ प्रतीतायाम् ॥ ३५६ ॥

पुरुषस्य यज्ञभावं तथैव यजमानभावमात्मनि च ।
कल्पयतस्तव चायं दुर्वारो भवति वाक्यभेद इह ॥ ३५७ ॥
किंच ससंन्यासेयं परात्मविद्या प्रदर्शिता पूर्वम् ।
तस्यैवंविदुष इति ह्यनुक्रमश्चेह पूर्वशेषः स्यात् ॥ ३५८ ॥
अनुवाकयोर्द्वयोरपि फलमेकमिहोपलभ्यते यस्मात् ।
तस्माद्ब्रह्मण इति हि ब्रह्मप्राप्तिर्हि फलमिहाभिहितम् ॥ ३५९ ॥
इतरेषां चाऽऽम्नायस्त्वनन्यशेषो हि पुरुषयज्ञस्य ।
अत्र ह्येष ह षोडशवर्षशतं जीवतीति वाक्येन ॥ ३६० ॥
फलमपि यन्निर्दिष्टं तदपि च केवलमिहाऽऽयुरभिवृद्धिः ।
तस्मादिह शाखान्तरपठितानां पुरुषयज्ञधर्माणाम् ॥ ३६१ ॥
आशीर्मन्त्रादीनामप्राप्तिस्तैत्तिरीयके युक्ता ।

## वेधाद्यर्थभेदात् ॥ २५ ॥

आथर्वणिकानामुपनिषदारम्भे स एष मन्त्रोऽस्ति ॥ ३६२ ॥
सर्वं प्रविध्य हृदयं प्रविध्य धमनीः प्रवृज्य शिर इति हि ।
मन्त्रोऽत्र देवसवितः प्रसुवेत्यादिर्हि ताण्डिनां दृष्टः ॥ ३६३ ॥
शाट्यायनिनां मन्त्रः श्वेताश्वो हरितनील इत्यादिः ।
शं नो मित्रः शमिति हि भवति कठानां च तैत्तिरीयाणाम् ॥ ३६४ ॥
देवा इति प्रवर्ग्यब्राह्मणवाक्यं तु वाजिनां दृष्टम् ।
अग्निष्टोमब्राह्मणवाक्यं यद्ब्रह्म वेति निर्दिष्टम् ॥ ३६५ ॥
उपनिषदारम्भे किल कौषीतकिनां तदेतदाम्नातम् ।
अत्र प्रविध्यपूर्वा मन्त्राः सर्वेऽपि ये च निर्दिष्टाः ॥ ३६६ ॥
यानि प्रवर्ग्यपूर्वाण्यपि कर्माणि प्रदर्शितान्यत्र ।
विद्यासु ते च मन्त्राः कर्माणि च यानि तत्र कथितानि ॥ ३६७ ॥
तान्युपसंगृह्यन्ते किंवा नेत्यत्र भवति मीमांसा ।
तत्र ह्युपसंहारो विद्यास्वेषां हि युक्त इति भाति ॥ ३६८ ॥
यस्मात्सर्वाण्येतान्युपनिषदामिह समीपपठितानि ।
यद्यपि विद्यार्थतया विधानमिह नोपलभ्यते तेषाम् ॥ ३६९ ॥
सत्यं तथाऽपि संनिधिसामर्थ्यात्तदनुमीयते हीह ।
नन्वेषां मन्त्राणां विद्याविषयं न किमपि सामर्थ्यम् ॥ ३७० ॥
कर्माणि च प्रवर्ग्यादीन्यन्यार्थे नियोजितान्येव ।
तस्मात्कथमेतेषामिह विद्यार्थत्वमुचितमिति चेन्न ॥ ३७१ ॥

सामर्थ्यं मन्त्राणां विद्याविषयमपि वक्तुमिह शक्यम् ।
मन्त्रेषु कीर्तितानि च हृदयादीनि ह्युपासनेषु किल ॥ ३७४ ॥
आयतनाद्यात्मतया यत उपदिष्टानि तेन तद्द्वारा ।
मन्त्राणामुपपन्नं ह्युपासनाङ्गत्वमेवमादीनाम् ॥ ३७५ ॥
विनियोगो मन्त्राणां दृष्ट उपास्तिषु च भूः प्रपद्य इति ।
कोशतया त्रैलोक्योपास्तिश्छान्दोग्यदर्शिता तत्र ॥ ३७६ ॥
सुतदीर्घायुष्यार्थं पितुरेष प्रार्थनापरो मन्त्रः ।
इह कर्मणां प्रवर्ग्यादीनामप्यन्यथा नियुक्तानाम् ॥ ३७७ ॥
विद्यासु च विनियोगो बृहस्पतिसवस्य वाजपेय इव ।
अविरुद्ध इति प्राप्ते तेषामुपसहृतिं निराचष्टे ॥ ३७८ ॥
नैषामुपसंहारो विद्यास्वेतासु भवति युक्ततमः ।
हृदयं प्रविध्य धमनीरित्येतन्मन्त्रदर्शिता ह्यर्थाः ॥ ३७९ ॥
हृदयप्रभेदरूपा विद्यासबन्धवर्जिता भिन्नाः ।
न च ताभिर्विद्याभिः संगन्तुं तेषु भवति सामर्थ्यम् ॥ ३८० ॥
ननु हृदयमुपास्त्यङ्गं तद्द्वारा स्यादुपास्तिसंबन्धः ।
इति चेन्न हृदयमात्रं ह्युपासनाङ्गं कथंचिदत्र भवेत् ॥ ३८१ ॥
हृदयप्रभेदरूपो मन्त्रार्थः कथमिहोपयुज्येत ।
अविचारविषय एव हि मन्त्रार्थोऽय प्रतीयते सकलः ॥ ३८२ ॥
तस्मादिहाऽऽभिचारिककृत्येनैवास्य भवति संबन्धः ।
तद्वच्च देव सवितः प्रसुवेत्यस्यापि यज्ञलिङ्गेन ॥ ३८३ ॥
यज्ञेन कर्मणैव ह्यभिसंबन्धो भवेन्न विद्याभिः ।
यः संबन्धविशेषः स हि प्रमाणान्तरेण निर्णेयः ॥ ३८४ ॥
मन्त्राणां चान्येषामपि केषांचित्प्रसिद्धलिङ्गेन ।
केषांचिद्वचने[न च ] तथा प्रमाणान्तरेण केषांचित् ॥ ३८५ ॥
इत्यर्थान्तरविनियुक्तानामेषां रहस्यपठितानाम् ।
संनिधिमात्रेणैव हि विद्याशेषत्वमनुपपन्नमिह ॥ ३८६ ॥
श्रुत्यादिभ्यः संनिधिदौर्बल्यं प्रथमतन्त्र एवोक्तम् ।
श्रुतिरिह लिङ्गं वाक्यं प्रकरणमेतानि यानि चान्यानि ॥३८७॥
स्थानसमाख्यारूपाण्येतेषां स्याद्यदा हि समवायः ।
तन्त्रार्थविप्रकर्षात्सूत्रोक्तानां हि पारदौर्बल्यम् ॥ ३८८ ॥

सूत्रे समवायपदं समानविषयत्वमर्थमाचष्टे ।
यत्र द्वयोर्विरोधः समानविषयत्वमूलको दृष्टः ॥ ३८९ ॥
पूर्वेण व्यवधानात्स्वार्थप्रमितौ परस्य दौर्बल्यम् ।
इति संनिधिदौर्बल्यं श्रुत्यादिभ्यः प्रदर्शितं सूत्रे ॥ ३९० ॥
तस्मात्संनिधिमात्राद्विद्याङ्गत्वं न चेह मन्त्राणाम् ।
इह कर्मणां प्रवर्ग्यादीनामन्यत्र संनियुक्तानाम् ॥ ३९१ ॥
न हि विद्याशेषत्वं नो वा तत्र प्रमाणमपि किंचित् ।
यद्ब्रह्मवर्चसाख्यं फलं बृहस्पतिसवस्य विधिदृष्टम् ॥ ३९२ ॥
तत्र नियुक्तस्यास्य च यथा नियोगो हि वाजपेये स्यात् ।
यत्कर्मणां प्रवर्ग्यादीनां विद्याङ्गता तथेत्युक्तम् ॥ ३९३ ॥
नैतद्युक्तं हि यतो बृहस्पतिसवस्य वाजपेये हि ।
विधिनैव वाजपेयेनेष्ट्वेत्युपदर्शितो हि विनियोगः ॥ ३९४ ॥
एको ह्ययं प्रवर्ग्यः सकृदुत्पन्नो बलीयसाऽन्यत्र ।
विनियुक्तः सन्कथमिह पुनर्नियुज्येत दुर्बलेनासौ ॥ ३९५ ॥
एवं विधिमन्त्राणां तथा प्रवर्ग्यादिकर्मणां तस्मात् ।
संनिधिमात्रेणैव च विद्याशेषत्वमत्र नाऽऽशङ्क्यम् ॥ ३९६ ॥
संनिधिपाठो युक्तस्त्वरण्यवचनत्वधर्मसाम्येन ।

हानौ तूपायनशब्दशेषत्वात्कुशाछन्दस्तुत्युपगान-
वत्तदुक्तम् ॥ २६ ॥

अस्ति किल ताण्डिनां श्रुतिरश्व इवेत्यादिका हि तत्रोक्तम् ॥३९७॥
अश्वो रोमाणि यथा पापं सकलं विधूय तद्वदहम् ।
राहोर्मुखात्प्रमुच्य स्पष्टश्चन्द्रो यथा तथैवेह ॥ ३९८ ॥
धूत्वा शरीरमेतन्मुक्तो देहेन्द्रियादिसंघातात् ।
कृतकृत्यः सन्नकृतं लोकं ब्रह्मात्मकं प्रपद्य इति ॥ ३९९ ॥
अत्राऽऽथर्वणिकानां श्रुतिर्यथा नद्य इति समाम्नाता ।
ये किल शाट्यायनिनस्तेषां पाठे विशेष इह कश्चित् ॥ ४०० ॥
ते हि किल तस्य पुत्रा दायमिति श्रुतिमिमां पठन्त्यत्र ।
तद्वत्कौषीतकिनस्तत्सुकृतेति श्रुतिं पठन्त्यत्र ॥ ४०१ ॥
क्वचिदत्र सुकृतदुष्कृतयोर्हानं श्रूयते क्वचिच्च तयोः ।
स्थानविभागेनोपायनं प्रियैरप्रियैश्च निर्दिष्टम् ॥ ४०२ ॥

हानमुपायनमुभयं क्वचिच्छ्रुतं यत्र चोभयश्रवणम् ।
तत्रावशिष्टमपरं वक्तव्यं नावशिष्यते किमपि ॥ ४०३ ॥
यत्रोपायनमेव तु केवलमुपलभ्यते हि नो हानम् ।
तत्राप्यर्थादेव हि संनिपतति तदिदमेतयोर्हानम् ॥ ४०४ ॥
अन्यपरिग्राह्ये यद्यात्मीये सुकृतदुष्कृते भवतः ।
तत्साधनभूतमिदं हानमवश्य तदाऽभ्युपेयं स्यात् ॥ ४०५ ॥
यत्र तु हानं केवलमुपदिष्टमुपायनं तु नैवोक्तम् ।
तत्रोपायनमेतत्संनिपतेद्वा न वेति संदेहे ॥ ४०६ ॥
अश्रवणादेतस्य ह्यसंनिपातोऽत्र युक्त इति भाति ।
शाखान्तरश्रुतिर्या विद्यान्तरगोचरा भवेदेषा ॥ ४०७ ॥
अपि चाऽऽत्मकर्तृकं स्याद्धानमुपायनमिदं तु परकृत्यम् ।
असति तयोः संबन्धे हानेनोपायनं कथं सिध्येत् ॥ ४०८ ॥
तस्मादसंनिपातो हानावस्येत्यतस्त्विदं पठति ।
हानौ हि केवलायामपि श्रुतायामुपायनं तदिदम् ॥ ४०९ ॥
संनिपतेदिह यस्मात्तच्छब्दो हानशब्दशेषः स्यात् ।
तदुपेक्षितार्थकत्वं तच्छेषत्वं हि दृष्टमन्यत्र ॥ ४१० ॥
तस्मात्केवलहानश्रुतावुपायनमिहानुवृत्तं स्यात् ।
विद्यान्तरविषयत्वादश्रवणात्स्यादसंनिपात इति ॥ ४११ ॥
यच्चोक्तं तदयुक्तं नैवानुष्ठेयमत्र निर्दिष्टम् ।
हानमुपायनमपि वाऽनुष्ठेयत्वेन कीर्त्यते नेह ॥ ४१२ ॥
विद्यास्तुत्यर्थं किल हानमुपायनमिहोपदिष्टं हि ।
ये सुकृतदुष्कृते किल विदुषः संसारकारणीभूते ॥ ४१३ ॥
चिरकालसंप्रवृत्ते विद्याबलतो हि ते विधूयेते ।
विनिवेश्येते ते किल सुहृद्द्विषत्स्वपि च तद्बलेनैव ॥ ४१४ ॥
नैषा विद्या हि महाभागेति स्तूयतेऽत्र विद्यैषा ।
स्तुत्यर्थे चैतस्मिन्नुपायनस्य क्वचिच्छ्रुतस्यापि ॥ ४१५ ॥
हानश्रुतिसामान्येऽप्यनुवृत्तिकथा स्तुतिप्रकर्षाय ।
येनार्थवादवाक्यप्रवृत्तिरखिला तदन्तरापेक्षा ॥ ४१६ ॥
एकविंश इतोऽसावित्यादिष्वर्थवादवाक्येषु ।
दृष्टा द्वादश मासाः पञ्चर्तव इति तदन्तरापेक्षा ॥ ४१७ ॥

येनोपेयोपायनवादो विद्यास्तुतिप्रकर्षार्थः ।
तेनैतस्मिन्नर्थे नाभिनिवेष्टव्यमनृतमेतदिति ॥ ४१८ ॥
सूत्रे शब्दग्रहणं स्तुत्यर्थत्वप्रदर्शनार्थं स्यात् ।
सूत्रे विवक्षितो यदि गुणोपसंहार एव चेत्तर्हि ॥ ४१९ ॥
हित्वोपायनशब्दं ह्युपायनस्यैव शेषतां ब्रूयात् ।
तस्माद्गुणोपसंहृतिविचारधाराप्रसङ्गयोगेन ॥ ४२० ॥
स्तुत्युपसंहारविधिप्रदर्शनार्थं हि सूत्रमेतत्स्यात् ।
अत्र कुशाच्छन्दःस्तुत्युपगानवदिति निदर्शनं कथितम् ॥ ४२१ ॥
भाल्लविनां हि कुशा वानस्पत्याः स्थेति मन्त्रभागेण ।
अविशेषेण कुशाना वनस्पतिप्रभवताश्रुतौ सत्याम् ॥ ४२२ ॥
शाट्यायनिनामौदुम्बराः कुशा इति विशेषवचनेन ।
औदुम्बर्यश्च कुशा आश्रीयन्ते यथा तथैवेह ॥ ४२३ ॥
अविशेषेण च देवासुरसङ्गच्छन्दसा प्रसङ्गे हि ।
पैङ्ग्याम्नानाद्देवच्छन्दांस्यवधारयन्ति पूर्वाणि ॥ ४२४ ॥
केषांचित्षोडशिनः स्तोत्रे कालाविशेपसंप्राप्तौ ।
समयावि(ध्यु)षिते सूर्ये षोडशिनः स्तोत्रमेवमादिकया ॥ ४२५ ॥
आर्चश्रुत्या तत्र च कालविशेषप्रतीतिरुद्भवति ।
केचित्त्वविशेषेण ह्युपगानमिदं समामनन्त्यत्र ॥ ४२६ ॥
भाल्लविनस्तु विशेषणैवेति यथा कुशप्रमुख्येषु ।
श्रुत्यन्तरोपदर्शितविशेषयोगो भवेत्तथैवेह ॥ ४२७ ॥
हानावुपायनान्वय इति सूत्रार्थोऽत्र निश्चितो भवति ।
द्वादशलक्षण्यामपि जैमिनिना सूत्रितोऽयमेवार्थः ॥ ४२८ ॥
सूत्रं तदेतदेवापि तु वाक्येत्यादिकं हि तत्रोक्तम् ।
ज्योतिष्टोमप्रकरण एतद्वाक्यद्वयं समाम्नातम् ॥ ४२९ ॥
यावज्जीवं जुहुयादित्यपि च न दीक्षितो जुहोतीति ।
प्रतिषेधार्थत्वे किल नभोविकल्पो भवेत्स चायुक्तः ॥ ४३० ॥
नञ्पर्युदासवृत्त्या स हि यावज्जीववाक्यशेष इति ।
अथ वैतास्वेव विधूननश्रुतिष्वेतदत्र सूत्रेण ॥ ४३१ ॥
चिन्तयितव्यमनेन विधूननवचनेन सुकृतदुष्कृतयोः ।
अभिधीयते हि हानं किंवाऽर्थान्तरमितीह विचिकित्सा ॥ ४३२ ॥

तत्र विधूननशब्दान्न हानमभिधीयते परं त्वन्यत्।
धूञ् कम्पन इति धातोर्दोधूयन्ते द्वि(ध्व)जांशुकानीति ॥ ४३३॥
लोकप्रयोगदर्शनतश्चालनमिह विधूननं युक्तम्।
इह चालनं तु किंचित्कालं हि तयोः फलोपरोध इति ॥ ४३४ ॥
एवं प्राप्ते ब्रूते विधूननं हानमेव नान्यदिति।
इह चोपायनशब्दः शेषत्वेन प्रतीयते यस्मात् ॥ ४३५ ॥
न सुकृतदुष्कृतयोरप्रहीणयोः काप्युपायनं हि परैः।
तेनोपायनकथनात्तदनुगुणमिदं विधूननं हानम् ॥ ४३६ ॥
एतच्च संनिधाने विधूननस्य क्वचिच्छ्रुत सपदि।
भवति कुशाछन्दःस्तुत्युपगानवदिह विधूननश्रुत्या ॥ ४३७ ॥
सर्वत्र कृतसहायं सार्वत्रिकनिर्णये हि निपुणतमम्।
अद्रव्यत्वादेव तु न चालनं स्याद्विधूननं हि तयोः ॥ ४३८ ॥
अश्व इवेतिश्रुत्युपदर्शितदृष्टान्तभूतरोमादेः।
द्रव्यत्वात्तत्रैव हि विधूननं चालनं न चेह स्यात् ॥ ४३९ ॥
अत्रानेकार्थत्वाद्धातूनां न स्कृ(स्मृ)तीर्विरोधोऽपि।

सांपराये तर्तव्याभावात्तथा ह्यन्ये ॥ २७ ॥

पर्यङ्कसंज्ञिकायां विद्यायां किल समामनन्त्येते ॥ ४४० ॥
कौषीतकिनस्तत्र च स एतमित्यादिवाक्यमादिष्टम्।
तत्र च स देवयानं पन्थानं प्राप्य चाग्निलोकं हि ॥ ४४१ ॥
आगच्छत्यागत्याऽऽगच्छति विरजां नदीं ततस्तां च।
मनसैवात्येति ततो विधूनुते सुकृतदुष्कृते चोभे ॥ ४४२ ॥
इति वर्णितं किमत्र च यथाश्रुतं व्यध्वनीदमुपदिष्टम्।
यत्तद्वियोगवचनं प्रतिपत्तव्यं भवेत्किमथवाऽऽदौ ॥ ४४३ ॥
देहादपसर्पण इति विचारणायां श्रुतेः प्रमाणत्वात्।
श्रुत्यनुसारेणैव प्रतिपत्तिरिति प्रसञ्जने पठति ॥ ४४४ ॥
इह सांपरायशब्दाद्देहादपसर्पणं हि निर्दिष्टम्।
एतच्च सुकृतदुष्कृतहानं तत्सांपराय एव स्यात् ॥ ४४५ ॥
विद्यासामर्थ्यादिह पञ्चम्यन्तोपदर्शितो हेतुः।
विदुषो हि संपरेतस्यास्य परं विद्ययैव संप्रेप्सोः ॥ ४४६ ॥

न च सुकृतदुष्कृताभ्यां किंचित्प्राप्तव्यमन्तरालेऽस्ति ।
स्याच्चेदक्षीणे ते कल्पेयाता क्षणांश्च कतिचिदिह ॥ ४४७ ॥
विद्याविरुद्धफलयोस्तयोश्च विद्याबलात्क्षयोऽभिहितः ।
विद्या फलोन्मुखी स्याद्यदा तदैवैष भवितुमर्हति हि ॥ ४४८ ॥
तस्मात्प्रागेवासौ सन्नपि पश्चात्तयोः क्षयः पठितः ।
अन्येऽपि शाखिनो ये शाट्यायनिनश्च ताण्डिनश्चैते ॥ ४४९ ॥
प्रागेव सुकृतदुष्कृतयोरुभयोर्हानमामनन्तीह ।

छन्दत उभयाविरोधात् ॥ २८ ॥

देहादपसृतस्यार्चिरादिना प्रस्थितस्य तस्य यदि ॥ ४५० ॥
अभ्युपगम्येतार्धे पथि क्षयोऽसौ हि सुकृतदुष्कृतयोः ।
पतिते देहे च तदा तत्क्षयहेतोर्यमादिरूपस्य ॥ ४५१ ॥
इच्छातोऽनुष्ठानानुपपत्तावनुपपत्तिरेतस्य ।
तद्धेतुकसुकृतादिक्षयस्य भवतीयमपरिहार्यैव ॥ ४५२ ॥
तस्माच्च पूर्वमेवानुष्ठानं छन्दतो भवेदस्य ।
तत्पूर्वकमेवेदं हानं स्यादत्र सुकृतदुष्कृतयोः ॥ ४५३ ॥
इति किल निमित्तनैमित्तिकयोरुपपत्तिरिह निराबाधा ।
तद्वच्च ताण्डिशाट्यायनिश्रुतियुगस्य संगतिश्चापि ॥ ४५४ ॥
विद्यास्तुतये हानावुपायनस्योपसंहृतिः सिद्धा ।

गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः ॥ २९ ॥

क्वचिदपि च सुकृतदुष्कृतहानसमीपे हि देवयानोऽसौ ॥ ४५५ ॥
पन्थाः श्रूयत एवं क्वचिच्च न श्रूयते हि तत्रायम् ।
संदेहः किं हानावविशेषेणैव देवयानोऽसौ ॥ ४५६ ॥
संनिपतेदथवाऽसौ क्वचिद्विभागेन कुत्रचिन्नेति ।
तत्र यथा हानावविशेषेणोपायनासु वृत्तिः स्यात् ॥ ४५७ ॥
एवमिह देवयानानुवृत्तिरत्रोचितेत्यतः पठति ।
इह च विभागेनैव हि पथोऽर्थवत्त्वं तु देवयानस्य ॥ ४५८ ॥
यद्यविशेषेण गतिः सर्वत्र स्यात्तदा विरोधः स्यात् ।
परमं साम्यमुपैतीत्येषा श्रुतिरेवमत्र दर्शयति ॥ ४५९ ॥
विदुषो निरञ्जनस्य च गन्तव्यं परमसाम्यमेवेति ।
गन्ता निरञ्जनोऽसौ प्राप्तव्यं परमसाम्यमेवेह ॥ ४६० ॥

देशान्तराप्तिसाधनभूता च गतिर्विरुध्यते न कथम् ।

उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ ३० ॥

क्वचिदर्थवती हि गतिः क्वचिन्न नेत्येवमुभयथा भावः ॥ ४६१ ॥
उपपन्न एव सोऽयं यस्मात्तल्लक्षणार्थ इह दृष्टः ।
गतिसाधनभूतोऽर्थः पर्यङ्कप्रभृतिसगुणविद्यासु ॥ ४६२ ॥
उपलभ्यते हि तत्र तु पर्यङ्कारोहणं च संवदनम् ।
पर्यङ्कस्थेन समं विशिष्टगन्धाप्तिरेवमाद्यं हि ॥ ४६३ ॥
देशान्तरसंप्राप्त्यायत्तं हि श्रूयते फलं यदिदम् ।
तत्रार्थवती हि गतिर्न तु सम्यग्दर्शने भवेदेवम् ॥ ४६४ ॥
आत्मैक्यदर्शिनां हि ध्वस्ताविद्यादिसकलबन्धानाम् ।
आरब्धभोगकर्मव्यतिरेकेण च न किंचिदस्त्यपरम् ॥ ४६५ ॥
तत्र च कथं गतिः स्यात्प्रयोजनं वा न किंचिदपि तस्याः ।
लोकवदेष विभागो यथैव लोके हि नगरसंप्राप्तौ ॥ ४६६ ॥
पन्थाः कश्चिदपेक्ष्यो नाऽऽरोग्याप्तौ तथैव चेहापि ।

अनियमः सर्वासामविरोधः शब्दानुमानाभ्याम् ॥ ३१ ॥

गतिरर्थवती सगुणास्वेव हि विद्यासु निर्गुणायां तु ॥ ४६७ ॥
परमात्मगोचरायां विद्यायां नेति पूर्वमुपदिष्टम् ।
सगुणास्वपि विद्यासु हि गतिः क्वचिच्छ्रूयते क्वचिन्नैव ॥ ४६८ ॥
उपकोसलविद्यायां तथैव पर्यङ्कसंज्ञविद्यायाम् ।
पञ्चाग्निविषयविद्यायामपि दहरात्मविषयविद्यायाम् ॥ ४६९ ॥
गतिरियमुपदिष्टा न तु मधुविद्यायां तथैव चान्यत्र ।
षोडशकलविद्यायां तथैव शाण्डिल्यसंज्ञविद्यायाम् ॥ ४७० ॥
वैश्वानरविद्यायां तत्र च संदेह एष जागर्ति ।
यासु श्रूयत एषा किं तास्वेव हि गतिर्नियम्येत ॥ ४७१ ॥
एवंविधविद्याभिः संबध्येतेयमनियमेन ।
तत्र च नियमो न्याय्यो यत्रैव श्रूयते गतिर्ह्येषा ॥ ४७२ ॥
तत्रैव सेति यस्मात्प्रकरणमत्र च नियामकं दृष्टम् ।
अन्यत्रोक्ताऽपि गतिर्गच्छेद्विद्यान्तरं यदा हि तदा ॥ ४७३ ॥
सर्वं सर्वार्थं स्याच्छ्रुतिप्रमाणत्वमपि च हीयेत ।
एकत्रोक्ताया अप्यन्यत्र गतेर्यदा भवेत्प्राप्तिः ॥ ४७४ ॥

उपकोसलविद्यायां तथैव पञ्चाग्निविषयविद्यायाम् ।
यत्त्वर्चिरादिकाया गतेः पुनर्वचनमनुपपन्नं स्यात् ॥ ४७५॥
तस्मान्नियमो युक्तः स्यादित्यत एतदुत्तरं पठति ।
सर्वासामभ्युदयप्राप्तिफलानां च सगुणविद्यानाम् ॥४७६॥
अविशेषेणैवैषा भवितुं युक्ता हि देवयानगतिः ।
अविशेषापगमे कथमत्र प्रकरणविरोधपरिहारः ॥ ४७७ ॥
इति नाऽऽशङ्क्यं भवति श्रुतिस्मृतिभ्यां विरोधपरिहारः ।
श्रुतिरत्र तद्य इत्थं विदुरिति पञ्चाग्न्युपासकानां हि ॥४७८॥
पन्थानमर्चिरादिकमवतार्य तथोपदिशति चान्येषाम् ।
ये चेमेऽरण्य इतिप्रकृष्टविद्यान्तरावलम्बानाम् ॥ ४७९ ॥
पञ्चाग्निविषयविद्यावद्भिः सममार्गतां प्रदर्शयति ।
नन्वेषा विद्यान्तरवतां गतिश्रुतिरितीह न हि युक्तम् ॥ ४८० ॥
श्रद्धातपःपराणां गतिरेव हि तत्र दर्शिता यस्मात् ।
इति चेन्नासौ दोषो विद्याबलमन्तरेण कथमपि च ॥ ४८१ ॥
न श्रद्धयाऽपि तपसा केवलया गतिरियं हि लभ्येत ।
यस्माच्च विद्ययेति श्रुतिरिममर्थं प्रदर्शयत्यत्र ॥ ४८२ ॥
तद्यान्ति विद्ययैव हि यत्र च कामादयः परावृत्ताः ।
नो यान्ति दक्षिणा वा नाविद्वांसस्तपस्विनो वेति ॥ ४८३ ॥
विद्यान्तरोपलक्षक एव श्रद्धातपःपदे तस्मात् ।
श्रद्धां सत्यमुपासत इति वाजसनेयिनः पठन्त्यत्र ॥ ४८४ ॥
सत्यं ब्रह्मोपासत इह ये श्रद्धालवो ह्यरण्य इति ।
व्याख्येयं तद्वाक्यं यतश्च सर्वत्र सत्यशब्दस्य ॥ ४८५ ॥
असकृद्ब्रह्मण्येव प्रयोग उपलभ्यते हि शास्त्रेऽस्मिन् ।
अत्र च पञ्चाग्निविदामित्थंवित्त्वेन परिगृहीतत्वात् ॥ ४८६ ॥
इह परिशेषाद्विद्यान्तराश्रयाणां परिग्रहो न्याय्यः ।
अथ य इति श्रुतिरपरा पन्थानौ दक्षिणोत्तरौ ये वै ॥ ४८७ ॥
न विदुस्ते कीटाः स्युस्तथा पतङ्गा बिलेशया वेति ।
मार्गद्वयच्युतानामधोगतिं ह्येवमुपदिशन्ती सा ॥ ४८८ ॥
देवपितृयाणयोरेवैतानन्तः प्रवेशयत्येवम् ।
तत्रापि देवयानप्राप्तिर्विद्याविशेषतस्तेषाम् ॥ ४८९ ॥

स्मृतिरपि च शुक्लकृष्णे गती इति ह्येतमर्थमुपदिशति ।
तस्मादुपकोसलविद्यायां पञ्चाग्न्युपासनायां च ॥ ४९० ॥
उभयत्र देवयानाम्नानं त्वनुचिन्तनार्थमेव स्यात् ।
मार्गानुचिन्तनस्य च विद्याङ्गत्वं श्रुतिस्मृतिप्रथितम् ॥ ४९१ ॥
येषां मार्गश्रवणं न चास्ति तेषां विनैव तद्ध्यानम् ।
विद्यासामर्थ्येन हि मार्गप्राप्तिरितिबोधनार्थमियम् ॥ ४९२ ॥
पुनरुक्तिरनियमेनार्चिरादिसप्राप्तिरपि च सिद्धैव ।

## यावदधिकारमवस्थितिराधिकारिकाणाम् ॥ ३२ ॥

गतिरत्र सगुणविद्यास्वर्थवती ब्रह्मलोकफलकत्वात् ॥ ४९३ ॥
निर्गुणविद्यायां गतिरनर्थिका मुक्तिफलतयेत्युक्तम् ।
विदुषो हि देहपातोत्तरं तु देहान्तरं भवेन्नेति ॥ ४९४ ॥
इह चिन्त्यते हि नन्विह नेयं चिन्ताऽत्र भवति युक्ततमा ।
न हि विद्यासंपत्तौ मुक्तिविलम्बेऽस्ति कारणं किमपि ॥ ४९५ ॥
नैवेह पाकसाधनसंपत्तावोदनो भवेन्नेति ।
भुञ्जानस्तृप्येत्किं न वेति चिन्ता तु कुत्रचिद्दृष्टा ॥ ४९६ ॥
इति चेदुपपन्नेयं चिन्ता यस्मादिहेतिहासादौ ।
ब्रह्मविदां केषांचिद्देहान्तरजन्म दर्शितं भूयः ॥ ४९७ ॥
स्मृत इह वेदाचार्यो नाम्नाऽपांतरतमा इति ख्यातः ।
विष्णुनियोगाच्च कलेरादौ द्वैपायनो बभूवेति ॥ ४९८ ॥
इह च वसिष्ठोऽपि तथा ब्रह्मण एवैष मानसः पुत्रः ।
सन्नपि निमिशापादपगतपूर्वतनुश्चतुर्मुखादेशात् ॥ ४९९ ॥
मित्रावरुणाभ्यां पुनरसौ बभूवेति च स्मृतो भवति ।
भृग्वादीनां च तथा पुनरुत्पत्तिस्तु वारुणे यज्ञे ॥ ५०० ॥
स्मर्यत एव तथैव ब्रह्मण एवैष मानसः पुत्रः ।
सोऽयं सनत्कुमारः स्कन्दत्वेन स्वयं बभूवेति ॥ ५०१ ॥
इह दक्षनारदादीनामपि दृष्टा तदन्तरोत्पत्तिः ।
स्मृतिषु श्रुतिषु च मन्त्रार्थवादयोरपि च दृश्यते सेयम् ॥ ५०२ ॥
पतिते हि पूर्वदेहे केचिद्देहान्तरं समाददते ।
स्थित एवास्मिन्केचिद्योगैश्वर्यादनेकमाददते ॥ ५०३ ॥

स्मर्यन्ते सर्वे ते सम्यङ्निर्णीतसकलवेदार्थाः ।
तस्माद्ब्रह्मविदामपि देहान्तरदर्शनादिह प्राप्तम् ॥ ५०४ ॥
अन्याः (स्याः) परविद्यायाः पाक्षिकमेव हि विमोक्षहेतुत्वम् ।
तद्हेतुत्वं वा स्यादेव प्राप्ताविहोत्तरं ब्रूते ॥ ५०५ ॥
वेदप्रवर्तनादिष्वधिकारेष्वेव संनियुक्तानाम् ।
तेषामपान्तरतमःप्रभृतीनामाधिकारिकाणां हि ॥ ५०६ ॥
तावदवस्थानं स्यादधिकारो यावदेव तेषां स्यात् ।
भगवान्यथा हि सविता सहस्रयुगमाधिकारिको भूत्वा ॥ ५०७ ॥
उदयास्तमयविवर्जितमन्ते कैवल्यमनुभवत्येषः ।
अथ तत ऊर्ध्वमिति श्रुतिरिममेवार्थं प्रदर्शयत्यस्य ॥ ५०८ ॥
ये चेह वर्तमाना ब्रह्मविदस्ते यथैव कैवल्यम् ।
आरब्धभोगनाशे संजाते सम्यगनुभवन्ति तथा ॥ ५०९ ॥
इह तस्य तावदेवेत्येषा श्रुतिरेतमर्थमुपदिशति ।
एवं ब्रह्मविद इमे ये चापान्तरतमःप्रमुख्याः स्युः ॥ ५१० ॥
परमेश्वरेण ते तेष्वधिकारेषु च नियोजिताः सन्तः ।
कैवल्यहेतुभूते सम्यग्ज्ञाने हि विद्यमानेऽपि ॥ ५११ ॥
अक्षीणभूरिकृत्या अवतिष्ठन्ते हि यावदधिकारम् ।
अधिकारान्ते तु पुनर्मुच्यन्त इतीह सकलमविरुद्धम् ॥ ५१२ ॥
जन्मान्तरं यदेतत्तत्त्वज्ञानामपीह चेत्तर्हि ।
ज्ञानान्मुक्तिः कथमिति शङ्का पदमादधाति नैवेह ॥ ५१३ ॥
यस्मात्सकृत्प्रवृत्तं प्रारब्धं ते फलप्रदानाय ।
अतिवाहयन्त एव हि गृहाद्गृहान्तरमिवान्यमन्यं हि ॥ ५१४ ॥
देहं क्रमेण युगपन्निर्ह(र्मा)य स्वाधिकारसिध्य्यर्थम् ।
तानधितिष्ठन्तोऽपरिमुषितस्मृतयो हि संचरन्ति किल ॥ ५१५ ॥
यत्पूर्वजन्महेतुः प्रारब्धं ज्ञानिनां तदेवेह ।
जन्मान्तरहेतुः स्यान्मुक्तिः स्यात्तदवसान एतेषाम् ॥ ५१६ ॥
पूर्वप्रारब्धान्तरकर्म च जन्मान्तरे यदा हेतुः ।
तत्रैव मुख्यभावो न चैवमत्रास्त्यतो न दोषोऽयम् ॥ ५१७ ॥
जातिस्मरा न चैते त एवैत इति हि यतः प्रसिद्धास्ते ।
ये पूर्वदेहनामाभिसंधिहीना भवन्ति परतन्त्राः ॥ ५१८ ॥

ये चापि साभिमानास्ते वै जातिस्मरा न चैते स्युः ।
एते हि निरभिमानास्तथा स्वतन्त्राश्च पूर्वनामानः ॥ ५१९ ॥
इति वैषम्यान्नैते भवन्ति जातिस्मराः कथंचिदपि ।
सुलभा विवदितुकामा जनकेन ब्रह्मवादिनी काऽपि ॥ ५२० ॥
स्वीयं व्युदस्य देहं ततस्तु सा जनकदेहमाविश्य ।
तेन समं व्युद्य पुनः स्वमेव देहं समाविवेशेति ॥ ५२१ ॥
स्मृतिनिर्देशादेव स्वातन्त्र्य तेषु दर्शितं भवति ।
यद्युपयुक्ते कर्मणि देहान्तरकारणं हि कर्मान्यत् ॥ ५२२ ॥
आविर्भवेत्ततोऽन्यत्तथा प्रसज्येत [ तद्वदेव पुनः ]।
पाक्षिकमेव तदा स्यात्परविद्याया विमोक्षहेतुत्वम् ॥ ५२३ ॥
नैषा शङ्का प्रकृते ज्ञानात्कर्मक्षयस्य निर्देशात् ।
श्रुतिरत्र भिद्यते हृदयग्रन्थिरितीममर्थमुपदिशति ॥ ५२४ ॥
दर्शयति च स्मृतिप्रतिलम्भ इति श्रुतिरपीममेवार्थम् ।
स्मृतिरपि दर्शयति यथैधांसि समिद्धोऽग्निरेवमाद्या हि ॥ ५२५ ॥
बीजान्यग्न्युपदग्धानीत्यन्याऽपि स्मृतिर्यथोक्तार्थम् ।
नाविद्यादिक्लेशे दग्धेऽपि क्लेशकार्यरूपस्य ॥ ५२६ ॥
कर्माशयस्य चैकांशे दाहश्चैकतः प्ररोह इति ।
उपपद्यते कथंचन न चाग्निदग्धस्य शालिबीजस्य ॥ ५२७ ॥
एकांशतः प्ररोहो लोके केनापि कुत्रचिद्दृष्टः ।
कर्माशयस्य चाप्यारब्धफलस्य तु निवृत्तिरेवं स्यात् ॥ ५२८ ॥
मुक्तेषोरिव वेगक्षयादिहापि च शरीरपातेन ।
दर्शयति चेममर्थं श्रुतिरेव हि तस्य तावदेवेति ॥ ५२९ ॥
तेनाऽऽधिकारिकाणामवस्थितिर्भवति यावदधिकारम् ।
ज्ञानफलस्यानैकान्तिकताऽपि न चेह शङ्कितुं शक्या ॥ ५३० ॥
श्रुतिरविशेषेणैव ज्ञानान्मोक्षं हि सर्वजीवानाम् ।
तद्यो यो देवानामित्याद्या किल यतः प्रदर्शयति ॥ ५३१ ॥
सगुणोपासनया ये त्वैश्वर्यादिषु फलेषु सक्तास्ते ।
पश्चादैश्वर्यक्षयदर्शनमात्रेण तत्र निर्विण्णाः ॥ ५३२ ॥
परविद्यापरनिष्ठाबलेन तेऽपि प्रयान्ति कैवल्यम् ।
दर्शयति चेममर्थं श्रुतिरेषा ब्रह्मणा सहेत्याद्या ॥ ५३३ ॥

यदिदं ज्ञानफलं स्याद्भवति हि तच्चेदमनुभवारूढम् ।
फलविरहाशङ्केयं तत्र न युक्ता परात्मविज्ञाने ॥ ५३४ ॥
अननुभवारूढे किल कर्मफले युज्यते हि शङ्केयम् ।
यत्साक्षादपरोक्षादिति श्रुतिस्तदपरोक्षमुपदिशति ॥ ५३५ ॥
श्रुतिरपि तत्त्वमसीति स्वात्मैक्येनोपदिशति फलमेतत् ।
श्रुतिरियमन्यार्थतया परिणेतुं नैव शक्यते यस्मात् ॥ ५३६ ॥
तद्धैतत्पश्यन्नित्येषा ह्यात्मापरोक्षसमकालम् ।
सर्वात्मभावरूपं परात्मदर्शनफलं प्रदर्शयति ॥ ५३७ ॥
ऐकान्तिकी हि तस्माद्विदुषः कैवल्यसिद्धिरिति सिद्धम् ।

अक्षरधियां त्ववरोधः सामान्यत-
द्भावाभ्यामौपसदवत्तदुक्तम् ॥ ३३ ॥

इह खलु वाजसनेयक एतद्वै तदिति वाक्यमाम्नातम् ॥ ५३८ ॥
आथर्वणिकेऽथ परा यया तदक्षरमितीदमुपदिष्टम् ।
अन्यत्रापि विशेषप्रतिषेधेनाक्षरं परं ब्रह्म ॥ ५३९ ॥
उपदिष्टं तत्र पुनः प्रतिषिध्यन्ते हि केचिदतिरिक्ताः ।
तत्र च विशेषनिरसनबुद्धीनां तत्र तत्र दृष्टानाम् ॥ ५४० ॥
सर्वासां सर्वत्र प्राप्तिः किंवा भवेद्व्यवस्थेति ।
संदेहे श्रुतिभेदादिह व्यवस्था भवेदिति प्राप्तौ ॥ ५४१ ॥
अक्षरधियामिहाऽऽसां सर्वत्र प्राप्तिमेव दर्शयति ।
ये त्वक्षरे हि धर्मिणि निषेधधीहेतवो हि शब्दाः स्युः ॥ ५४२ ॥
अक्षरधियोऽत्र ते खल्ववरोधोऽप्यत्र तदुपसंहारः ।
अक्षरबुद्धय एताः सर्वाः सर्वत्र चावरोद्धव्याः ॥ ५४३ ॥
यस्मात्सर्वत्रैव ब्रह्मप्रतिपादनप्रकारोऽयम् ।
सर्वविशेषनिरस्तात्मकः समानो हि दृश्यते किंच ॥ ५४४ ॥
सर्वत्र प्रतिपाद्यब्रह्माभिन्नं प्रतीयते तस्मात् ।
अन्यत्र च श्रुता अपि सर्वत्रैता धियः कुतो न स्युः ॥ ५४५ ॥
तदिदं ह्यानन्दादय इतिसूत्रव्याकृतौ पुरा कथितम् ।
तत्र च विधिरूपाणि हि विशेषणान्येव चिन्तितानि परम्॥५४६॥
अत्र प्रतिषेधात्मकविशेषणान्येव चिन्तितानि पुनः ।
अस्त्वानन्दादीनामुपसंहारः स्वरूपभूतत्वात् ॥ ५४७ ॥

न निषेधानामेवं स्यादानन्त्यादनात्मभावाच्च ।
इत्यधिकाशङ्कायां प्रतिषेधानामनात्मभावेऽपि ॥ ५४८ ॥
तेषां हि निर्विशेषब्रह्मप्रतिपत्तिसाधनत्वेन ।
उपसंहारो युक्तो निषेधवाक्यैकवाक्यभावेन ॥ ५४९ ॥
इत्येतद्दर्शयितुं सेयं चिन्ताऽत्र भवति युक्ततमा ।
अत्रौपसदवदिति यन्निदर्शनं तन्निरूप्यते सपदि ॥ ५५० ॥
जमदग्निना कृतोऽसावहीनसंज्ञः क्रतुश्चतूरात्रः ।
स तु जामदग्न्य इति किल विख्यातस्तत्र चोपसत्संज्ञाः ॥ ५५१ ॥
इष्टय एतास्तु पुरोडाशिन्यस्तैत्तिरीयके विहिताः ।
अग्नेर्वैहोत्रं वेरिति च पुरोडाशदानमन्त्राणाम् ॥ ५५२ ॥
उद्गातृवेदजानामध्वर्युभिरेव भवति संबन्धः ।
तत्र पुरोडाशस्य प्रधानमध्वर्युकर्तृकं यस्मात् ॥ ५५३ ॥
तदिह प्रधानतन्त्रं ह्यङ्गं निर्दिष्टमेवमत्रापि ।
अक्षरतन्त्रत्वादिह विशेषणानां हि यत्र कुत्रापि ॥ ५५४ ॥
उत्पन्नानामेषां सर्वत्रैवाक्षरेण संबन्धः ।
उक्तः प्रथमे काण्डे गुणमुख्येत्यादिना हि सूत्रेण ॥ ५५५ ॥
उत्पन्नस्य फले विनियोगविधिर्मुख्य एष भवति गुणः ।
उत्पत्तिविधिर्हि तयोर्व्यतिक्रमश्चेत्तदा तु मुख्येन ॥ ५५६ ॥
मन्त्रात्मकवेदस्य च भवति ह्यध्वर्युणैव संयोगः ।
उत्पत्तिर्हि फलार्था सर्वत्रैवोपलभ्यते लोके ॥ ५५७ ॥
तस्मात्फलविधिनैव हि गुणस्य नयनमिति भवति सूत्रार्थः ।

## इयदामननात् ॥ ३४ ॥

आथर्वणिकाः श्वेताश्वतराश्च द्वा सुपर्णेति ॥ ५५८ ॥
एवं ह्यृतं पिबन्तौ सुकृतस्येत्यादिकं पठन्ति कठाः ।
अत्र च विद्यैकत्वं विद्यानानात्वमिति तु संदेहः ॥ ५५९ ॥
इह विद्यानानात्वं युक्तं यस्माद्विशेष इह दृष्टः ।
अत्राथर्वणवाक्ये ह्येकस्य च भोक्तृता विनिर्दिष्टा ॥ ५६० ॥
कठवल्लीवाक्ये हि द्वयोश्च भोक्तृत्वमभिहितं भवति ।
वेद्यं हि भिद्यमानं विद्यां भिद्यादिहेत्यतो ब्रूते ॥ ५६१ ॥

विद्यैकत्वमिह स्याद्यत उभयोर्मन्त्रयोरभिन्नं हि ।
द्वित्वोपेतं वेद्यं दृष्टं ह्रीयत्तया परिच्छिन्नम् ॥ ५६२ ॥
इह वेद्यरूपभेदो नाऽऽशङ्क्यो भवति मन्त्रयोरुभयोः ।
यस्मादेतौ जीवद्वितीयमेवेश्वरं प्रदर्शयतः ॥ ५६३ ॥
अन्योऽभिचाकशीतीत्यतोऽशनायाद्यतीत एवायम् ।
प्रतिपाद्यते परात्मा स एव पुनरपि च वाक्यशेषेऽपि ॥ ५६४ ॥
कठवल्ल्यां खलु जीवे पिबति च तत्साहचर्यमात्रेण ।
परमात्मा पिबतीति च्छत्रिन्यायादिदं भवेद्भाक्तम् ॥ ५६५ ॥
प्रकरणतोऽपि परात्मा प्रतीयते वाक्यशेषतोऽप्येवम् ।
तस्मान्न वेद्यभेदाद्विद्याभेदोऽत्र शङ्कितुं शक्यः ॥ ५६६ ॥
तादात्म्यबोधनार्थं जीवोपादानमिह भवेत्सफलम् ।
भेदाभेदविचारावसरो नैव हि परात्मविद्यायाम् ॥ ५६७ ॥
इत्युक्तं तस्मादत्राधिकधर्मोपसंहृतिर्युक्ता ।

अन्तरा भूतग्रामवत्स्वात्मनः ॥ ३५ ॥

यत्साक्षादपरोक्षाद्ब्रह्मेति द्विः समामनन्त्यत्र ॥ ५६८ ॥
नैरन्तर्येणोषस्तकहोलप्रश्नयोरिदं वाक्यम् ।
वाजसनेयिन एते तत्र च विद्या भवेत्किमेकैव ॥ ५६९ ॥
किंवा नानेत्येवं संदेहे सा तु भवति नानेति ।
युक्तं वक्तुं यस्मादभ्यासश्चेह दृश्यते तस्याः ॥ ५७० ॥
विद्यैकत्वे तुल्यार्थकं द्विराम्नानमफलमेव स्यात् ।
तस्मादभ्यासात्किल भवति यथा कर्मभेद एवमिह ॥ ५७१ ॥
विद्याभेदोऽभ्यासात्स्यादिति शङ्कां निराकरोतीह ।
अत्रोषस्तकहोलब्राह्मणयोः स्वात्मनो हि विद्यैक्यम् ॥ ५७२ ॥
यस्मादिहान्तराऽऽम्नानानामविशेष उभयतो दृष्टः ।
सर्वान्तरोऽन्तरात्मा ह्यविशिष्टः पृच्छ्यते स उभयत्र ॥ ५७३ ॥
प्रत्युच्यते च न द्वावात्मानावान्तरौ हि संभवतः ।
यदि चाऽऽन्तरत्वमुभयोर्भूतग्रामवदिदं प्रसज्येत ॥ ५७४ ॥
इह पाञ्चभौतिकेऽस्मिन्देहे चाऽऽपोऽन्तरा पृथिव्याः स्युः ।
अद्भ्यस्तेजोऽन्तरमिति यथा तथैवेह चान्तरत्वं स्यात् ॥ ५७५ ॥

सर्वान्तरत्वमेतच्चाऽऽपेक्षिकमेव नैव मुख्यं स्यात् ।
अथवा भूतग्रामवदित्यस्यार्थान्तरं भवेदेतत् ॥ ५७६ ॥
भूतग्रामेष्वात्मा ह्येको देव इतिमन्त्रनिर्दिष्टः ।
सर्वान्तरस्तथैतद्ब्राह्मणयोरपि भवेदसाविति हि ॥ ५७७ ॥
तस्माद्वेद्यैकत्वाद्विद्यैकत्वं भवेन्निराबाधम् ।
अभ्यासादिह विद्याभेदो यश्चेह शङ्कितः सोऽपि ॥ ५७८ ॥
नैवात्र भवति यत्र तु निरर्थकः स्यात्स चायमभ्यासः ।
तत्रैव भेदकोऽसाविह तूषस्तप्रदर्शितस्यास्य ॥ ५७९ ॥
अशनायादिनिरासार्थतया सफल इति सपदि दर्शयति ।

अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशान्तरवत् ॥ ३६ ॥

अथ यदि विद्याभेदो नैवाभ्युपगम्यते तयोरुभयोः ॥ ५८० ॥
आम्नानभेद एव ब्राह्मणयोः कथमिवोपपद्येत ।
इति चेदुपदेशान्तरवदेष आम्नानभेद उपपन्नः ॥ ५८१ ॥
ताण्ड्युपनिषदि हि षष्ठे प्रपाठके दृश्यते हि नवधाऽसौ ।
तत्त्वमसीत्युपदेशो विद्याभेदो न तत्र संभवति ॥ ५८२ ॥
यदुपक्रमोपसंहाराभ्यामैकार्थ्यमवगतं तत्र ।
अपि भूय एव मा भगवानिति वाक्येन गम्यते ह्येतत् ॥ ५८३ ॥
अर्थस्यैकस्यैव हि पुनः पुनः प्रतिपिपादयिषितत्वम् ।
तत्रासकृदुपदेशस्तत्तच्छङ्कानिवारणार्थो हि ॥ ५८४ ॥
भवति तथैवेहापि प्रश्नसमाप्त्योः समानरूपत्वात् ।
एकार्थगोचराविह दृष्टौ चोपक्रमोपसंहारौ ॥ ५८५ ॥
तत्र च यदेव साक्षादिति द्वितीये कहोलकप्रश्ने ।
आविश्य चैवकारं पूर्वप्रश्नस्थमुत्तरत्र पुनः ॥ ५८६ ॥
आकृष्यमाणमर्थं दर्शयति परं तु पूर्ववाक्ये च ।
कथितो हि कार्यकरणव्यतिरिक्तस्याऽऽत्मनो हि सद्भावः ॥५८७॥
उपदिश्यतेऽशनायाद्यसङ्गिता तस्य चोत्तरत्रेति ।

व्यतिहारो विशिंषन्ति हीतरवत् ॥ ३७ ॥

तद्योऽहं सोऽसाविति योऽसौ सोऽहमिति चाऽऽमनन्तीदम्॥५८८॥
तत्रैतरेयिणो हि प्रकृत्य रविमण्डलस्थितं पुरुषम् ।
त्वं वा अहमस्मीति त्वमस्यहं वा इतीह कथयन्ति ॥ ५८९ ॥

जाबाला वाक्यमिदं तत्र च संदेह एष संभवति ।
किमिह व्यतिहारेणोभयरूपा मतिरियं हि कर्तव्या ॥ ५९० ॥
अथवा किमेकरूपेत्यत्रेयं स्यादिहैकरूपेति ।
न ह्यत्राऽऽत्मेश्वरयोरैक्यं मुक्त्वाऽन्यदस्ति किंचिदिह ॥ ५९१ ॥
चिन्तयितव्यं यदि चेच्चिन्तयितव्यं हि किमपि कल्प्येत ।
जीवस्येशात्मत्वं संसार्यात्मत्वमीश्वरस्येति ॥ ५९२ ॥
जीवस्येशात्मत्वे तस्योत्कर्षो भवेद्यदीशस्य ।
संसार्यात्मत्वं स्यात्तदेश्वरस्य हि निकर्ष एव स्यात् ॥ ५९३ ॥
तस्मादिहैकरूपा मतिरेव स्यान्नहि द्विरूपेयम् ।
व्यतिहाराम्नायस्त्वेकत्वदृढीकृतिफलार्थ इत्येवम् ॥ ५९४ ॥
प्राप्ते ब्रूते ह्याध्यानाय व्यतिहार एष आम्नातः ।
इतरवदिति च निदर्शनमत्र भविष्यति यथेतरे हि गुणाः ॥५९५॥
सर्वात्मत्वप्रभृतय आम्नायन्ते तथैव चेहापि ।
इह च समाम्नातारस्तथोभयोच्चारणाद्विशिंषन्ति ॥ ५९६ ॥
त्वं वाऽहमस्म्यहं च त्वमसीति हि तत्किल द्विरूपायाम् ।
कर्तव्यायां हि मतावर्थवदेतन्न चान्यथा भवति ॥ ५९७ ॥
ननु यद्युभयाम्नानस्यार्थविशेषोऽत्र कल्प्यते तर्हि ।
ईशस्य च संसारित्वापत्त्या स्यान्निकर्ष इत्युक्तम् ॥ ५९८ ॥
नासौ दोष इह स्यादैकात्म्यस्यानुचिन्त्यमानत्वात् ।
नन्वेकत्वदृढीकारोऽसाविह दुर्निवार इति चेन्न ॥ ५९९ ॥
अत्रैकत्वदृढीकारोऽसौ न निवार्यते परंत्वत्र ।
वचनप्रामाण्याद्व्यतिहारेणेह तु मतिर्द्विरूपैव ॥ ६०० ॥
कर्तव्या न त्वन्या मतिरित्येतावदेव वक्ष्यामः ।
तस्यां मतौ कृतायां फलतश्चैकत्वमपि दृढी भवति ॥ ६०१ ॥
आध्यानार्थं हि यथा सत्यादिगुणेषु चोपदिष्टेषु ।
तत्तद्गुणः परात्मा प्रसिध्यतीहापि तद्वदेव स्यात् ॥ ६०२ ॥
तस्माद्व्यतिहारोऽसावाध्यातव्यस्तथोपसंहार्यः ।

## सैव हि सत्यादयः ॥ ३८ ॥

इह किल वाजसनेयश्रुतौ स यो हैतमिति समाम्नातम् ॥ ६०३ ॥

योऽयं सुमहद्यक्षं प्रथमजमेतं हिरण्यगर्भाख्यम् ।
सत्यं ब्रह्मेत्येवं वेद भवेत्तस्य लोकविजय इति ॥ ६०४ ॥
एषा हि सत्यविद्या नामाक्षरविद्यया समाकलिता ।
तत्राऽऽम्नाता हि पुनस्तद्यत्तत्सत्यमिति समाम्नातम् ॥ ६०५ ॥
वाक्यं तत्राऽऽदित्यो ज्योतिर्मण्डलगतो हि पुरुषो यः ।
यो दक्षिणाक्षिसंस्थः पुरुषस्तौ सत्यमिति समाम्नातौ ॥ ६०६ ॥
किं द्वे हि सत्यविद्ये किंवाऽप्येकेति तत्र संदेहः ।
तत्र तु भिन्ना युक्ता फलसंयोगो यतोऽत्र भेदेन ॥ ६०७ ॥
जयतीमाँल्लोकानिति भवति हि पूर्वत्र हन्ति पाप्मानम् ।
जयतीति चोपरिष्टात्फलसंयोगो हि भिद्यते च पुनः ॥ ६०८ ॥
प्रकृताकर्षणमत्रोपास्यैकत्वेन भवति युक्तमिति ।
एवं प्राप्ते ब्रूते ह्येकैवैषाऽत्र सत्यविद्येति ॥ ६०९ ॥
तद्यत्तत्सत्यमितिप्रकृताकर्षणमिदं यतोऽत्रास्ति ।
ननु विद्याभेदेऽपि प्रकृताकर्षणमुपास्यरूपैक्यात् ॥ ६१० ॥
उपपद्यत इत्युक्तं कथमिह विद्यैक्यमिति तु नाऽऽशङ्क्यम् ।
यत्र विशिष्टनिमित्ताद्विद्याभेदः प्रतीयते तत्र ॥ ६११ ॥
एवं तत्स्यादिह तूभयथावाक्ये प्रतीयमाने हि ।
पूर्वोपदिष्टविद्यासंबद्धं सत्यमुत्तरत्रापि ॥ ६१२ ॥
पुनराकृष्टं दृष्ट्वा विद्यैकत्व हि निश्चितं भवति ।
फलभेदश्रवणादिह विद्याभेद इति यच्च पूर्वोक्तम् ॥ ६१३ ॥
तद्दूषणमेव यतः फलभेदश्रुतिरिहार्थवादः स्यात् ।
आदित्यमण्डलेऽक्षिणि पुरुषस्योपासना हि पूर्वोक्ता ॥ ६१४ ॥
अहरहमित्येवं खल्वङ्गान्तरमपि च पूर्वमुपदिष्टम् ।
अङ्गफलश्रुतिरेषा स्तुतिरूपा न हि विवक्षितार्था स्यात् ॥६१५॥
यस्मात्प्रधानविधिना फलप्रतीतावियं निराकाङ्क्षा ।
तस्मादिह फलभेदासिद्धौ विद्यैक्यमनपवादं स्यात् ॥ ६१६ ॥
यद्वा प्रधानवाक्ये कामपदादर्शनात्फलासिद्धौ ।
तस्मिंस्तु रात्रिसत्रन्यायेन फले निरूपणीये हि ॥ ६१७ ॥
अङ्गेऽपि च प्रधाने श्रुतमपि तदिदं फलं समुच्चित्य ।
भवति प्रधानफलमिति फलभेदोऽसावसिद्ध एवेह ॥ ६१८ ॥

तस्मादेकैवेयं विद्या तत्तद्विशेषणोपेता ।
आम्नायत इत्यत इह सत्यादिगुणोपसंहृतिर्युक्ता ॥ ६१९ ॥
केचित्त्वस्मिन्सूत्रे यच्चाक्ष्यादित्यपुरुषविषयं हि ।
वाजसनेयकवाक्यं छान्दोग्येऽप्यथ य एष इत्यादि ॥ ६२० ॥
तत्रैव चान्तरक्षिणि पुरुषो दृश्यत इति प्रसिद्धं यत् ।
वाक्यमुदाहृत्यैतत्सैवाक्ष्यादित्यपुरुषविषयेयम् ॥ ६२१ ॥
उभयत्रैका विद्येत्येवं निश्चित्य तत्र सत्यादीन् ।
वाजसनेयिभ्यो हि च्छन्दोगानामिहोपसंहार्यान् ॥ ६२२ ॥
मन्यन्ते हि तदेतत्समञ्जसं नैव कथमपीह स्यात् ।
छान्दोग्ये चोद्गीथव्यपाश्रयोऽयं प्रतीयते विद्या ॥ ६२३ ॥
तत्राऽऽदिमध्ययोरपि तथाऽवसाने च कर्मचिह्नानि ।
इयमेवर्गग्निः सामेत्येवमुपक्रमे हि निर्दिष्टम् ॥ ६२४ ॥
तस्यर्क्साम च गेष्णाविति मध्ये साम गायतीत्यन्ते ।
नैवेह वाजिवाक्ये किमपि च कर्माङ्गचिह्नमस्त्यत्र ॥ ६२५ ॥
प्रक्रमभेदाद्विद्याभेदे युक्ता गुणव्यवस्थैव ।

## कामादीतरत्र तत्र चाऽऽयतनादिभ्यः ॥ ३९ ॥

अथ य इदमित्यधीतं छान्दोग्ये दृश्यते हि वाक्यमिदम् ॥६२६॥
तत्र ब्रह्मपुरेऽस्मिन्दहरं किल पुण्डरीकवेश्मोक्तम् ।
तस्यान्तस्थाकाशं दहरं प्रस्तुत्य चायमुपदिष्टः ॥ ६२७ ॥
अपहतपाप्मा विजरो विमृत्युरयमिह विशोकरूपश्च ।
विजिघत्सो ह्यपिपासः स सत्यकामश्च सत्यसंकल्पः ॥ ६२८ ॥
इह किल वाजसनेयकवाक्यं तदिदं स वेति चाधीतम् ।
एष महानज आत्मा योऽयं विज्ञानमय इति प्रथितः ॥ ६२९ ॥
योऽसावन्तर्हृदयाकाशोऽत्यल्पोऽस्ति तत्र शेतेऽसौ ।
सर्वस्य वशी सर्वस्येशानः सोऽयमिति हि तत्रोक्तम् ॥ ६३० ॥
तत्र च विद्यैकत्वं परस्परं किल गुणोपसंहारः ।
विद्यानानात्वं वा किमत्र युक्तमिति संशये ब्रूते ॥ ६३१ ॥
अत्र च विद्यैकत्वं युक्तमतः स्याद्गुणोपसंहारः ।
छान्दोग्यवाक्यदृष्टा ये वै किल सत्यकामतादिगुणाः ॥ ६३२ ॥

ते हि स वा एष महानज आत्मेत्यादिवाजिवाक्ये हि ।
संबध्यन्ते यत्त्विह वाज्युपदर्शितमिदं वशित्वादि ॥ ६३३ ॥
छान्दोग्य एष आत्मेत्यत्र तु संबध्यते तदेतदपि ।
यस्मादायतनादिकमुभयत्रैवोपलभ्यते हि समम् ॥ ६३४ ॥
हृदयायतनं हि समं वेद्यः परमेश्वरः समानोऽत्र ।
सेतुत्वं च समानं लोकासंभेदकारणं यदिदम् ॥ ६३५ ॥
नन्विह विद्यैकत्वं न चोभयत्रापि शङ्कितुं शक्यम् ।
हृदयाकाशस्यैव च्छान्दोग्ये दृश्यते हि गुणयोगः ॥ ६३६ ॥
तत्र शयानस्यैव ब्रह्मण उपदिश्यते हि गुणयोगः ।
वाजसनेयकवाक्ये वेद्ये भिन्ने कथं हि विद्यैका ॥ ६३७ ॥
इति चेन्नासौ दोषः कथमपि नैवात्र वेद्यभेदोऽस्ति ।
छान्दोग्यदहरवाक्ये ब्रह्मैवाऽऽकाशशब्दमुपदिष्टम् ॥ ६३८ ॥
यद्यप्यत्र विशेषश्छान्दोग्ये ब्रह्म सगुणमुपदिष्टम् ।
वाजसनेयकवाक्ये निर्गुणमुपदिश्यते परं ब्रह्म ॥ ६३९ ॥
विद्याभेदेऽनुचितो गुणोपसंहार इह किलाथापि ।
गुणवत एकत्वेनाऽऽयतनादीनां समानरूपतया ॥ ६४० ॥
बुद्धिस्थानां तेषामुपसंहारो हि निर्गुणस्थाने ।
स्तुत्यर्थोऽसावुपसंहारो नोपासनाय भवतीह ॥ ६४१ ॥
यत्र क्वचिदपि दृष्टैर्गुणैः स्तुतेः कर्तुमत्र शक्यत्वात् ।

## आदरादलोपः ॥ ४० ॥

छान्दोग्ये वैश्वानरविद्यायां वाक्यमेतदुपदिष्टम् ॥ ६४२ ॥
तद्यद्भक्तमिति स यां प्रथमामाहुतिमितीदमुपदिष्टम् ।
तत्र च पञ्च प्राणाहुतयो विहितास्ततश्च तास्वेव ॥ ६४३ ॥
स य एतदेवमित्यादिनोपदिष्टोऽग्निहोत्रशब्दोऽपि ।
तत्र विचार्यत एतत्किमिह प्राणाग्निहोत्रसंज्ञस्य ॥ ६४४ ॥
भोजनलोपे लोपो भवेत्किमथवा न तस्य लोप इति ।
तद्यद्भक्तमितिश्रुतभक्तागमनस्य भोजनार्थत्वात् ॥ ६४५ ॥
भोजनलोपे लुप्यत एव प्राणाग्निहोत्रमेतदिति ।
एवं प्राप्ते ब्रूते स ( न ) लुप्यते तदिदमाग्निहोत्रमिति ॥ ६४६ ॥

यस्मादिहाग्निहोत्रे श्रुतिरेवाऽऽदरमियं प्रदर्शयति ।
जाबालश्रुतिरेषा या किल पूर्वोऽतिथिभ्य इत्याद्या ॥ ६४७ ॥
उपदिशति चैतदर्थं यश्चाहुत्वाऽग्निहोत्रमात्मीयम् ।
जुहुयात्पराग्निहोत्रं तथैव चेदमपि विफलमेव स्यात् ॥ ६४८ ॥
यच्चाऽऽत्मभोजनात्प्रागतिथीनां भोजनं भवेत्तस्मात् ।
अतिथिभ्यः प्रागेव स्वयमश्नीयादिति प्रदर्श्यैषा ॥ ६४९ ॥
प्राणाग्निहोत्रविषयकमादरमाविष्करोति सर्वेषाम् ।
नन्विह भोजनलोपे लोपो भुक्त्यर्थभक्तसंयोगात् ॥ ६५० ॥
प्रागुपदर्शित इति चेन्नासौ दोषो यतश्च वाक्यमिदम् ।
द्रव्यविशेषविधानार्थकमेव स्याद्यथाऽग्निहोत्रे हि ॥ ६५१ ॥
आज्यपयःप्रभृतीनि द्रव्याणि भवन्ति यानि चान्यानि ।
इह चाग्निहोत्रशब्दात्तेषामपि कौण्डपाय(यि)सत्र इव ॥ ६५२ ॥
सम्यक्प्राप्तौ सत्यां भक्तद्रव्यैकगुणविधानार्थम् ।
तद्यद्भक्तमितीदं वाक्यं गुणलोप इति नयेनात्र ॥ ६५३ ॥
भोजनलोपेऽप्यद्भिर्द्रव्येणान्येन चाविरुद्धेन ।
प्रत्याम्नायन्यायेनैव प्राणाग्निहोत्रसंज्ञस्य ॥ ६५४ ॥
स्यादेवानुष्ठानं न लोप इत्यस्य चोत्तरं पठति ।

## उपस्थितेऽतस्तद्वचनात् ॥ ४१ ॥

भोजन उपस्थिते किल भोज्यात्प्रथमोपनिपतिताद्द्रव्यात् ॥ ६५५ ॥
प्राणाग्निहोत्रमेतन्निर्वर्तयितव्यमन्यथा नेति ।
तद्यद्भक्तमिति श्रुतिवचनं बोधयति हीममेवार्थम् ॥ ६५६ ॥
श्रुतिरियमेवं ब्रूते यच्छब्देनेह भोजनाक्षिप्तम् ।
भक्तमनूद्य च तस्मिंस्तद्धोमीयमिति होमसंयोगम् ॥ ६५७ ॥
तस्मादिहाऽऽहुतीनां भुक्त्यर्थद्रव्यसाध्यतैव स्यात् ।
इह भोजनार्थमेतद्भक्तमुपाश्रित्य ता उपन्यस्ताः ॥ ६५८ ॥
भोजनलोपे तासां लोपो नैवाऽऽश्रयान्तरार्पकता ।
आश्रित्य च विहितानामाश्रयलोपे हि लोप इह युक्तः ॥ ६५९ ॥
गोदोहनस्य च यथा क्रत्वर्थप्रणयनाश्रितस्यैव ।
क्रतुलोपे लोपोऽयं न चाऽऽश्रयान्तरसमर्पकत्वमपि ॥ ६६० ॥

प्रकृताग्निहोत्रधर्मप्राप्तिरपि न चेह शङ्कितुं शक्या ।
यः कुण्डपायिसत्रे दृष्टो मासाग्निहोत्रशब्दोऽयम् ॥ ६६१ ॥
स तु विधिवाक्यस्थोऽतस्तत्र तु तद्धर्मयोग उचितः स्यात् ।
इह चाग्निहोत्रशब्दो योऽसौ दृष्टः स चार्थवादगतः ॥ ६६२ ॥
स्तुतिपर एव न नित्याग्निहोत्रसाम्यं विधापयितुमर्हः ।
यदि शब्दमात्रसाम्यात्तद्धर्मप्राप्तिरत्र कल्प्येत ॥ ६६३ ॥
होमाधिकरणभावायाग्न्युद्धरणादयोऽपि कल्प्येरन् ।
यद्ययमग्नौ होमस्तदा विलुप्येत भोजनार्थत्वम् ॥ ६६४ ॥
ब्रूते जाबालश्रुतिरन्याधारा हि होमनिर्वृत्तिम् ।
उर एव वेदिरित्यादिकाग्निहोत्राङ्गजातमखिलमपि ॥ ६६५ ॥
मुख्यानां चालाभात्संपादिकमेव तत्र दर्शयति ।
मुख्याग्निहोत्रकालावरोध एतस्य नैव विहितोऽस्ति ॥ ६६६ ॥
अन्ये चोपस्थानादयो विरुद्धा इहोपलभ्यन्ते ।
तस्माद्भोजनपक्षे होमा एते भवन्ति नेतरथा ॥ ६६७ ॥
आदरवचनं भोजनपक्षे प्राथम्यबोधनार्थं स्यात् ।
यत्स्वामिभोजनस्योत्तरकालत्वं श्रुतिस्मृतिप्रथितम् ॥ ६६८ ॥
तदुपासकान्यविषयं तस्मात्सूत्रोक्तमखिलमुपपन्नम् ।

तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्य-
प्रतिबन्धः फलम् ॥ ४२ ॥

वैश्वानरविद्यायां यच्च प्राणाग्निहोत्रमुपदिष्टम् ॥ ६६९ ॥
तदनित्यभोजनाश्रितमनित्यमिति वर्णितं हि पूर्वत्र ।
कर्माङ्गसंश्रितानि हि विज्ञानानि च भवन्ति चान्यत्र ॥ ६७० ॥
अक्षरमुद्गीथमुपासीतेत्यादीनि तानि किंवा स्युः ।
कर्मसु नित्यान्येव हि पर्णमयीत्वादिवत्किमेतानि ॥ ६७१ ॥
गोदोहनादिवद्वा भवन्त्यनित्यानि हीति संदेहः ।
तत्र तु कर्मसु नित्यान्येवैतानीति युक्तमाभाति ॥ ६७२ ॥
इह चानारभ्याधीतान्यप्युद्गीथसंश्रितत्वेन ।
क्रतुसंबन्धादङ्गान्तरवत्तानि प्रयोगवचनेन ॥ ६७३ ॥
परिगृह्यन्ते या च स्ववाक्यदृष्टा फलश्रुतिस्तेषाम् ।
आपयितेत्याद्या सा हि वर्तमानापदेशरूपत्वात् ॥ ६७४ ॥

स्यादर्थवादरूपा स्तुतिप्रधानैव केवलं भवति ।
सा चापापश्लोकश्रवणवदेव हि न च प्रधानं स्यात् ॥ ६७५ ॥
तस्माच्च यस्य पर्णमयीत्वाद्यप्रकरणोपदिष्टानाम् ।
अपि जुह्वादिद्वारा क्रतुप्रदेशाद्यथैव नित्यत्वम् ॥ ६७६ ॥
एवमिहोद्गीथोपास्तीनामपि नित्यतेत्यतो ब्रूते ।
निर्धारणानि यान्युद्गीथाद्यङ्गव्यपाश्रयाणि स्युः ॥ ६७७ ॥
रसतम आप्तिः प्राणः समृद्धिरादित्य एवमादीनि ।
न नियम्यरेन्कर्मसु नित्यवदेतानि तेषु तद्दृष्टेः ॥ ६७८ ॥
एवंजातीयानामनियतभावं हि दर्शयत्येषा ।
तेनोभौ कुरुत इति श्रुतिरिह सा चैतमर्थमुपदिशति ॥ ६७९ ॥
यश्चैवं वेद न यो वेदोभौ तौ हि कर्म कुरुत इति ।
उपदिश्याविदुषोऽपि हि कर्मानुज्ञां प्रदर्शयत्येषा ॥ ६८० ॥
प्रस्तावदेवताविज्ञानादिष्वपि तथैव दर्शयति ।
विज्ञानानामनियतभावं प्रस्तोतरेवमाद्या हि ॥ ६८१ ॥
अपि चैवंजातीयकविज्ञानस्य च फलं हि पृथगेव ।
कर्मण उपलभ्यत इह कर्मफलातिशयरूपमेवैतत् ॥ ६८२ ॥
श्रुतिरेतमर्थमेव हि दर्शयति यदेव विद्यते(ये)त्याद्या ।
तत्र च तस्याः श्रवणाद्विद्याहीनमपि वीर्यवत्कर्म ॥ ६८३ ॥
भवतीति गम्यते तद्विद्यानित्यत्व एव संभवति ।
नित्यत्वे विद्यायाः कथमिह विद्याविहीनमपि तदिदम् ॥ ६८४ ॥
सर्वाङ्गोपस्करणात्क्रियमाणं वीर्यवद्भवेत्कर्म ।
एवं हि लोकसामादिषु नियतानि हि फलानि शिष्यन्ते ॥६८५॥
कल्पन्ते हास्मा इत्याद्यैर्हि प्रत्युपासनं तानि ।
नेहार्थवादमात्रं प्रतिपत्तुं युज्यते फलश्रवणम् ॥ ६८६ ॥
स्तुतिलक्षकतापत्त्या गौणार्थकता भवेत्तदैवं चेत् ।
संभवति मुख्यवृत्त्या सफलार्थत्वे हि सा तु न न्याय्या ॥ ६८७ ॥
प्रकरणबलात्प्रयाजादीनां दर्शादिकाङ्गतालाभात् ।
तेषु फलश्रवणस्यार्थवादमात्रत्वकल्पनं युक्तम् ॥ ६८८ ॥
पर्णमयीत्वादिष्वपि फलश्रुतेरर्थवादता युक्ता ।
नैवाक्रियात्मकानां फलसंबन्धो विना क्रियायोगम् ॥ ६८९ ॥

अत इह फलार्थमेषां क्रतुयोगापेक्षितत्वमुचितं स्यात् ।
क्रतुरपि च जुहुप्रकृतिद्रव्याकाङ्क्षी भवेच्च तद्द्रव्यम् ॥ ६९० ॥
पर्णमयीति श्रुत्यां प्रकृतिद्रव्यार्पकेण निर्दिष्टम् ।
तेन जुहूद्वारैषा क्रत्वङ्गत्वे हि निश्चिते पश्चात् ॥ ६९१ ॥
तत्र फलश्रवणस्यार्थवादमात्रत्वनिश्चयो भवति ।
गोदोहनादिकानां क्रत्वाकाङ्क्षाविवर्जितत्वेन ॥ ६९२ ॥
चमसेनैव प्रकृताप्प्रणयनरूपाश्रयस्य लाभेन ।
उपपन्नो हि फले विधिरेवं बैल्वादिषूपपन्नोऽयम् ॥ ६९३ ॥
न तु पर्णमयीत्वादिष्वेवं प्रकृतोऽस्ति कश्चिदाधारः ।
क्रत्वाकाङ्क्षानियतो जुह्वादौ दृश्यतेऽयमाधारः ॥ ६९४ ॥
क्रत्वाकाङ्क्षारहितो ह्याधारो दृश्यते हि बैल्वादौ ।
पर्णमयीत्वादौ यदि फले विधिः कल्प्यते हि वाक्येन ॥ ६९५ ॥
जुह्वाफलसबन्धः प्रकृतिद्रव्येण चापि संबन्धः ।
वाक्येन कल्पनीयस्तदा भवेद्वाक्यभेद एवात्र ॥ ६९६ ॥
कर्माङ्गसंश्रितानामुपासनानां स्वतः क्रियात्वेन ।
त्यागादिवद्वतेषां फले विधानं विरुध्यते नेह ॥ ६९७ ॥
क्रत्वाश्रयाणि गोदोहनादिकानि च फलेन संबन्धात् ।
यद्वदनित्यानि तथैवोद्गीथादिव्यपाश्रयाणीह ॥ ६९८ ॥
श्रुतिवाक्यदर्शितानि ह्युपासनान्यपि भवन्त्यनित्यानि ।

## प्रदानवदेव तदुक्तम् ॥ ४३ ॥

वाजसने[ये] हि वदिष्याम्येवेत्यादि वाक्यमाम्नातम् ॥ ६९९ ॥
तत्र च वागादीनां प्राणः श्रेष्ठोऽवधारितोऽध्यात्मम् ।
अधिदैवतमग्न्यादेर्वायुश्छान्दोग्यकोपनिषदि तथा ॥ ७०० ॥
वायुर्वावेत्यत्र त्वग्न्यादीनां हि वायुरधिदैवम् ।
संवर्गो निर्णीतो वागादीनां तथैव संवर्गः ॥ ७०१ ॥
प्राणोऽध्यात्मं तत्र च वायुप्राणाविमौ हि पृथगेव ।
उपगन्तव्यौ स्यातामपृथग्वेतीह भवति संदेहः ॥ ७०२ ॥
तत्रापृथगिति युक्तं यतस्तयोर्नेह तत्त्वभेदोऽस्ति ।
नेहाभिन्ने तत्त्वे पृथगनुचिन्तनमिदं भवेद्ध्याध्यम् ॥ ७०३ ॥

अधिदैवतमध्यात्मं तत्त्वाभेदं श्रुतिः प्रदर्शयति ।
अग्निर्वागित्याद्या तथा त एत इति चैवमाद्याऽपि ॥ ७०४ ॥
प्राणानामेतेषां विभूतिमस्याऽऽधिदैविकीं ब्रूते ।
उपलभ्यते हि बहुधा तत्त्वाभेदस्तु तत्र तयोः ॥ ७०५ ॥
निर्दिशति च यः प्राणः स वायुरिति हि श्रुतिस्तयोरैक्यम् ।
वाजसने[ये] हि यतश्चोदेतीत्यादिनिगमवाक्ये हि ॥ ७०६ ॥
प्राणाद्वा एष उदेतीति प्राणेन चोपसंहारात् ।
एकत्वमेव हि तयोर्दर्शयति यथोक्तवाजिवाक्यमपि ॥ ७०७ ॥
प्राण्याच्चैवापान्याच्चेति प्राणव्रतेन चैकेन ।
उपसंहारोऽपि तयोः केवलमेकत्वमेव बोधयति ॥ ७०८ ॥
छान्दोग्येऽपि महात्मनश्चतुरो देव एक इति वाक्यम् ।
संवर्गमेकमेव हि गमयति न तयोः कथंचिदपि भेदम् ॥ ७०९ ॥
तस्माद्वायुप्राणावत्रापृथगेव चोपगन्तव्यौ ।
एवं प्राप्ते ब्रूते पृथगेवेमाविहोपगन्तव्यौ ॥ ७१० ॥
यस्मात्पृथगेवैतौ वायुप्राणाविहोपदिश्येते ।
आध्यानार्थो ह्याध्यात्मिकाधिदैवतविभाग उपदिष्टः ॥ ७११ ॥
सोऽयमसत्याध्यानपृथक्त्वे चानर्थकः प्रसज्येत ।
नन्विह तत्त्वाभेदानुचिन्तनं ह्यपृथगेव युक्तमिति ॥ ७१२ ॥
प्रागुक्तं कथमेतत्पृथग्भवेदिति न शङ्कितुं शक्यम् ।
तत्त्वाभेदेऽप्यत्रावस्थाभेदेन चोपदेशस्य ॥ ७१३ ॥
भेदवशेन तयोरनुचिन्तनभेदो भवेदसौ युक्तः ।
तत्त्वाभेदाभिप्रायेणैवास्योपपद्यमानस्य ॥ ७१४ ॥
अत्र यतश्चोदेतीत्यस्य तु न ध्येयभेदविघटकता ।
स यथैषां प्राणानां मध्यम इत्यादिवाक्यमपि वायोः ७१५ ॥
प्राणेन साम्यमुक्त्वा यथोक्तमाध्यानभेदमुपदिशति ।
योऽसाविहैकमेव व्रतमित्यत्रैवकार उक्तोऽसौ ॥ ७१६ ॥
प्राणव्रताभिसंध्या वागादिव्रतनिवर्तनार्थः स्यात् ।
भग्नव्रतानि वागादीनीति च तानि मृत्युरित्याद्या ॥ ७१७ ॥
भग्नव्रतत्वकथनाद्वागादिव्रतनिवर्तनार्थैव ।
व्रतमीमांसेति प्रस्तुत्या भग्नव्रतत्वमुपदिष्टम् ॥ ७१८ ॥

वायुप्राणोभययोर्व्रतफलमपि वायुलोकसंप्राप्तिः ।
सैषाऽनस्तमितेतिश्रुतिदृष्टो यश्च देवताशब्दः ॥ ७१९ ॥
अपरिच्छिन्नात्मत्वाद्वायावस्मिन्समञ्जसो भवति ।
वेदेषु च वायुरसौ प्राणः प्राणेषु भवति संवर्गः ॥ ७२० ॥
इति भिन्नत्वेनैतौ तौ वा एताविति श्रुतिर्ब्रूते ।
दश सन्तस्तत्कृतमित्युपसंहारोऽपि भेदपर एव ॥ ७२१ ॥
तस्मात्पृथगेवेमावाध्यातव्यौ न चैकरूपतया ।
अत्र निदर्शनमेतत्प्रधानवदिति प्रदर्शितं हि यथा ॥ ७२२ ॥
त्रिपुरोडाशिन्यां खल्विष्टाविन्द्राय राज्ञ इत्याद्या ।
तत्र पुरोडाशक्षेपार्था मन्त्रास्त्रयो हि निर्दिष्टाः ॥ ७२३ ॥
सर्वेषामभिगमयन्निति श्रुतेरपि च देवतैक्याच्च ।
तत्र पुरोडाशानां सहप्रदानप्रसञ्जने हि कृते ॥ ७२४ ॥
याज्यापुरोनुवाक्याव्यत्यासविधानतश्च गुणभेदात् ।
तद्देवतापृथक्त्वं प्रदानपार्थक्यमपि यथा भवति ॥ ७२५ ॥
एवं तत्त्वाभेदेऽप्याध्यानपृथक्त्वमत्र युक्तं स्यात् ।
आध्येयांशपृथक्त्वादुक्तं संकर्षणेन नानेति ॥ ७२६ ॥
तत्र किल यागभेदो भवति परं द्रव्यदेवताभेदात् ।
इह च न विद्याभेदो विद्यैकत्वं प्रतीयते हि यतः ॥ ७२७ ॥
आध्यात्मिकाधिदैवोपदेशवाक्ये ह्युपक्रमाद्यैर्हि ।
विद्यैक्येऽप्यध्यात्माधिदैवभेदात्प्रवृत्तिभेदः स्यात् ॥ ७२८ ॥
सायंप्रातःकालप्रभेदतश्चाग्निहोत्र इह स भवेत् ।

## लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥ ४४ ॥

वाजसनेयिन इह खल्वग्निरहस्ये हि नैव वेत्यादि ॥ ७२९ ॥
वाक्यं पठन्ति तत्र च सृष्टेः पूर्वं न सच्च नासदिदम् ।
इत्यादिश्य च मनसः सृष्टिं शिष्ट्वा मनोऽधिकृत्योक्तम् ॥ ७३० ॥
तदपश्यत्षट्त्रिंशत्सहस्रसंख्यान्मनोमयानग्नीन् ।
अर्कान्मनश्चित इति ह्यात्मन इत्यादिना निरूप्यैतान् ॥ ७३१ ॥
वाक्चित इत्यादीनपि पृथगग्नीनामनन्ति तत्रैव ।
तेष्वेषा विचिकित्सा मनश्चिदादय इहोपदिष्टा ये ॥ ७३२ ॥

ते कर्मशेषभूताः किं कर्मानुप्रवेशिनोऽत्र स्युः ।
किंवाऽपि ते स्वतन्त्राः केवलविद्यात्मका भवन्तीति ॥ ७३३ ॥
तत्र प्रकरणबलतः क्रियानुषङ्गे हि तेषु संप्राप्ते ।
तेषां स्वातन्त्र्यमिह प्रतिजानीते हि सूत्रकारोऽयम् ॥ ७३४ ॥
भूयांस्यस्मिन्ब्राह्मणवाक्ये लिङ्गानि चोपलभ्यन्ते ।
विद्यात्मकत्वमेवोपोद्बलयन्त्येषु तानि सकलानि ॥ ७३५ ॥
यत्किंचेमानीति श्रुतिवाक्ये लिङ्गमेतदुपदिष्टम् ।
सर्वप्राणिमनोवृत्तिभिर्मम सदाऽग्नयो हि चीयन्ते ॥ ७३६ ॥
इत्याख्याने हि हृदे सर्वाण्यपि यत्त्व किमपि भूतानि ।
संकल्पयन्ति मनसा सा चाग्नीनां कृतिर्भवेदिति हि ॥ ७३७ ॥
एतद्विद्यात्मत्वे भवति हि लिङ्गं न च क्रियाङ्गत्वे ।
यत्किंचित्करणेन हि सिद्धिर्दृष्टा न च क्रियाङ्गस्य ॥ ७३८ ॥
तान्हैतानेवंविद् इति श्रुतौ लिङ्गमपरमपि दृष्टम् ।
स्वपतोऽपि जाग्रतोऽपि च तस्यैवाग्नीन्हि सर्वभूतानि ॥ ७३९ ॥
चिन्वन्ति सर्वदैवैते तद्विद्यात्मकत्वलिङ्गं स्यात् ।
कर्माङ्गमुदितकालानुष्ठेयं सार्वकालिकं चेदम् ॥ ७४० ॥
यच्चान्यत्षट्त्रिंशत्सहस्रसंख्यत्वमपि च कर्माङ्गम् ।
श्रुतिलिङ्गसूत्रदृष्टं लिङ्गं तु प्रकरणाद्बलीय इति ॥ ७४१ ॥
विद्यात्मकत्वमेषां तस्माद्युक्तं हि लिङ्गभूयस्त्वात् ।

पूर्वविकल्पः प्रकरणात्स्यात्क्रिया मानसवत् ॥ ४५ ॥

यच्चाग्नयः स्वतन्त्रा ह्यनन्यशेषा इतीह निर्दिष्टम् ॥ ७४२ ॥
नैतद्युक्तं यस्मात्प्रकरणमेतत्क्रियामयस्याग्नेः ।
तद्विषयो हि विकल्पविशेषादेशो न हि स्वतन्त्रः स्यात् ॥ ७४३ ॥
पूर्वस्य चेष्टकाग्नेः संनिहितस्य हि विकल्पबोधार्थम् ।
इह संकल्पमयत्वप्रकारभेदोपदेश एवायम् ॥ ७४४ ॥
नन्वत्र पूर्वमुक्तं लिङ्गं हि प्रकरणाद्बलीय इति ।
सत्यं हि लिङ्गमीदृङ्न हि प्रकरणाद्बलीय इह भवति ॥ ७४५ ॥
विधिवाक्यस्थं यत्स्यात्तदेव हि प्रकरणाद्बलीयः स्यात् ।
विधिवाक्ये न हि लिङ्गं किमपि च दृष्टं परं त्विहैवैतत् ॥ ७४६ ॥
संपादिकाग्निविषयप्रशंसनात्मकमिदं भवेद्वाक्यम् ।
तच्चार्थवादरूपं तत्स्थं लिङ्गं न बाधकं भवति ॥ ७४७ ॥

अप्राप्ते ह्यन्यार्थे गुणवादेनोपपद्यमानं यत् ।
प्रकरणमेतद्बाधितुमुत्सहते लिङ्गमीदृशं हि कथम् ॥ ७४८ ॥
सांपादिका अपीमेऽग्नयः क्रियानुप्रवेशिनस्तस्मात् ।
मानसवदितिनिदर्शनमत्र यथा द्वादशाहसत्रे हि ॥ ७४९ ॥
त्यक्त्वाऽन्त्याहर्द्वितयं दशरात्रस्य विशेषितस्यान्ते ।
दशमेऽह्न्यविवाक्ये मानस एव ग्रहो विनिर्दिष्टः ॥ ७५० ॥
तत्र च पृथिवी पात्रं सोमरसोऽसौ समुद्र एवोक्तः ।
स्याद्देवता प्रजापतिरस्मै तस्यैव गृह्यमाणस्य ॥ ७५१ ॥
ग्रहणासादनहवनाहरणोपह्वानभक्षणानि यथा ।
तत्र च तान्येतानीत्याम्नायन्ते हि मानसान्येव ॥ ७५२ ॥
ग्रहकल्पो हि यथा वा क्रियाप्रकरणात्क्रियाविशेषः स्यात् ।
एवमयमग्निकल्पः क्रियाविशेषो न हि स्वतन्त्रः स्यात् ॥ ७५३ ॥

## अतिदेशाच्च ॥ ४६ ॥

अतिदेशश्चाग्नीनां क्रियात्मकत्वानुमापको दृष्टः ।
एकैक एव तावान्यावान्यः पूर्वमभिहितोऽग्निरिति ॥ ७५४ ॥
सामान्ये सत्येव ह्यतिदेशोऽयं प्रवर्तते शास्त्रे ।

## विद्यैव तु निर्धारणात् ॥ ४७ ॥

उक्ताक्षेपनिरासप्रयोजनोऽसौ तुशब्द इह पठितः ॥ ७५५ ॥
एते मनश्चिदाद्याः केवलविद्यात्मकाः स्वतन्त्राः स्युः ।
विद्याचित एवेति हि निर्धारयतीह येन तानग्नीन् ॥ ७५६ ॥
अन्याऽपि विद्यया हैवैत इति श्रुतिरपीत्थमेवैतान् ।

## दर्शनाच्च ॥ ४८ ॥

एतेषां स्वातन्त्र्ये लिङ्गं यत्पूर्वमेव तच्चोक्तम् ॥ ७५७ ॥
ननु लिङ्गमीदृशं न प्रकरणतो बलवदित्यतो ब्रूते ।

## श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ४९ ॥

नैवं प्रकरणसामर्थ्यादेषां हि क्रियाविशेषत्वम् ॥ ७५८ ॥
अध्यवसाय ततो हि स्वतन्त्रतापक्षबाधनं युक्तम् ।
श्रुत्यादीन्यत्र यतो भवन्ति हि प्रकरणाद्बलीयांसि ॥ ७५९ ॥
तानि च मनश्चिदादीनां स्वातन्त्र्यं हि साधयन्त्येव ।

ते हैते विद्याचित एवेति श्रुतिरियं हि भवतीह ॥ ७६० ॥
लिङ्गं हि सर्वदा सर्वाणीत्यादिकमुदाहृतं पूर्वम् ।
वाक्यमपि विद्यया हैवैत इति हि तत्र साधकं भवति ॥ ७६१ ॥
विद्याचित एवेति श्रुतिरेषा सावधारणैतेषाम् ।
अभ्युपगते क्रियानुप्रवेशपक्षे हि पीडितैव स्यात् ॥ ७६२ ॥
नाबाह्यसाधनत्वाभिप्रायं तदवधारणं तर्हि ।
अवधारणमफलं स्याद्विद्याचित इत्यनेन तल्लाभात् ॥ ७६३ ॥
गृहकल्पवदेतेषां तुल्येनाबाह्यसाधनत्वेन ।
प्राप्ताक्रियाङ्गताया निवर्तनायावधारणं सफलम् ॥ ७६४ ॥
एवंविधे हि भूतान्यग्नींश्चिन्वन्ति सर्वदेवेति ।
सातत्यदर्शनमिदं तेषां स्वातन्त्र्यपक्ष एव स्यात् ॥ ७६५ ॥
वाक्प्राणमयाग्निष्वपि सातत्यं दृश्यते हि सततमिति ।
सातत्यदर्शनेन क्रियाप्रयोगस्य चाल्पकालत्वात् ॥ ७६६ ॥
स्वातन्त्र्येण हि तेषां विद्यारूपत्वमवधृतं भवति ।
इदमर्थवादरूपं संकीर्तनमात्रमिति तु न न्याय्यम् ॥ ७६७ ॥
यत्र च विधायकोऽन्यो लिङादिरुपलभ्यते हि विस्पष्टम् ।
तत्रैव युक्तमेतत्संकीर्तनमर्थवादमात्रमिति ॥ ७६८ ॥
अत्र तु विधायकान्तरमन्यन्नैवोपलभ्यते किमपि ।
संकीर्तनमात्रादिह विज्ञानविधानमुचितमेतेषाम् ॥ ७६९ ॥
सातत्यदर्शनादिभिरेषां स्वातन्त्र्यसिद्धिरिह वाच्या ।
एवंविदाश्रिता इति पुरुषविशेषानुबद्धमिह वाक्यम् ॥ ७७० ॥
न क्षमते क्रतुयोगं तस्मात्स्वातन्त्र्यपक्ष इह युक्तः ।

अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद्दृष्टश्च तदुक्तम् ॥ ५० ॥

प्रकरणमुपसृत्यापि स्वातन्त्र्यं स्यान्मनश्चिदादीनाम् ॥ ७७१ ॥
येन मनोव्यापारेष्वनुबध्नाति क्रियावयवयोगम् ।
मनसैवाऽऽधीयन्ते मनसैवेमे ग्रहाश्च गृह्यन्ते ॥ ७७२ ॥
मनसा शंसन्मनसा स्तुवन्यदेतच्च कर्म यज्ञीयम् ।
तच्च मनश्चित्सु मनोमयमेव क्रियत एवमनुबन्धः ॥ ७७३ ॥
संपत्फल इह दृष्टः प्रत्यक्षा अपि न च क्रियावयवाः ।
इह संपदा त एते लिप्सयितव्या हि भवितुमर्हन्ति ॥ ७७४ ॥
उद्गीथोपास्त्यादिवदिह क्रियाङ्गव्यपाश्रयेणैषाम् ।

तदनुप्रवेशितेयं न शङ्कनीया श्रुतेश्च वैरूप्यात्।
अत्र तु न हि क्रियाङ्गे ह्यध्यासितव्यं तु किंचिदपि दृष्टम् ॥७७५॥
किंत्वत्र हि षट्त्रिंशत्सहस्रसंख्या इह मनोवृत्तीः।
आदाय कल्पयन्ति ह्यग्नित्वं च ग्रहादिकांस्तासु ॥ ७७६ ॥
पुरुषायुषो ह्यहःसु च संख्या दृष्टा सतीह तत्स्थासु।
मनसो वृत्तिष्वारोप्यत इति वैरूप्यमत्र मन्तव्यम् ॥ ७७७ ॥
तस्मादनुबन्धादिभ्यः स्वातन्त्र्यं मनश्चिदादीनाम्।
आदिग्रहणादतिदेशादप्येव हि योजनीयमिह ॥ ७७८ ॥
यावानसौ हि पूर्वस्तेषामेकैक एव तादृगिति।
यच्च क्रियामयाग्नेर्माहात्म्यं तच्च भावनाग्नीनाम् ॥ ७७९ ॥
एकैकस्यातिदिशच्छ्रुतिः क्रियानादरं हि दर्शयति।
अतिदेशो हि विकल्पार्थ एव नानादरार्थ इत्यपि न ॥ ७८० ॥
यत्रैकस्मिन्साध्ये निरपेक्षं साधनद्वय भवति।
भवति हि तत्र विकल्पो व्रीहियवाद्योर्यथा हि यागे स्यात्॥७८१॥
आहवनीयोद्धरणादिलक्षणं साधनं त्विहैकं स्यात्।
साध्यं क्रियामयाग्निर्ध्यानाग्निश्चेति भिन्नमिह दृष्टम् ॥ ७८२ ॥
एकस्य साधनस्य तु न साध्ययुग्मे भवेद्विकल्पोऽसौ।
यत्त्वत्र पूर्वपक्षोपोद्बलकश्चातिदेश इत्युक्तम् ॥ ७८३ ॥
तत्प्रत्युक्तमिहापि ह्यग्नित्वेनातिदेशसाफल्यात्।
श्रुत्यादीन्यग्नित्वे ध्यानाग्नीनां प्रदर्शितान्येव ॥ ७८४ ॥
प्रज्ञान्तरपार्थक्यं निदर्शनं दर्शितं हि सूत्रकृता।
प्रज्ञान्तराणि शाण्डिल्याङ्कितविद्यापुरःसराणि यथा ॥ ७८५ ॥
कर्मभ्यः पृथगेव प्रज्ञान्तरतोऽपि हि स्वतन्त्राणि।
तद्वच्च भावनाग्नय इह कर्मभ्यो भवन्ति पृथगेव ॥ ७८६ ॥
या चेह राजसूयप्रकरणपठिता ह्यवेष्टिनामेष्टिः
दृष्टस्तस्या इष्टेरुत्कर्षः प्रकरणाच्च तत्रैव ॥ ७८७ ॥
वर्णत्रयानुबन्धाद्राजसवत्त्वाच्च राजसूयस्य।
क्रत्वर्थायामिति चेदित्यत्र प्रथमतन्त्र इदमुक्तम् ॥ ७८८ ॥

न सामान्यादप्युपलब्धेर्मृत्युवन्न
हि लोकापत्तिः ॥ ५१ ॥

मानसवदिति यदुक्तं तच्चेदानीं निराकरोतीह ।
नैवेह मानसग्रहसामान्यात्स्यान्मनश्चिदादीनाम् ॥ ७८९ ॥
कल्पयितुमत्र शक्यं पूर्वप्रकृतक्रियाविशेषत्वम् ।
पूर्वोक्तेभ्यः श्रुत्यादिभ्यः केवलपुमर्थतासिद्धेः ॥ ७९० ॥
न हि किंचित्कस्यचिदपि केनचिदंशेन साम्यमिह नेति ।
एतावता यथास्वं निवर्तते किं स्वभाववैषम्यम् ॥ ७९१ ॥
मृत्युवदितिदृष्टान्तो यथा स एष इति मन्त्रवाक्येषु ।
मण्डलवर्ती पुरुषस्तथाऽयमग्निरपि मृत्युरित्युक्तम् ॥ ७९२ ॥
इह मृत्युशब्दसाम्येऽप्यादित्याग्न्योर्न सर्वसाम्य स्यात् ।
एवमसौ वावेति श्रुतौ द्युलोकेऽग्निशब्दसाम्येऽपि ॥ ७९३ ॥
आदित्य एव समिदित्यादित्ये तत्पदे समानेऽपि ।
लोकादित्यादीनां न चाग्निसमिदादिरूपतापत्तिः ॥ ७९४ ॥

परेण च शब्दस्य ताद्विध्यं
भूयस्त्वास्त्वनुबन्धः ॥५२॥

ताद्विध्यं शब्दस्य प्रयोजनं लक्ष्यते परस्ताच्च ।
एषोऽग्निश्चित इत्येतस्मिन्हि ब्राह्मणान्तरे चैतत् ॥ ७९५ ॥
यत्र च कामक्रोधाः परागतास्तं च लोकमेते हि ।
आरोहन्ति हि विद्यासंपन्ना विद्ययैव केवलया ॥ ७९६ ॥
नाविद्वांसः कर्मिण एवं केवलतपस्विनो वेति ।
विद्यां च संप्रशंसति कर्म विनिन्दति हि विद्ययेत्याद्या ॥ ७९७ ॥
अन्यत्रापि यदेतन्मण्डलमित्यत्र दृश्यते चैतत् ।
अमृतो भवति हि मृत्युर्ह्यस्याऽऽत्मेत्यादिकेन वाक्येन ॥ ७९८ ॥
विद्याफलोपसंहारादेवास्य तु न कर्मशेषत्वम् ।
यस्मादिहाग्न्यवयवाः संपाद्याः खलु भवन्ति भूयांसः ॥ ७९९ ॥
तस्मादिहाग्निरेयं विद्या केवलमिहानुबध्येत ।
तस्मात्केवलविद्यात्मकत्वमेव हि मनश्चिदादीनाम् ॥ ८०० ॥

एक आत्मनः शरीरे भावात् ॥ ५३ ॥

इह देहव्यतिरिक्तो ह्यात्माऽस्तीति तु समर्थ्यते सपदि ।
देहव्यतिरिक्तात्मन्यसति च परलोकचोदनाः सकलाः ॥ ८०१ ॥

उपरुध्येरन्बन्धो मोक्षोऽपि च कस्य वोपदिश्येत ।
नन्विह शास्त्रप्रमुखे प्रथमे पादे हि वर्णि[तं] ह्येतत् ॥ ८०२ ॥
देहव्यतिरिक्तस्य हि शास्त्रोक्तफलोपभोगयोग्यस्य ।
आत्मन इदमस्तित्वं सत्यं तदिदं हि तत्र भाष्यकृता ॥ ८०३ ॥
प्रतिपादितं न तत्र ह्यात्मास्तित्वेऽस्ति किंचिदपि सूत्रम् ।
अत्राऽऽक्षेपपुरःसरमात्मास्तित्वं हि सूत्रकारेण ॥ ८०४ ॥
वर्णितमित एवाऽऽकृष्याऽऽचार्येणापि शबरसंज्ञेन ।
तदिदं प्रमाणलक्षण उपदिष्टं भगवतोपवर्षेण ॥ ८०५ ॥
अत एवाऽऽत्मास्तित्वाक्षेपे शारीरके हि वक्ष्यामः ।
इत्युद्धारो हि कृतः प्रथमे तन्त्रे समञ्जसः सोऽयम् ॥ ८०६ ॥
किंचान्यत्पूर्वस्मिन्नधिकरणे किल मनश्चिदादीनाम् ।
प्रकरणतश्चोत्कर्षोपगमेन पुरुषार्थता हि निर्दिष्टा ॥ ८०७ ॥
तत्र च कोऽसौ पुरुषो मनश्चिदादय इमे यदर्थाः स्युः ।
इति शङ्कायां देहव्यतिरिक्तात्मास्तितोच्यते सपदि ॥ ८०८ ॥
आत्मास्तित्वाक्षेपार्थं चेदं सूत्रमादिमं भवति ।
आक्षेपपूर्विका किल परिहारोक्तिर्विवक्षितार्थे हि ॥ ८०९ ॥
प्रभवत्युत्पादयितुं स्थूणानिखनननयेन दृढबुद्धिम् ।
एके लोकायतिका ये किल देहात्मवादिनस्ते वै ॥ ८१० ॥
देहव्यतिरिक्तस्याऽऽत्मनोऽस्य चाभावमेव मन्वानाः ।
व्यस्तसमस्तपृथिव्यादिषु देहाकारपरिणतेष्वेव ॥ ८११ ॥
चैतन्यं मदशक्तिवदिति किल संभावयन्त एते हि ।
विज्ञान चैतन्यं विशिष्टकायश्च पुरुष इत्याहुः ॥ ८१२ ॥
स्वर्गापवर्गगमनायान्यो देहातिरिक्त इह नास्ति ।
तस्माच्च चेतनश्चाप्यात्मा भवतीह देह एवासौ ॥ ८१३ ॥
अत्र शरीरे भावादिति हेतुर्याद्धि सति च यस्मिन्हि ।
भवति ह्यसति च न भवति तत्तद्धर्म इति चाध्यवसितं हि ॥ ८१४ ॥
औष्ण्यप्रकाशरूपाविहाग्निधर्मौ तथैव दृष्टा हि ।
चैतन्यस्मृत्याद्या ये चाभिमताः स्युरात्मधर्मतया ॥ ८१५ ॥
न हि बहिरुपलभ्यन्ते ह्युपलभ्यन्तेऽन्तरेव देहे ते ।
अतिरिक्तात्मासिध्द्या तद्धर्मा एव भवितुमर्हन्ति ॥ ८१६ ॥

व्यतिरेकस्तद्भावाभावित्वान्न तूपलब्धिवत् ॥ ५४ ॥
अव्यतिरेको देहादात्मन इति यच्च पूर्वमाक्षिप्तम् ।
तच्च न युक्तं देहादस्य व्यतिरेक एव युक्तः स्यात् ॥ ८१७ ॥
यद्भावाभावित्वादिति तु यथोक्तार्थसाधको हेतुः ।
यद्यत्र देहभावे भावात्तद्धर्मता भवेत्तेषाम् ॥ ८१८ ॥
सति देहेऽपि कदाचिज्ज्ञानादीनां हि तत्र चाभावात् ।
स्याच्चैतद्धर्मत्वं तथाऽऽत्मधर्मत्वमपि भवेत्तेषाम् ॥ ८१९ ॥
रूपादयो हि ये स्युर्यावद्देहं भवन्ति ते धर्माः ।
चैतन्यस्मृत्याद्याः सत्यपि देहे मृतौ हि न भवन्ति ॥ ८२० ॥
ये देहधर्मभूता रूपाद्यास्ते परैश्च दृश्यन्ते ।
चैतन्यस्मृत्याद्याः सत्यपि देहे परैर्न दृश्यन्ते ॥ ८२१ ॥
यद्देहे चैतन्यं यस्योत्पत्तिश्च भवति भूतेभ्यः ।
किंरूपं तच्च स्यान्न हि भूतचतुष्टयातिरिक्तं तत् ॥ ८२२ ॥
लोकायतिकनयेन हि भूतचतुष्टयविलक्षणं तत्र ।
यद्भूतभौतिकानामनुभवनं स्यात्तदेव चैतन्यम् ॥ ८२३ ॥
इति चेत्तर्ह्येतेषां विषयत्वान्नास्य विषयधर्मत्वम् ।
एकस्य कर्तृकर्मोभयात्मकत्वं न दृश्यते लोके ॥ ८२४ ॥
इह भूतधर्मचैतन्येनैव हि भूतभौतिकानि कथम् ।
विषयी क्रियन्त इह न हि रूपाद्यैः स्वं परस्य रूपं वा ॥ ८२५ ॥
विषयी क्रियते चैतन्येन तु भूतं च भौतिकं सकलम् ।
विषयी क्रियते तेषामुपलब्धिरियं यथाऽभ्युपेता स्यात् ॥ ८२६ ॥
उपलब्धेर्भूतेभ्यो व्यतिरेकोऽपि च तथाऽभ्युपेयः स्यात् ।
उपलब्धिरूप एव ह्यात्मा न ततोऽतिरिक्त इह कश्चित् ॥ ८२७ ॥
देहव्यतिरिक्तत्वं नित्यत्वं चाभ्युपेयमेवास्य ।
अहमिदमद्राक्षमितिप्रत्यभिसंधिर्न चान्यथा सिध्येत् ॥ ८२८ ॥
अपि चोपलब्धिरेषा सत्सु तु दीपादिषूपकरणेषु ।
भवति ह्यसत्सु न भवति सेति न चैतावतोपलब्धिरियम् ॥८२९॥
न भवति यथा प्रदीपादीनां धर्मस्तथैव देहेऽस्मिन् ।
सति भवति चोपलब्धिर्नासति भवतीति तावता हीयम् ॥८३०॥
न हि देहधर्म एव स्याद्देहस्योपकरणतामात्रात् ।
दीपादिवदुपयोगः कथंचिदुपपद्यते न चात्यन्तम् ॥ ८३१ ॥

उपलब्धो देहस्योपयोग इह दृश्यते यथा स्वप्ने।
तस्माद्देहव्यतिरिक्तात्मास्तित्वं यदेतदनवद्यम् ॥ ८३२ ॥

अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ ५५ ॥

प्रासङ्गिकीं समाप्य प्रकृतामेवानुवर्तते हि कथाम्।
ओमित्येतदिति प्रक्रम्याधीता उपासनाः श्रुतिषु ॥ ८३३ ॥
उद्गीथसामविषयास्तथैव चोक्थादिशस्त्रविषयाश्च।
कर्माङ्गसंश्रिताः प्रतिवेदं शाखान्तरेषु दृश्यन्ते ॥ ८३४ ॥
तत्तच्छाखादृष्टोद्गीथादिष्वेव ता भवेयुः किम्।
किंवाऽपि सर्वशाखागतेषु तेष्विति हि भवति संदेहः ॥ ८३५ ॥
तत्र प्राप्तं तावत्स्वकीयशाखागतेषु तेष्वेव।
एता उपासनाः स्युर्न तत्स्वशाखागतास्तु संनिहिताः ॥ ८३६ ॥
इह तूद्गीथमुपासीतेति च सामान्यतो हि विहितानाम्।
तत्तदुपास्तीनां स्याद्विशेषविषये हि नित्यमाकाङ्क्षा ॥ ८३७ ॥
सा संनिकृष्टशाखादृष्टेन निवर्तते विशेषेण।
शाखान्तरविहितविशेषोपादाने न कारणं किमपि ॥ ८३८ ॥
तस्मादुपासनानां शाखाभेदाद्भवेद्व्यवस्थेति।
इत्याशङ्कां निरसितुमेतत्सूत्रं प्रदर्शितं मुनिना ॥ ८३९ ॥
उक्ताक्षेपनिरासप्रयोजनोऽसौ तुशब्द इह सूत्रे।
एता उपासनास्त्विह न प्रतिशाखं व्यवस्थिताः किंतु ॥ ८४० ॥
श्रुत्यविशेषास्ताः खल्वनुवर्तेरन्हि सर्वशाखासु।
श्रुतिरुद्गीथमुपासीतेति च सामान्यतः प्रवृत्तेयम् ॥ ८४१ ॥
संनिधिवशाद्विशेषे यदि व्यवस्थापिता भवेत्तर्हि।
श्रुतिरत्र पीडिता स्यान्नैतन्न्याय्यं हि संनिधानाद्धि ॥ ८४२ ॥
श्रुतिरिह बलीयसी न च सामान्यप्रत्ययोपरोधोऽस्ति।
तस्मात्स्वरादिभेदेऽप्युद्गीथत्वाद्युपास्यधर्माणाम् ॥ ८४३ ॥
सर्वत्र चाविशेषात्समस्तशाखागतेषु तेष्वेव।
उद्गीथादिष्वेवंजातीयाः प्रत्ययाः कुतो न स्युः ॥ ८४४ ॥

मन्त्रादिवद्वाऽविरोधः ॥ ५६ ॥

शाखान्तरोदितेषूद्गीथादिषु कथमिहान्यतो विहिताः।
स्युः प्रत्यया इतीयं विरोधशङ्का न चेह कर्तव्या ॥ ८४५ ॥

शाखान्तरोदितानां मन्त्राणां कर्मणां गुणानां च ।
उपसग्रहस्तु शाखान्तरे भवेच्छाखिनां यथैकेषाम् ॥ ८४६ ॥
अश्मादाने मन्त्रः कुटरुरसीत्यादिको हि नाऽऽम्नातः ।
कुटरुरसि कुक्कुटोऽसीति च विनियोगो हि दृश्यते तेषाम्॥८४७॥
येषामपि प्रयाजाः समिदाद्या न स्फुटं समाम्नाताः ।
ऋतवो वा इति तेषां गुणविधिराम्नायते हि तेष्वेव ॥ ८४८ ॥
येषामपि पाठेऽजोऽग्नीषोमीय इति जातिनिर्देशः ।
नैवास्ति भवति तेषामपि तद्विषयो हि मन्त्रवर्णोऽसौ ॥ ८४९ ॥
छागस्य वपाया मेदस इत्यादिः किलैवमन्यत्र ।
वेदान्तरोदितानामग्नेर्वैरेवमादिमन्त्राणाम् ॥ ८५० ॥
वेदान्तरे हि दृष्टः परिग्रहो बह्वृचोक्तसूक्तस्य ।
यो जात इत्यधीतस्याध्वर्यव इत्यतो हि निर्दिष्टे ॥ ८५१ ॥
अध्वर्युकर्तृकेऽस्मिन्प्रयोग एव हि परिग्रहो दृष्टः ।
तस्माद्यथाऽऽश्रयाणां कर्माङ्गाणां हि भवति सर्वत्र ॥ ८५२ ॥
अनुवृत्तिरेवमेव हि तदाश्रितानामुपासनानां स्यात् ।
प्रागुक्तो हि विरोधो मन्त्रादिवदेव परिहृतो भवति ॥ ८५३ ॥

भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति ॥ ५७ ॥

वैश्वानरविद्यायां दृष्टा प्राचीनशाल इत्याद्या ।
आख्यायिका हि तस्यां व्यस्तस्यापि च तथा समस्तस्य ॥८५४॥
वैश्वानरस्य तस्य ह्युपासनं श्रूयते द्विरूपमिदम् ।
व्यस्तोपासनमभिहितमेवं तत्रौपमन्यवेत्यादि ॥ ८५५ ॥
एवं तत्र समस्तोपासनमपि तस्य वेत्यनेनोक्तम् ।
तत्र च संदेहोऽयं किमिहोभयथाऽप्युपासनं न्याय्यम् ॥ ८५६ ॥
व्यस्तसमस्तोभययोरथ नु समस्तस्य तस्य वा तदिति ।
तत्रोपास्स्वेति प्रत्यवयवमपि च क्रियापदश्रवणात् ॥ ८५७ ॥
तव सुतमासुतमिति फलभेदश्रवणाच्च तत्र युक्तानि ।
व्यस्तान्युपासनानि स्युरिति प्राप्तेऽभिधीयते हि ततः ॥ ८५८ ॥
यच्च समस्तोपासनमस्य हि वैश्वानरस्य तस्यैव ।
भूम्नो ज्यायस्त्वं खल्वस्मिन्वाक्ये विवक्षितं भवति ॥ ८५९ ॥
दर्शादिक्रतुषु यथा साङ्गस्यैव प्रधानयागस्य ।
एकः प्रयोग एव हि सामस्त्येन च विवक्षितो भवति ॥ ८६० ॥

न व्यस्ताङ्गानामपि न चैकदेशाङ्गयुक्प्रधानस्य ।
तद्वदिहापि च भूम्नो ज्यायस्त्वं हि श्रुतिः प्रदर्शयति ॥ ८६१ ॥
उद्दालकावसाना ऋषयः षड्ये भवन्ति विख्याताः ।
वैश्वानरविद्यायां परिनिष्ठां लब्धुमक्षमास्ते हि ॥ ८६२ ॥
अभ्याजग्मुः केकयराजानमितीह दर्शयित्वैव ।
एकैकस्योपास्यं द्युप्रभृतीनां हि दर्शयित्वैव ॥ ८६३ ॥
मूर्धादिभावमेषां मूर्धा त्वेष इति तत्र विदधाति ।
मूर्धा ते व्यपतिष्यद्यन्मामित्यादिना हि तत्रैव ॥ ८६४ ॥
व्यस्तोपासनपक्ष व्यावृत्य समस्तपक्षमनुवृत्त्य ।
भूमाश्रयमेव फलं सर्वेष्वित्यादिना प्रदर्शयति ॥ ८६५ ॥
प्रत्येकं हि सुतेजःप्रभृतिषु फलभेदकीर्तनं यच्च ।
तदपि ह्यङ्गफलानां प्रधानफलताप्रदर्शनार्थं हि ॥ ८६६ ॥
एवमुपास्स्वेति प्रत्यवयवमाख्यातदर्शनं यदपि ।
तदपि पराभिप्रायं न व्यस्तोपासनाविधानार्थम् ॥ ८६७ ॥
तस्मादत्र समस्तोपास्त्यवलम्बो भवेदसौ श्रेयान् ।
केचित्समष्ट्युपासनपक्षं ज्यायासमत्र निर्दिश्य ॥ ८६८ ॥
जायस्त्वकीर्तनादेव व्यस्तोपास्तिपक्षमप्यत्र ।
सूत्रकृदनुमन्यत इति निरूपयन्त्येतदत्र न हि युक्तम् ॥ ८६९ ॥
अत्र समस्तोपास्तौ सत्या खल्वेकवाक्यतावगतौ ।
उभयविधानेन कथं युक्ता तद्भेदकल्पना प्रकृते ॥ ८७० ॥
मूर्धेत्याद्युपदिष्टा निन्दाऽप्यत्र तु भवेद्विरुद्धैव ।
यद्युभयथाऽप्युपासनमिह सिद्धान्तो भवेत्तदा तत्र ॥ ८७१ ॥
व्यस्तोपासनमेवेत्येषं वाच्यो हि पूर्वपक्षः स्यात् ।
उपसंहारेण समष्ट्युपासने ह्यवगतेऽपि विस्पष्टम् ॥ ८७२ ॥
तदभावस्तु कथं वा वक्तुं शक्योऽत्र पूर्वपक्षे स्यात ।
ज्यायस्त्ववचनमपि यत्सूत्रे परिदृश्यते तदेतदपि ॥ ८७३ ॥
अत्र च समष्ट्युपास्तेः प्रमाणवत्त्वप्रदर्शनार्थं स्यात् ।
व्यस्तोपास्तीनामप्रमाणसिद्धत्वबोधनार्थं च ॥ ८७४ ॥

## नाना शब्दादिभेदात् ॥ ५८ ॥

सति हि सुतेजःप्रभृतीनामपि फलभेदगोचरे श्रवणे ।
तत्र समस्तोपासनमेव ज्याय इति दर्शितं पूर्वम् ॥ ८७५ ॥

तन्न्यायेन च सर्वाण्युपासनानि श्रुतानि यानि स्युः ।
तान्यपि सामस्त्येनोपासिष्यन्त इति बुद्धिरुत्पन्ना ॥ ८७६ ॥
अपि च न वेद्याभेदे विद्याभेदो भवेत्कथंचिदपि ।
परमेश्वरस्तु वेद्यः श्रुतिनानात्वेऽपि चैक एवासौ ॥ ८७७ ॥
अवगम्यते मनोमय इत्यादिश्रुतिषु चैक एव तथा ।
प्राणो वावेतिश्रुतिवचनेषु प्राण एवमन्यत्र ॥ ८७८ ॥
यदपि श्रुतिनानात्वं तदपि गुणान्तरसमर्पणार्थं स्यात् ।
तस्मादिहैकवेद्यव्यपाश्रयं यच्च भवति गुणजातम् ॥ ८७९ ॥
विद्याकार्त्स्न्याय हि तच्छाखान्तरगतमिहोपसंहार्यम् ।
एवं प्राप्ते ब्रूते वेद्याभेदेऽपि भवति नानेति ॥ ८८० ॥
एवंविधा हि विद्या वेद्याभेदेऽपि भवति भिन्नैव ।
वेदोपासीतेति हि शब्दो भिन्नः प्रतीयते यस्मात् ॥ ८८१ ॥
शब्दान्तर इति सूत्रे शब्दोऽसौ कर्मभेदहेतुरिति ।
वर्णितमत इह विद्या भिन्ना शब्दादिभेदता भवति ॥ ८८२ ॥
आदिग्रहणाच्च गुणादयो यथासंभवं हि योज्याः स्युः ।
नन्विह वेदेत्यादौ प्रतीयते शब्दभेदमात्रं हि ॥ ८८३ ॥
यजतीत्यादिवदेव प्रतीयते नार्थभेद इह कश्चित् ।
इह तु मनोवृत्त्यर्था वेदेत्याद्या भवन्ति ये शब्दाः ॥ ८८४ ॥
तद्भेदेन कथं वा विद्या भिन्नेति चेन्न दोषोऽयम् ।
तेषु मनोवृत्त्यर्थत्वाभेदेऽपि च गुणादिभेदेन ॥ ८८५ ॥
वेद्ये भिन्ने विद्या भिन्नैव स्यान्न सा भवेदेका ।
एकस्यापीशस्य प्रतिप्रकरणं गुणा विभिद्यन्ते ॥ ८८६ ॥
प्राणस्यैकस्यापि हि गुणो यथा तत्र तत्र भिन्नः स्यात् ।
एवमनुबन्धभेदाद्विधिभेदे भिद्यते हि विद्येयम् ॥ ८८७ ॥
श्रुतिनानात्वं हि गुणान्तरविध्यर्थमिति यच्च पूर्वोक्तम् ।
तच्च न यस्मादत्र तु विनिगमकं नोपलभ्यते किमपि ॥ ८८८ ॥
प्राप्तामनूद्य विद्यामप्राप्तानेकगुणविशेषाणाम् ।
यदि चेद्विधानमत्र तु दुर्वारो वाक्यभेद एव तदा ॥ ८८९ ॥
विद्यैक्ये हि गुणानां पुनरुक्तिरपीह भवति विफलैव ।
असकृच्छ्रूयन्ते किल गुणाः समाः सत्यकामताद्या हि ॥ ८९० ॥

प्रकरणभेदान्नैराकाङ्क्ष्ये नात्रैकवाक्यता युक्ता।
वैश्वानरविद्यायामिवात्र न समस्तचोदना वाऽस्ति ॥ ८९१ ॥
विद्यैकत्वनिमित्ते विद्यैकत्वे त्विह प्रतिज्ञाते।
सकलगुणानामुपसंहारोऽशक्यो भवेत्प्रतिज्ञातः ॥ ८९२ ॥
तस्मादिह शब्दादेर्भेदाद्विद्याऽपि भवति नानेति।
सुष्ठूक्तमत्र सूत्रे तदानुगुण्येन भवति विद्यैक्यम् ॥ ८९३ ॥

विकल्पोऽविशिष्टफलत्वात् ॥ ५९ ॥

विद्याभेदमिहोक्त्वा तदनुष्ठानक्रमं निरूपयति।
अत्र त्रिविधा विद्या अहग्रहा अपि तथा तटस्थाश्च ॥ ८९४ ॥
अङ्गाश्रिताश्च तत्राहंग्रहविद्यास्विदं विचारयति।
एतासां विद्यानां किमिह यथेच्छं समुच्चयः किंवा ॥ ८९५ ॥
भवति विकल्पो वेति हि संदेहे सति विकल्प इह युक्तः।
इह नाऽऽसां विद्यानां समुच्चये नियमकारणं किमपि ॥ ८९६ ॥
नन्वग्निहोत्रदर्शादीनां हि परस्परं विभिन्नानाम्।
भवति समुच्चयनियमो यथा तथेहापि स तु भवेदिति चेत् ॥ ८९७ ॥
नैवं हि नित्यताश्रुतिरेव हि तत्र तु समुच्चये हेतुः।
इह विद्यानामेवं नित्यत्वपरा श्रुतिर्न काचिदपि ॥ ८९८ ॥
तस्मान्न समुच्चय इह नापि विकल्पोऽत्र भवति युक्ततमः।
एकत्राधिकृतस्य प्रतिषेधो नोपलभ्यतेऽन्यत्र ॥ ८९९ ॥
परिशेषादत्र यथाकाम्यानुष्ठानमेव युक्तमिति।
नन्वविशिष्टफलत्वाद्विकल्प आसां भवेदिह न्याय्यः ॥ ९०० ॥
कं ब्रह्म खं पुराणं मनोमयः सत्यकाम इत्याद्याः।
तुल्यवदीशप्राप्तिफला लक्ष्यन्ते यतोऽत इति चेन्न ॥ ९०१ ॥
स्वर्गादितुल्यफलकेष्वपि च यथाकाम्यमेव दृष्टं हि।
एवमिहापि यथाकाम्यमेव न विकल्प इत्यतो ब्रूते ॥ ९०२ ॥
आसां विकल्प एव न्याय्यो न समुच्चयः कदाचिदपि।
यस्मादुपास्यसाक्षात्करणात्मकफलमिहाविशिष्टं हि ॥ ९०३ ॥
साक्षात्कृते परात्मन्येकेनैव द्वितीयमफलं स्यात्।
अपि चोपास्तीनामिह न समुच्चयेन हि फलं भवेत्किंचित् ॥ ९०४ ॥
यदुपास्यविषयसाक्षात्करणं फलमिह भवेदुपास्तीनाम्।
विक्षेपसादनेऽस्मिन्समुच्चये सति भवेत्फलं तदिदम् ॥ ९०५ ॥

विद्याफल हि साक्षात्कृतिसाध्यं दर्शयन्ति वेदान्ताः ।
यस्य स्यादित्याद्याः स्मृतयश्च सदेति दर्शयन्त्येवम् ॥ ९०६ ॥
तस्मादविशिष्टफलानामन्यतमामुपासनामेकाम् ।
आलम्ब्यतत्परः स्याद्यावदुपास्यापरोक्षमन्यत्स्यात् ॥ ९०७ ॥

काम्यास्तु यथाकामं समुच्चीयेरन्न
वा पूर्वहेत्वभावात् ॥ ६० ॥

स य एतमेव वायुं दिशामिति प्रथितकाम्यविद्यासु ।
कर्मवदेवादृष्टद्वारा हि फलं प्रसाधयन्तीषु ॥ ९०८ ॥
साक्षात्करणापेक्षा न चास्ति तेन च भवेद्यथाकाम्यम् ।
यस्माद्विकल्पसाधनमविशिष्टफलत्वमत्र नैवास्ति ॥ ९०९ ॥

अङ्गेषु यथाश्रयभावः ॥ ६१ ॥

कर्माङ्गेषूद्गीथादिषु विहिता या उपासनास्तास्तु ।
आश्रयतन्त्रा हि यथा संभूयैवाऽऽश्रयास्तथैवैताः ॥ ९१० ॥

शिष्टेश्च ॥ ६२ ॥

त्रिषु वेदेषु यथा वा स्तोत्रादय आश्रया हि शिष्यन्ते ।
एवं तदाश्रिता अप्युपासनाः स्युर्न तत्र वैशेष्यम् ॥ ९११ ॥

समाहारात् ॥ ६३ ॥

छान्दोग्ये हि प्रणवोद्गीथैक्यध्यानविधिरसौ दृष्टः ।
तत्रैव होतृषदनाद्धैवाऽऽदित्यादिरर्थवादोऽपि ॥ ९१२ ॥
तत्र स्वरप्रमादादिना हि दैवेन दुष्टमुद्गीथम् ।
प्रणवोद्गीथैकत्वध्यानबलादेव सोऽयमुद्गाता ॥ ९१३ ॥
निर्दोषं तं कुरुते सम्यक्कृतहोतृशंसनादिति हि ।
वर्णितमत इह वेदान्तरोचितप्रत्ययस्य चैतस्य ॥ ९१४ ॥
वेदान्तरोपदिष्टानुबन्धसंकीर्तनं हि सर्वत्र ।
वेदान्तरोदितप्रत्ययोपसंहारमेव सूचयति ॥ ९१५ ॥

गुणसाधारण्यश्रुतेश्च ॥ ६४ ॥

विद्याध्येयं विद्याश्रयमोंकारं हि सर्ववेदेषु ।
साधारणं च तमिमं तेनेयमिति श्रुतिः प्रदर्शयति ॥ ९१६ ॥

आश्रयसाधारण्यादाश्रितसाधारणत्वमपि तस्मात् ।
अथवैते कर्मगुणा ये चोद्गीथादयो भवन्त्येते ॥ ११७ ॥
सर्वप्रयोगसाधारणा इमे कर्मसूपलभ्यन्ते ।
तेनाऽऽश्रयसहभावात्प्रत्ययसहभाव एव युक्त इह ॥ ११८ ॥

न वा तत्सहभावाश्रुतेः ॥ ६५ ॥

आश्रयसहभावेन प्रत्ययसहभाव इति हि यच्चोक्तम् ।
तन्नाऽऽश्रयसहभावो न चाऽऽश्रितानामुपासनाना स्यात् ॥११९॥
यस्मादिहाऽऽश्रितानां तत्सहभावः श्रुतो न कुत्रापि ।
वेदत्रयविहितानां स्तोत्रादीनां तथैव चाङ्गानाम् ॥ १२० ॥
सहभावश्चमसं वोन्नीयेत्यादिषु यथोपलब्धः स्यात् ।
एवं ह्युपासनानां सहभावे न क्वचिच्छ्रुतिर्दृष्टा ॥ १२१ ॥
नापि प्रयोगवचनं सहभावं प्रापयेद्विहितासाम् ।
अत्र ह्युपासनानां पुरुषार्थत्वं प्रतीयते श्रुतिषु ॥ १२२ ॥
क्रत्वर्थानामुद्गीथादीना हि प्रयोगवचन तु ।
सहभावमेव केवलमिह गमयेन्न ह्युपासनानां च ॥ १२३ ॥
अङ्गाश्रितान्यपि च तान्युपासनानि स्वतः पुमर्थानि ।
गोदोहनादिवदिति प्रपञ्चित चैतदेव पूर्वत्र ॥ १२४ ॥
क्रत्वर्थान्यङ्गानि हि पुरुषार्थानि ह्युपासनानि स्युः ।
सति चैवं हि विशेषे सहभावो न हि कथंचिदपि तेषाम् ॥१२५॥
लिङ्गद्वयमपि च परं न्यायाभावाच्छ्रुतेरभावाच्च ।
नोपासनसहभावस्योपोद्बलकं हि साधनं भवति ॥ १२६ ॥
आश्रयतन्त्राण्येतान्याश्रयलोपे परं हि लुप्येरन् ।
न तु तत्सहभावार्हाण्यतो यथाकाममेव तानि स्युः ॥ १२७ ॥

दर्शनाच्च ॥ ६६ ॥

श्रुतिरसहभावमेव ह्युपासनानामिह प्रदर्शयति ।
एवंविद्ध ब्रह्मा यज्ञं यजमानमृत्विजः सर्वान् ॥ १२८ ॥
अभिरक्षतीति तत्र हि सर्वत्र प्रत्ययोपसंहारे ।
सर्वे सर्वविदो न ज्ञानवता ब्रह्मणेतरेषां हि ॥ १२९ ॥
परिपालयत्वं युक्तं तत्संकीर्तनमिदं मृषैव स्यात् ।
तस्मादुपासनानां समुच्चयो वा भवेद्विकल्पो वा ॥ १३० ॥

शारीरकमीमांसा मुनिना व्यासेन विरचिता सेयम् ।
चतुरध्यायी तस्यां तृतीयसंज्ञश्च योऽयमध्यायः ॥ १३१ ॥
तत्र च तृतीयपादे सूत्रार्थो यश्च भाष्यकारोक्तः ।
आर्यावृत्तैरमलैः प्रकाशितो जयतु सोऽयमनवद्यः ॥ १३२ ॥

इति तृतीयाध्याये तृतीयपादः समाप्तः ॥ ३ ॥

---

## अथ चतुर्थः पादः ।

---

पादेऽतीते हि परापरविद्यानां गुणोपसंहारम् ।
निर्दिश्य तत्स्वरूपं निश्चितमिह किल चतुर्थपादे हि ॥ १ ॥
पुरुषार्थहेतुता कर्मानङ्गतया निरूप्यते तासाम् ।
यज्ञादीनि च बहिरङ्गाणि शमादीनि चान्तरङ्गाणि ॥ २ ॥
विद्योत्पत्तौ साधनभूतान्यपि चेह दर्शयिष्यन्ते ।
भवतीह चैकविद्याविषयत्वं संगतिर्द्वयोरनयोः ॥ ३ ॥

**पुरुषार्थोऽतः शब्दादिति बादरायणः ॥ १ ॥**

तत्त्वज्ञाने बहुधा विप्रतिपत्त्या तदेव चाऽऽदौ हि ।
निर्णीयते किमात्मज्ञानं यच्चौपनिषदमुपदिष्टम् ॥ ४ ॥
तत्कर्मण्येवानुप्रविशत्यधिकारसाधनद्वारा ।
किंवा स्वतन्त्रमेतत्पुरुषार्थं साधयिष्यतीत्यस्याम् ॥ ५ ॥
मीमांसाया सत्यां सिद्धान्तेनैव तदिदमारभते ।
वेदान्तवाक्यजनितादात्मज्ञानादतो हि पुरुषार्थः ॥ ६ ॥
भवतीति बादरायण आचार्यो मन्यते तदेतदिह ।
अवगम्यते श्रुतिभ्यो ब्रह्मविदाप्नोति तरति शोकमिति ॥ ७ ॥
एतावदरे खल्वमृतत्वमिति श्रुतिरपि प्रदर्शयति ।
निरपेक्षायास्तस्या विद्याया इह पुरुषा(म)र्थहेतुत्वम् ॥ ८ ॥

**शेषत्वात्पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः ॥ २ ॥**

स्वत एव ज्ञानमिदं पुमर्थसाधनमितीह यच्चोक्तम् ।
तत्तु न युक्तं यस्माज्ज्ञानं तदिदं हि भवति कर्माङ्गम् ॥ ९ ॥
येनाऽऽत्माऽसौ कर्ता तेनासौ भवति कर्मशेष इह ।
भवति हि तद्विज्ञानं विषयद्वारेण कर्मसंबन्धि ॥ १० ॥

प्रोक्षणसंस्कारादिवदेव फलश्रुतिरिहार्थवादः स्यात् ।
इति मन्यते हि जैमिनिराचार्योऽन्येषु भवति सा हि यथा॥ ११ ॥
श्रुतिरर्थवादरूपैवान्यासु द्रव्यसंस्क्रियास्वेषा ।
दृष्टा हि यस्य पर्णमयीत्याद्या तत्र चैवमुपदिष्टम् ॥ १२ ॥
यस्य जुहूः पर्णमयी स नैव पापं शृणोति हि श्लोकम् ।
अञ्जनमस्य यदेतद्भ्रातृव्यस्यास्य चक्षुरपहरति ॥ १३ ॥
एवमिति यत्प्रयाजानूयाजाश्चापि सम्यगिज्यन्ते ।
यज्ञस्य वर्म तत्स्याद्यजमानस्यापि भवति वर्मेति ॥ १४ ॥
एवंजातीयश्रुतिवचनानामर्थवादरूपत्वम् ।
दृष्टं तद्वदिहापि च फलश्रुतेरर्थवादता युक्ता ॥ १५ ॥
प्रकरणमन्यत्किंचिद्विनैव तस्य क्रतुप्रवेशोऽयम् ।
आत्मज्ञानस्यानारभ्याधीतस्य न कथमिति शङ्क्यम् ॥ १६ ॥
तद्विज्ञानस्यापि हि कर्तृद्वारा क्रतुप्रवेश इह ।
आत्मा द्रष्टव्य इतिश्रुतिवाक्यबलेन युक्त एव स्यात् ॥ १७ ॥
ननु विनियोगः क्रतुषु श्रुतिवाक्यस्यास्य नोपपन्नः स्यात् ।
तत्रानारभ्याधीताना वाक्यात्क्रतुप्रवेशः स्यात् ॥ १८ ॥
यत्र त्वव्यभिचारि द्वारं लभ्येत किंचिदपि तेन ।
लौकिकवैदिककर्मसु कर्ता साधारणो न तद्व्याप्यः ॥ १९ ॥
तस्मान्न हि तद्द्वारा तद्विज्ञानस्य कर्मसंबन्धः ।
इति चेदुपपन्नोऽय तद्विज्ञानस्य कर्मसबन्धः ॥ २० ॥
इह किल देहव्यतिरिक्तात्मज्ञानं विवक्षितं तच्च ।
न हि लौकिकेषु कर्मस्वपेक्षितं तद्विनाऽपि पश्वादौ ॥ २१ ॥
दृश्यत एव हि लौकिककर्मातस्तदिदमात्मविज्ञानम् ।
तनुपातोत्तरकालफलेष्वेव हि वैदिकेषु जनकं स्यात् ॥ २२ ॥
नन्वपहतपाप्माऽयं वेदान्तेषूपदिश्यते ह्यात्मा ।
यदिदं तद्विज्ञानं तदसंसार्यात्मविषयमेव स्यात् ॥ २३ ॥
तच्च कथं कर्माङ्गं स्यादिति शङ्का न चेह कर्तव्या ।
यस्मात्संसार्यात्मा प्रियादिसंसूचितोऽत्र निर्दिष्टः ॥ २४ ॥
अपहतपाप्मत्वादिकमस्य स्तुत्यर्थमेव निर्दिष्टम् ।
ननु पूर्वमेतदुक्तं ब्रह्मासंसारि जगदुपादानम् ॥ २५ ॥

संसारिणः स्वरूपं तदेव परमार्थतो न चान्यदिति ।
उपदिश्यते हि वेदान्तेष्विति चेत्सत्यमेव पूर्वोक्तम् ॥ २६ ॥
पूर्वोक्तस्यैव पुनः स्थूणानिखनननयेन दाढर्याय ।
उपदिश्येते ह्याक्षेपसमाधाने उभे फलद्वारा ॥ २७ ॥

आचारदर्शनात् ॥ ३ ॥

जनको हेतिप्रभृतीनि यक्ष्यमाण इति चैवमादीनि ।
ब्रह्मविदामपि विद्याविधिपरवाक्येष्विमानि वाक्यानि ॥ २८ ॥
दृश्यन्ते तानि ब्रह्मविदां कथयन्ति कर्मसंबन्धम् ।
उद्दालकादिषु तथा पुत्रायमशासनेन गार्हस्थ्यम् ॥ २९ ॥
अवगम्यते यदा तु ज्ञानाच्चेत्केवलात्पुमर्थः स्यात् ।
बहुलायासानि पुनः कर्माण्येतानि ते कथं कुर्युः ॥ ३० ॥
मधु विन्देत समीपे किमर्थमचलं व्रजेदिति न्यायात् ।

तच्छ्रुतेः ॥ ४ ॥

इह कर्मशेषतैव हि विद्याया न स्वतः पुमर्थत्वम् ॥ ३१ ॥
इत्येतद्दर्शयति श्रुतिरत्र यदेव विद्ययेत्याद्या ।

समन्वारम्भणात् ॥ ५ ॥

तं विद्येति श्रुतिरियमिह विद्याकर्मणोः फलारम्भे ॥ ३२ ॥
दर्शयति हि साहित्यं तस्माद्विद्या न केवलाऽर्थकरी ।

तद्वतो विधानात् ॥ ६ ॥

श्रुतिरेषाऽऽचार्यकुलाद्वेदमधीत्येति दर्शयत्येवम् ॥ ३३ ॥
गुरुशुश्रूषाकर्मण्यनुष्ठिते योऽतिशिष्यते कालः ।
तत्र च यथाविधानं वेदमधीत्य च ततः समावृत्य ॥ ३४ ॥
गार्हस्थ्ये हि स्थित्वा धर्मान्विधिचोदिताननुष्ठास्यन् ।
स्वाध्यायं तमधीयानोऽसौ सततं शुचिप्रदेशेषु ॥ ३५ ॥
भूतानि चाप्यहिंसन्नात्मनि सर्वेन्द्रियाणि संस्थाप्य ।
एवं स वर्तमानो ब्रह्मपदं शाश्वतं प्रयातीति ॥ ३६ ॥
वेदार्थज्ञानवतः कर्मण्यधिकारदर्शनादत्र ।
स्वातन्त्र्येणैतस्या विद्याया न हि पुमर्थहेतुत्वम् ॥ ३७ ॥

ननु वेदस्याध्ययनं श्रूयत इह नो तदर्थविज्ञानम् ।
इति चेद्वेदाध्ययनं भवति ह्यर्थावधारणार्थमिह ॥ ३८ ॥

नियमाच्च ॥ ७ ॥

कुर्वन्नेवेत्याद्या श्रुतिरेतद्वै जरेति चान्याऽपि ।
दर्शयति हि विद्याया नियमेनैवेह कर्मशेषत्वम् ॥ ३९ ॥

अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥ ८ ॥

उक्ताक्षेपनिरासार्थकस्तुशब्दोऽत्र सूत्रनिर्दिष्टः ।
यत्त्वस्य कर्मशेषत्वेन फलश्रुतिरिहार्थवाद इति ॥ ४० ॥
तत्तु न युक्तं यस्माद्वेदान्तेषूपदिश्यते ब्रह्म ।
यदि संसार्येवाऽऽत्मा शारीरः कर्तृभोक्तृतादिगुणः ॥ ४१ ॥
उपदिष्टः स्याद्वेदान्तेषु तदा युक्तमर्थवादत्वम् ।
इह पुनरपहतपाप्मा परमात्मा स्वप्रकाशचिन्मात्रः ॥ ४२ ॥
शारीरादधिको यो वेदान्तेषूपदिश्यते सोऽयम् ।
तद्विषयं हि ज्ञानं प्रवर्तकं कर्मणां कथं वा स्यात् ॥ ४३ ॥
कर्मोच्छित्तिं यस्मादुपमर्दं चेति वक्ष्यति ज्ञानात् ।
तस्मात्पुरुषार्थोऽतः शब्दादिति भगवतो मतं यत्स्यात् ॥ ४४ ॥
शेषत्वादिभिरेतन्न चाल्यते तत्तु भवति तदवस्थम् ।
परमेश्वरं तमधिकं प्रदर्शयन्ति किल सर्ववेदान्ताः ॥ ४५ ॥
यः सर्वज्ञः सर्वविदित्याद्या अपि तदैक्षतेत्याद्याः ।
यच्चोक्तमात्मनोऽस्य प्रियादिसंसूचितस्य वेद्यतया ॥ ४६ ॥
संसारिणोऽनुकर्षणमुपलभ्यत आत्मनस्तु कामाय ।
सर्वं प्रियमित्येवं त्वेव त इत्यादिकं च तत्सकलम् ॥ ४७ ॥
न विरुद्धमस्य महतो भूतस्येत्यादिभिः परं ज्योतिः ।
उपसंपद्य स्वेनेत्याद्यैर्वेदान्तवाक्यशेषैर्हि ॥ ४८ ॥
सत्यामधिकोपदिदिक्षायामेतन्न चातिभेदपरम् ।
यदिदं शारीरस्य स्वरूपमिह पारमेश्वरं तत्स्यात् ॥ ४९ ॥
औपाधिकमेवैतच्छारीरत्वमिति तत्त्वमस्याद्यैः ।
उपदिश्यते तदेतन्निर्णीतं तत्र तत्र पूर्वं हि ॥ ५० ॥

तुल्यं तु दर्शनम् ॥ ९ ॥

आचारदर्शनादिह विद्येयं कर्मशेष इत्युक्तम् ।
आचारदर्शनं तद्विद्यायाः खल्वकर्मशेषत्वे ॥ ५१ ॥

तुल्यं श्रुतिरिह यस्मादेतद्ध स्मेति दर्शयत्येवम् ।
कर्मफले स्वर्गादावृषयः संजातभूरिवैराग्याः ॥ ५२ ॥
यक्ष्यामहे किमर्था वयमिति यागाद्यनादराविष्टाः ।
तत्साधनाग्निहोत्रादिकमुत्सृज्य हि तमेतमात्मानम् ॥ ५३ ॥
विज्ञाय भैक्षचर्यामपास्तसर्वैषणाश्चरन्तीति ।
दृष्टं हि याज्ञवल्क्याद्यात्मविदामप्यकर्मनिष्ठत्वम् ॥ ५४ ॥
एतावदरे खल्वमृतत्वमितीत्यादिवेदवाक्येभ्यः ।
यच्चेह लिङ्गमुक्तं हि यक्ष्यमाण इति कर्मशेषत्वे ॥ ५५ ॥
तत्किल वैश्वानरविद्याविषयं भवति सा च विद्या हि ।
सविशेषविषयका स्यात्तत्र च युक्तं हि कर्मसाहित्यम् ॥ ५६ ॥
न तु निर्विशेषगोचरविद्या कर्माङ्गभावमुपयाति ।
कर्मप्रकरणविरहाद्यदन्यदुक्तमिह तच्छ्रुतेरिति हि ॥ ५७ ॥

असार्वत्रिकी ॥ १० ॥

नेयं हि सर्वविद्याविषयाऽत्र देवविद्ययेत्याद्या ।
किंतु प्रकृतोद्गीथोपास्तिपरैव श्रुतिर्भवेदेषा ॥ ५८ ॥

विभागः शतवत् ॥ ११ ॥

यच्च समन्वारम्भणमुक्तं यच्चेह भवति विद्यायाः ।
अस्वातन्त्र्ये लिङ्गं तं विद्याकर्मणीत्यनेनोक्तम् ॥ ५९ ॥
तस्येदं प्रतिवचनं भवति विभाग इति सूत्रनिर्दिष्टम् ।
इह विद्याऽन्वारभते ह्यन्यं पुरुषं तथैव कर्मान्यम् ॥ ६० ॥
इति तु विभागोऽत्र स्याच्छतवदिति निदर्शनं भवेदत्र ।
शतमेताभ्यां देहीत्युक्ते पृथगेव दीयते हि यथा ॥ ६१ ॥
पञ्चाशत्पञ्चाशत्तथैतदपि वस्तुतोऽत्र वचनमिदम् ।
संसारिपरमिहेति तु कामयमान इतिवाक्यनिर्देशात् ॥ ६२ ॥
अत्राथाकामयमान इति मुमुक्षुः पृथग्विनिर्दिष्टः ।
विद्या विहिता प्रतिषिद्धाऽपि च संसारविषय एव स्यात् ॥ ६३ ॥
संसारविषय एव हि कर्म प्रतिषिद्धमपि च विहितं च ।
अविभागेनाप्यत्र समन्वारम्भे न बाधकं किमपि ॥ ६४ ॥

अध्ययनमात्रवतः ॥ १२ ॥

यत्तद्धतो विधानादित्यत्रोक्तं निरस्यते तदिह ।
आचार्यकुलाद्वेदमधीत्येत्यध्ययनमात्रमेवैतत् ॥ ६५ ॥

श्रुतमिह तेन च कर्मण्यधिकारोऽध्ययनमात्रवत एव ।
निर्णीयते ह्यविद्वान्कथमिह कर्मस्वधिक्रियेतेति ॥ ६६ ॥
नैषा शङ्का कार्या न वयमिहाध्ययनमात्रसंभूतम् ।
कर्मावबोधनं यत्कर्मस्वधिकारकारणं नेति ॥ ६७ ॥
प्रकृते निवारयामः किंत्वात्मज्ञानमौपनिषदं यत् ।
स्वत एव फलवदेतन्न पुनः कर्माधिकारहेतुरिति ॥ ६८ ॥
प्रतिपादयाम एतद्यथैव हि क्रतुविशेषविज्ञानम् ।
क्रत्वन्तराधिकारे कथमपि नापेक्ष्यते तथैवतत् ॥ ६९ ॥

नाविशेषात् ॥ १३ ॥

नियमाच्चेति यदुक्तं दूषणमधुना निरस्यते तदिदम् ।
कुर्वन्नेवेत्यादिषु नियमश्रवणेषु विदुष एवेति ॥ ७० ॥
नास्ति विशेषो यस्मादविशेषेणोपदिश्यते नियमः ।

स्तुतयेऽनुमतिर्वा ॥ १४ ॥

कुर्वन्नेवेत्यत्र त्वपरोऽप्याख्यायते विशेषो हि ॥ ७१ ॥
यद्यपि विद्वानेव प्रकरणबलतः प्रतीयतेऽथापि ।
विद्यास्तुतये तदिदं कर्मानुज्ञानमिति तु विज्ञेयम् ॥ ७२ ॥
तदभिप्रायेणैव हि न कर्म लिप्यत इति प्रदर्शयति ।
यावज्जीवं कुर्वत्यपि विदुषि न कर्म भवति लेपाय ॥ ७३ ॥
विद्यासामर्थ्यादिति विद्यास्तुतिरेव गम्यते तस्मात् ।

कामकारेण चैके ॥ १५ ॥

अपि चात्रैके प्रत्यक्षीकृतविद्याफला हि विद्वांसः ॥ ७४ ॥
स्वर्गादिसाधनेषु प्रजादिषु हि तद्बलावलम्बेन ।
निष्फलतामेवैते निश्चिन्वन्तीति दर्शयत्येषा ॥ ७५ ॥
श्रुतिरियमेतद्ध स्मेत्याद्या प्रजया फलं किमस्माकम् ।
परमात्मैवाऽऽत्मा नः प्राप्यो लोको भवेत्परात्मेति ॥ ७६ ॥
तस्मादपि विद्याया न कर्मशेषत्वमुचितमाश्रयितुम् ।
नापि च तद्विषयायाः फलश्रुतेरर्थवादता युक्ता ॥ ७७॥

उपमर्दं च ॥ १६ ॥

कर्माधिकारहेतोः कारकफलतत्क्रियादिरूपस्य ।
आविद्यकस्य विद्यावीर्यादुपमर्दमामनन्त्यपि च ॥ ७८ ॥
यत्र त्वस्येत्याद्याः श्रुतयः किंचेह वैपरीत्यमपि ।
औपनिषदात्मविद्यापूर्वं कर्माधिकारसिद्धमिह ॥ ७९ ॥
आशासानस्य परं कर्मण्यधिकारभङ्ग एव स्यात् ।
तस्मादपि विद्यायाः स्वातन्त्र्यं स्यान्न कर्मशेषत्वम् ॥ ८० ॥

ऊर्ध्वरेतःसु च शब्दे हि ॥ १७ ॥

विद्येयमूर्ध्वरेतःसु च दृष्टा सा भवेन्न कर्माङ्गम् ।
न हि तेषु दृश्यते तद्यदग्निहोत्रादिलक्षणं कर्म ॥ ८१ ॥
ते चोर्ध्वरेतसः किल न श्रूयन्ते हि वेद इत्यपि न ।
येनोर्ध्वरेतसस्ते श्रूयन्ते वैदिकेषु शब्देषु ॥ ८२ ॥
त्रय इह धर्मस्कन्धाः श्रद्धां तप इत्युपासते ये च ।
ये चोपवसन्ति तपःश्रद्धे केवलमरण्यकृतवासाः ॥ ८३ ॥
प्रव्राजिनो हि लोकं काङ्क्षन्तः प्रव्रजन्ति ते हेति ।
किंच पुनर्ब्रह्मेत्यादिश्रुतिवाक्ये तदूर्ध्वरेतस्त्वम् ॥ ८४ ॥
श्रूयत एव प्रतिपन्नाप्रतिपन्नाश्रमान्तराणां च ।
तस्मादपि विद्यायाः स्वातन्त्र्यं स्यान्न कर्मशेषत्वम् ॥ ८५ ॥

परामर्शं जैमिनिरचोदना चापवदति हि ॥ १८ ॥

ये चोर्ध्वरेतसामिह सद्भावाय प्रदर्शिताः शब्दाः ।
त्रय इत्याद्याः श्रौतास्ते तत्प्रतिपादनक्षमा न स्युः ॥ ८६ ॥
यत आश्रमान्तराणां शब्देष्वेतेषु किल परामर्शम् ।
केवलमिह जैमिनिराचार्योऽसौ मन्यते न तत्र विधिम् ॥ ८७ ॥
येन लिङादीनामन्यतमो नेहास्ति चोदनाशब्दः ।
अर्थान्तरपरतैव हि दृष्टा प्रत्येकमेषु शब्देषु ॥ ८८ ॥
त्रय इत्यादौ यज्ञोऽध्ययनं दानमिति वर्णितः प्रथमः ।
स भवति गृहस्थ इह तप इति तु वनस्थो द्वितीय इह कथितः॥८९॥
आचार्यकुलनिवासी योऽसौ हि ब्रह्मचर्यमापन्नः ।
उपकुर्वाणो नैष्ठिक इति स द्विविधस्तृतीय इह भवति ॥ ९० ॥

एते हि पुण्यलोका इति तु परामर्शपूर्वकं तेषाम्।
संकीर्त्यानात्यन्तिकफलतामत्यन्तफलतया हीयम् ॥ ९१ ॥
प्रस्तूयते पुनर्ब्रह्मसंस्थता ब्रह्मसंस्थ इत्याद्यैः।
नन्वाश्रमाः परामर्शेऽपि हि गम्यन्त एव तत्रैते ॥ ९२ ॥
सत्यमथापि स्मृत्याचाराभ्यां तत्प्रसिद्धिरिह दृष्टा।
न प्रत्यक्षश्रुत्या दृष्टा सा चेह तद्विरोधे तु ॥ ९३ ॥
नाऽऽदरणीयैवानधिकृतविषया एव ते भविष्यन्ति।
ननु गार्हस्थ्यमपीदं सहोर्ध्वरेतोभिरिह परामृष्टम् ॥ ९४ ॥
सत्यमथापि गृहस्थ प्रत्येव विधीयतेऽग्निहोत्रादि।
तेन श्रुतिप्रसिद्धं गार्हस्थ्यमिति प्रतीयते व्यक्तम् ॥ ९५ ॥
इह च परामर्शोऽयं स्तुत्यर्थः स्यान्न चोदनार्थोऽपि।
अपि च प्रत्यक्षश्रुतिरपवदति किलाऽऽश्रमान्तरं हीयम् ॥ ९६ ॥
आचार्याय प्रियमित्याद्याऽपि तथैव वीरहेत्याद्या।
ये चेमेऽरण्य इति श्रुतिरपि भवतीह देवयानपरा ॥ ९७ ॥
नेहाऽऽश्रमान्तरस्य प्रदर्शनार्था यतश्च संदिग्धम्।
तद्वद्याश्रमान्तरं त एवेत्यादौ तथैतमेवेति ॥ ९८ ॥
न हि पारिव्राज्यविधिर्भवति न चायं हि लोकसंस्तावः।
तदिदं तु पुनर्ब्रह्मत्यादौ वाक्ये प्रदर्शित हि ननु ॥ ९९ ॥
पारिव्राज्यविधानं कथमिह दूषणमिद भवेदिति चेत्।
सत्यमथापि त्वेतां जाबालश्रुतिमिहानपेक्ष्यैव ॥ १०० ॥
श्रुत्यन्तरावलम्बाद्विचार इह चालितो हि सूत्रकृता।

अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥ १९ ॥

तदिदं पारिव्राज्यमवश्यमनुष्ठेयमेव भवतीह ॥ १०१ ॥
गार्हस्थ्यवदेवेति हि मन्यत इह बादरायणाचार्यः।
अनधिकृतानुष्ठेयं तदाश्रमान्तरमितीह नाऽऽशङ्क्यम् ॥ १०२ ॥
श्रुतिसाम्यमेव दृष्टं गार्हस्थ्येनाऽऽश्रमान्तरस्य यतः।
स्कन्धश्रुतौ यथैव श्रुत्यन्तरविहितमेव गार्हस्थ्यम् ॥ १०३ ॥
भवति परामृष्टं तद्वदेव खल्वाश्रमान्तरं तदिदम्।
भवति यथैव निवीतप्राचीनावीतयोः परामर्शः ॥ १०४ ॥

शाखान्तरावगतयोरुपवीतविधिप्रधानके वाक्ये ।
तस्मादिहाऽऽश्रमान्तरमपि गार्हस्थ्येन तुल्यमेव स्यात् ॥ १०५ ॥
किंच प्रव्राजिन इत्यस्य च वाक्यस्य दृश्यतेऽत्र पुनः ।
समभिव्याहारिः( रः ) श्रुत्यनुवचनाद्यैस्तथैव चेहापि ॥ १०६ ॥
ये चेमेऽरण्य इति श्रुतेर्हि पञ्चाग्निविद्यया भवति ।
तव एवेत्यादिषु किल संदिग्धं तदिति यच्च पूर्वोक्तम् ॥ १०७ ॥
तदिदमयुक्तं निश्चयकारणमत्रोपलभ्यते यस्मात् ।
धर्मस्कन्धास्त्रय इति यदिदं स्कन्धत्रयं प्रतिज्ञातम् ॥ १०८ ॥
यज्ञादयो हि धर्माः पृथगुत्पन्ना भवन्ति भूयांसः ।
हित्वाऽऽश्रमसंबन्धं त्रित्वेनान्तर्भवन्ति तत एते ॥ १०९ ॥
भवति गृहस्थाश्रम एवैको यज्ञादिलिङ्गकः स्कन्धः ।
विस्पष्टमेव चान्यो निर्दिष्टो ब्रह्मचारिशब्देन ॥ ११० ॥
तप इत्यत्रापि तपःप्रधान एवाऽऽश्रमो वनस्थोऽसौ ।
ये चेमेऽरण्य इति श्रुतिवाक्ये खल्वरण्यलिङ्गेन ॥ १११ ॥
सोऽयं तुरीय एव स्यान्न स्कन्धत्रयप्रविष्टोऽयम् ।
श्रद्धातपःपराणामेव यतो ह्याश्रमान्तरग्रहणम् ॥ ११२ ॥

विधिर्वा धारणवत् ॥ २० ॥

अनुवादकत्वपक्षं हित्वा स्कन्धश्रुतेर्विधित्वमिह ।
परिकल्प्यते हि तत्र च लाघवमेवेति दर्शयत्यधुना ॥ ११३ ॥
विधिराश्रमान्तरस्य स्यान्न परामर्शमात्रमेवात्र ।
अविरक्तविषयकत्वाद्यावज्जीवश्रुतेर्न बाधकता ॥ ११४ ॥
ननु यदि विधित्वमस्यास्तदैकवाक्यत्वमनुपपन्नं स्यात् ।
अत्रैकवाक्यता हि प्रतीयते ब्रह्मसंस्थतास्तुत्या ॥ ११५ ॥
अल्पफलत्वेन त्रीन्निन्दित्वा ब्रह्मसंस्थता चेह ।
अमृतत्वफलतयैव स्तुता हि सा ब्रह्मसंस्थ इत्येव ॥ ११६ ॥
इति चेत्सत्यमथापि त्यक्त्वा स्तुत्यैकवाक्यतामत्र ।
विधिरेवापूर्वत्वादभ्युपगन्तव्य इति तु युक्तमिह ॥ ११७ ॥
विध्यन्तरस्य चानुपलम्भा(म्भा)दत्र च विधिप्रतीतेश्च ।
संभवति हि मुख्यार्थे स्तुतिलक्षणयाऽत्र गौणवादत्वम् ॥ ११८ ॥
आश्रित्य योजना न हि युक्ता स्तुत्येकवाक्यभावेन ।
धारणवदिति निदर्शनमुपदिष्टं तत्किलैवमत्र स्यात् ॥ ११९ ॥

इह च महापितृयज्ञे भवति प्रेताग्निहोत्रमत्र हविः ।
प्रक्षिप्तं स्रुच्याहवनीयं प्रतिनीयते यदा तर्हि ॥ १२० ॥
हविषस्तस्याधस्तात्समिधं धृत्वा ह्यनुव्रजेत्स पुनः ।
इत्युक्त्वोपरि देवेभ्यो धारयतीति दर्शितं श्रुत्या ॥ १२१ ॥
अनयाऽधस्तादित्यादिकयाऽदोधारणस्य विहितस्य ।
स्तावकतयोपरिगृहीतस्य च तेनैकवाक्यतामाने ॥ १२२ ॥
सत्यपि दैवे चोपरिधारणविधिरिह यथा तथेहापि ।
तुल्यत्वाच्चापूर्वत्वस्योक्त शेषलक्षणेऽपीदम् ॥ १२३ ॥
यद्यपि केवलमत्राऽऽश्रमान्तरस्यास्ति किल परामर्शः ।
तदपि विधेयासंस्तवसामर्थ्याद्ब्रह्मसंस्थताऽवश्यम् ॥ १२४ ॥
या ब्रह्मसंस्थतोक्ता सा स्यादाश्रमचतुष्टये किंवा ।
भवतीह यस्य कस्यचिदथ तु परिव्राजकस्य वेत्येतत् ॥ १२५ ॥
अत्र विवेक्तव्यं यदि भवेत्परिव्राजकः परामृष्टः ।
सर्वेषामविशेषेणैव गृहस्थादिवत्परामर्शात् ॥ १२६ ॥
यो ब्रह्मसंस्थ एकश्चतुर्षु किल कश्चिदाश्रमेषु स्यात् ।
यदि तु स न परामृष्टस्ततस्तु परिशिष्यमाण इह योऽसौ ॥१२७॥
स खलु परिव्राडेव स्यादत्र ब्रह्मसंस्थ इति युक्तम् ।
तत्र तपःशब्देन हि भवेत्परिव्राजकः परामृष्टः ॥ १२८ ॥
इति केचित्तदयुक्तं सत्यां हि गतावनेन शब्देन ।
वानप्रस्थपरेण च कथं परिव्राजकोऽत्र गृह्येत ॥ १२९ ॥
इह च परामृष्टौ किल गृहमेधिब्रह्मचारिणावेतौ ।
अत्र यथा साधारणविशेषणेन च विशेषितौ भवतः ॥ १३० ॥
एतौ हि भिक्षुवैखानसावपि तथा विशेषितौ भवतः ।
वानप्रस्थानां खलु तपस्त्वसाधारणो भवेद्धर्मः ॥ १३१ ॥
कायक्लेशपुरःसरकर्मणि रूढो ह्ययं तपःशब्दः ।
भिक्षोस्तु धर्म इन्द्रियसंयमनादिर्न चेतरः कश्चित् ॥ १३२ ॥
यदि च तपःशब्देनेन्द्रियसंयमनादिरपि च गृह्येत ।
तर्हि चतुष्ट्वेन सतां त्रिष्वन्तर्भावकथनमन्याय्यम् ॥ १३३ ॥
एकोऽमृतत्वभाक्स्यात्त्रय एते पुण्यलोकभाज इति ।
व्यपदेशोऽत्र तु दृष्टः स चाऽऽश्रमपृथक्त्व एव संभवति ॥ १३४ ॥

तस्मादेते पूर्वे भवन्ति किल पुण्यलोकमात्रफलाः ।
परिशिष्यमाण एष परिव्राडमृतत्वभागिति न्याय्यम् ॥ १३५ ॥
ननु संभवान्हि योगात्सर्वत्र ब्रह्मसंस्थशब्दोऽयम् ।
अवतिष्ठते परिव्राजक एव कथं यदा तु रूढिः स्यात् ॥ १३६ ॥
आश्रममात्रादमृतत्वप्राप्तेर्ज्ञानमफलमिति चेन्न ।
तत्रानन्यव्यापारतात्मिकां ब्रह्मसंस्थतामत्र ॥ १३७ ॥
न ब्रह्मसंस्थशब्दो ब्रवीति सा नाऽऽश्रमत्रयस्य स्यात् ।
स्वाश्रमविहितानामननुष्ठाने पातकं श्रुतं तस्य ॥ १३८ ॥
अननुष्ठाननिमित्तं तत्तु परिव्राजकस्य कथमपि च ।
न भवेद्यतश्च तस्मिन्दृष्टः खलु सर्वकर्मसंन्यासः ॥ १३९ ॥
धर्मः शमादिरस्योपोद्बलको ब्रह्मसंस्थतायाः स्यात् ।
यच्च शमाद्युपबृंहितमस्य पुनर्ब्रह्मनिष्ठतारूपम् ॥ १४० ॥
तत्तस्याऽऽश्रमविहितं कर्मान्येषां यथैव यज्ञादि ।
यदि तद्व्यतिक्रमः स्यात्तदा भवेत्प्रत्यवाय एतस्य ॥ १४१ ॥
न्यास इति ब्रह्मेति श्रुतयस्ते ब्रह्मलोक इत्याद्याः ।
स्मृतयस्तद्बुद्ध्वय इति कर्माभाव प्रदर्शयन्त्यस्य ॥ १४२ ॥
तस्मादाश्रममात्रान्न चेह तस्यामृतत्वसंप्राप्तिः ।
नापीह ज्ञानानर्थक्यापत्तिश्च दूषणं भवति ॥ १४३ ॥
तेनेतराश्रमाणामत्र समानेऽपि किल परामर्शे ।
लभ्यत एव हि पारिव्राज्यं यद्ब्रह्मसंस्थतारूपम् ॥ १४४ ॥
अनपेक्ष्य च जाबालश्रुतिमाचार्येण चालिता चर्चा ।
इह चाऽऽश्रमान्तरश्रुतेरस्यैव ब्रह्मचर्यमित्याद्या ॥ १४५ ॥
पारिव्राज्यं त्वनया श्र(क्र)मेण दर्शितमथाक्रमेणापि ।
अनधिकृतगोचरेयं श्रुतिरिति नैवेह युज्यते वक्तुम् ॥ १४६ ॥
अविशेषश्रवणात्परमनधिकृतानां पृथग्विधानाच्च ।
अथ पुनरित्यादिश्रुतिरनधिकृतानां तदेतदुपादिशति ॥ १४७ ॥
ब्रह्मज्ञानस्यास्य च परिपाकाङ्गं हि भवति तच्चैतत् ।
पारिव्राज्यं नानधिकृतविषयमिति श्रुतिः प्रदर्शयति ॥ १४८ ॥
सा चेयमथ परिव्राड्विवर्णवासा इति प्रसिद्धैव ।
तस्मादिहोर्ध्वरेतस इह सिद्धा एव तत्र विहितायाः ॥ १४९ ॥

विद्यायाः स्वातन्त्र्यं सिद्धं तेन च समञ्जसं सकलम् ।

स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥ २१ ॥

इह च स एष रसानां रसतम इत्यादिवाक्यमुपदिष्टम् ॥ १५० ॥
छान्दोग्ये तत्र रसः पृथिवी तस्या रसास्त्विमा आपः ।
ताभ्यश्चौषधयोऽपि हि तथौषधिभ्योऽपि पुरुष एष रसः ॥१५१॥
पुरुषस्य वाग्रसः स्याद्वाग्वाचः स्यादृचश्च साम रसः ।
साम्नोऽष्टमोऽयमुद्गीथो हि रसानां च रसतमः परमः ॥ १५२ ॥
इति निर्दिष्टं हि तथैवान्यत्राप्येवमेव निर्दिष्टम् ।
इयमेवर्गग्निः सामायं वावेतिवेदवाक्येषु ॥ १५३ ॥
उद्गीथादेः स्तुत्यर्था एवैता भवन्ति किं श्रुतयः ।
आहोस्विच्छ्रुतय इमा उपासनाविधिपरा भवन्त्यत्र ॥ १५४ ॥
इति संदेहे सति ताः स्तुत्यर्था इति तु युक्तमिह यस्मात् ।
श्रूयन्ते ताः कर्माङ्गाण्युद्गीथादिकानि चाऽऽश्रित्य ॥ १५५ ॥
इयमेव जुहूरादित्यः कूर्मः स्वर्ग एवमाद्या हि ।
जुह्वादिस्तुत्यर्था यथा भवन्ति हि तथेति चेन्नैवम् ॥ १५६ ॥
श्रुतिवचसां नैतेषां स्तुतिमात्रमिह प्रयोजनं युक्तम् ।
उपलभ्यते किलापूर्वत्वाद्विध्यर्थतैवं येनात्र ॥ १५७ ॥
विध्यर्थत्वे चापूर्वोऽर्थो विहितो भवेदसौ तत्र ।
स्तुत्यर्थत्वे तेषामानर्थक्यं तदत्र दुर्वारम् ॥ १५८ ॥
विधिसंनिधिपठितानां स्तुतिपरता दृश्यते न चान्येषाम् ।
विधिनेत्यस्मिन्सूत्रेऽप्ययमेवार्थः प्रदर्शितो नान्यः ॥ १५९ ॥
न व्यवहितपठितानामेषामिह वाक्यशेषता युक्ता ।
इयमेव जुहूरित्यादीनां विधिसंनिधौ समाम्नानात् ॥ १६० ॥
स्तुत्यर्थतया तेषां विधिशेषत्वमिति भवति वैषम्यम् ।
तस्मादेताः श्रुतयो विध्यर्था न स्तुतिप्रधानाः स्युः ॥ १६१ ॥

भावशब्दाच्च ॥ २२ ॥

सामोपासीतोद्गीथमुपासीताहमुक्थमस्मीति ।
विद्यादिति च श्रूयन्ते विस्पष्टा विधायकाः शब्दाः ॥ १६२ ॥
ते च स्तुतिपरतायां व्याहन्येरन्स्मृतिस्तथेयमपि ।
कुर्यात्क्रियेत कर्तव्यं च भवेत्स्यादितीह पञ्चविधम् ॥ १६३ ॥

एतच्च सर्ववेदेष्वपि नियतं लक्षणं विधेरिति हि ।
एवं स्मरन्ति हि लिङाद्यर्थं विधिमत्र मन्यमानास्ते ॥ १६४ ॥
इह तु श्रूयन्ते हि प्रतिप्रकरणं फलानि भिन्नानि ।
आपयिता वै कामानामिति कल्पन्त एवमादीनि ॥ १६५ ॥
तस्मादुद्गीथादिश्रुतय इहोपासनाविधानार्थाः ।
अङ्गाश्रितविद्या अप्येता दृष्टा इह स्वतन्त्रफलाः ॥ १६६ ॥
किमु वक्तव्यं स्वातन्त्र्यमिति परात्मप्रधानविद्यानाम् ।
परविद्यास्वातन्त्र्ये पर्यवसानात्समञ्जसं सकलम् ॥ १६७ ॥

पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥ २३ ॥

पुत्रादिपरिवृताय हि राज्ञे विहिताश्वमेधयागे हि ।
पारिप्लवप्रयोगो नानाख्यानाभिधानरूपोऽसौ ॥ १६८ ॥
एवमिह याज्ञवल्क्यस्य द्वे भार्ये इति प्रसिद्धेषु ।
वेदान्तवाक्यदर्शितनानाख्यानेषु संशयोऽयं स्यात् ॥ १६९ ॥
पारिप्लवप्रयोगार्थानि किमेतानि किमर्थवेतानि ।
तत्तद्विद्याप्रतिपत्त्यर्थान्येवेति तत्र विहितत्वात् ॥ १७० ॥
पारिप्लवप्रधाना एवैताः श्रुतय इति यदोच्येत ।
लुप्येत तर्हि वेदान्तानां विद्याप्रधानताऽत्र पुनः ॥ १७१ ॥
मन्त्रवदेव हि तेषां प्रयोगशेषत्वसंभवादिति चेत् ।
पारिप्लवमाचक्षीतेत्यत्र विशेषितानि तान्येव ॥ १७२ ॥
यान्याख्यानानि पुनर्मनुरित्यारभ्य दर्शितानि स्युः ।
आख्यानत्वेन यदा सर्वगृहीतिस्तदेदमफलं स्यात् ॥ १७३ ॥
मनुरित्यादिविशेषणमतो न पारिप्लवार्थतैतेषु ।

तथा चैकवाक्यतोपबन्धात् ॥ २४ ॥

आख्यानानामेषां यदि च न पारिप्लवार्थता तर्हि ॥ १७४ ॥
तत्तद्विद्याप्रतिपादनोपयोगित्वमेकवाक्यत्वात् ।
दृश्यत एव हि संनिहिताभिर्विद्याभिरेकवाक्यत्वम् ॥ १७५ ॥
तेन च विधिशेषत्वं प्ररोचनाच्च प्रवृत्तिसौकर्यात् ।
इह मैत्रेयीब्राह्मणवाक्ये द्रष्टव्यवाक्यदर्शितया ॥ १७६ ॥
शुद्धात्मविद्यया तद्दृष्टं प्रातर्दनेऽपि वाक्ये हि ।
प्राणोऽस्मि प्रज्ञात्मेत्यनया संवर्गविद्ययाऽपि तथा ॥ १७७ ॥

जानश्रुतिरितिवाक्ये तदेकवाक्यत्वमवगतं भवति ।
प्राजापत्यमजं तूपरमिति विधिशेषता यथैतेषाम् ॥ १७८ ॥
भवति स आत्मन इत्याद्याख्यानानां तथैव चेहापि ।
तस्माद्वेदान्ताख्यानानां पारिप्लवार्थता नेह ॥ १७९ ॥

अत एव चाग्नीन्धनाद्यनपेक्षा ॥ २५ ॥

अधिकरणत्रितयेन च विद्यास्वान्तन्त्र्यमेवमभिधाय ।
प्रथमाधिकरणफलमुपसंह्रियते पुनरिद हि सूत्रकृता ॥ १८० ॥
अत एवेत्यत आदिमसूत्रोक्त गृह्यते न चान्यदिह ।
तस्मादिह विद्यायाः स्वतश्च पुरुषार्थसाधनत्वेन ॥ १८१ ॥
अग्नीन्धनादिसाध्यान्याश्रमकर्माणि यानि चान्यानि ।
विद्यायाः फलसिद्धौ नापेक्ष्यन्ते हि तानि सर्वाणि ॥ १८२ ॥

सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ २६ ॥

चिन्त्यत एतदिदानीमत्र किमत्यन्तमेव विद्यायाः ।
अनपेक्षा विधिविहितेष्वाश्रमकर्मस्वथास्ति काचिदिति ॥ १८३ ॥
अग्नीन्धनादिकानि ह्याश्रमकर्माणि तानि फलसिद्धौ ।
नापेक्षते हि विद्येत्युक्तं पूर्वत्र तेन चात्यन्तम् ॥ १८४ ॥
अनपेक्षायां प्राप्तायामेतदिहाभिधीयते सूत्रे ।
यज्ञादीन्याश्रमकर्माणि हि सर्वाण्यपेक्षते सेति ॥ १८५ ॥
नन्विह विरुद्धमेतान्यपेक्षते न ह्यपेक्षते चेति ।
न विरुद्धमत्र किंचित्स्यादुत्पन्ना यदा भवेद्विद्या ॥ १८६ ॥
नापेक्षते तदेयं फलसिद्धिं प्रति तु साधनं किमपि ।
स्वोत्पत्तिं प्रति विद्या ह्यपेक्षते साधनान्तरं तदिदम् ॥ १८७ ॥
इममर्थमुपदिशति हि श्रुतिरेषा या तमेतमित्याद्या ।
ज्ञानेऽपि वेष्यमाणे किंवा पुनरत्र विविदिषायां वा ॥ १८८ ॥
तेषां विधीयते किल हेतुत्वं दुरितनिरसनद्वारा ।
पारम्पर्यजितायामत्र तृतीया श्रुतिर्भवेद्युक्ता ॥ १८९ ॥
काष्ठैः पचतीत्यादौ ज्वालाद्वारा यथा तथेहापि ।
उत्पत्तिहेतुतैषां प्रतीयते ह्यत्र विविदिषायोगात् ॥ १९० ॥
अथ यद्यज्ञ[ इति ] श्रुतिवाक्ये हि ब्रह्मचर्यरूपस्य ।
विद्याहेतोः समभिव्याहारो दृश्यते च यज्ञाद्यैः ॥ १९१ ॥

विद्यासाधनभावो यज्ञादीनां हि सूच्यते तेन ।
सर्वे वेदा यत्पदमित्यादिश्रुतिवचोभिरप्येवम् ॥ १९२ ॥
सूच्यत एव हि विद्यासाधनभावोऽत्र कर्मणामेषाम् ।
स्मृतिरपि च कषायेत्यादिका यथोक्तार्थमेव दर्शयति ॥ १९३ ॥
अश्ववदिति च निदर्शनमत्र यथाऽश्वो हि योग्यतावशतः ।
रथचर्यायां युक्तो न लाङ्गलाकर्षणेऽपि युज्येत ॥ १९४ ॥
एवमिहाऽऽश्रमकर्माण्यपि विद्यायाः फलस्य ससिद्धौ ।
नापेक्ष्यन्ते तस्या उत्पत्तौ पुनरिमान्यपेक्ष्यन्ते ॥ १९५ ॥

शमदमाद्युपेतः स्यात्तथाऽपि तु तद्विधेस्तद-
ङ्गतया तेषामवश्यानुष्ठेयत्वात् ॥ २७ ॥

यज्ञादीनां विद्यासाधनभावोऽयमनुचितो यस्मात् ।
विधिरत्र नैव कश्चिद्दृश्यत इति यदि तु मन्यते कश्चित्॥ १९६ ॥
यज्ञेन विविदिषन्तीत्येषा केवलमिहानुवादः स्यात् ।
सा किल विद्याभिष्टवपरा न यज्ञादिविधिपरा भवति ॥ १९७ ॥
विद्या सेयं हि महाभागा यज्ञादिसाधनैरेताम् ।
वाञ्छन्ति लब्धुमित्येवमथापि च शमाद्युपेतः स्यात ॥ १९८ ॥
विद्यार्थिन हि पुरुषं तमेतमर्थं श्रुतिः प्रदर्शयति ।
एवंविच्छान्तो दान्त इति हि विद्यैकसाधनत्वेन ॥ १९९ ॥
येन शमादीनामिह विधानमुपलभ्यते ततश्चैवम् ।
विहितानां चावश्यानुष्ठेयत्वान्न चैवमत्रापि ॥ २०० ॥
आत्मन्येवाऽऽत्मानं पश्यति भूत्वा शमाद्युपेत इति ।
स्याद्वर्तमाननिर्देश एव न विधिरिति पुनरिहाऽऽशङ्क्यम्॥ २०१ ॥
तस्मादिति तु प्रकृतप्रशंसनात्तद्विधिर्भवदत्र ।
माध्यंदिनास्तु पश्येदिति विस्पष्टं त्वधीयते हि विधिम्॥ २०२ ॥
यज्ञाद्यनपेक्षायामपि च शमादीन्यपेक्षितव्यानि ।
ननु नोपलभ्यते विधिरत्रेत्युक्तं हि विविदिषावाक्ये ॥ २०३ ॥
सत्यं संयोगस्यापूर्वत्वेन च विधित्वमिह युक्तम् ।
यदि पूर्वं प्राप्तः स्याद्यज्ञादीनां हि विविदिषायोगः ॥ २०४ ॥
तर्ह्ययमनुवादः स्यात्पूर्वं क्वचिदप्यसौ न संप्राप्तः ।
पूषा प्रपिष्टभागोऽदन्तक इत्यादिकेषु वाक्येषु ॥ २०५ ॥

अश्रुतविधिकेष्वपि चापूर्वत्वेन तु विधिं हि परिकल्प्य।
पौष्णं पेषणमेतत्प्रथमे तन्त्रेऽवधारितं विकृतौ ॥ २०६ ॥
भगवद्गीताद्यासु स्मृतिषु फलासङ्गवर्जितानि पुनः।
यज्ञादीनि मुमुक्षोरुक्तं हि ज्ञानसाधनानीति ॥ २०७ ॥
तस्माद्यज्ञादीन्यपि शमादिकान्यपि यथाश्रुत तानि।
विद्योत्पत्तौ केवलमपेक्षितव्यानि साधनत्वेन ॥ २०८ ॥
तत्राप्येवंविदिति हि विद्यासंयोगतः शमादीनि।
प्रत्यासन्नानि हि यज्ञादीनि त्वत्र विविदिषायोगात् ॥ २०९ ॥
बाह्यतराणि भवन्तीत्येवं तेषां परस्परं भेदः।

## सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ २८ ॥

छन्दोगानां न ह वा एवंविदि किंचनेति वाक्यं हि ॥ २१० ॥
दृष्टमिह प्राणानां संवादे वाजिनां तथैव किल।
न ह वा अस्यानन्नं जग्धं न प्रतिगृहीतमित्यादि ॥ २११ ॥
तत्र च निर्दिष्टं खल्वदनीयं सर्वमस्य भवतीति।
तत्र च सर्वान्नानुज्ञानं यदिदं प्रदर्शितं श्रुत्या ॥ २१२ ॥
तत्किं शमादिवद्विद्याङ्गमवश्यं विधीयते किंवा।
स्तुत्यर्थं संकीर्त्यत इति संदेहेऽत्र विधिरिति प्राप्तम् ॥ २१३ ॥
एवं चेदुपदेशो भवति हि पुरुषप्रवर्तनाहेतुः।
तत्प्राणविषयविद्यासांनिध्यादिह तदङ्गभावेन ॥ २१४ ॥
लब्धा भवति हि नैषा नियमनिवृत्तिरिति सति च नन्वेवम्।
भक्ष्याभक्ष्यविभागव्याघाताच्छास्त्रमफलमिति चेन्न ॥ २१५ ॥
उपपद्यते स चायं सामान्यविशेषभावतो भावः।
पशुहिंसाविधिना किल यथैव हिंसानिषेधबाधः स्यात् ॥ २१६ ॥
अपि वामदेव्यविद्याविषयेण न कांचनेत्यनेन यथा।
गम्यागम्यविभागप्रदर्शनार्थं हि बाध्यते शास्त्रम् ॥ २१७ ॥
एवमिहापि च सर्वान्नाभ्यवहारार्थकेन वचनेन।
भक्ष्याभक्ष्यविभागप्रदर्शकं शास्त्रमपि च बाध्येत ॥ २१८ ॥
एवं प्राप्ते ब्रूते नेदं सर्वान्नभक्षणं प्रकृते।
विध्यर्हमिति यतो न हि विधायकः कश्चिदत्र शब्दोऽस्ति॥२१९॥

योऽसौ न ह वेत्यादिः स वर्तमानापदेश एव स्यात् ।
न ह्यत्रासत्यामपि विधिप्रतीतौ प्रवृत्तिलोभेन ॥ २२० ॥
विधिरभ्युपगन्तव्य स्यात्किंच श्वादिजन्तुमर्यादम् ।
प्राणस्यान्नमिहोक्त्वा तदेतदाम्नायते हि न ह वेति ॥ २२१ ॥
नैतद्धोक्तुं शक्यं श्वाद्यन्नं मानुषेण देहेन ।
शक्यत एव ज्ञातुं प्राणान्नं सकलमेतदिति तस्मात् ॥ २२२ ॥
प्राणान्नज्ञानस्य प्रशंसनार्थोऽर्थवाद एवायम् ।
न भवति सर्वान्नानुज्ञानविधिरसावितीह दर्शयति ॥ २२३ ॥
सर्वान्नानुमतिः स्यात्प्राणात्यय एव न पुनरन्यत्र ।
दर्शयति श्रुतिरेषा तथैव चाक्रायणस्य परमर्षेः ॥ २२४ ॥
आपदि संप्राप्तायामभक्ष्यभक्षणविधिप्रवृत्तिमिह ।
मटचीहतेष्वितीयं छान्दोग्ये दृश्यते श्रुतिस्तत्र ॥ २२५ ॥
आपद्गतो हि चाक्रायणमुनिरिभ्यस्य नगरमागत्य ।
इभ्येन सामि खादितकुल्माषान्प्रार्थयंश्चखादासौ ॥ २२६ ॥
प्रत्याचचक्ष एतद्भ्युच्छिष्टमिति हि तदीयमनुपानम् ।
कारणमिह(मा) न खादन्नाहमजीविष्यमिति हि तत्रोक्तम्॥२२७॥
अनुपानस्य प्रत्याख्याने कामो ह(म) इति हि तत्कथितम् ।
स्वपरोच्छिष्टानपि पर्युषितानेतान्परेद्युरपि च पुनः ॥ २२८ ॥
न हि भक्षयांबभूवेत्युपदिष्टं गम्यते हि तेनैतत् ।
प्राणात्ययप्रसङ्गे सनद्धे प्राणधारणाय पुनः ॥ २२९ ॥
यच्चाभक्ष्यं तदपि च भक्षयितव्यं तथा न हि स्वास्थ्ये ।
विद्यावताऽपि कार्यं तदिति ह्यनुपाननिन्दया सिध्येत् ॥ २३० ॥
तस्मान्न ह वेत्यादिर्भवेत्परमिहार्थवाद एवायम् ।

अबाधाच्च ॥ २९ ॥

एवं सत्याहारे शुद्धे स्यात्सत्त्वशुद्धिरित्यर्थम् ॥ २३१ ॥
भक्ष्याभक्ष्यविभागं प्रदर्शयच्छास्त्रमर्थवद्भवति ।

अपि च स्मर्यते ॥ ३० ॥

अपि चाऽऽपदि सर्वान्नाभ्यवहारोऽपि प्रदर्शितो ह्यनया ॥ २३२ ॥

स्मृत्यैव जीवितात्ययमापन्नो योऽन्नमत्ति यत इति हि ।
अपि च सदैव हि मद्यं विप्रः खलु वर्जयेत्सुरापस्य ॥ २३३ ॥
विप्रस्योष्णामास्ये ह्यासिञ्चेयुः सुरां सुरापाश्च ।
क्रिमयो जायन्त इति ह्यस(न)न्नवर्जनमिह स्मरन्त्यास्ये ॥२३४॥

## शब्दश्चातोऽकामकारे ॥ ३१ ॥

शब्दश्च कामकारनिवृत्तिफलः श्रूयते कठानां हि ।
अस्यां हि संहितायां तस्मान्न पिबेत्सुरां हि विप्र इति ॥ २३५ ॥
तस्मान्न ह वेत्याद्या भवन्ति केवलमिहार्थवादास्ते ।

## विहितत्वाच्चाऽऽश्रमकर्मापि ॥ ३२ ॥

सर्वापेक्षेत्यत्र त्वाश्रमकर्माणि यानि विहितानि ॥ २३६ ॥
तानि च विद्यासाधनभूतानीत्यवधृतं हि पूर्वत्र ।
अमुमुक्षोः किं केवलमाश्रमनिष्ठस्य तानि कर्माणि ॥ २३७ ॥
अननुष्ठेयान्यथवाऽनुष्ठेयानीति चिन्त्यते सपदि ।
तत्र तमेतमितिश्रुतिवाक्ये यज्ञादिकर्मणामेषाम् ॥ २३८ ॥
विद्यैकसाधनतया विहितत्वात्तामनिच्छतो विद्याम् ।
नित्यान्यनुष्ठेयान्येव फलान्तरमपेक्षतस्तस्य ॥ २३९ ॥
अथ तस्यानुष्ठेयान्येतानि स्युर्यदा तदैतेषाम् ।
न हि विद्यासाधनता स्यान्नित्यानित्ययोगबाधेन ॥ २४० ॥
एवं प्राप्ते पठति ह्याश्रममात्रैकसंस्थितस्यापि ।
अमुमुक्षोरेतानि हि कर्तव्यान्येव नित्यकर्माणि ॥ २४१ ॥
यावज्जीवमितिश्रुतिवाक्येन यतश्च तानि विहितानि ।
ज्ञानार्थतयाऽनुष्ठानेनानित्यत्वमपि च नित्यत्वम् ॥ २४२ ॥
यावज्जीवश्रुत्येत्युभयविधाने न कश्चिदिह दोषः ।
ननु यदि नित्यत्वमिह स्यादाश्रमकर्मणां तदैतेषाम् ॥ २४३ ॥
कथमिह विद्यासाधनता तेषामित्यतः पठत्येतत् ।

## सहकारित्वेन च ॥ ३३ ॥

विद्यासहकारीणि ह्याश्रमकर्माणि तत्र विहितत्वात् ॥ २४४ ॥
श्रुत्या तमेतमित्यनया सर्वेत्यादिकेन सूत्रेण ।
तदपि च सहकारित्वं यदिहाऽऽश्रमकर्मणां हि सूत्रोक्तम् ॥ २४५ ॥

विद्याफलविषयं तन्न हि प्रयाजादिवद्भवेद्यस्मात् ।
विधिलक्षणा न विद्या विद्याफलमपि न चेह तत्साध्यम् ॥२४६॥
विधिलक्षण हि दर्शाद्येव स्वर्गादिसाधनार्थं हि ।
सहकारिसाधनान्तरमपेक्षते नैवमत्र विद्याऽपि ॥ २४७ ॥
अत एव चेतिसूत्रे तदेतदुपदिष्टमेव पूर्वत्र ।
उत्पत्तिहेतुतैव हि सहकारित्वं भवेदिहैतेषाम् ॥ २४८ ॥
इह च विरोधो न भवति नित्यानित्यात्मकेन योगेन ।
कर्माभेदे सत्यपि भवति हि संयोगभेद एकत्र ॥ २४९ ॥
नित्यः संयोगोऽयं यावज्जीवादिवाक्यनिर्दिष्टः ।
संयोगोऽयमनित्यस्तमेतमित्यादिवाक्यनिर्दिष्टः ॥ २५० ॥
विद्या परमस्यैव हि फलं न नित्यस्य भवति कथमपि च ।
क्रत्वर्थत्वं नित्येनैव हि योगेन खादिरस्य यथा ॥ २५१ ॥
संयोगेनानित्येन पुनस्तस्य च पुमर्थता तद्वत् ।

सर्वथाऽपि त एवोभयलिङ्गात् ॥ ३४ ॥

आश्रमकर्मत्वमते विद्यासहकारितामते वाऽपि ॥ २५२ ॥
उभयत्रैव त एते स्युरग्निहोत्रादयो ह्यनुष्ठेयाः ।
वारयति कर्मभेदाशङ्कां सूत्रस्थ एवकारोऽसौ ॥ २५३ ॥
नित्याग्निहोत्रभिन्नं यथैव मासाग्निहोत्रमन्यत्र ।
नैवं प्रकृते यस्माच्छ्रुतिलिङ्गमिहोपलभ्यते तमिति ॥ २५४ ॥
यज्ञादीन्युत्पन्नान्येव नियुङ्क्तेऽत्र विविदिषायां हि ।
एषामपूर्वरूपं न जुह्वतीतिवदिहोपपादयति ॥ २५५ ॥
स्मृतिलिङ्गमप्यनाश्रित इत्यादिकमेवमेव दर्शयति ।
यस्यैते चत्वारिंशदिति स्मृतिरपि किलेत्थमुपदिशति ॥ २५६ ॥
तस्मात्कर्मणि भेदावधारणं तदिदमत्र साध्वेव ।

अनभिभवं च दर्शयति ॥ ३५ ॥

विद्यासहकारित्वस्यैवोपोद्बलकमेतदिह लिङ्गम् ॥ २५७ ॥
श्रुतिरत्र दर्शयति खल्वनभिभवं ब्रह्मचर्ययुक्तस्य ।
रागादिभिरेतैर्हि क्लेशैरात्मा न नश्यतीत्येवम् ॥ २५८ ॥
तस्मादाश्रमकर्माण्यपि विद्यासाधनानि तान्येव ।

अन्तरा चापि तु तद्दृष्टेः ॥ ३६ ॥

विधुरादीनां संपद्रहितानां चाऽऽश्रमान्तरेण पुनः ॥ २५९ ॥
संबन्धविरहितानां तदन्तरालैकवर्तिनामेषाम् ।
विद्यायामधिकारः किमस्ति किं नास्ति चेति संदेहे ॥ २६० ॥
नास्तीत्येतद्युक्तं यत इह विद्यैकसाधनत्वेन ।
विहितान्याश्रमकर्माण्येतानि तु तेषु नैव दृश्यन्ते ॥ २६१ ॥
एवं प्राप्ते ब्रूते ते विद्यायामधिक्रियन्त इति ।
यस्माद्रैक्वादीनां विधुराणामपि च दृश्यते विद्या ॥ २६२ ॥

अपि च स्मर्यते ॥ ३७ ॥

संवर्तप्रभृतीनामनग्निचर्यादिसंप्रवृत्तानाम् ।
स्मर्यत एव महायोगित्वमनाश्रमविधिप्रवृत्तानाम् ॥ २६३ ॥
नन्वत्रानाश्रमिणां विद्याङ्गं कर्म किं तदिति चेन्न ।

विशेषानुग्रहश्च ॥ ३८ ॥

तेषामप्यविरुद्धैर्धर्मविशेषैर्जपोपवासाद्यैः ॥ २६४ ॥
भवति हि विद्यानुग्रह इति खल्वेषा स्मृतिः प्रदर्शयति ।
जप्येनैव तु शुध्येद्ब्राह्मण इह नास्ति संशयः कश्चित् ॥ २६५ ॥
कुर्यादन्यन्नो वा मैत्रोऽसौ ब्राह्मणो न चान्य इति ।
जप्यादिनैव तेषामपि विद्यायामनुग्रहस्तस्मात् ॥ ६६ ॥
जन्मान्तरकृतकर्मभिरपि विद्यायामनुग्रहो भवति ।
स्मृतिरियमनेकजन्मेत्याद्या दर्शयति चैतमेवार्थम् ॥ २६७ ॥
दृष्टार्थेयं विद्या प्रतिषेधाभावमात्रमालम्ब्य ।
जप्यादिसाधनेन श्रवणादौ पुरुषमधिकरोति किल ॥ २६८ ॥
तस्माद्विधुरादीनामधिकारे नेह बाधकं किमपि ।

अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥ ३९ ॥

अत्रान्तरालवृत्तित्वादितरच्चाऽऽश्रमैकनिष्ठत्वम् ॥ २६९ ॥
ज्यायो विद्यासाधनमेतच्छ्रुत्यादिभिश्च संदृब्धम् ।
श्रुतिलिङ्गं च तदेतत्तेनैति ब्रह्मविदिति वाक्ये हि ॥ २७० ॥
स्मृतिलिङ्गमपि च दृष्टं दिनमेकमनाश्रमी न तिष्ठेत ।
यदि चेदनाश्रमी सन्संवत्सरमधिवसेत्तदा चायम् ॥ २७१ ॥

कृच्छ्रं द्वादशरात्र चरेद्यथाशास्त्रमथाहितात्मेति ।

तद्भूतस्य तु नातद्भावो जैमिनेरपि
नियमातद्रूपाभावेभ्यः ॥ ४० ॥

ये चोर्ध्वरेतसः खल्विहाऽऽश्रमा दर्शिता हि पूर्वत्र ॥ २७२ ॥
प्राप्तस्य तास्ततः किं प्रच्युतिरस्त्युत न वेति संदेहे ।
रागेण पूर्वकर्मानुष्ठानचिकीर्षया कदाचित्स्यात् ॥ २७३ ॥
प्रच्युतिरित्याशङ्का परिहर्तुं सूत्रमेतदिह पठति ।
योऽसाविहोर्ध्वरेतोभावस्तद्भूत एष इह भवति ॥ २७४ ॥
तस्यातद्भावेऽस्ति प्रच्युतिरेव हि ततो न सा युक्ता ।
नियमात्तद्रूपाभावेभ्यो हि किल प्रतीयते चैवम् ॥ २७५ ॥
नियम इहाऽऽचार्यकुलेऽवसादयान्निति ततो ह्यरण्यमियात् ।
स ततो हि न पुनरेयादित्युपनिषदिति ह दृश्यते किंच ॥ २७६ ॥
आचार्येणेत्यादिस्मृतिरपि नियमं तमेतमुपदिशति ।
अपि च प्रथमाश्रममिह समाप्य स गृही भवेत्ततश्च वनी ॥२७७॥
इत्यारोहपराणि ह्युपलभ्यन्ते वचांसि नान्यानि ।
न ह्येवं शिष्टानामाचाराः क्वचिदपि प्रदृश्यन्ते ॥ २७८ ॥
यच्चेह पूर्वकर्मानुष्ठानचिकीर्षयेत्युपन्यस्तम् ।
श्रेयान्स्वधर्म इति हि स्मरणान्न्यायादयुक्तमेतत्स्यात् ॥ २७९ ॥
यो यं प्रति विहितः स्यात्स तस्य धर्मो भवत्परं न्याय्यः ।
कर्तुं युक्तः सोऽयं धर्मस्य हि चोदनाप्रमाणत्वात् ॥ २८० ॥
न च रागादिवशेन प्रच्युतिरिह नियमशास्त्रतो बाधात् ।
जैमिनिसंप्रतिपत्तिः प्रदर्शिता पुनरिहात्र दार्ढ्याय ॥ २८१ ॥

न चाऽऽधिकारिकमपि पतनानुमानात्तदयोगात् ॥ ४१ ॥

यदि नैष्ठिकः प्रमादादवकीर्णी स्यात्तदा हि किं तस्य ।
स्यादवकीर्णीत्युक्तं प्रायश्चित्तं न वेति संदेहे ॥ २८२ ॥
तत्र हि नेति तु युक्तं यदेतदधिकारलक्षणे कथितम् ।
प्रायश्चित्त्यवकीर्णी पशुरिति तदपि च न नैष्ठिकस्य स्यात्॥२८३॥
यस्मादारूढो न्ते(नै)ष्ठिकमित्येषा स्मृतिस्तु तस्य पुनः ।
पातकमसमाधेयं ब्रूतेऽतः सा प्रतिक्रिया च पुनः ॥ २८४ ॥

वारयति येन शुध्येत्स आत्महेत्येवमन्तवाक्येन ।
उपकुर्वाणस्य पुनः पतनस्मरणं न तादृशं क्वापि ॥ २८५ ॥
तस्मात्प्रायश्चित्तं तदेतदुपपद्यते हि तस्यैव ।

उपपूर्वमपि त्वेके भावमशनवत्तदुक्तम् ॥ ४२ ॥

आचार्या अत्रैके ह्युपपातकमेव तदिति मन्यन्ते ॥ २८६ ॥
यन्नैष्ठिकस्य गुरुदारादिभ्योऽन्यत्र तदवकीर्येत ।
तन्न महत्पातकमिह गुरुतल्पादिषु यतो न परिगणितम् ॥२८७॥
उपकुर्वाणस्येव हि भवेदिदं तस्य नैष्ठिकस्यापि ।
प्रायश्चित्तं येन द्वयोरपि न दृश्यते विशेषोऽत्र ॥ २८८ ॥
अशनवदिति तु निदर्शनमत्र यथा ब्रह्मचारिणो दैवात् ।
मधुमांसाशनयोगे व्रतलोपः स्यात्पुनश्च संस्कारः ॥ २८९ ॥
तद्वदिहापि स्याद्ये प्रायश्चित्तं न चेह वाञ्छन्ति ।
तेषां तु नोपलभ्यत इह मूलं किमपि ये च वाञ्छन्ति ॥ २९० ॥
तेषां तु पुनर्ब्रह्मेत्युक्तं ह्यविशेषवचनमिह मूलम् ।
तस्मात्तस्यापि किल प्रायश्चित्तस्य भाव इह युक्तः २९१ ॥
प्रायश्चित्ताभावे तद्भावे च प्रसिद्धिसाम्येऽपि ।
श्रुतिमूलतयाऽऽदर्तुं युक्ता भावप्रसिद्धिरेवात्र ॥ २९२ ॥
इह पूर्वतन्त्रसंमतिमाविष्कर्तुं तदुक्तमिति तत्र ।
यवमयचरुवाक्ये किल यवशब्दो दीर्घशूकधान्येऽपि ॥ २९३ ॥
देशविशेषे च तथा प्रसिद्ध इति कस्य चरुरिह न्याय्यः ।
इति संदेहे वृद्धप्रयोगसाम्याद्विकल्पतः प्राप्तौ ॥ २९४ ॥
सूत्रं समेति तत्र ग्राह्या शास्त्रप्रसिद्धिरिह यस्मात् ।
धर्मज्ञानं शास्त्रात्तद्यत्रान्या इति स्फुटं तस्मात् ॥ २९५ ॥
धान्यविशेषोऽत्र यवश्चरुरिह तेनैव कार्य इत्युक्तम् ।
प्रायश्चित्ताभावस्मरणं स्याद्यत्नगौरवापेक्षम् ॥ २९६ ॥
तद्वच्च भिक्षुवैखानसयोरपि तद्भवेद्व्यवस्थातः ।
वानप्रस्थो दीक्षाभेदे कृच्छ्रं चरेद्यथाशास्त्रम् ॥ २९७ ॥
द्वादशरात्रं स ततः प्रवर्धयेत्किल महान्तमपि कक्षम् ।
भिक्षुस्तु सोमवृद्धिविवर्जितमेतच्चरेद्यथाशास्त्रम् ॥ २९८ ॥

यश्च स्वशास्त्रविहितः संस्कारः सोऽपि तेन कर्तव्यः ।

बहिस्तूभयथाऽपि स्मृतेराचाराच्च ॥ ४३ ॥

यच्चोर्ध्वरेतसां हि प्रच्यवनं स्वाश्रमेभ्य इह तच्च ॥ २९९ ॥
यदि च महापातकमुपपातकमथवा भवेत्तथाऽप्येतत् ।
आरूढो नैष्ठिकमित्यादिस्मृतिनिन्दिता बहिष्कार्याः ॥ ३०० ॥
शिष्टैर्न हि शिष्टानामाचरणं तैः सह क्वचिद्दृष्टम् ।

स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ४४ ॥

चरितप्रायश्चित्तः संव्यवहार्य इति नियमशास्त्रस्य ॥ ३०१ ॥
नैष्ठिकविषये निन्दातिशयस्मृत्या यथैव बाधः स्यात् ।
यस्त्विह यदङ्गकर्ता स च भवति तदाश्रितस्य कर्तेति ॥ ३०२ ॥
उत्सर्गस्य हि कर्तुः फलश्रवणतो भवेत्तथा बाधः ।
इह पुनरुपासनानि हि यान्येवाङ्गाश्रितानि किं तानि ॥ ३०३ ॥
ऋत्विक्कर्माण्यथवा यजमानस्यैव तानि कर्माणि ।
तत्र च यजमानस्यैवैतानीत्येतदेव युक्तं स्यात् ॥ ३०४ ॥
यस्माद्वर्षति हास्मै वर्षयतीत्यादिकं फलश्रवणम् ।
यजमानगामि दृष्टं न्याय्यं साङ्गप्रयोग एतस्य ॥ ३०५ ॥
अधिकृतभावादपि चैतस्याधिकृताधिकारभावाच्च ।
वर्षति हास्मै य उपास्त इति फलं कर्तृगामि दृष्टमिह ॥ ३०६ ॥
नन्वृत्विजोऽपि दृष्टं तदात्मनेवेतिवाक्य इति चेन्न ।
तस्य च वाचनिकत्वात्फलवत्सूपासनेषु कर्तृत्वम् ॥ ३०७ ॥
स्वामिन एव स्यादित्यात्रेयो मन्यते किलाऽऽचार्यः ।

आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते ॥ ४५ ॥

न स्वामिकर्तृकाणि ह्युपासनानीह किंतु तानि स्युः ॥ ३०८ ॥
ऋत्विक्कर्माणि परं स मन्यते ह्यौडुलोमिराचार्यः ।
साङ्गाय कर्मणे खल्वृत्विक्तस्मै यतः परिक्रियते ॥ ३०९ ॥
एतानि तत्प्रयोगान्तःपातीन्यधिकृताधिकारत्वात् ।
गोदोहनादिनियमवदृत्विग्भिस्तान्युपासनानीह ॥ ३१० ॥
निर्वर्त्येरंस्तदिदं विज्ञानस्य श्रुतिः प्रदर्शयति ।
उद्गातृकर्तृकत्वं तं ह बको दाल्भ्य एवमाद्या हि ॥ ३११ ॥

कर्त्राश्रयमेव फलं श्रूयत इति यच्च दर्शितं पूर्वम् ।
तदपि च न परार्थत्वादृत्विज इह भवति न स्वतन्त्रत्वम् ॥३१२॥
फलसंबन्धस्तस्य च वचनादन्यत्र नैव संघटते ।

श्रुतेश्च ॥ ४६ ॥

यां वै कांचन यज्ञ ऋत्विज आशिषमिति श्रुतिश्चापि ॥ ३१३ ॥
यदिदमुपासनसाध्यं फलमिह यजमानगामि दर्शयति ।
कं ते काम( मा ) गायानीत्याद्येनैव वाक्यजातेन ॥ ३१४ ॥
तस्मादङ्गोपास्तीनामृत्विक्कर्तृकत्वमिति सिद्धम् ।

सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥४७॥

आत्मानमिह विदित्वा पूर्वतना ब्राह्मणा हि संन्यस्य ॥ ३१५ ॥
भिक्षाचर्यं यस्माच्चरन्ति ते ब्राह्मणोऽधुना तस्मात् ।
पाण्डित्यं निर्विद्य च नियतं बाल्येन स खलु तिष्ठासेत् ॥ ३१६ ॥
बाल्यं पाण्डित्यं चोभयमपि निर्विद्य सोऽथ मुनिरेव ।
मौनममौनं च तथा निर्विद्य ब्राह्मणोऽथ भवतीति ॥ ३१७ ॥
बृहदारण्यकवाक्ये श्रुतमेवं तत्र भवति संदेहः ।
मौनं विधीयते किं न वेति न वेति युक्तमिह यस्मात् ॥ ३१८ ॥
विध्यवसानं बाल्येनेत्यस्मिन्दृश्यते न चान्यत्र ।
अथ मुनिरित्यत्र पुनर्न दृश्यते काऽपि विधिविभक्तिरसौ ॥३१९॥
तस्मादथ मुनिरित्ययमनुवादो भवति न खलु विधिरेषः ।
मुनिपण्डितशब्दौ हि ज्ञानार्थावेव केवलं तेन ॥ ३२० ॥
पाण्डित्यं निर्विद्येत्यत एव च मौनमपि किल प्राप्तम् ।
किंचामौनं मौनं निर्विद्याथेत्यनन्तरं हीदम् ॥ ३२१ ॥
ब्राह्मण इति निर्दिष्टं न ब्राह्मण्यं विधीयते तत्र ।
येन प्रागेवैतत्प्राप्तं तेन प्रशंसनार्थं स्यात् ॥ ३२२ ॥
अथ मुनिरित्यप्येवं प्रशंसनार्थं समाननिर्देशात् ।
एवं प्राप्ते सहकार्यन्तरविधिरिति तदुत्तरं ब्रूते ॥ ३२३ ॥
विधिरेवाऽऽश्रयितव्यो विद्यासहकारिणोऽस्य मौनस्य ।
तदिदमपूर्वत्वादिह बाल्यं पाण्डित्यमिव हि विध्यर्हम् ॥ ३२४ ॥
पाण्डित्यमौनशब्दौ तुल्यार्थाविति न शङ्कनीयमिह ।
ज्ञानातिशयार्थोऽयं मननान्मुनिरिति यतोऽत्र मुनिशब्दः ॥३२५॥

व्युत्पत्तिबलाच्च मुनीनामप्यहमिति किल प्रयोगाच्च ।
ननु परमाश्रमपर इह मुनिशब्दः श्रूयते हि गार्हस्थ्यम् ॥ ३२६ ॥
आचार्यकुलं मौनं वानप्रस्थमिति वाक्य इति चेन्न ।
वाल्मीकिर्मुनिपुंगव इत्यादौ तत्परत्वबाधेन ॥ ३२७ ॥
इतराश्रमसांनिध्यात्परिशेषादुत्तमाश्रमस्तत्र ।
परिगृह्यते स चायं प्रज्ञाप्राधान्यतो न सर्वत्र ॥ ३२८ ॥
तस्माच्च बाल्यपाण्डित्यतस्तृतीयं हि मौनमिदमत्र ।
ज्ञानातिशयात्मकमिह विधीयते यत्तु बाल्य एव विधेः ॥ ३२९ ॥
पर्यवसानमिति न सत्तदपूर्वत्वाद्विधीयते मौनम् ।
स्यान्मुनिरिति मौनस्य प्रकृते निर्वेदनीयताकथनात् ॥ ३३० ॥
बाल्यादेरिव तस्य च विधेयताश्रयणमुचितमेव स्यात् ।
तद्वत इति संन्यासिन एव हि विद्यावतो भवेद्ग्रहणम् ॥ ३३१ ॥
अथ भिक्षाचर्यमिति ह्यधिकारो येन तत्फलो दृष्टः ।
ननु सति विद्यावत्त्वे प्राप्नोत्यतिशयमसौ किमेतेन ॥ ३३२ ॥
स्यादत्र मौनविधिना पक्षेणेत्यत इदं समाम्नातम् ।
यस्मिन्पक्षे ज्ञानातिशयमसौ भेददर्शनातिशयात् ॥ ३३३ ॥
न प्राप्नोति हि तस्मिन्पक्षे विधिरेष सफलतामेति ।
विध्यादिवद्यथैव च दर्शादिविधौ हि तस्य सहकारि ॥ ३३४ ॥
अग्न्यन्वाधानादिकमखिलमपि विधीयतेऽङ्गजातं हि ।
तेनाविधिप्रधाने वाक्येऽप्यस्मिन्विधीयते मौनम् ॥ ३३५ ॥
इति बाल्यादिविशिष्टे सति कैवल्याश्रमे कुतो वेह ।
छान्दोग्ये गृहिणैव ह्युपसंहारः कृतस्ततो भाति ॥ ३३६ ॥
तद्विषय एव तस्याऽऽदर इति तत एतदुत्तरं पठति ।

कृत्स्नभावात्तु गृहिणोपसंहारः ॥ ४८ ॥

अत्र तु विशेषणार्थो भवति तुशब्दो हि सूत्रमध्यस्थः ॥ ३३७ ॥
एतस्य कृत्स्नभावो विशिष्यते येन भूरिकर्माणि ।
यज्ञादीनि हि तं प्रति कर्तव्यतयोपदर्शितानि तथा ॥ ३३८ ॥
इतराश्रमकर्माण्यपि तस्य यथासंभवं भवन्त्येव ।
किंचाहिंसेन्द्रियसंयमनादीन्यपि च तस्य विद्यन्ते ॥ ३३९ ॥

तस्मादुपसंहारश्छान्दोग्ये नो विरुध्यते गृहिणः ।

मौनवदितरेषामप्युपदेशात् ॥ ४९ ॥

मौनं गार्हस्थ्यमिति श्रुतिनिर्दिष्टौ यथाऽऽश्रमावेतौ ॥ ३४० ॥
एवं वनस्थगुरुकुलवासौ श्रुत्यैव दर्शितौ भवतः ।
तस्मादिहाऽऽश्रमाणां सर्वेषामपि समाननिर्देशात् ॥ ३४१ ॥
प्रतिपत्तिरत्र तेषां समुच्चयेनाथवा विकल्पेन ।
इतरेषामिति सूत्रे बहुवचनं यद्द्वयोः श्रुतं तच्च ॥ ३४२ ॥
भवति किल वृत्तिभेदापेक्षमनुष्ठातृभेदसापेक्षम् ।

अनाविष्कुर्वन्नन्वयात् ॥ ५० ॥

तस्माद्ब्राह्मण इति बृहदारण्ये श्रूयते हि यद्वाक्यम् ॥ ३४३ ॥
तत्रानुष्ठेयतया बाल्यं यच्च प्रदर्शितं तत्किम् ।
बालस्य भाव इति वा किंवा बालस्य कर्म बाल्यं स्यात् ॥३४४॥
तद्धितलभ्यस्य वयोवस्थारूपस्य बालभावस्य ।
इच्छातोऽनुष्ठातुमशक्यत्वाद्बालकर्म बाल्यं स्यात् ॥ ३४५ ॥
तद्बालचरितमुपपदमूत्रपुरीषत्वमन्यदथवा किम् ।
यद्दम्भदर्पराहित्येनाऽऽन्तरभावशुद्धिरूपं स्यात् ॥ ३४६ ॥
इति संदेहे तत्र च बाल्यमिदं बालचरितमिति युक्तम् ।
यत्कामचारवादाशनोपपदमूत्रकृत्यमित्यादि ॥ ३४७ ॥
लोकप्रसिद्धमेतद्बाल्यं तद्ग्रहणमिह भवेद्युक्तम् ।
ननु कामचारताद्याश्रयणे पतितो भवेदसाविति चेत् ॥ ३४८ ॥
नासौ दोषो विद्याबलेन संन्यासिनः कदाचिदपि ।
वचनप्रामाण्यात्पशुहिंसादिष्विव हि दोषपरिहारात् ॥ ३४९ ॥
एवं प्राप्ते ब्रूते बाल्यं नैवेह बालचरितमिति ।
इह बाल्यशब्दतः खल्वविरुद्धार्थे प्रतीयमानेऽपि ॥ ३५० ॥
तस्मिंश्च लभ्यमाने गत्यन्तरसंभवेऽपि वचनस्य ।
आपातप्रतिपत्त्या विध्यन्तरभङ्गकल्पनाऽनुचिता ॥ ३५१ ॥
यच्चप्रधानसहकारि स्यादङ्गं विधीयते तद्धि ।
संन्यासिनां प्रधानं श्रवणावृत्त्यादि परमनुष्ठेयम् ॥ ३५२ ॥
अङ्गीक्रियमाणेऽस्मिन्सकलेऽपि च बालचेष्टिते तेषाम् ।
न श्रवणादेरभ्यासस्तस्माद्बाल्यमान्तरो भावः ॥ ३५३ ॥

आश्रीयते प्ररूढेन्द्रियतादिकमिह तदेव बाल्यमिति ।
इह चानाविष्कुर्वन्निति सूत्रे सूत्रकृत्प्रदर्शयति ॥ ३५४ ॥
अध्ययनधार्मिकत्वादिभिरपरिख्यापयन्स्वमात्मानम् ।
दम्भादिरहित एव हि यतिर्भवेदिति यथा ह्यसौ बालः ॥३५५॥
नाऽऽत्मानमप्ररूढेन्द्रिय आविष्कर्तुमीहतेऽन्यत्र ।
एवमसौ विद्वानपि भवेद्यदेवं तदाऽस्य वाक्यस्य ॥ ३५६ ॥
उपपद्यते प्रधानोपकारकाङ्गप्रदर्शनार्थत्वम् ।
उक्तं हि स्मृतिकारैँ च हि सन्तं न चाप्यसन्तं यम् ॥ ३५७ ॥
नाश्रुतमपि न बहुश्रुतमपि न सुवृत्त न चापि दुर्वृत्तम् ।
वेद न कश्चन विद्वान्स एव इह गूढधर्ममाश्रित्य ॥ ३५८ ॥
तदिदमविज्ञातव्रतमन्धजडादिवदसौ चरेदिति हि ।

ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ ५१ ॥

विद्यासाधनमेतत्सर्वापेक्षेति सूत्रमारभ्य ॥ ३५९ ॥
उच्चावचमवधारितमत्र पुनस्तत्फलात्मिका विद्या ।
सिध्यन्ती किमिहैव हि जन्मनि सिध्यत्यमुत्र वा सिध्येत्॥३६०॥
इति चिन्त्यते हि तत्र त्विहैव सा सिध्यतीति युक्तं स्यात् ।
श्रवणादिपूर्विका या विद्या तामिह न कश्चिदपि पुरुषः ॥३६१॥
सा जायताममुत्रेत्यभिसंधाय प्रवर्तते किंतु ।
अस्मिन्नेव हि जन्मनि तामभिसंधाय तु प्रवर्तेत ॥ ३६२ ॥
श्रवणादिषु तत्साधनयज्ञादिष्वपि च सिद्धये तस्याः ।
तस्मादिहैकमेव हि विद्याजन्मेत्यतास्त्विवद ब्रूते ॥ ३६३ ॥
असति प्रतिबन्धे स्याद्विद्याजन्मैहिकं न चेतरथा ।
श्रवणादिसाधनस्य प्रतिबन्धो यदि भवेदनेन पुनः ॥ ३६४ ॥
प्रारब्धकर्मणा संजातविपाकेन तत्र न हि सा स्यात् ।
यदि कर्मणा न तेन प्रतिबन्धः स्याद्भवेदिहैवैषा ॥ ३६५ ॥
भवतीह देशकालनिमित्तोपनिपातवशत एतस्य ।
प्रारब्धस्योपस्थितविपाकता कर्मणो न चान्यस्मात् ॥ ३६६ ॥
एकस्य कर्मणः किल विपाचकानि हि भवन्ति यान्यत्र ।
तान्येवान्यस्यापि हि विपाचकानीति नायमेकान्तः ॥ ३६७ ॥

यस्माद्विरुद्धफलदान्यपि चानेकानि तानि कर्माणि ।
शास्त्रमपि कर्मणोऽस्य हि फलमिदमेवेति तु प्रदर्शयति ॥ ३६८ ॥
न हि देशं कालं वा निमित्तभेदमपि तस्य कीर्तयति ।
साधनवीर्यविशेषादेवाऽऽविर्भवति कस्यचिच्छक्तिः ॥ ३६९ ॥
तत्प्रतिबन्धात्कस्यचिदतीन्द्रिया सा हि कुण्ठिता भवति ।
ननु विद्यायामस्यामविशेषेणाभिसंधिरिह न भवेत् ॥ ३७० ॥
इह वाऽप्यमुत्र वा मे विद्या स्यादिति कथ तदिति चेन्न ।
अभिसंधिरयमकिंचित्करो हि तस्य च निरङ्कुशत्वेन ॥ ३७१ ॥
श्रवणादिसाधनैरिह विद्या येयं जनिष्यमाणा स्यात् ।
सा विद्या पुनरत्र प्रतिबन्धक्षयमपेक्ष्य जायेत ॥ ३७२ ॥
श्रवणायापीति श्रुतिरपि दुर्बोधत्वमात्मनो ब्रूते ।
मुनिरेष वामदेवः प्रतिबुबुधे ब्रह्मभावमिह गर्भे ॥ ३७३ ॥
इति कथयन्ति श्रुतयस्तस्माज्जन्मान्तरीयसाधनतः ।
जन्मान्तरेऽपि विद्योत्पत्तिरियं भवति सप्रमाणैव ॥ ३७४ ॥
न हि गर्भस्थस्यैहिकमपि विद्यासाधनं भवेत्किंचित् ।
भगवद्गीतासु स्मृतिषु यथोक्तं प्रपञ्चितं बहुधा ॥ ३७५ ॥
अप्राप्य योगसंसिद्धिमिति स खल्वर्जुनेन पृष्टः सन् ।
भगवान्स वासुदेवो न हि कल्याणकृदितीदमारभ्य ॥ ३७६ ॥
तस्यैव पुण्यलोकप्राप्तिमतः सत्कुलप्रसूतिं च ।
अभिधाय तत्र तमिति प्रक्रम्यानेकजन्मसंसिद्धः ॥ ३७७ ॥
याति ततोऽसौ परमां गतिमित्युक्तार्थमेव दर्शितवान् ।
तस्माद्विद्या येयं सा चेहामुत्र वाऽपि जायेत ॥ ३७८ ॥
सेयं हि जायमाना प्रतिबन्धक्षयमपेक्ष्य जायेत ।

**एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॥५२॥**

इह च यथा हि मुमुक्षोर्विद्यासाधनकृतावलम्बस्य ॥ ३७९ ॥
साधनवीर्यविशेषाद्विद्यारूपे फले हि पूर्वोक्ते ।
ऐहिकपारत्रिकफलभावकृतः किल भवेद्विशेषोऽयम् ॥ ३८० ॥
एवं मुक्तिफलेऽप्युत्कर्षनिकर्षप्रयुक्त इह कश्चित् ।
न विशेषप्रतिनियमो यस्मादेका हि मुक्त्यवस्थेयम् ॥ ३८१ ॥

अवधार्यते किलेयं वेदान्तेष्वेवमेव सर्वेषु ।
एकात्मिका यतः सा ब्रह्मैव हि भवति मुक्त्यवस्थेयम् ॥ ३८२ ॥
न ब्रह्मणो ह्यनेकाकारत्वं तस्य चैकलिङ्गत्वात् ।
अस्थूलमनण्वह्रस्वमिति तथैवैष नेति नेत्यात्मा ॥ ३८३ ॥
नान्यत्पश्यति नान्यच्छृणोति नान्यदिति चैवमपराऽपि ।
ब्रह्मैवेदमिति श्रुतिरिदं सर्वमिति चैवमन्याऽपि ॥ ३८४ ॥
एष महानज आत्माऽजरोऽमरोऽमृत इति श्रुतिश्चान्या ।
यत्र त्वस्येत्येताः प्रथयन्त्येतस्य निर्विशेषत्वम् ॥ ३८५ ॥
किंच यदेतद्विद्यासाधनमत्र स्ववीर्यवैशेष्यात् ।
आसञ्जयेद्विशेषं कमपि च विद्यात्मके फले स्वीये ॥ ३८६ ॥
न हि विद्याफलमुक्तौ मुक्तिफलं खल्वसाध्यमिह यस्मात् ।
यद्ब्रह्म नित्यसिद्धं तदेव विद्यैकसमधिगम्यमिति ॥ ३८७ ॥
असकृत्प्रपञ्चितं न हि परविद्यायां विशेष इह कश्चित् ।
स्यादुत्कर्षनिकर्षात्मको निकृष्टा हि न खलु सा विद्या ॥ ३८८ ॥
या परमुत्कृष्टा स्यात्सा विद्या भवति सा च मुक्तिफला ।
तस्यां खलु विद्यायां चराचरोत्पत्तिलक्षणोऽतिशयः ॥ ३८९ ॥
भवतु तथाऽपि न मुक्तावतिशय एवंविधो हि कश्चिदपि ।
विद्याभेदाभावान्न च विद्याफलमपीह भिन्नं स्यात् ॥ ३९० ॥
कर्मफले खलु भेदः स्यादेव हि कर्मणामनेकत्वात् ।
न तथा मुक्तिफलायां विद्यायामस्ति कश्चिदपि भेदः ॥३९१॥
विद्यासु सगुणविषयासु च सति गुणयोगभेदतो भेदे ।
तत्र यथास्व फलभेदोऽसौ स्यात्कर्मणामिवायं हि ॥ ३९२ ॥
उपदिशति श्रुतिरेवं यथा यथोपासते तथैवेति ।
इह निर्गुणविद्यायां गुणविरहान्नास्ति कश्चिदपि भेदः ॥३९३॥
न हि गतिरधिकाऽस्तीति स्मृतिरप्यर्थं यथोक्तमुपदिशति ।
तदवस्थावधृतेरितिपदस्य सूत्रेऽत्र योऽयमभ्यासः ।
अध्यायपरिसमाप्तिं विद्योतयति परं समञ्जसं सकलम् ॥३९४॥
शारीरकमीमांसा मुनिना व्यासेन विरचिता सेयम् ।
चतुरध्यायी तस्यां तृतीयसंज्ञश्च योऽयमध्यायः ॥ ३९५ ॥
तत्र चतुर्थे पादे सूत्रार्थो यश्च भाष्यकारोक्तः ।
आर्यावृत्तैरमलैः प्रकाशितो भवतु सोऽयमनवद्यः ॥ ३९६ ॥

भाष्यार्थरत्नमाला वैयासिकसूत्रजालसंग्रथिता ।
भगवति करुणासिन्धौ समर्पिता जयतु जगति निरवद्या ॥३९७॥

इति भाष्यार्थरत्नमालायां तृतीयाध्यायस्य चतुर्थः
पादः समाप्तः ॥ ४ ॥

---

इति तृतीयाध्यायः समाप्तः ॥ ३ ॥

---

अथ चतुर्थाध्यायः ॥

तत्र चतुर्थाध्यायस्य प्रथमः पादः ॥

पूर्वस्मिन्नध्याये साधनमखिलं निरूप्य तस्य फलम् ।
एतस्मिन्नध्याये निरूप्यते तेन हेतुफलभावः ॥ १ ॥
अध्याययोर्द्वयोरपि संगतिरत्र च फलप्रसङ्गेन ।
उत्क्रान्तिरर्चिरादिकमार्गश्च विचार्यते तथैवेह ॥ २ ॥
श्रुत्युपदिष्टं साधनमपि संन्यासादि चिन्तितं पूर्वम् ।
अर्थापत्त्यभिगम्यावृत्त्यादिकमत्र चिन्त्यतेऽध्याये ॥ ३ ॥

आवृत्तिरसकृदुपदेशात् ॥ १ ॥

प्रायेण साधनाश्रयविचार एष प्रवर्तितः पूर्वम् ।
अस्मिन्पुनरध्याये फलाश्रयः सोऽयमागमिष्यति हि ॥ ४ ॥
अन्यच्च चिन्तयिष्यति यच्चात्र पुनः प्रसङ्गतः प्राप्तम् ।
प्रथमं तु साधनाश्रयविचारशेषं तमेतमनुसरति ॥ ५ ॥
द्रष्टव्यः श्रोतव्यो मन्तव्य इतीह वेदवाक्यानि ।
एवं तमेव धीरो विज्ञायेत्यादिकानि वाक्यानि ॥ ६ ॥
भूयांसि श्रूयन्ते तत्रावतरत्ययं हि संदेहः ।
श्रुतिवचनैरेतैः किं सकृदात्मप्रत्ययोऽत्र कर्तव्यः ॥ ७ ॥
उपदिश्यतेऽथवाऽसावावृत्त्यैव हि किमत्र कर्तव्यः ।
तत्र च सकृदेवासौ कर्तव्य इतीदमेव युक्ततमम् ॥ ८ ॥
सकृदपि कृते हि शास्त्रं सफलार्थं स्याद्यथा प्रयाजादौ ।
श्रुतिवचनेष्वावृत्तिः क्वचिदपि न श्रूयते यतस्तस्मात् ॥ ९ ॥
तस्यां क्रियमाणायां कृतो भवेदिह पर ह्यशास्त्रार्थः ।
नन्वत्रासकृदुपदेशा एव श्रुतिषु हि प्रतीयन्ते ॥ १० ॥

श्रोतव्यो मन्तव्यस्तथा निदिध्यासितव्य इत्येवम् ।
सत्यं तथाऽपि यावच्छब्दमिहाऽऽवर्तयेत्सकृच्छ्रवणम् ॥ ११ ॥
मननं सकृदेव निदिध्यासनमेवं न चातिरिक्तं स्यात् ।
सकृदुपदेशे वेदोपासीतेत्यादिके हि नाऽऽवृत्तिः ॥ १२ ॥
एवं प्राप्ते ब्रूते ह्यावृत्तिरवश्यमत्र कार्येति ।
दर्शनसाधनविषयोऽसकृदुपदेशोऽत्र दृश्यते यस्मात् ॥ १४ ॥
श्रोतव्यो मन्तव्यस्तथा निदिध्यासितव्य इत्येवम् ।
सोऽन्वेष्टव्य इति श्रुतिरप्यावृत्तिं हि सूचयत्यत्र ॥ १४ ॥
नन्विह यावच्छब्दं प्रत्ययमावर्तयेदितीहोक्तम् ।
मैवं दर्शनपर्यवसानानि श्रवणमननपूर्वाणि ॥ १५ ॥
स्युः साधनानि दृष्टार्थानि भवन्ति हि परं तदावृत्त्या ।
तण्डुलनिष्पत्त्यवसानान्यवघातादिसाधनानि यथा ॥ १६ ॥
अपि चोपासनमपि यच्च निदिध्यासनं तदेतदपि ।
नियतावृत्तिगुणैव क्रिया भवेन्मानसी हि याऽन्तःस्था ॥ १७ ॥
लोके हि गुरुमुपास्ते राजानमुपास्त एवमादौ हि ।
स ह्येवमुच्यते यो गुर्वादींस्तत्परोऽनुवर्तेत ॥ १८ ॥
प्रोषितनाथा ध्यायति पतिमित्यादौ निरन्तरस्मरणा ।
या सोत्कण्ठा हि पतिं प्रत्येव साऽभिधीयते लोके ॥ १९ ॥
दृष्टश्च विद्युपास्त्योरव्यतिरेकेण च प्रयोगो हि ।
वेदान्तेष्विह विदिनोपक्रम्योपास्तिनोपसंहरति ॥ २० ॥
यस्तद्वेदेत्यादौ विदिना चोपक्रमोऽयमुपलब्धः ।
या देवतामुपास्स इति ह्युपसंहृतिरुपास्तिना दृष्टा ॥ २१ ॥
एतच्च हंसवाक्यं यस्तद्वेदेति दर्शितं तत्र ।
यद्वेद स खलु रैक्वो रैक्वादन्योऽपि यश्च तद्वेद ॥ २२ ॥
तत्प्राणतत्त्वविद्याफले हि सर्वमपि चान्तरेव स्यात् ।
एवं मया स रैक्वो ह्युत्कृष्टत्वेन कथित इति वचनम् ॥ २३ ॥
हंसं प्रति हंसान्तरवचनं जानश्रुतिस्तदाकर्ण्य ।
गत्वा रैक्वं राजा प्रोवाचानु म इतीदमिह वाक्यम् ॥ २४ ॥
एतां हि रैक्वविदितां हे भगवो मेऽनुशाधि हीत्येवम् ।
एवमुपक्रम्योपास्तिना हि विदिनोपसंहृतं तत्र ॥ २५ ॥

श्रुत्यन्तरे मनो ब्रह्मेत्यादौ पुनरिहोपसंहारः।
एवं वेदेति तथोपासीतेति ह्युपक्रमो दृष्टः॥ २६॥
सगुणस्य निर्गुणस्य च साक्षात्कारे भवेदिहाऽऽवृत्तिः।
सिद्धा श्रौती दृष्टार्था च तथा श्रवणमननयोरेवम्॥ २७॥
सकृदुपदेशेष्वपि चेदावृत्तिः सेयमसकृदुपदेशे।
इह च न सिध्येत्कस्मात्तस्मादावृत्तिरत्र युक्तैव॥ २८॥

लिङ्गाच्च॥ २॥

लिङ्गमपि दर्शयति तामावृत्तिं तदिदमत्र विज्ञानम्।
उद्गीथविषयकं प्रस्तुत्याऽऽदित्योऽयमेष उद्गीथः॥ २९॥
इत्येतदेकपुत्रत्वात्मकदोषेण खल्विहापोद्य।
रश्मींस्त्वं पर्यावर्तयेति कौषीतकिः स्वपुत्रमिदम्॥ ३०॥
विदधद्बहुपुत्रत्वाय च रश्मिबहुत्वविषयविज्ञानम्।
सिद्धवदेवाऽऽवृत्तिं सर्वेषु प्रत्ययेषु दर्शयति॥ ३१॥
तत्सामान्यात्प्रत्ययसामान्ये सिध्यतीयमावृत्तिः।
नन्वावृत्तिः साध्यफलेष्वेव प्रत्ययेषु युक्ता स्यात्॥ ३२॥
तत्साध्यं हि फलं किल तत्रैव स्यान्न चेह संभवति।
यन्नित्यमुक्तरूपं [ ब्रह्म परं ज्ञायते विशुद्धं हि॥ ३३॥
तत्सकृदुपदेशेन च यतो हि नित्यापरोक्षता तस्य।
ननु च सकृ]च्छ्रवणेन ब्रह्मात्मत्वप्रतीतिरिह न स्यात्॥ ३४॥
क्रियमाणायामप्यावृत्तौ दुर्वार एव दोषोऽयम्।
ननु केवलं हि वाक्यं साक्षात्कारे न साधकं किंतु॥ ३५॥
तदिदं हि युक्त्यपेक्ष ब्रह्मात्मत्वापरोक्षजनकं स्यात्।
इति चेत्तर्ह्यावृत्त्यानर्थक्यं किंच साऽपि युक्तिरिह॥ ३६॥
सकृदेव हि प्रयुक्ता स्वमर्थमनुभावयितुमलं भवति।
अथ युक्त्या वाक्येन ज्ञान सामान्यविषयमेव स्यात्॥ ३७॥
न विशेषविषयकं तद्यथाऽस्ति हृदि मे महच्च शूलमिति।
वाक्याच्च गात्रकम्पनलिङ्गादपि शूलमात्रसद्भावम्॥ ३८॥
प्रतिपद्यते किलाऽन्यो न विशेषं कमपि चानुभवति यथा।
शूले स तद्विशेषानुभवोऽविद्यानिवर्तको भवति॥ ३९॥

आवृत्तिरेतदर्था स्यादिति चेदेवमपि च दोषः स्यात् ।
तावन्मात्रे क्रियमाणे विज्ञानोदयो यतो न भवेत् ॥ ४० ॥
योऽसौ सकृत्प्रयुक्ताभ्यामेताभ्यां हि शास्त्रयुक्तिभ्याम् ।
नैवावगम्यतेऽसौ शतकृत्वोऽपि प्रयुज्यमानाभ्याम् ॥ ४१ ॥
न हि शक्यतेऽवगन्तुं तस्माद्यत्र शास्त्रयुक्तिभ्याम् ।
प्रतिपाद्यते विशेषो यदि वा सामान्यमुभयथाऽपि पुनः ॥ ४२ ॥
एते सकृत्प्रयुक्ते स्वफलं कुरुतो न किंचिदावृत्त्या ।
एते हि शास्त्रयुक्ती सकृत्प्रयुक्ते हि कस्यचित्पुंसः ॥ ४३ ॥
नोत्पादयतोऽनुभवं कदाऽपि चेति तु न शक्यते वक्तुम् ।
येन विचित्रप्रज्ञाः प्रतिपत्तारो भवन्ति लोकेऽस्मिन् ॥ ४४ ॥
अपि चानेकांशयुते सामान्यविशेषवति पदार्थे हि ।
अवधानेनैकेनैकमंशमन्येन चान्यमंशमपि ॥ ४५ ॥
अवधारयति हि लोके यथैव दीर्घप्रपाठकग्रहणे ।
तत्राभ्यासः सफलः स्यान्नैवं निर्विशेषचिन्मात्रे ॥ ४६ ॥
ब्रह्मण्यनुभूत्युदये तस्मादावृत्तिरनुचितैवात्र ।
इति चेदावृत्त्यानर्थक्यं तं प्रति भवेद्य ईदृक्स्यात् ॥ ४७ ॥
सकृदुक्तमेव तत्त्वमसीति ब्रह्मानुभवितुमिह शक्तः ।
यस्तु न शक्नोति पुनस्तं प्रति युक्तैव हीयमावृत्तिः ॥ ४८ ॥
तत्र च्छान्दोग्ये तत्त्वमसीति श्वेतकेतुमुपदिश्य ।
स हि भूय एव मा भगवानिति परिचोद्यमान एव पुनः ॥ ४९ ॥
उद्दालको हि तत्तच्छङ्कायाः कारणं निराकृत्य ।
नवकृत्वस्तत्त्वमसीत्येवं हि श्वेतकेतुमाचख्यौ ॥ ५० ॥
ननु सकृदुक्तं तत्त्वमसीति न शक्नोति तदनुभावयितुम् ।
यदि तर्हि नैव शक्ष्यति तदेव चाऽऽवर्त्यमानमपि वाक्यम् ॥ ५१ ॥
इति चेन्नासौ दोषो दृष्टे न ह्यनुपपन्नमिह किंचित् ।
दृश्यत एव सकृच्छ्रुतवाक्यान्मन्दप्रतीतमर्थं हि ॥ ५२ ॥
आवर्तयंस्तमेव हि सम्यक्प्रतिपद्यमान इह लोके ।
अपि च यदेतत्तत्त्वमसीति तदेतत्त्वमर्थरूपस्य ॥ ५३ ॥
इह तत्पदार्थभावं ब्रूते किल तत्पदेन च प्रकृतम् ।
सद्ब्रह्मेक्षितृ जगतः कारणमभिधीयते हि तच्च पुनः ॥ ५४ ॥

सत्यं ज्ञानमनन्तं ब्रह्मेत्यादिश्रुतिप्रसिद्धं हि ।
तत्राजादिपदैर्जन्मादिविकारा निवर्तिता एवम् ॥ ५५ ॥
अस्थूलादिपदैर्हि स्थौल्याद्या अपि निवर्तिता एवम् ।
विज्ञानादिपदैरपि चैतन्याद्यात्मकत्वमस्योक्तम् ॥ ५६ ॥
व्यावृत्तसर्वसंसारधर्मकोऽनुभवरूप इह योऽयम् ।
सोऽयं हि तत्पदार्थो वेदान्ताभिज्ञसुप्रसिद्धो हि ॥ ५७ ॥
एवं त्वमर्थ एष श्रोतुर्देहप्रदेशमारभ्य ।
प्रत्युक्तया स चेतनरूपतया चावधारितो भवति ॥ ५८ ॥
प्रतिबद्धावेतौ द्वावेषामज्ञानसंशयाद्यैः सः ।
तेषां तत्त्वमसीति प्रमां जनयितुं सकृन्न शक्नोति ॥ ५९ ॥
येन पदार्थज्ञानायत्तं वाक्यार्थगोचरं ज्ञानम् ।
तेन पदार्थविवेकायैव च तान्प्रत्यवश्यमेष्टव्यः ॥ ६० ॥
सोऽयं हि शास्त्रयुक्त्यभ्यासो यद्यपि निरंश एवाऽऽत्मा ।
सत्यं तथाऽपि तस्मिन्देहेन्द्रियविषयवेदनारूपम् ॥ ६१ ॥
अध्यारोपितमेतद्बह्वंशत्वं हि तत्र चैकेन ।
अवधानेनैकांशं तथाऽपरेणापरं त्वपोहति हि ॥ ६२ ॥
इति तु क्रममित्येषा प्रतिपत्तिः परमसाधनं ह्यस्याः ।
स्यादात्मप्रतिपत्तेरित्यावृत्तिर्हि तत्र सफलैव ॥ ६३ ॥
येषां निपुणमतीनां न प्रतिबन्धोऽस्ति संशयाज्ञानैः ।
ते शक्नुवन्ति सकृदुक्तमपि च वाक्यार्थमेतमनुभवितुम् ॥ ६४ ॥
स्यादेवाऽऽनर्थक्यं तान्प्रति तत्र च न चेयमुपदिष्टा ।
सकृदुत्पन्नात्मप्रतिपत्तिरविद्यां निवर्तयेत्तेषाम् ॥ ६५ ॥
ननु यदि कस्यचिदेवं प्रतिपत्तिस्तर्हि युक्तमिदमखिलम् ।
दृष्ट्वा दुःखित्वादिप्रतिपत्तिर्बलवती हि सर्वस्य ॥ ६६ ॥
प्रतिपद्येत कथं वा दुःखित्वादेरभावमिति चेन्न ।
दुःखित्वाद्यभिमानो योऽसौ देहाभिमानवन्मिथ्या ॥ ६७ ॥
प्रत्यक्षमेव तदिदं देहे केनापि पीड्यमाने हि ।
अहमेव पीडितोऽस्मीत्येवं मिथ्याभिमान इह दृष्टः ॥ ६८ ॥
बाह्येष्वपि पुत्रादिष्वेवं संतप्यमानगात्रेषु ।
संतप्तोऽस्म्यहमेवेत्यध्यारोपोऽयमिह यथा दृष्टः ॥ ६९ ॥

स्वात्मनि दुःखित्वाद्यभिमानो मिथ्याप्रतीतिरेव तथा ।
बहिरुपलभ्यत एतच्चैतन्यादृदुःखितादि नैवान्तः ॥ ७० ॥
दुःखित्वादेर्यस्मादनुवृत्तिर्दृश्यते न सौषुप्ते ।
चैतन्यस्य सुषुप्तावप्यनुवृत्तिं समामनन्तीह ॥ ७१ ॥
बृहदारण्यकवाक्ये पश्यन्वैतन्न पश्यतीत्यादौ ।
तस्माच्च सकलदुःखविवर्जितचैतन्यरूप एवाहम् ॥ ७२ ॥
इत्ययमात्मानुभवो भवेन्न चाऽऽत्मानमेवमनुभवतः ।
अवशिष्यते हि किमपि च कृत्यमितीयं श्रुतिः प्रदर्शयति ॥ ७३ ॥
किं प्रजयेत्याद्या सा विदुषः कर्तव्यविरहमुपदिशति ।
यस्मात्त्वरतिरिति स्मृतिरपि कृत्याभावमस्य दर्शयति ॥ ७४ ॥
यस्य त्वात्मानुभवो नैव जायेत झटिति तं प्रति हि ।
उक्तानुभवायाऽऽवृत्त्यभ्युपगम एष भवति सफलोऽत्र ॥ ७५ ॥
वाक्यार्थात्प्रच्याव्य च नैवाऽऽवृत्तौ प्रवर्तयेदेनम् ।
नैवोद्वहन्ति कन्या परमाता(र्था)यैव केवलं वृद्धाः ॥ ७६ ॥
यः पुनरत्र नियुक्तः कर्तारं मन्यते स्वमात्मानम् ।
तस्य ब्रह्मप्रत्ययविपरीतप्रत्ययो भवेन्नियतः ॥ ७७ ॥
यो वाक्यार्थमतत्प्रतिभावान्मतिमान्द्यतो जिहासेत्तु ।
तस्यैतस्मिन्नर्थे यथैव मनसो भवेत्स्थिरीकारः ॥ ७८ ॥
आवृत्त्यादौ वाचोयुक्त्या तमिमं प्रवर्तयेत्तस्मात् ।
आवृत्तिर्युक्तैव हि परविषये प्रत्ययेऽपि तदुपाये ॥ ७९ ॥

आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ ३ ॥

यः शास्त्रोक्तविशेषण इह परमात्मा निरूपितः स हि किम् ।
अहमित्येव ग्राह्यः किंवा ग्राह्यो मदन्य एवेति ॥ ८० ॥
संप्रति विचार्यते नन्वत्र कथं संशयोऽयमवतरति ।
अयमात्मा ब्रह्मेति श्रुतिवाक्यैरैक्यमेतयोरिति हि ॥ ८१ ॥
निर्णीतमेव पूर्वं शब्दादेवेति सूत्र इति चेन्न ।
मुख्योऽयमात्मशब्दो भवति किल प्रत्यगात्मपरतायाम् ॥ ८२ ॥
जीवेशयोरभेदे तत्परता स्यान्न चैतयोर्भेदे ।
उपलभ्यते हि भेदः श्रुत्या प्रत्यक्षतस्तयोरत्र ॥ ८३ ॥
तस्मादयमात्मेति श्रुतेर्हि गौणार्थता परं युक्ता ।
अत इह शङ्का युक्ता तत्र च युक्तः स एष पक्षः स्यात् ॥ ८४ ॥

मत्स्वामीति ग्राह्यः परमात्मा नाहमिति यतश्चासौ ।
अपहतपाप्मा भवति हि विपरीतगुणो यतश्च शारीरः ॥ ८५ ॥
यदि चेशः संसारी निरीशता तत्र भवति दुर्वारा ।
शास्त्रानर्थक्यमपि स्यात्संसार्येव यदि च परमात्मा ॥ ८६ ॥
तर्ह्यधिकारिविलोपादनर्थकं शास्त्रमुभयथैव स्यात् ।
तस्मादिह भेदस्य प्रत्यक्षादिप्रमाणसिद्धत्वात् ॥ ८७ ॥
प्रतिमादिष्विव विष्णवादीनां तादात्म्यभावनेय स्यात् ।
संसारिणः परात्मा कदाचिदपि नेह भवति मुख्यात्मा ॥ ८८ ॥
एवं प्राप्ते ब्रूते ह्यात्मेति ग्राह्य इह परात्मेति ।
यस्मादिह जाबालाः परमात्मप्रकरणे तमात्मानम् ॥ ८९ ॥
त्वं वा अहमस्मीति ह्युपगच्छन्त्येनमात्मभावेन ।
अन्ये तथैव चाहं ब्रह्मास्मीत्यादिना पठन्त्यत्र ॥ ९० ॥
इत्यात्मत्वोपगमात्पश्यन्ति ग्राहयन्ति चाप्येनम् ।
आत्मत्वेनैव परात्मान वेदान्तवाक्यजालानि ॥ ९१ ॥
एष त आत्मा सर्वान्तर इत्यादीनि चैवमन्यानि ।
एष त आत्माऽन्तर्याम्यमृत इति तथेदमपि स आत्मेति ॥ ९२ ॥
तत्त्वमसीत्यादीनि च वाक्यानि ग्राहयन्ति चाऽऽत्मतया ।
प्रतिमान्यायेनेदं प्रतीकदर्शनमितीह यच्चोक्तम् ॥ ९३ ॥
तच्च न वाक्यस्यास्य च वैरूप्याद्गौणताप्रसङ्गाच्च ।
यत्र प्रतीकदृष्टिः सकृदेव हि तत्र वचनमेतत्स्यात् ॥ ९४ ॥
तच्च मनो ब्रह्माऽऽदित्यो ब्रह्मेत्यादि दृश्यते वाक्यम् ।
त्वं वा अहमस्मीति त्वमस्यहमितीह दृश्यते चैतत् ॥ ९५ ॥
तस्मादिह प्रतीकश्रुतिवैरूप्यादभेद एव स्यात् ।
किंचेह भेददृष्ट्यपवादपराः श्रुतय एव दृश्यन्ते ॥ ९६ ॥
अथ योऽन्या[मुपास्ते] ह्यन्योऽसावन्य इति तथैवेयम् ।
मृत्योः स मृत्युमाप्नोतीत्याद्या भेदमपवदन्त्येताः ॥ ९७ ॥
नान्योन्यात्मत्वं स्याद्विरुद्धगुणयोरितीह यच्चोक्तम् ।
नासौ दोषो मिथ्याज्ञाननिमित्ता विरुद्धगुणतेयम् ॥ ९८ ॥
यच्चोक्तमीश्वराभावः स्यादिति दूषणं न चैतत्स्यात् ।
शास्त्रप्रामाण्यादप्यनभ्युपगमाच्च नेह तद्भवति ॥ ९९ ॥

प्रतिपाद्यते न संसार्यात्मत्वं किल परात्मनः किंतु ।
संसारिणो हि संसारित्वापोहेन चेश्वरात्मत्वम् ॥ १०० ॥
एतावदेव नान्यत्स्यादत्र प्रतिपिपादयिषितं हि ।
एवं सत्यद्वैतेश्वरस्य चापहतपाप्मतादिगुणः ॥ १०१ ॥
सिध्येच्छारीरस्य तु विपरीतगुणत्वमत्र मिथ्येति ।
उभयं व्यवस्थितं स्याद्यदपि ह्यधिकार्यभाव इत्युक्तम् ॥ १०२ ॥
प्रत्यक्षादिविरोधश्चेति च तदपीह परिहृतं भवति ।
प्रागात्मतत्त्वबोधात्संसारित्वं भवेदिहैतस्य ॥ १०३ ॥
प्रत्यक्षादिव्यवहारोऽपि च संसारविषय एव स्यात् ।
दर्शयति प्रत्यक्षाद्यभावमस्य प्रबोधसमये हि ॥ १०४ ॥
यत्र त्वस्येत्याद्या श्रुतिरेषा ननु यदा प्रबोधे हि ।
प्रत्यक्षाभावश्चेच्छ्रुतेरभावोऽपि न कुत इति चेन्न ॥ १०५ ॥
इष्टत्वादत्र पिताऽपितेत्युपक्रम्य दर्शितश्रुत्या ।
वेदा अवेदा इत्यादिना श्रुतेरप्यभाव इह यस्मात् ॥ १०६ ॥
कस्यायमप्रबोधो य एष संसारमूलमिति चेन्न ।
यस्त्वं पृच्छसि तस्यैवेति वदामः पुनर्यदा त्वेवम् ॥ १०७ ॥
अहमीश्वर एवोक्तः श्रुत्या स्यात्कथमिहाप्रबोध इति ।
यद्येवं प्रतिबुद्धस्त्वमपि न कस्यचिदिहाप्रबोधः स्यात् ॥ १०८ ॥
यदपि ह्यविद्यया खल्वात्मन एतस्य सद्वितीयत्वात् ।
अद्वैतानुपपत्तिर्दोष इतीह प्रजल्पितं कैश्चित् ॥ १०९ ॥
तदपि च सर्वस्यानिर्वचनीयत्वेन परिहृतं भवति ।
तस्मात्परमात्मन्यात्मेत्येव मनो दधीत नेतरथा ॥ ११० ॥
प्रत्यक्षाद्यैर्यद्यपि विरोधावधृतिर्यतः समाधौ हि ।
स्यात्केवलाऽन्तरङ्गा तस्मात्तत्संगतिर्भवेदत्र ॥ १११ ॥

## न प्रतीके न हि सः ॥ ४ ॥

इह च मनो ब्रह्मेत्याकाशो ब्रह्मेति चैवमादीनि ।
आदित्यो ब्रह्मेति च नाम ब्रह्मेति चैवमादीनि ॥ ११२ ॥
अध्यात्मं त्वधिदैवं प्रतीकविषयाण्युपासनानीह ।
श्रूयन्ते तत्रायं संदेहः स्यादुपासनेष्वेषु ॥ ११३ ॥

कर्तव्यः किमिहाऽऽत्मग्रहो न वेतीह भवति युक्तोऽयम्।
तेष्वात्मग्रह एव ब्रह्म परं श्रुतिषु चाऽऽत्मभावेन॥ ११४॥
येन प्रसिद्धमेव हि किंच मनःप्रभृतयः प्रतीकाश्च।
ब्रह्मविकारास्तेन ब्रह्मत्वे चाऽऽत्मताऽपि तेषां स्यात्॥ ११५॥
एवं प्राप्ते ब्रूते प्रतीकवर्गे न चाऽऽत्ममतिरिति हि।
व्यत्यस्याऽऽत्मत्वेनाऽऽकलयेत्स उपासको न चेमानि॥ ११६॥
ब्रह्मविकारत्वेन ब्रह्मत्वादात्मतेति यच्चोक्तम्।
तदिदमयुक्तं यस्मात्प्रतीकविलयप्रसङ्ग इह भवति॥ ११७॥
यद्ब्रह्मणा स्वरूपैक्यमिह विकारस्य न खलु तद्युक्तम्।
यदि तद्बाधेनैक्यं प्रतीकबाधादुपास्तिविधिबाधः॥ ११८॥
स्यादेवं चेत्तस्य च कुतः प्रतीकत्वमात्ममतिरपि वा।
कर्तव्यादेरनिराकरणेनोपासनाविधिर्भवति॥ ११९॥
तद्बाधेन ब्रह्मण आत्मत्व दर्शितं हि पूर्वत्र।
अत्र किल बाधमूलब्रह्मैक्यज्ञानमेतदालम्ब्य॥ १२०॥
एतेषु च प्रतीकेष्वहंग्रहोपास्तिकल्पनाऽनुचिता।
यस्मादुपासकोऽयं समः प्रतीकैर्न तत्र चाऽऽत्ममतिः॥ १२१॥
न हि रुचकस्वस्तिकयोरितरेतररूपता कदाऽपि स्यात्।
तस्मादिह प्रतीकेष्वात्ममतिं न स कदाचिदपि कुर्यात्॥ १२२॥

## ब्रह्मदृष्टिरुत्कर्षात्॥ ५॥

तेष्वेवोदाहरणेष्वयमपरः संशयो भवत्येवम्।
ब्रह्मण्यध्यसितव्याः किमिहाऽऽदित्यादिदृष्टयः किंवा॥ १२३॥
आदित्यादिष्वेवाध्यसितव्या ब्रह्मदृष्टिरियमिति हि।
आदित्यो ब्रह्म मनो ब्रह्मेत्यादौ हि दृश्यते चैतत्॥ १२४॥
सामानाधिकरण्यं ह्यादित्यब्रह्मशब्दयोस्तत्र।
तदिदं सामानाधिकरण्यं नैवाऽऽञ्जसं भवेदनयोः॥ १२५॥
ब्रह्मादित्यादिपदानामर्थान्तरपरत्वमिह यस्मात्।
गौरश्व इति न सामानाधिकरण्यं कदाचिदपि भवति॥ १२६॥
ब्रह्मादित्यादिषु ननु दृष्टो हि प्रकृतिविकृतिभावोऽयम्।
तेन च सामानाधिकरण्यं स्यान्मृच्छरावदत्तेषाम्॥ १२७॥
इति चेद्विकारविलये प्रकृतिसमानाधिकरणता युक्ता।
स्यादिह ततः प्रतीकाभावः परमात्मवाक्यमेतत्स्यात्॥ १२८॥

एवं चेदत्र पुनर्बाध्येतोपासनाधिकारोऽयम् ।
व्यर्थमिह परिमितविकारोपादानं यदेदृशं यस्मात् ॥ १२९ ॥
वटुरयमिह वैश्वानर इत्यादिषु किल यथैव चान्यत्र ।
संभावितेऽन्यदृष्ट्यध्यासे काध्यस्यते हि किंदृष्टिः ॥ १३० ॥
इति संदेहे तत्रानियमो न्याय्यः प्रतीयते यस्मात् ।
शास्त्रं हि किंचिदपि वा नियामकं नोपलभ्यते चात्र ॥ १३१ ॥
अथ वा ब्रह्मण्यादित्यादीनां दृष्टयो भवेयुरिह ।
ब्रह्मोपासितमेवं सत्यादित्यादिदृष्टिभिर्भवति ॥ १३२ ॥
फलवद्ब्रह्मोपासनमिति किल दृष्टा हि शास्त्रमर्यादा ।
यस्मादादित्यादिषु न युज्यते ब्रह्मदृष्टिरित्येवम् ॥ १३३ ॥
प्राप्ते ह्यादित्यादिषु युक्तेह ब्रह्मदृष्टिरिति वक्ति ।
उत्कर्षेणाऽऽदित्यादयो हि दृष्टा भवन्ति यद्येवम् ॥ १३४ ॥
उत्कृष्टदृष्टिरध्यसितव्या हि निकृष्टवस्तुनीत्येवम् ।
लोकन्यायो दृष्टः क्षत्तरि दृष्टा हि राजदृष्टिरियम् ॥ १३५ ॥
अनुगन्तव्यः सोऽयं विपर्यये प्रत्यवाय एव स्यात् ।
नैव हि निकृष्टदृष्ट्यध्यासे न निकृष्टतां गतस्यास्य ॥ १३६ ॥
श्रेयःसाधनता स्यादुत्कृष्टस्याप्युपास्यमानस्य ।
शास्त्रप्रामाण्यान्ननु न ह्यत्र प्रत्यवायशङ्का स्यात् ॥ १३७ ॥
न्यायेन लौकिकेन च दृष्टिस्त्वेषा नियन्तुमिह युक्ता ।
यस्मादेषा दृष्टिः शास्त्रीयाऽतो न दोष इति चेन्न ॥ १३८ ॥
निर्णीते शास्त्रार्थे यदुक्तमेतत्तदेवमेव स्यात् ।
संदिग्धे किल तस्मिंस्तं निर्णेतुं हि लौकिको न्यायः ॥ १३९ ॥
आश्रयणीयो भवति हि न विरोधः स्यात्कुतश्चिदप्यत्र ।
उत्कृष्टविषयदृष्ट्यध्यासे तेनावधार्यमाणे हि ॥ १४० ॥
न निकृष्टदृष्टिमध्यस्यात्र पुनः प्रत्यवायमुपगच्छेत् ।
इति युज्यते हि किंचाऽऽदित्यमनोविद्युदादिशब्दानाम् ॥ १४१ ॥
प्राथम्याच्च स्यादिह मुख्यार्थत्वं यतो भवेदेवम् ।
तैः स्वार्थवृत्तिकैरवरुद्धायां प्रथमतो धियामस्याम् ॥ १४२ ॥
पश्चादवतारो हि ब्रह्मपदस्य च मुख्यया वृत्त्या ।
सामानाधिकरण्यं स्यादिति तद्दृष्टिरेव विहिताऽत्र ॥ १४३ ॥

किंच ब्रह्मपदस्येतिपरत्वेनैष नैव युक्तोऽर्थः।
ब्रह्मेत्युपास्त इति च ब्रह्मेत्यादेश एवमादौ हि ॥ १४४ ॥
उच्चारयन्ति सर्वत्रेतिपरं ब्रह्मशब्दमिह शुद्धान्।
आदित्यादीञ्शब्दांस्ततो यथा शुक्तिकं हि रजतमिति ॥ १४५ ॥
प्रत्येतीत्यादौ किल शुक्तिपरो भवति शुक्तिकाशब्दः।
रजतप्रतीतिलक्षक एवासौ तत्र रजतशब्दः स्यात् ॥ १४६ ॥
अत्रापि तान्प्रतीयाद्ब्रह्मेति तु गम्यते हि वाक्यार्थः।
किंचेह वाक्यशेषोऽप्यादित्यादीनुपास्यमानान्हि ॥ १४७ ॥
एवं विद्वानादित्यं ब्रह्मेत्यादिना प्रदर्शयति।
ब्रह्मोपासनमिह खल्वादरणीयं फलार्थमिति यदपि ॥ १४८ ॥
तदयुक्तमेव यस्मादादित्यादेरुपास्यतावगमः।
ब्रह्मैव दास्यते फलमत्रातिथ्याद्युपासनेषु यथा ॥ १४९ ॥
यस्मात्परमात्माऽसौ सर्वाध्यक्षो भवेत्स फलदाता।
फलमत उपपत्तेरित्यस्मिन्सूत्रे प्रपञ्चितं चैतत् ॥ १५० ॥
तस्योपास्यत्वं तद्दृष्ट्यध्यारोपणं प्रतीकेषु।
प्रतिमादिष्विव विष्ण्वादीनां तदिहोपपन्नमेवास्य ॥ १५१ ॥

आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ६ ॥

इह च य एवासौ तपतीति च लोकेषु पञ्चविधमिति च।
एवं सप्तविधं सामोपासीतेतिवाक्यदृष्टेषु ॥ १५२ ॥
इयमेवर्गग्निः सामेत्यादिश्रुतिनिर्दिशितेष्वपि च।
अङ्गाश्रितेषु तत्तदुपासननिवहेषु संशयोऽयं स्यात् ॥ १५३ ॥
आदित्यादावुद्गीथादीनां दृष्टयो भवेयुरिह।
किंवोद्गीथादिष्वादित्यादीनां हि दृष्टयः स्युरिति ॥ १५४ ॥
इह नियमकारणस्यानुपलम्भादनियमो भवेद्युक्तः।
न ह्यत्र ब्रह्मण इव कस्यचिदुत्कृष्टतेयमुपलब्धा ॥ १५५ ॥
अपहतपाप्मत्वादिकगुणयोगादखिलकारणत्वाच्च।
आदित्यादिभ्यो हि ब्रह्मोत्कृष्टं भवेन्न चेहापि ॥ १५६ ॥
आदित्योद्गीथादीनां तु विकारत्वधर्मसामान्यात्।
नैवेह कश्चिदस्त्युत्कर्षविशेषावधारणे हेतुः ॥ १५७ ॥
अथवा नियमेनैवोद्गीथादीनां हि दृष्टयः स्युरिह।
आदित्यादावुद्गीथाद्या हि यतश्च कर्मरूपाः स्युः ॥ १५८ ॥

फलदायिनी हि शक्तिः कर्मण एवेति शास्त्रमुपदिशति ।
उद्गीथाद्यात्मतयाऽप्यादित्याद्या उपास्यमाना हि ॥ १५९ ॥
उद्गीथाद्यात्मकतां नीताः फलहेतवो भविष्यन्ति ।
इयमेवर्गग्निः सामेत्यादौ दृश्यते तथैवैतत् ॥ १६० ॥
एतस्यामृच्यध्यूढं सामेत्यादि यच्च वाक्यमिह ।
ऋक्छब्देन हि तत्र च पृथिवीं निर्दिशति सामशब्देन ॥ १६१ ॥
अग्निं च स हि पृथिव्यग्न्योरेवर्क्सामदृष्टिपक्षे स्यात् ।
ऋक्साम्नोः पुनरनयोर्न खलु पृथिव्यग्निदृष्टिपक्षेऽपि ॥ १६२ ॥
क्षत्तरि हि राजदृष्टिनिमित्तादुपचर्यते कदाचिदसौ ।
तत्र किल राजशब्दो न तथैव क्षत्तृशब्द इह राज्ञि ॥ १६३ ॥
ऋक्सामयोर्यदि स्यादत्र पृथिव्यग्निदृष्टिरेव तदा ।
नैव पृथिव्यग्न्योरयमृक्सामपदप्रयोग इह युक्तः ॥ १६४ ॥
लोकेषु पञ्चविधमिति दृष्टा लोकेषु सप्तमी हि तया ।
हिंकारप्रतिहारप्रस्तावोद्गीथनिधनभेदेन ॥ १६५ ॥
पञ्चविधस्य च साम्नो लोकेषूपास्यताप्रतीतिः स्यात् ।
एतद्गायत्रं प्राणेषु प्रोतमिति चैवमेव स्यात् ॥ १६६ ॥
प्रथमं निर्दिष्टेष्वादित्यादिषु चरमभागनिर्दिष्टम् ।
ब्रह्माध्यसितव्यमिति प्रपञ्चितं तत्प्रधानवाक्ये हि ॥ १६७ ॥
एवमिहापि पृथिव्यादय एते प्रथमतो विनिर्दिष्टाः ।
हिंकाराद्याश्चरमं पृथिवी हिंकार एवमाद्यासु ॥ १६८ ॥
श्रुतिषु ततोऽनङ्गेष्वादित्यादिष्वङ्गमतिरिति प्राप्ते ।
ब्रूते ह्यङ्गेष्वेतेष्वत्राऽऽदित्यादिमतय एवेति ॥ १६९ ॥
एवं चेदुपपन्नं फलहेतुत्वं यदत्र विद्यायाः ।
उद्गीथादिषु संस्क्रियमाणेष्वेतेषु मतिभिरेताभिः ॥ १७० ॥
श्रुतिरिह कर्मसमृद्धिं दर्शयति यदेव विद्ययेत्याद्या ।
ननु संनिकृष्टकर्माङ्गद्वारापेक्षमेव यत्र फलम् ॥ १७१ ॥
भवति ह्युपासनानां तत्र फलप्राप्तये तदङ्गानाम् ।
स्यादेवोपास्यत्वं पुनरिह कर्माङ्गमेतदनपेक्ष्य ॥ १७२ ॥
यानि च लोकादिफलान्युपासनानि श्रुतानि वेदेषु ।
सोऽयमुपास्यविवेकस्तत्र कथं स्यादितीह नाऽऽशङ्क्यम् ॥ १७३ ॥

यस्मात्कर्माधिकृतस्यैवैतदुपासनाधिकारः स्यात्।
यद्वत्स्वतन्त्रपशुफलगोदोहनरूपकर्मजं हि फलम् ॥ १७४ ॥
अङ्गद्वारापेक्षं भवति तथैव ह्युपासनेष्वेषु।
लोकादिफलेष्वपि किल कर्माङ्गद्वारतः फलं भवति ॥ १७५ ॥
तस्मादङ्गानामेव हि सर्वत्राप्युपास्यमानत्वम्।
उत्कर्षानवधृत्या स्यादत्रानियम इति तु यत्तन्न ॥ १७६ ॥
येनाऽऽदित्यादीना फलात्मकत्वाद्भवेदिहोत्कर्षः।
कर्मात्मकेभ्य उद्गीथादिभ्यः किल स चायमुपपन्नः ॥ १७७ ॥
श्रुतिषु यतः कर्मफलं ह्यादित्यप्राप्तिलक्षणं दृष्टम्।
अपि चोद्गीथमुपासीतेति प्रक्रम्य तमिममुद्गीथम् ॥ १७८ ॥
तस्मिन्नेवाऽऽदित्यादीना दृष्टीरिहोपवर्णयति।
यच्चाप्यादित्यादय एवोद्गीथादिदृष्टिभिश्चेह ॥ १७९ ॥
स्युर्यद्युपास्यमानास्ते हि तदा कर्मभावमालम्ब्य।
दास्यन्ति फलमिहेत्येतदयुक्तमुपासनस्य कर्मत्वात् ॥ १८० ॥
स्वत एव तस्य सिद्धं फलवत्त्वं न प्रयत्नसाध्यं तत्।
किंचोद्गीथादीनामादित्याद्यात्मना हि दृष्टानाम् ॥ १८१ ॥
सिद्धे कर्मात्मत्वे तदपूर्ववदेव नेह वक्तव्यम्।
एतस्यामृच्यध्यूढं सामेत्यत्र भवति लाक्षणिकः ॥ १८२ ॥
यश्च पृथिव्यग्न्योरयमृक्सामपदप्रयोग इह दृष्टः।
क्वचिदपि च संनिकृष्टेन तु संबन्धो हि लक्षणाबीजम् ॥ १८३ ॥
क्वचिदपि च विप्रकृष्टेनापि स्यादेष लक्षणाबीजम्।
गङ्गापदस्य तीरे भवति हि सा संनिकृष्टयोगेन ॥ १८४ ॥
अग्निर्बटुरित्यादावग्निगतो यः शुचित्वरूपगुणः।
तद्वत्तारूपपरं पदार्थयोगेन भवति सा तत्र ॥ १८५ ॥
एतस्यामृच्यध्यूढं सामेत्यत्र तद्वदेवैषा।
तत्रर्क्सामपदाभ्यां स्वार्थद्रष्टव्यतादियोगेन ॥ १८६ ॥
स्याल्लक्षणा पृथिव्यग्न्योरेवर्क्सामशब्दयोरनयोः।
तस्मादृच्यध्युढं सामेति च मुख्ययोः पृथग्ग्रहणात् ॥ १८७ ॥
एतस्यामृच्यध्यूढं सामेति हि पुनस्तयोर्ग्रहणे।
स्यात्पौनरुक्त्यमत इह तद्द्रष्टव्यालम्बनत्वयोगेन ॥ १८८ ॥

संनिहितयोः पृथिव्यग्न्योरेव हि तत्पदप्रयोगः स्यात् ।
ध्येयार्थलक्षणाऽपि प्रतीकवाचकपदस्य दृष्टैव ॥ १८९ ॥
राज्ञि क्षत्तृपदं प्रयुज्यते कारणात्कुतश्चिदपि ।
इयमेवर्गग्निरिति ह्यृचोऽवधारयति तदिह पृथिवीत्वम् ॥ १९० ॥
अत्र पृथिव्या ऋक्त्वेऽवधार्यमाणे त्वियं ह्यृगेवेति ।
स्यादक्षरविन्यासः किंच य एवमिति वाक्यशेषेऽपि ॥ १९१ ॥
उपसंहृतमङ्गाश्रितमिह न पृथिव्याश्रयं हि विज्ञानम् ।
लोकेषु पञ्चविधमिति यद्यपि लोकेषु सप्तमी दृष्टा ॥ १९२ ॥
साम्न्येव हि लोका अध्यस्येरंस्तथाऽपि तद्वाक्ये ।
सामोपासीतेति द्वितीयया चावगम्यते साम्नः ॥ १९३ ॥
येनोपास्यत्वमिदं यदि लोकानामुपास्यता तत्र ।
सामात्मना हि लोकान्स उपासीतेति योजना कार्या ॥ १९४ ॥
तत्र श्रुतद्वितीयासप्तम्योर्भङ्गकल्पना कार्या ।
तदपेक्षया हि केवलसप्तम्या एव भङ्ग इह युक्तः १९५ ॥
लोकात्मना हि सामोपासीतेतीह योजना कार्या ।
इह च तृतीयैवैका परिकल्प्या भवति सप्तमीस्थाने ॥ १९६ ॥
पूर्वत्रोभयभङ्गस्तथोभयं कल्पनीयमेव पुनः ।
एतद्गायत्रं प्राणेषु प्रोतमिति चैवमेवेह ॥ १९७ ॥
व्याख्येयं यत्र पुनस्तुल्या ह्युभयत्र च द्वितीयैव ।
अथ खल्वमुमादित्यं सप्तविधमिति श्रुतिप्रदेशेषु ॥ १९८ ॥
तत्रापि खलु समस्तस्य च साम्न उपासनं तु साध्विति हि ।
साम्नः पञ्चविधस्य च सप्तविधस्याप्युपास्यतावगमात् ॥ १९९ ॥
साम्न्येवाऽऽदित्यादेरध्यासः स्यान्न वैपरीत्येन ।
पृथिवी हिंकार इति प्रथितं यच्चोपलभ्यते वाक्यम् ॥ २०० ॥
हिंकारोद्देशेन च यदि पृथिवीत्वं विधीयते तत्र ।
उद्देश्यवाचकस्य प्राथम्यापत्तिरिति न शङ्क्यमिह ॥ २०१ ॥
पञ्चविधस्य च साम्नो हिंकारादेरुपास्यताकथनात् ।
उद्देश्यत्वे सिद्धे योजनया पूर्वभावितेह स्यात् ॥ २०२ ॥
तस्मादुद्गीथादिष्वेवाऽऽदित्यादिमतय इति सिद्धम् ।

## आसीनः संभवात् ॥ ७ ॥

कर्माङ्गसंश्रितानामुपासनानां हि कर्मतन्त्रत्वात् ॥ २०३ ॥

नैवाऽऽसनादिचिन्ता न तत्त्वबोधेऽपि वस्तुतन्त्रत्वात् ।
किं त्वेषा चिन्ता खल्वितरेषूपासनेषु भवति परम् ॥ २०४ ॥
तिष्ठन्नासीनो वाऽथ वा शयानोऽपि वा प्रवर्तेत ।
उत नियमेनाऽऽसीनो वाऽथ तेष्विति परं भवेदेषा ॥ २०५ ॥
तत्रोपासनमखिलं भवति यतो मानसं ततश्चेह ।
देहस्थितेरनियमे प्राप्ते तस्योत्तरं ब्रवीतीदम् ॥ २०६ ॥
आसीन एव सततमुपासीत यतश्च भवति तत्तस्य ।
येन समानप्रत्ययसंततिरूपं ह्युपासनं तदिदम् ॥ २०७ ॥
एतत्कथंचिदपि वा न गच्छतो धावतोऽपि वा भवति ।
गत्यादयो हि मनसो भवन्ति विक्षेपकारिणो यस्मात् ॥ २०८ ॥
एवं हि तिष्ठतोऽपि च मनो भवेद्देहधारणव्यग्रम् ।
तेन न सूक्ष्मनिरीक्षणसमर्थमेतत्तथा शयानस्य ॥ २०९ ॥
निद्रासमागमेनाभिभूयते किल मनो यतस्तस्मात् ।
आसीनस्य परं स्यादेवजातीयदोषपरिहारः ॥ २१० ॥
तेनोपासनमेतत्स्यादासीनस्य न हि तदन्यस्य ।

ध्यानाच्च ॥ ८ ॥

ध्येयार्थो हि समप्रत्ययसंतानरूप एवेह ॥ २११ ॥
निश्चेष्टेष्वेकार्थासक्तमनोवृत्तिषूपपन्नोऽयम् ।
एवमचञ्चलदृष्टिषु दृष्टोऽन्येषूपचर्यमाणोऽयम् ॥ २१२ ॥
ध्यायति बकस्तथैव प्रोषितबन्धुरिति चैवमादौ हि ।

अचलत्वं चापेक्ष्य ॥ ९ ॥

अपि च ध्यायतिवादो योऽसौ हि ध्यायतीव पृथिवीति ॥ २१३ ॥
स खलु पृथिव्यादिष्वचलत्वमपेक्ष्यैव केवलं भवति ।
आसीनकर्म तदिदमुपासनमित्यस्य लिङ्गमेतत्स्यात् ॥ २१४ ॥

स्मरन्ति च ॥ १० ॥

अपि च स्मरन्ति शिष्टा आसनमत्र ह्युपासनाङ्गतया ।
भगवद्गीतासु स्मृतिषु शुचौ देश इति समारभ्य ॥ २१५ ॥
अत एव पद्मकाद्यासनभेदा योगशास्त्रनिर्दिष्टाः ।

यत्रैकाग्रता तत्राविशेषात् ॥ ११ ॥

यद्वदिहाऽऽसननियमस्तथैव दिग्देशकालभेदेषु ॥ २१६ ॥

अस्ति हि कश्चिन्नियमः किंवा नास्तीति भवति संदेहः ।
प्रायेण वैदिकेष्वारम्भेषु दिगादिनियमदर्शनतः ॥ २१७ ॥
अत्रापि स्यान्नियमः कश्चिदिति भ्रममिमं निराकुरुते ।
यस्यां दिशि देशे वा काले चैकाग्रता भवेन्मनसः ॥ २१८ ॥
सौकर्येण स चायं तत्रोपासीत नियतभावेन ।
प्राच्यां दिशि पूर्वाह्ले प्राचीनप्रवण एवमादीनाम् ॥ २१९ ॥
अश्रवणादत्र पुनर्मनसस्त्वेकाग्रताविशेषाच्च ।
नन्वामनन्ति केचिद्विशेषमपि किल समे शुचाविति हि॥ २२० ॥
तत्र च शुचिप्रदेशे समे तथा शर्कराग्निसिकताद्यैः ।
शब्दजलाधारैरपि विवर्जिते किच चित्तरमणीये ॥ २२१ ॥
चक्षुष्पीडारहिते गुहानिवाताश्रये प्रयुञ्जीत ।
इत्युपदिष्टं तेन च विरुद्धमेतदिति चेन्न दोषोऽयम् ॥ २२२ ॥
दिग्देशादिविशेषाः श्रुत्या यद्यपि निरूपितास्तदपि ।
तेषु न नियम इति श्रुतिरेव ब्रूते मनोनुकूल इति ॥ २२३ ॥
दर्शयितुमिह सुहृद्भावेनाऽऽचार्येण कृतमिदं सूत्रम् ।

## आप्रायणात्तत्रापि हि दृष्टम् ॥ १२ ॥

आवृत्तिः सर्वोपास्तिषु कर्तव्येति वर्णितं पूर्वम् ॥ २२४ ॥
तत्र च यानि हि सम्यग्दर्शनफलकान्युपासनानि स्युः ।
तानि च फलपर्यवसानान्यवघातादिवद्यतस्तेषाम् ॥ २२५ ॥
आवृत्तिकालनियमो ज्ञातो न हि तत्त्वदर्शने कार्ये ।
निष्पन्ने सति यत्नान्तरमिह किंचिदपि शासितुं शक्यम् ॥२२६॥
अनियोज्यब्रह्मात्मप्रतिपत्तौ शास्त्रविषयताबाधात् ।
किंत्वभ्युदयार्थानि हि यानीहोपासनानि तेष्वेषा ॥ २२७ ॥
भवति हि चिन्ता किंचित्कालमिमं प्रत्यय किमावर्त्य ।
विसृजेत्किंवा यावज्जीवमिहाऽऽवर्तयेत्तमेतमिति ॥ २२८ ॥
तत्र च युक्तं किंचित्कालमिमं प्रत्ययं समभ्यस्य ।
विसृजेदिति यस्मादावृत्तिविशिष्टस्य भवति कृत एव ॥ २२९ ॥
एवं प्राप्ते ह्याप्रायणात्तमावर्तयेदिति ब्रूते ।
यदि चाऽऽप्रायणमेतं प्रत्ययमावर्तयेत्तदा तस्य ॥ २३० ॥

अन्त्यप्रत्ययवशतो निष्पन्नं स्याददृष्टरूपफलम्।
जन्मान्तरफलजनकान्यपि कर्माणीह यानि तान्यपि च॥ २३१॥
प्रायणकाले प्राप्तव्यफलस्फूर्तिं समाक्षिपन्ति किल।
श्रुतिरपि चेह सविज्ञानो भवतीति प्रदर्शयत्येवम्॥ २३२॥
यदिह फलस्फुरणं भावनामयं स्यात्तदेव विज्ञानम्।
विज्ञानं स्फुरितं तत्फल सविज्ञान एव यात्येषः॥ २३३॥
तत्सहितस्य फलस्फूर्त्यनन्तरं लीयते मनः प्राणे।
प्राणश्चोदानात्मकजीवयतः सन्सहैव मनसा तम्॥ २३४॥
संकल्पितं हि लोकं नयतीति निरूपित किल श्रुत्या।
किंचेह तृणजलूकानिदर्शनान्यपि च दर्शयन्त्येवम्॥ २३५॥
यदिदं हि भावनामयमेव हि विज्ञानमभिहितं श्रुत्या।
तुल्यप्रत्ययसंतत्यात्मकमावृत्तिरूपमेतत्स्यात्॥ २३६॥
प्रतिपत्तव्यफलस्फुरणात्मानः प्रत्यया हि ये चेह।
आप्रायणात्त एते परमावर्त्याः स्युरिति तु सिद्धं स्यात्॥२३७॥
किंच स यावत्क्रतुरस्मादित्याद्या श्रुतिश्च या चेह।
सा हि प्रायणकाले दर्शयति प्रत्ययानुवृत्तिमिमाम्॥ २३८॥
यं यं वाऽपीत्याद्या स्मृतिरप्युक्तार्थमेव दर्शयति।
या चेह सोऽन्तवेलायामिति देहावमानसमयेऽपि॥ २३९॥
अक्षितमस्यच्युतमसि तथैव हि प्राणसंमितमसीति।
मन्त्रत्रयसंस्मरणं चाऽऽदिश्योपासकस्य सम्यगिह॥ २४०॥
कर्तव्यशेषमेवं श्रावयति श्रुतिरियं तदाऽप्यस्य।

## तदधिगम उत्तरपूर्वाघयोरश्लेषवि-नाशौ तद्व्यपदेशात्॥ १३॥

अत्र ह्युपासकानां यथाऽन्तसमयेऽपि चास्ति कर्तव्यम्॥ २४१॥
न तथाऽऽत्मविदामेषामिति जीवन्मुक्तिमत्र दर्शयति।
एवं तृतीयशेषं विचार्य सम्यक्समापिते तस्मिन्॥ २४२॥
संप्रति परात्मविद्याफलं प्रति किलोपजायते चिन्ता।
ब्रह्माधिगमे सति तद्विपरीतफलं हि यच्च दुरितमिह॥ २४३॥
तत्क्षीयते न वेति हि संदेहे तत्र युक्तमेतत्स्यात्।
यस्मात्कर्म फलार्थं फलं ह्यदत्त्वा न च क्षयोऽस्य स्यात्॥२४४॥

फलदायिनी हि शक्तिः श्रुत्यैवास्यावगम्यते सा हि ।
उपभोगमन्तरेण च यद्यपवृज्येत कर्मणः शक्तिः ॥ २४५ ॥
श्रुतिरिह कदर्थिता स्यात्स्मृतिरपि नाभुक्तमेवमाद्या हि ।
नन्वेवं चेत्प्रायश्चित्तादीनामनर्थकत्वं स्यात् ॥ २४६ ॥
इति चेत्प्रायश्चित्तादीनां नैमित्तिकत्वमेव स्यात् ।
गृहदाहेष्ट्यादिवदिह यथाऽऽहिताग्नेर्गृहेऽग्निना दग्धे ॥ २४७ ॥
दाहात्मके निमित्ते सत्यग्नय इति किलेष्टिरुपदिष्टा ।
दोषात्मके निमित्ते प्रायश्चित्तं भवेदिहापि तथा ॥ २४८ ॥
किंचेह दोषसंयोगेन विधानात्कथंचिदेतेषाम् ।
प्रायश्चित्तादीनां दोषक्षपणार्थता भवेन्नेह ॥ २४९ ॥
न हि परविद्यायामिह दोषक्षपणार्थताविधिः कश्चित् ।
ननु यदि विदुषः कर्मक्षयोऽयमिह नाभ्युपेयते तर्हि ॥ २५० ॥
कर्मफलस्यावश्यं भोक्तव्यत्वाद्भवेदनिर्मोक्षः ।
इति चेन्नासौ दोषो मोक्षः स्याद्देशकालसापेक्षः ॥ २५१ ॥
न क्षीयतेऽस्य दुरितं फलं ददात्येव कर्म विदुषोऽपि ।
एवं प्राप्ते ब्रूते तदधिगमे भवति दुरितविलय इति ॥ २५२ ॥
ब्रह्माधिगमे सत्यघयोरुत्तरपूर्वयोरुभौ भवतः ।
अश्लेषश्च विनाशस्तत्र स्यादुत्तरस्य चाश्लेषः ॥ २५३ ॥
पूर्वस्यास्य विनाशस्तद्व्यपदेशाद्भवेदसावेवम् ।
संभाव्यमानदुरितानभिसंबन्ध किलास्य विदुषो हि ॥ २५४ ॥
व्यपदिशति पुष्करपलाश आप इत्यादिका श्रुतिश्चेह ।
तत्र किल पद्मपत्र न श्लिष्यन्ते यथा इमा आपः ॥ २५५ ॥
न श्लिष्यते तथैव हि परात्मविदि कर्म पापमित्युक्तम् ।
व्यपदिशति नाशमन्या विदुषः पूर्वार्जितस्य दुरितस्य ॥ २५६ ॥
अग्नौ प्रोतमिषीकातूल यद्वत्प्रदूयते सकलम् ।
एवंविदः प्रदूयन्ते पाप्मान इ॰ । तद्यथेत्याद्या ॥ २५७ ॥
व्यपदिशति श्रुति न्या भिद्यत इति किल यथोक्तमेवार्थम् ।
यच्चोक्तमनुपभुक्तफलस्यास्य च कर्मणः क्षये कथिते ॥ २५८ ॥
शास्त्रं कदर्थितं स्यादित्येतन्नेह दूषणं भवति ।
नैवेह कर्मणोऽस्य च शक्तिः फलदायिनी निराक्रियते ॥ २५९ ॥

किंत्विह सा परविद्याबलेन विरुद्धा न किंचिदार्जयति।
इति तु वदामः शास्त्रं व्याप्रियते शक्तिसत्त्वमात्रेण ॥ २६० ॥
न प्रतिबन्धाप्रतिबन्धयोरपीतीह सकलमनवद्यम्।
न हि कर्म क्षीयत इत्येतत्स्मरण मवेदिहोत्सर्गः॥ २६१ ॥
यत्र खलु नापवादस्तत्रोत्सर्गो न वैपरीत्येन।
इष्यत एव प्रायश्चित्तादिभिरस्य कर्मणो नाशः ॥ ६२ ॥
सर्वं पाप्मानं तरतीति श्रुतिरपि किलैवमुपदिशति।
यत्तु प्रायश्चित्तादीनि च नैमित्तिकानि हीत्युक्तम् ॥ २६३ ॥
तदसत्तेषां दोषनिवृत्तिफलत्वेन विधिनियुक्तत्वात्।
संभवति हि मुख्यफले गौणफलार्थत्वकल्पनाऽनुचिता ॥ २६४ ॥
यत्पुनरुक्तं दोषक्षयमुद्दिश्य च यथा विधानमिह।
प्रायश्चित्तादीनां न तथा विद्याविधानमिह चेति ॥ २६५ ॥
नैतद्विद्यत एव हि विधानमिह सगुणविषयविद्यासु।
तत्रैश्वर्यप्राप्तिः पाप्मनिवृत्तिः फलं हि निर्दिष्टम् ॥ २६६ ॥
इह च तयोरविवक्षाकारणविरहादवश्यमेतत्स्यात्।
पाप्मप्रहाणपूर्वकमैश्वर्यप्राप्तिरूपफलमासाम् ॥ २६७ ॥
यद्यपि परविद्यायां न दृश्यते तद्विधानमेवमपि।
स्यादत्राकर्त्रात्मप्रबोधतो दुरितकर्मविलयोऽसौ ॥ २६८ ॥
अश्लेष इति च कर्मस्वागामिषु कर्तृता न यातीति।
दर्शयति यद्यपि स्यादतीतकर्मस्विहास्य कर्तृत्वम् ॥ २६९ ॥
मिथ्याज्ञानबलेन हि तथाऽपि विदुषोऽस्य विद्यया परया।
मिथ्याज्ञानापगमे कारणनाशाच्च तानि कर्माणि ॥ २७० ॥
नश्यन्त्येव हि तेषां विनाशकथनं यदत्र तद्युक्तम्।
ब्रह्मविदिह किल यस्माद्यद्ब्रह्माकर्तृभोक्तृचिन्मात्रम् ॥ २७१ ॥
अवगच्छति तदहमिति स्वात्मानं कर्तृभोक्तृतारहितम्।
जानाति पूर्वमपि वा भविष्यति च वर्तमानसमयेऽपि ॥ २७२ ॥
नो विपरीतं जानात्यतोऽस्य मोक्षोपदेश उपपन्नः।
कथमन्यथा विनाशश्चिरसंचितकर्मणां भवेदस्य ॥ २७३ ॥
नापीह देशकालनिमित्तापेक्षो भवेदसौ मोक्षः।
यदि कर्मफलवदेव स्यान्मोक्षस्तर्ह्यनित्य एव स्यात् ॥ २७४ ॥

कर्मफले हि परोक्षे युक्ता देशाद्यपेक्षता नेह ।
अपरोक्षत्वात्तस्माद्ब्रह्माधिगमे हि भवति दुरितलयः ॥ २७५ ॥

इतरस्याप्येवमसंश्लेषः पाते तु ॥ १४ ॥

पूर्वस्मिन्नधिकरणे शास्त्रव्यपदेशतो(ता)ऽस्य निर्दिष्टा ।
ज्ञाननिमित्तावश्लेषविनाशौ केवलस्य दुरितस्य ॥ २७६ ॥
इह शास्त्रीयो धर्मो ब्रह्मज्ञानं च भवति शास्त्रीयम् ।
तेन च विरोधविरहान्न तद्विनाश इति पुनरिहाऽऽशङ्क्य ॥२७७॥
तामपनेतुं पूर्वाधिकरणनयमेव चातिदिशतीह ।
सुकृतस्य कर्मणो विज्ञाननिमित्ताविमावुभौ भवतः ॥ २७८ ॥
दुरितस्येवाश्लेषविनाशौ फलजनकता समा यस्मात् ।
किंच ज्ञानफलप्रतिबन्धित्वात्कर्मणोऽस्य तौ युक्तौ ॥ २७९ ॥
श्रुतिरियमुभे उ हैवेत्याद्या सुकृतस्य दुष्कृतस्यैव ।
नाशं व्यपदिशति हि किंचाकर्त्रात्मप्रबोधरूपस्य ॥ २८० ॥
इह सुकृतदुरितयोरुभयोरपि लयकारणस्य तुल्यत्वात् ।
क्षीयन्ते चास्येति श्रुतिवाक्यस्याविशेषतः श्रवणात् ॥ २८१ ॥
यत्रापि पाप्मशब्दः केवल उपलभ्यते हि तत्रापि ।
तेनैव पुण्यमप्याकलितमतो ग्राह्यमुभयमेव स्यात् ॥ २८२ ॥
किंच ज्ञानफलापेक्षया निकृष्टं फल भवेदस्य ।
नैनं सेतुमहोरात्रे तरत इति श्रुतौ यतश्चायम् ॥ २८३ ॥
दृष्टो हि पाप्मशब्दः सर्वे पाप्मान इति तु सुकृतेऽपि ।
तस्माद्दुरितस्येव हि सुकृतस्यापि च विनाश इह युक्तः ॥२८४॥
पाते त्वित्यत्र तुशब्दोऽसाववधारणार्थको भवति ।
एवं च सुकृतदुष्कृतयोर्बन्धकयोर्हि विद्यया परया ॥ २८५ ॥
यद्यश्लेषविनाशौ तनुपातानन्तरं तदा मुक्तिः ।
भवतीत्यवधारयितुं सूत्रकृता किल तुशब्द इह पठितः ॥ २८६ ॥

अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ १५ ॥

अधिकरणद्वितयेऽपि च पूर्वस्मिन्सुकृतदुरितयोरुभयोः ।
ज्ञाननिमित्तो नाशो भवतीत्यवधारित हि किमिहासौ ॥ २८७ ॥
अविशेषेणाऽऽरब्धानारब्धफलस्य तदुभयस्यापि ।
किंवाऽनारब्धफलस्यैव विशेषेण भवति नाश इति ॥ २८८ ॥

संदेहे चैतस्मिन्नुभे उ हैवैष इति किल श्रुतिषु ।
अविशेषेण श्रवणादविशेषेण क्षयोऽत्र युक्त इति ॥ २८९ ॥
एवं प्राप्ते ब्रूते सोऽयमनारब्धकार्ययोरिति हि ।
ये त्वप्रवृत्तकार्ये जन्मान्तरसंचिते तथैवास्मिन् ॥ २९० ॥
जन्मन्यपि च ज्ञानोत्पत्तेः प्राक्संचिते हि ये भवतः ।
ते सुकृतदुष्कृते किल पूर्वे ब्रह्माधिगमबलेनेह ॥ २९१ ॥
क्षीयेते नैवैतेऽप्यारब्धफले हि साभिभुक्तफले ।
याभ्यामेतद्ब्रह्मज्ञानायतनं विनिर्मितं जन्म ॥ २९२ ॥
इह तस्य तावदेवेत्येषा श्रुतिरपि यतोऽत्र तनुपातम् ।
क्षेमप्राप्तेरवधि दर्शयति ततस्तयोर्हि न विनाशः ॥ २९३ ॥
नो चेदेवं ज्ञानादशेषकर्मक्षये शरीरस्य ।
स्थितिकारणस्य विरहाच्छ्रेयो ज्ञानक्षणे स विन्देत ॥ २९४ ॥
तत्र च शरीरपातप्रतीक्षणं यच्छ्रुतिर्न तद्ब्रूयात् ।
नन्वेष तत्त्वबोधः कर्मक्षपणप्रशस्तशक्तियुतः ॥ २९५ ॥
कर्माणि कानिचिच्च क्षपयेत्कानि च कथं न हि क्षपयेत् ।
न ह्यग्निबीजयोरिह संपर्के सति समानरूपे स्यात् ॥ २९६ ॥
केषांचिच्छक्तिलयो नान्येषां स इति शक्यते वक्तुम् ।
इति चेदारब्धफलं कमपि च कर्माशयं ह्यनाश्रित्य ॥ २९७ ॥
नैवोपपद्यते हि ज्ञानोत्पत्तिः समाश्रिते तस्मिन् ।
सोऽयं कुलालचक्रवदेव हि संरब्धभूरिवेगः स्यात् ॥ २९८ ॥
वेगक्षयः कुतश्चिन्न चान्तराले भवेद्गतस्तस्य ।
वेगक्षयप्रतीक्षणमावश्यकमात्मतत्त्वबोधेऽपि ॥ २९९ ॥
यद्यपि मिथ्याज्ञानं तत्त्वज्ञानेन बाधितं तदपि ।
बाधितमपि तत्किंचित्कालं संस्कारतोऽनुवर्तेत ॥ ३०० ॥
चन्द्रे दृष्टेऽपि यथा कंचित्कालं द्विचन्द्रताभ्रान्तिः ।
अपि चेह ब्रह्मविदः कंचित्कालं शरीरमेतद्धि ॥ ३०१ ॥
ध्रियते न ध्रियते वेत्येषा शङ्काऽत्र न खलु कर्तव्या ।
स्वमनोगम्यं ब्रह्मज्ञानमिदं देहधारणं चापि ॥ ३०२ ॥
कथमन्योऽनधिगततद्गन्धः शक्नोति तत्प्रतिक्षेप्तुम् ।
इममर्थमुपदिशन्ति श्रुतिस्थितप्रज्ञलक्षणस्मृतयः ॥ ३०३ ॥

तस्मादिहाप्रवृत्तस्वकार्ययोरेव सुकृतदुष्कृतयोः ।
विद्यासामर्थ्येन क्षयो भवेन्न प्रवृत्तफलयोश्च ॥ ३०४ ॥

अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ १६ ॥

अश्लेषनाशयोरतिदेशः पुण्यस्य दर्शितः पूर्वम् ।
स च सर्वपुण्यविषयः स्यादिति शङ्का निराकरोत्यधुना ॥३०५॥
उक्ताशङ्कापरिहारार्थो भवति हि तुशब्द इह दृष्टः ।
नित्यमिह वेदविहितं यदग्निहोत्रादिलक्षण कर्म ॥ ३०६ ॥
ज्ञानस्य यच्च कार्यं तत्कार्यायैव भवति तत्कर्म ।
यस्मात्तमेतमित्यादिश्रुतिवाक्येषु तत्तथा दृष्टम् ॥ ३०७ ॥
नन्विह कार्यैकत्वं न युज्यते ज्ञानकर्मणोरनयोः ।
येन विलक्षणकार्योत्पादकता दृश्यते तयोरिति चेत् ॥ ३०८ ॥
ज्वरमरणकार्ययोरपि दधिविषयोः शर्करादियोगेन ।
तृप्त्यादिजनकतावत्स्यादेवेहापि कर्मणस्तस्य ॥ ३०९ ॥
ज्ञानेन सहकृतस्य च मोक्षफलत्वं यदेतदविरुद्धम् ।
ननु मोक्षो यदि नित्यस्तदा कथं तस्य कर्मकार्यत्वम् ॥ ३१० ॥
इति चेन्नासौ दोषो न संनिपत्यो[प]कारक कर्म ।
किंत्वारादुपकारकमेव ज्ञानस्य कारक सदिदम् ॥ ३११ ॥
मोक्षस्य कारकमिदं कर्मेत्युपचर्यते तदेवेह ।
अत एव चेह यदिदं कार्यैकत्वानुकीर्तन तदपि ॥ ३१२ ॥
नाऽऽगामिकार्यविषयं पर त्वतिक्रान्तविषयमेव स्यात् ।
भवति ब्रह्मविदः किल यदग्निहोत्रादि तन्न चाऽऽगामि ॥३१३॥
विधिशास्त्रविषयता न ह्यनियोज्यब्रह्मभावबोधे स्यात् ।
कर्तृत्वाद्यनिवृत्त्या भवति हि सा सगुणविषयविद्यासु ॥ ३१४ ॥
आगामि तद्विदः स्याद्यदग्निहोत्रादिलक्षणं कर्म ।
विद्योपजायते किल तस्यापि फलाभिसंधिरहितस्य ॥ ३१५ ॥
ननु यदि विद्याङ्गं तद्यदग्निहोत्रादिलक्षणं कर्म ।
तर्ह्यश्लेषविनाशानुकीर्तनं तादृशमत्र किंविषयम् ॥ ३१६ ॥
विनियोगवचनमपि सुहृदादौ यच्चोपदर्शितं पूर्वम् ।
श्रुत्या तस्येत्यनया तदपि च किंविषयमित्यतो ब्रूते ॥ ३१७ ॥

अतोऽन्याऽपि ह्येकेषामुभयोः ॥ १७ ॥

नित्यादतोऽग्निहोत्रादेरन्याऽप्यस्ति साधुकृत्येह ।
या फलमभिसंधाय क्रियते विनियोग एष तद्विषयः ॥ ३१८ ॥
तस्या एवाश्लेषविनाशप्रतिपादनं भवेदतत ।
एवंविधं हि काम्यं कर्म न विद्योपकारकं भवति ॥ ३१९ ॥
अत्र च संप्रतिपत्तिर्जैमिनिसर्वज्ञबादरायणयोः ।

यदेव विद्ययेति हि ॥ १८ ॥

यन्नित्यमग्निहोत्रादि मुमुक्षोः कर्म भवति मोक्षार्थम् ॥ ३२० ॥
तदुपात्तदुरितनाशद्वारा चेतोविशुद्धिकारणताम् ।
प्रतिपद्य मोक्षफलकब्रह्माधिगमैकसाधनत्वेन ॥ ३२१ ॥
विद्यासमफलमेतद्भवतीत्येतत्प्रपञ्चितं पश्चम् ।
विद्यासंयुक्तं तद्विपरीतं श्रूयतेऽग्निहोत्रादि ॥ ३२२ ॥
विद्वान्यजते विद्वाञ्जुहोति शंसति च गायतीत्येवम् ।
तस्मादेवंविदमेव ब्रह्माणमिति तद्वदेवमपि ॥ ३२३ ॥
तेनोभौ कुरुतो यश्चैव वेदेह यश्च नो वेद ।
इति वाक्येभ्यो विद्यासंयुक्तं केवलं च निर्दिष्टम् ॥ ३२४ ॥
इह चिन्त्यते यदेतद्विद्यासंयुक्तमग्निहोत्रादि ।
किं विद्याहेतुतया तया सह किलकैकार्थता लभते ॥ ३२५ ॥
किंवा विद्यायुक्तं केवलमपि चाविशेषतो लभते ।
इति संदेहे विद्यायुतमेव यदेतदग्निहोत्रादि ॥ ३२६ ॥
प्रतिपद्यते तदेव हि विद्यासहकारितां न चान्यदपि ।
विद्यायुतस्य विद्याहीनादवगम्यते विशेषोऽयम् ॥ ३२७ ॥
श्रुतिरत्र यदहरेव जुहोतीत्याद्या किलैवमुपदिशति ।
अपमृत्युविजयरूपं विद्यायुतकर्मणः फलं किंच ॥ ३२८ ॥
बुद्ध्या युक्त इति स्मृतिरपि विद्यायोगतः फलं ब्रूते ।
इति शङ्कां वारयितुं ब्रूतेऽत्र यदेव विद्ययेत्येवम् ॥ ३२९ ॥
सत्यं विद्यायुक्तं यदग्निहोत्रादिलक्षणं कर्म ।
तत्किल विद्याहीनाद्विशिष्यते ब्राह्मणो यथा विद्वान् ॥ ३३० ॥
एवमपि कर्म विद्याहीनं यच्चेदमग्निहोत्रादि ।
तच्चेदं विद्यायां न ह्यत्यन्तानपेक्षमिह भवति ॥ ३३१ ॥

यस्मात्तमेतमित्यादिश्रुतिभिः कर्मणोऽग्निहोत्रादेः ।
विद्याहेतुत्वं खल्वविशेषेण प्रदर्शितं तस्मात् ॥ ३३२ ॥
नन्विह विद्यायुक्तं विद्याहीनाद्यदा विशिष्टं स्यात् ।
विद्यासाधनमेतद्विद्याहीनं तदा कथं भवति ॥ ३३३ ॥
इति चेन्मैवं विद्या न हि तस्य च कर्मणोऽग्निहोत्रादेः ।
सामर्थ्यातिशयेन हि विद्यां प्रति कश्चिदतिशयो भवति ॥ ३३४ ॥
नैतावता हि विद्याहीनस्यैतस्य निष्फलत्वं स्यात् ।
यज्ञेन विविदिषन्तीत्यादिश्रुत्या किलाविशेषेण ॥ ३३५ ॥
आत्मज्ञानाङ्गतया प्रदर्शितस्यास्य चाग्निहोत्रादेः ।
न हि विद्यानङ्गत्वं शक्यं केनापि दर्शयितुमत्र ॥ ३३६ ॥
यत्कर्म विद्यया किल करोति तद्वीर्यवत्तरं भवति ।
उपदिशति चेममर्थं श्रुतिरत्र यदेव विद्ययेत्याद्या ॥ ३३७ ॥
विद्याहीनमपीदं वीर्यवदिति गम्यते तया श्रुत्या ।
तस्येह वीर्यवत्त्वं स्वकार्यसाधनसमर्थतारूपम् ॥ ३३८ ॥
तस्माद्विद्यायुक्तं विद्यारहितं यदग्निहोत्रादि ।
मोक्षोद्देशेन कृतं तदुभयमपि किल मुमुक्षुणा सम्यक् ॥ ३३९ ॥
इह जन्मनि पूर्वं वा स्वशक्तियोगेन दुरितमुन्मूल्य ।
ब्रह्मापरोक्षसाधनभावं प्रतिपद्यमानमेतद्धि ॥ ३४० ॥
श्रवणश्रद्धाभक्तिध्यानशमाद्यन्तरङ्गसापेक्षम् ।
ब्रह्मात्मविद्यया सह कर्म स्यादेककार्यमिति सिद्धम् ॥ ३४१ ॥

भोगेन त्वितरे क्षपयित्वा संपद्यते ॥ १९ ॥

ये सुकृतदुष्कृते चानारब्धफले तयोः क्षयोऽभिहितः ।
विद्याबलेन ये पुनरारब्धफले हि ते तु भोगेन ॥ ३४२ ॥
क्षपयित्वाऽनन्तरमिह विद्वान्संपत्स्यते परं ब्रह्म ।
इह तस्य तावदेवेत्याद्याः श्रुतयोऽपि दर्शयन्त्येवम् ॥ ३४३ ॥
सत्यपि सम्यग्ज्ञाने भवति यथा तनुविसर्गतः पूर्वम् ।
द्वैतप्रपञ्चभानं द्विचन्द्रदर्शननयेन तद्वदिदम् ॥ ३४४ ॥
पश्चादपि न कुतो वाऽनुवर्तत इतीह न पुनराशङ्क्यम् ।
उपभोगक्षपणं किल भवति द्वैतानुवृत्तिमूलमिह ॥ ३४५ ॥
न ह्यनयोरुपभोगे पुनरन्यत्तादृगस्ति किंचिदपि ।
अपरः कर्माशय एवाऽऽरमते भोगमपरमिति चेन्न ॥ ३४६ ॥

नाऽऽरभते स हि भोगं ज्ञानेन च तस्य दग्धबीजत्वात् ।
मिथ्याज्ञानबलेन च तनुपाते कर्मभोगमारभते ॥ ३४७ ॥
मिथ्याज्ञाने तस्मिंस्तत्त्वज्ञानेन मूलतो दग्धे ।
आरब्धकार्यविगमे विदुषः कैवल्यमप्रतिद्वन्द्वम् ॥ ३४८ ॥
शारीरकमीमांसा मुनिना व्यासेन विरचिता सेयम् ।
चतुरध्यायी तस्यां चतुर्थसंज्ञश्च योऽयमध्यायः ॥ ३४९ ॥
तत्र प्रथमे पादे सूत्रार्थो यश्च भाष्यकारोक्तः ।
आर्यावृत्तैरमलैः प्रकाशितो भवतु सोऽयमनवद्यः ॥ ३५० ॥

इति चतुर्थाध्याये प्रथमः पादः समाप्तः ॥ १ ॥

---

अथ द्वितीयपादः ।

---

पूर्वस्मिन्किल पादे ज्ञानफलं सकलमेव निर्वर्ण्य ।
अस्मिन्पादे यच्चोपास्तिफलं ब्रह्मलोकसंभोग्यम् ॥ १ ॥
तद्वक्तव्यं तत्खलु संप्राप्यं ह्यर्चिरादिमार्गेण ।
सा चार्चिरादिमार्गप्राप्तिर्नोत्क्रान्तिमन्तरेण स्यात् ॥ २ ॥
तेनोपास्तिफलेनाऽऽक्षिप्तस्योत्क्रान्तिविषयपादस्य ।
अध्यायसंगतिः स्यादानन्तर्यं च पूर्वपादेन ॥ ३ ॥

## वाङ्मनसि दर्शनाच्छब्दाच्च ॥ १ ॥

अत्रापरासु विद्यासु हि फलभोगाय देवयानाख्यम् ।
पन्थानमर्चिरादिकमभिधास्यन्प्रथममिह यथाशास्त्रम् ॥ ४ ॥
उत्क्रान्तिक्रममेवाऽऽचष्टे भवतीह येयमुत्क्रान्तिः ।
सा खलु विद्वदविदुषोस्तुल्या न विशेष इह भवेत्कश्चित् ॥ ५ ॥
प्रायणविषया श्रुतिरियमाम्नाता खल्विहास्य सोम्येति ।
तत्राऽऽदौ पुरुषस्य प्रयतो वाङ्मनसि तन्मनः प्राणे ॥ ६ ॥
प्राणस्तेजसि तेजस्तद्धि परस्यां हि देवतायां च ।
संपद्यत इत्युक्तं किमत्र वाचः सवृत्तिकायाः स्यात् ॥ ७ ॥
मनसीयं संपत्तिर्वाग्वृत्तेरेव वा भवेत्सा किम् ।
तत्र च सवृत्तिकाया वाचः संपत्तिरेव युक्ता स्यात् ॥ ८ ॥

वृत्तिमदर्थपरायाः श्रुतेर्यदा वृत्तिमात्रपरता स्यात् ।
स्याल्लक्षणा न चेयं युक्ता मुख्यार्थसंभवेऽपि स्यात् ॥ ९ ॥
तस्माच्च वाच एव हि सवृत्तिकाया लयोऽत्र युक्त इति ।
एवं प्राप्ते ब्रूते वृत्तेरेव हि लयोऽत्र युक्त इति ॥ १० ॥
नन्वाचार्येणात्र च वाङ्मनसीत्यादिसूत्रमुपदिष्टम् ।
वाग्वृत्तिपरतया तद्व्याख्यातु युक्तमत्र कथमिति चेत् ॥ ११ ॥
अविभागो वचनादिति वक्ष्यति येनोत्तरत्र कृत्स्नलयम् ।
तस्मादिह वृत्तिलयो विवक्षितो नैव वृत्तिमद्विलयः ॥ १२ ॥
इह तत्त्वलयविवक्षायां पूर्वत्राविभागसाम्येन ।
अविभाग इति परस्तादविभागमिम कुतो विशिंष्यात्सः ॥ १३ ॥
तस्माद्वृत्त्युपसंहारविवक्षेयं ततो हि वाग्वृत्तिः ।
उपसंह्रियते पूर्वं सवृत्तिके मनसि विद्यमानेऽपि ॥ १४ ॥
उपलभ्यते मनोवृत्तौ सत्यां पूर्वमेव वाग्वृत्तेः ।
उपसहारो लोके स्वप्ने न तु वाच एव मनसि लयः ॥ १५ ॥
केनचिदपि दृष्टोऽय ननु वाङ्मनसीति हि श्रुतिर्ब्रूते ।
वागप्ययो हि मनसि प्रतीयते न तेन कुत इति चेन्न ॥ १६ ॥
मनसो वाक्प्रकृतित्वाभावान्न हि वाग्लयो भवेन्मनसि ।
यस्य यतश्चोत्पत्तिस्तत्र लयस्तस्य दृश्यते लोके ॥ १७ ॥
मृदि करकादेरिव न च मनसो वागुद्भवः क्वचिद्दृष्टः ।
वृत्त्युत्पत्तिप्रलयावप्रकृतिसमाश्रयावपीह स्तः ॥ १८ ॥
अग्नेर्हि तैजसस्य च वृत्तिः किल पार्थिवेन्धनेभ्यः स्यात् ।
अप्सु च तदुपशयोऽयं तथैव चेहापि भवति नन्वत्र ॥ १९ ॥
वाङ्मनसीति कथं वा साधुः स्यादित्यतोऽत्र पठितमिदम् ।
शब्दाच्चेति स भाक्ताभेदपरो भवति वृत्तिवृत्तिमतोः ॥ २० ॥

## अत एव च सर्वाण्यनु ॥ २ ॥

इह चोपशान्ततेजाः पुनर्भवमिति प्रपञ्चिता श्रुत्या ।
या चेह मनसि संपत्तिः स्याद्या यावदिन्द्रियाणां च ॥ २१ ॥
तत्रापि वाच इव चक्षुरादिकानां सवृत्तिके मनसि ।
समवस्थिते हि तेषां वृत्त्युपशम एव न स्वरूपलयः ॥ २२ ॥
वृत्तिद्वारा सर्वाण्यपीन्द्रियाणि हि मनोऽनुवर्तन्ते ।
सर्वेषां करणानामुपसंहारे हि मनसि तुल्येऽपि ॥ २३ ॥

अत्र पृथग्ग्रहणं यद्वाचस्तच्छ्रुतिनिर्देशमालम्ब्य ।
श्रुतिनिर्देशोऽथ वाङ्मनसीतीदं च तदनुरोधेन ॥ २४ ॥

तन्मनः प्राण उत्तरात् ॥ ३ ॥

समधिगतेयं वाङ्मनसीत्यत्र च मनसि वृत्तिसंपत्तिः ।
यच्चानन्तरवाक्यं तदिह मनः प्राण इति समाम्नातम् ॥ २५ ॥
किमिहापि वृत्तिमत्संपत्तिः किंवाऽत्र वृत्तिसंपत्तिः ।
इति विचिकित्सायां वृत्तिमतः संपत्तिरत्र युक्तेति ॥ २६ ॥
श्रुत्यनुसारात्प्राप्तं तत्प्रकृतित्वस्य दर्शनाच्चात्र ।
इह चान्नमयं हीति श्रुतिरन्नमयं मनः प्रदर्शयति ॥ २७ ॥
अब्योनिं च प्राणं तथैव चापामिहान्नयोनित्वम् ।
आपश्चान्नमिति श्रुतिरपि दर्शयतीह तेन यच्च मनः ॥ २८ ॥
प्राणे प्रलीयतेऽस्मिंस्तदन्नमेवाप्सु लीयते नान्यत् ।
अन्नं हि मनश्चाऽऽपः प्राणोऽसौ प्रकृतिविकृतिभावोऽयम् ॥२९॥
भवति तयोरित्येवं प्राप्ते ब्रूतेऽत्र वृत्तिसंपत्तिम् ।
तदिहागृहीतबाह्येन्द्रियवृत्ति मनः प्रलीयते प्राणे ॥ ३० ॥
वृत्तिद्वारेणैव हि तथोत्तरस्मात्प्रतीयते वाक्यात् ।
किंच सुषुप्सोश्च मुमूर्षोश्च प्राणे सवृत्तिके सति हि ॥ ३१ ॥
दृश्यत एव हि मनसो वृत्तिलयो न खलु वृत्तिमद्विलयः ।
न हि मनसः प्राणेऽस्मिन्स्वरूपविलयः कदाचिदपि भवति॥३२॥
येनातत्प्रकृतिरसौ प्राणो ननु दर्शिता हि मनसोऽस्य ।
प्राणप्रकृतिकता न ह्येतत्सार न वर्त्मनाऽनेन ॥ ३३ ॥
प्राणप्रकृतित्वेन प्राणे संपत्तुमर्हतीह मनः ।
इह चान्ने मन एव हि लीयेत तथाऽप्सु चान्नमप्येतत् ॥ ३४ ॥
अप्स्वेव प्राणोऽथ लीयेत पुनर्न वैपरीत्येन ।
एतावताऽपि खल्वद्भ्यः प्राणत्वेन परिणताभ्यो हि ॥ ३५ ॥
जायेत मन इतीह प्रमाणमुपलभ्यते न किंचिदपि ।
तस्मान्मनसः प्राणे वृत्तिलयः स्यान्न वृत्तिमद्विलयः ॥ ३६ ॥

सोऽध्यक्षे तदुपगमादिभ्यः ॥ ४ ॥

यस्य तु येनोत्पत्तिस्तस्य च तस्मिन्हि वृत्तिलय एव ।
न तु वृत्तिमल्लयः स्यादिति समधिगतं हि पूर्वमत्र पुनः ॥ ३७ ॥

संदिह्यते किलेदं यत्प्राणस्तेजसीति वाक्यमिह ।
तत्र प्राणस्य यथाश्रुति [तेजसि] वृत्तिलय एव स्यात् ।। ३८ ।।
देहेन्द्रियाधिनाथे जीवे वा तस्य भवति विलय इति ।
तत्रानतिशङ्क्यत्वाच्छ्रुतेस्तदनुसारतो भवेदेवम् ।। ३९ ।।
तेजस्येवैतस्मिन्प्राणस्यैतस्य विलय उचित इति ।
यद्यश्रुतार्थपरिकल्पना भवेत्सा भवेदिहान्याय्या ।। ४० ।।
इति शङ्कां वारयितुं प्राणस्याध्यक्षगामितां ब्रूते ।
सोऽयं प्रकृतः प्राणो विद्याकर्माद्युपाधिकेऽध्यक्षे ।। ४१ ।।
विज्ञानात्मन्येवावतिष्ठते तदुपगामितादिभ्यः ।
श्रुतिरियमिहैवमेवेत्याद्या दर्शयति तदुपगामित्वम् ।। ४२ ।।
हेत्वर्थश्चोपगमानुगमनतदवस्थितिश्रुतिभ्य इति ।
यात्रेच्छावन्तं किल राजानं सेवका यथैवेह ।। ४३ ।।
उपगच्छान्ति तथैव हि परलोकं जिगमिषुं च जीवमपि ।
सर्वे प्राणा अभिमुखतो यान्तीत्युपगमः श्रुतौ दृष्टः ।। ४४ ।।
सर्वेषां प्राणानामविशेषेणैव चायमुपदिष्टः ।
इह च तमुत्क्रामन्तं प्राणोऽनूत्क्रामतीति वाक्यमपि ।। ४५ ।।
प्राणस्य पञ्चवृत्तेरनुगमनं किल विशेषतो ब्रूते ।
अन्तर्विज्ञानं किल यच्चाध्यक्षस्य दर्शितं श्रुत्या ।। ४६ ।।
तच्चान्तर्विज्ञानं जीवे प्राणस्थितिं विना न भवेत् ।
इत्युपदिशति सविज्ञान इति श्रुतिरिह ततो भवेज्जीवे ।। ४७ ।।
प्राणस्यावस्थानं तेनास्याध्यक्ष एव संपत्तिः ।
नन्विह तेजस्येव प्राणलयः श्रूयते परं सूत्रे ।। ४८ ।।
सोऽध्यक्ष इति ह्यधिकाला(वा)पः कुत एष इति म शङ्क्यमिह ।
यस्मादुत्क्रमणादिव्यवहारोऽध्यक्षमूलकस्तस्मात् ।। ४९ ।।
अपि च श्रुत्यन्तरगतविशेषसापेक्षता भवेदस्य ।
नन्वेतच्छ्रुतिवचनं यत्प्राणस्तेजसीति कथमिति चेत् ।। ५० ।।

भूतेषु तच्छ्रुतेः ।। ५ ।।

तेजःसहचरितेषु च भूतेषु प्राणसहकृतोऽध्यक्षः ।
सूक्ष्मेषु देहबीजेष्ववतिष्ठत इति किल श्रुतेरर्थः ।। ५१ ।।
दर्शयति श्रुतिरेषा प्राणस्य च तेजसि स्थितिं हि ननु ।
न प्राणसहकृतस्याप्यध्यक्षस्येति चेन्न दोषोऽयम् ।। ५२ ।।

श्रुत्या हि पूर्वसूत्रोदाहृतयाऽध्यक्षगामितापरया ।
अध्यक्षोऽपि किलायं तदन्तराले निवेशितो यस्मात् ॥ ५३ ॥
यश्च स्रुघ्नान्मथुरां गत्वा हि व्रजति पाटलीपुत्रम् ।
स व्रजति पाटलीपुत्रमिमं स्रुघ्नादितीव भवतीह ॥ ५४ ॥
तस्मादध्यक्षस्य च तदन्तराले भवेदवस्थानम् ।
ननु तेजःसहचरितेष्ववस्यावस्थानमिति तु यच्चोक्तम् ॥ ५५ ॥
तत्कथमुपपन्नं स्याद्यत एकं श्रूयते हि तेज इह ।
वाङ्मनसीत्याद्ये हि श्रुतिवाक्ये तेजसीत्यतः पठति ॥ ५६ ॥

## नैकस्मिन्दर्शयतो हि ॥ ६ ॥

तेजसि नैकस्मिन्किल देहान्तरयोगसमय आयाते ।
जीवोऽवतिष्ठतेऽसौ पञ्चात्मकता यतः शरीरस्य ॥ ५७ ॥
प्रश्नप्रतिवचने अपि यथोक्तमेवार्थमत्र दर्शयतः ।
वेत्थ यथा पञ्चम्यामित्यादौ त्र्यात्मकत्वसूत्रे हि ॥ ५८ ॥
व्याख्यातं तत्सर्वं श्रुतिस्मृती चैतमर्थमुपदिशतः ।
पृथ्वीमय आपोमय इत्याद्या हि श्रुतिस्तथैवेयम् ॥ ५९ ॥
स्मृतिरण्व्यो मात्रा इत्याद्या पञ्चभूतकार्यत्वम् ।
देहस्य व्यपदिशति हि तस्माद्भूतेष्वितीह साधूक्तम् ॥ ६० ॥
ननु वागादिषु करणेष्वखिलेष्वपि चोपसंहृतेषु पुनः ।
देहान्तरसंप्रेप्सावेलायां क्व पुनरेष भवतीति ॥ ६१ ॥
प्रश्ने हि श्रुत्यन्तरमस्य च कर्माश्रयत्वमुपदिशति ।
श्रुत्यन्तरं हि तौ ह यदूचतुरित्यादिना प्रसिद्धं हि ॥ ६२ ॥
अत्र किल याज्ञवल्क्यार्तभागसञ्ज्ञौ मुनी हि कर्मैव ।
जीवाधारं ब्रूतस्तेन च कर्माश्रयत्वमस्योक्तम् ॥ ६३ ॥
भूताश्रयत्वमेवं सति पूर्वोक्तं विरुद्धमिति चेन्न ।
तत्र च कर्माश्रयता ग्रहादिसंज्ञस्य कर्ममूलस्य ॥ ६४ ॥
इन्द्रियविषयात्मकबन्धनरूपस्य प्रवृत्तिरित्युक्ता ।
इह तु पुनर्भूतोपादानो देहान्तरोदयोऽयमिति ॥ ६५ ॥
भूताश्रयत्वमुक्तं प्रशशंसतुरित्यनेन पुनरत्र ।
प्राधान्यमात्रमेव हि कर्मण इत्येव दर्शितं भवति ॥ ६६ ॥

तत्कर्मणो निमित्तत्वेनाप्युपपद्यते हि पुनरत्र ।
भूतोपादानकृता भूताश्रयता ततश्च न विरोधः ॥ ६७ ॥

## समाना चाऽऽसृत्युपक्रमादमृतत्वं चानुपोष्य ॥ ७ ॥

उत्क्रान्तिरिह किमेषा विद्वदविदुषोः समानरूपैव ।
भवति हि किंवा सेयं विशेषवत्येव वेति संदेहे ॥ ६८ ॥
तत्र विशेषवतीति प्राप्तं नैषा हि भूतसंश्लिष्टा ।
आश्रीयन्ते भूतान्यत्राविदुषा पुनर्भवायैव ॥ ६९ ॥
न पुनर्भवोऽस्ति विदुषो यस्मादमृतत्वमश्नुते विद्वान् ।
तस्मादविदुष एवोत्क्रान्तिरियं सा हि न खलु विदुषोऽस्य ॥७०॥
ननु विदुष एव विद्याप्रकरणबलतो भवेदिहोत्क्रान्तिः ।
मैवं स्वापादिवदिह सामान्येनानुकीर्तनं तदिदम् ॥ ७१ ॥
यत्रैतत्पुरुष इति श्रुत्या हि स्वपिति नाम निर्दिष्टम् ।
आशि[शि]षति नाम पिपासति नाम च पुरुषस्य दर्शितं हि तथा॥७२॥
सर्वसमा एवैते ह्यत्र स्वापादयोऽनुकीर्त्यन्ते ।
विद्याप्रकरण एव प्रकृतप्रतिपादनानुगुण्येन ॥ ७३ ॥
स्वापादयो हि विदुषो विशेषतः क्वापि न हि विवक्ष्यन्ते ।
एवमिहोत्क्रान्तिरियं महाजनगतैव कीर्त्यते नान्या ॥ ७४ ॥
यत्र परस्यां प्रयतस्तेजः संपद्यते हि पुरुषस्य ।
स ह्यात्मा तत्त्वमसीत्येतावत्प्रतिपिपादयिषितमिह ॥ ७५ ॥
विदुषो यस्मादेषा प्रतिषिद्धा सेयमविदुषस्तस्मात् ।
एवं प्राप्ते ब्रूते त्युत्क्रान्तिरियं भवेत्समानेति ॥ ७६ ॥
उत्क्रान्तिर्वाङ्मनसीत्याद्या या सा समानरूपैव ।
विद्वदविदुषोरासृत्युपक्रमादेवमेव भवति यतः ॥ ७७ ॥
अविशेषतः श्रुतेयं तत्राविद्वान्हि देहबीजानि ।
भूतानि सूक्ष्मरूपाण्याश्रित्य च कर्मसंप्रयुक्तोऽयम् ॥ ७८ ॥
देहान्तरं ग्रहीतुं संसरति पुनः स एष विद्वांस्तु ।
ज्ञानप्रकाशितं किल मोक्षद्वारं परं समाश्रयते ॥ ७९ ॥
आसृत्युपक्रमादित्येतावद्दर्शितं हि सूत्रकृता ।
नन्वमृतत्वं प्राप्यं नैतद्देशान्तरप्रयुक्तं स्यात् ॥ ८० ॥

भूताश्रयता चाऽऽसृत्युपक्रमो वाऽपि तत्र भवति कथम् ।
इति शङ्कां निरसितुमनुपोष्येति तदेतदभिहितं सूत्रे ॥ ८१ ॥
अमृतत्वमिह यदुक्तं तदिदमविद्यादिकानदग्ध्वैव ।
आपेक्षिकमेव स्यात्तदपराविद्याबलेन लभ्येत ॥ ८२ ॥
आसृत्युपक्रमोऽयं भूताश्रयता च तत्र संभवति ।
गतिरिह निराश्रयाणां प्राणानां नोपपद्यते क्वापि ॥ ८३ ॥

## तदाऽपीतेः संसारव्यपदेशात् ॥ ८ ॥

तेजस्तत्त्व परस्यामित्यत्र प्रकरणादियोगेन ।
तदिदं प्रकृतं तेजः साध्यक्षं सकरणं च सप्रमाणम् ॥ ८४ ॥
भूतान्तरोपसृष्टं प्रयतः पुंसोऽस्य देवताया हि ।
संपद्यते परस्यामित्युक्त कीदृशी भवेदेषा ॥ ८५ ॥
संपत्तिरिह भवेदिति चिन्तेयं जायते हि तत्रासौ ।
आत्यन्तिक एव लयो युक्तस्तत्प्रकृतिता यतस्तस्याः ॥ ८६ ॥
सर्वस्य जनिमतो हि प्रकृतिरियं देवता परा सेति ।
प्रागेव हि प्रपञ्चितमत इयमात्यन्तिकी भवेदस्याम् ॥ ८७ ॥
अविभागापत्तिरिति प्राप्ते ब्रूते विभागमेवात्र ।
भूतान्तरसहितं तत्तेजः श्रोत्रादिकरणसंसृष्टम् ॥ ८८ ॥
आसंसारविमोक्षादाऽपीतेरात्मवेदनायत्तात् ।
अवतिष्ठते हि तावच्छ्रुत्या व्यपदिश्यतेऽस्य संसारः ॥ ८९ ॥
इह योनिमन्य इत्यादिकया श्रुत्या प्रपञ्चितश्चायम् ।
नानाशरीरयोगात्संसारोऽस्यान्यथा हि सर्वोऽपि ॥ ९० ॥
संपद्येत ब्रह्म प्रायणसमयेऽप्युपाधिविलयेन ।
तत्र च विधिशास्त्रमिदं विद्याशास्त्रं च विफलमेव स्यात् ॥ ९१ ॥
मिथ्याज्ञाननिमित्तो बन्धो ज्ञानादृते न नश्येत ।
तस्मात्सुषुप्तलयवत्संपत्तिरियं हि बीजशेषेण ॥ ९२ ॥

## सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ९ ॥

भूतान्तरसहितं यत्तेजः पूर्वोक्तमस्य जीवस्य ।
अस्माद्देहात्प्रवसत आश्रयभूतं प्रमाणतस्तच्च ॥ ९३ ॥
सूक्ष्मं नाडीनिष्क्रमणादिभ्योऽस्यावगम्यते सौक्ष्म्यम् ।
तत्र तनुत्वादेव हि संचारः स्वच्छतादियोगेन ॥ ९४ ॥

अप्रतिभूतो देहान्निर्गच्छन्नोपलभ्यते चातः ।

नोपमर्देनातः ॥ १० ॥

सूक्ष्मत्वादेव पुनः स्थूलशरीरस्य चोपमर्दन ॥ ९५ ॥
दाहादिमूलकेनतरदिह सूक्ष्मं तु नोपमृद्येत ।

अस्यैव चोपपत्तेरेष ऊष्मा ॥ ११ ॥

सूक्ष्मस्यास्य शरीरस्यैव भवत्येष योऽयमूष्माऽत्र ॥ ९६ ॥
यं चोष्माण देहे संस्पर्शेन हि जना विजानन्ति ।
चरमदशायां रूपादिगुणेषु च तत्र सत्स्वपि च ॥ ९७ ॥
नैवोपलभ्यतेऽसौ जीवदवसरेऽवगम्यते सोऽयम् ।
तस्मात्सिद्धशरीरव्यतिरिक्तसमाश्रितोऽयमिति सिद्धम् ॥ ९८ ॥
श्रुतिरुष्ण एव जीविष्यन्नित्याद्याऽपि दर्शयत्येवम् ।

प्रतिषेधादिति चेन्न शारीरात् ॥ १२ ॥

आत्यन्तिकेऽमृतत्वे गत्युत्क्रान्त्योरभाव उपदिष्टः ॥ ९९ ॥
पूर्वत्र चानुपोष्येत्यनेन केनापि हेतुनाऽत्र पुनः ।
आशङ्क्य प्रतिषेधति तामेतामुत्तरत्र सूत्रेण ॥ १०० ॥
इह चाथाकामयमानो योऽकाम य इति दृश्यते वाक्यम् ।
काण्वश्रुतौ हि तत्र च य आत्मकामः स आप्तकामः स्यात्॥१०१॥
यदि भवति चाऽऽप्तकामो निष्कामः स्यात्ततो ह्यकामः स्यात् ।
ईदृगकामयमानस्तस्योत्क्रामन्ति नैव हि प्राणाः ॥ १०२ ॥
ब्रह्मैव सन्स विद्वान्ब्रह्माप्येतीति चोपदिष्टं हि ।
पूर्णानन्दात्मा यः स चाऽऽत्मकामोऽयमाप्तकामस्तु ॥ १०३ ॥
प्राप्तपरानन्दो यो निष्कामोऽव्यक्तवासनारहितः ।
सोऽयमकामो यश्च व्यक्तबहिष्कामविरहितो भवति ॥ १०४ ॥
इह परविद्याविषयात्प्रतिषेधान्न परमात्मतत्त्वविदः ।
प्राणानामुत्क्रान्तिर्देहादस्तीति चेन्न चैवं स्यात् ॥ १०५ ॥
प्रतिषेधोऽयं यस्मान्न शरीराद्भवति किंतु शारीरात् ।
अवगम्यते न तस्मात्प्राणा इति पञ्चमीप्रयोगेण ॥ १०६ ॥
काण्वश्रुतौ हि दृष्टा षष्ठी संबन्धमात्रविषयैव ।
शाखान्तरगतया पञ्चम्या सा भवति तद्विशेषपरा ॥ १०७ ॥

तस्मादिति तच्छब्देनाभ्युदयाद्यधिकृतो हि यो देही ।
संबध्यते स एव प्राधान्यान्न तु कदाचिदपि देहः ॥ १०८ ॥
नोत्क्रामन्ति प्राणास्तस्मादुच्चिक्रमिषत इह जीवात् ।
तेन सहैव भवन्तीत्यर्थस्तस्मात्प्रतीयते वाक्यात् ॥ १०९ ॥
भवति हि सप्राणस्य प्रवसत एतस्य सेयमुत्क्रान्तिः ।
देहादेतस्मादित्याक्षेपमिमं निराकरोतीह ॥ ११० ॥

## स्पष्टो ह्येकेषाम् ॥ १३ ॥

यच्चोक्तमिह परब्रह्मविदोऽप्युत्क्रान्तिरियमतो देहात् ।
प्रतिषेधो यश्चायं स देह्युपादान एव भवतीति ॥ १११ ॥
तदिदमयुक्तं वक्तुं देहापादान एव यत एषः ।
उत्क्रान्तिप्रतिषेधस्तथैव किल शाखिनामिहैकेषाम् ॥ ११२ ॥
उपलभ्यते हि सम्यक्स एव खल्वार्तभागसंप्रश्ने ।
यत्रायं पुरुष इति प्रक्रान्ते पुरुष एष देहः स्यात् ॥ ११३ ॥
अस्माद्देहात्प्राणा उत्क्रामन्त्युत न वेति तत्प्रश्ने ।
नेत्याह याज्ञवल्क्य इतीहानुत्क्रान्तिपक्षमालभ्य ॥ ११४ ॥
प्राणेषु तर्ह्यनुत्क्रान्तेषु क्व मृतोऽयमिति पुनः प्रश्ने ।
अत्रैव समवलीयन्त इति हि तत्प्रविलय प्रतिज्ञाय ॥ ११५ ॥
तत्सिद्ध्यै स उच्छ्वयतीति चाऽऽरभ्य दर्शितं श्रुत्या ।
उच्छ्वयत्याध्मायति चाऽऽध्मातः सन्मृतः स शेत इति ॥११६॥
इह बाह्यवायुपूरणबलेन देहाभिवृद्धिरुच्छ्वयनम् ।
आध्मानमार्द्रभरीवदेव देहस्य शब्दकारित्वम् ॥ ११७ ॥
स इति परामृष्टस्योत्क्रान्त्यवधेः पुरुषशब्दवाच्यस्य ।
देहस्यैवोच्छ्वयनादीनि स्युर्देहिनो न चैतानि ॥ ११८ ॥
तस्मादत्र न तस्मात्प्राणा इति पञ्चमीप्रयोगेऽपि ।
तत्सामान्याद्देहात्मनोरभेदोपचारमात्रेण ॥ ११९ ॥
देहापादानस्योत्क्रमणस्यैव हि भवेन्निषेधोऽयम् ।
यद्यपि देहिन एव प्राधान्यं भाति पञ्चमीपाठे ॥ १२० ॥
षष्ठीपाठे तु पुनर्विद्वत्संबन्धिनीयमुत्क्रान्तिः ।
प्रतिषिध्यत इत्येतत्प्रतीयते तावता क्षतिर्नेह ॥ १२१ ॥

प्राप्तोत्क्रान्तिप्रतिषेधार्थत्वादस्य निगमवाक्यस्य ।
देहापादानैषा प्रतिषिद्धा स्यान्न देह्युपादाना ॥ १२२ ॥
इह देहादुत्क्रान्तिः प्राप्ता न तु देहिनः क्वचिद्वाऽपि ।
अपि चेह चक्षुषो वा मूर्ध्नो वेत्यादिनेदमुत्क्रमणम् ॥ १२३ ॥
आदिश्य सप्रपञ्चमविद्वद्विषयं प्रपञ्चगमनं च ।
इति कामयमान इति ह्युपसंहृत्य च कथामिहाविदुषः ॥ १२४ ॥
विद्वांसं पुनरत्राथाकामयमान इति परामृश्य ।
उत्क्रान्तिमेव यदि तद्विषयेऽपि प्रापयेदिदं वाक्यम् ॥ १२५ ॥
असमञ्जस एव स्याद्व्यपदेशः सकल एव तत्रत्यः ।
तेनाविद्वद्विषये गत्युत्क्रान्त्योः प्रसक्तयोरत्र ॥ १२६ ॥
विद्वद्विषये प्रतिषेध इति व्यपदेशसार्थकत्वाय ।
व्याख्येयमिह न च ब्रह्मविदः सर्वात्मतां प्रसन्नस्य ॥ १२७ ॥
प्रक्षीणकामकर्मण उत्क्रान्तिर्गतिरपीयमुपपन्ना ।
उत्क्रान्तौ च गतौ वा न निमित्तं तस्य विद्यते किंचित् ॥१२८ ॥
अत्र ब्रह्म समश्नुत इत्याद्या अपि भवन्ति याः श्रुतयः ।
ताः किल गत्युत्क्रान्त्योरभावमुपदर्शयन्ति चाऽऽत्मविदः ॥१२९॥

स्मर्यते च ॥ १४ ॥

इह भारतेऽपि विदुषो गत्युत्क्रान्त्योरभाव एवेति ।
अपदस्य पदैषिण इत्येवं हि स्मर्यतेऽयमेवार्थः ॥ १३० ॥
ब्रह्मविदोऽपि गतिर्नन्वत्र किल स्मर्यते शुकाचार्यः ।
वैयासकिर्मुमुक्षुर्भास्करमण्डलमभिप्रतस्थ इति ॥ १३१ ॥
मैवं सशरीरस्यैवायं किल योगबलसहायेन ।
भास्करमण्डलसंप्राप्तिपुरःसरमस्य तनुविसर्ग इति ॥ १३२ ॥
वक्तव्यमस्य यस्माद्दर्शितमिह सर्वभूतदृश्यत्वम् ।
न ह्यशरीरं यान्तं द्रष्टुमिमं शक्नुवन्ति भूतानि ॥ १३३ ॥
उपसंहृतमेवं किल तत्रैव शुकस्तु मारुताच्छीघ्राम् ।
गतिमन्तरिक्षगोऽसौ कृत्वा स ततश्च दर्शयित्वैनम् ॥ १३४ ॥
आत्मप्रभावमखिलं जगाम सर्वात्मभावमयमिति हि ।
तस्माद्गतिश्रुतीनां विषयोऽग्रे वक्ष्यमाण एव स्यात् ॥ १३५ ॥

तानि परे तथा ह्याह ॥ १५ ॥

यानि प्राणपदेन प्रदर्शितानीन्द्रियाणि भूतानि ।
तानि ब्रह्मविदस्तस्मिन्परमात्मनि प्रलीयन्ते ॥ १३६ ॥
श्रुतिरत्र चैवमेवास्य परिद्रष्टुरिति बोधयत्येवम् ।
नन्विह गताः कलाः पञ्चदशेत्याद्या श्रुतिः परा येयम् ॥ १३७ ॥
सा हि परस्मादन्यत्रापि कलानां लयं प्रदर्शयति ।
मैवं सा व्यवहारापेक्षा खलु पार्थिवादिका हि कलाः ॥ १३८ ॥
स्वप्रकृति(ती) रेव पृथिव्यादीरपियन्ति हीति दर्शयति ।
एषा परमार्थाभिप्राया ब्रह्मणि कलालयं ब्रूते ॥ १३९ ॥

अविभागो वचनात् ॥ १६ ॥

विदुषो योऽसौ हि कलाप्रलयः प्रतिपादितः स चायमिह ।
किं सावशेष इतरेषामिव किंवा स निरवशेष इति ॥ १४० ॥
संदेहे लयसाम्यादिह शक्त्यवशेषताप्रसक्तौ हि ।
अविभागो वचनादिति लयमेतं निरवशेषमुपदिशति ॥ १४१ ॥
ब्रह्मविदोऽस्य कलानामविभागापत्तिरेव युक्ता स्यात् ।
यत इह वचनादस्मात्परमविभागः प्रतीयते तासाम् ॥ १४२ ॥
इह च कलालयमुक्त्वा भिद्येते एवमादिना ब्रूते ।
आसां हि नामरूपे भिद्येते प्रोच्यते हि पुरुष इति ॥ १४३ ॥
एषोऽकलोऽमृतो भवतीति च पुरुषोऽकलोऽयमत्रोक्तः ।
अत्राविद्याजनितानां च कलानां न विद्यया जनिते ॥ १४४ ॥
प्रलये पुनरेतस्मिन्स्याच्छक्त्यवशेषता कथंचिदपि ।
तस्मादत्र कलानामविभागापत्तिरेव युक्ता स्यात् ॥ १४५ ॥

तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्या-
सामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दा-
नुगृहीतः शताधिकया ॥ १७ ॥

इह परविद्याचिन्तां समाप्य तत्र प्रसङ्गतः प्राप्ताम् ।
चिन्तामधुना परविद्याविषयां पुनरिहानुवर्तयति ॥ १४६ ॥
विद्वदविदुषोरासृत्युपक्रमात्किल समेति चोत्क्रान्तिः ।
प्रागभिहितं तमेवेदानीमासृत्युपक्रमं ब्रूते ॥ १४७ ॥

उपसंहृतवागादिकलापस्योच्चिक्रमिषत एतस्य ।
विज्ञानात्मन ओको ह्यायतनं हृदयमेव नान्यदिति ॥ १४८ ॥
दर्शयतीह स एतास्तेजोमात्रा इति श्रुतिः सेयम् ।
तस्य च हृदयस्याग्रं प्रथमं प्रद्योतते ततश्चायम् ॥ १४९ ॥
चक्षुष्प्रभृतिद्वारा निष्क्रामति तत्प्रकाशितद्वारः ।
इति चक्षुराद्यपादानामुत्क्रान्तिं प्रदर्शयत्येषा ॥ १५० ॥
हृदयस्याग्रं प्रद्योतत इत्याद्या श्रुतिर्हि सा किमिह ।
विद्वदविदुषोर्हि समा किंवा विदुषो विशेष इह कश्चित् ॥ १५१॥
इति विचिकित्सायां श्रुत्यविशेषादनियमोऽत्र युक्त इति ।
एवं प्राप्ते ब्रूते हृदयप्रद्योतने समानेऽपि ॥ १५२ ॥
अपि तत्प्रकाशितद्वारत्वे तुल्ये स एष विद्वांस्तु ।
मूर्धस्थानादेव हि निष्क्रामति नेतरेभ्य इति यस्मात् ॥ १५३ ॥
विद्यासामर्थ्यं किल दृष्टं तस्यैव नेतरस्य पुनः ।
इतरवदेव हि विद्वान्यतः कुतश्चित्प्रदेशतोऽपि यदि ॥ १५४ ॥
उत्क्रामेत्स तदाऽयं नोत्कृष्टं लोकमत्र विन्देत ।
एवं चेत्तर्हीयं विद्या सर्वाऽप्यनर्थिकैव स्यात् ॥ १५५ ॥
तच्छेषगत्यनुस्मृतियोगाच्च गतिर्विलक्षणाऽस्य स्यात् ।
विद्याशेषत्वेन च गतिरिह मूर्धन्यनाडिकाद्वारा ॥ १५६ ॥
अनुशीलयितव्या सा विहिता विद्याविशेषविषये हि ।
तामभ्यसंस्तयैव प्रतितिष्ठत एष इति तु युक्तमिह ॥ १५७ ॥
तस्मादुपासितेन हि परात्मना हृदयसंस्थितेनायम् ।
परमनुगृहीत एव हि विद्वांस्तद्भावमिह समापन्नः ॥ १५८ ॥
मूर्धन्ययैकशततमनाड्या निष्क्रामतीतराभ्योऽन्ये ।
शतमित्याद्या श्रुतिरप्येवं दर्शयति हार्दविद्यायाम् ॥ १५९ ॥

## रश्म्यनुसारी ॥ १८ ॥

अस्ति किल हार्दविद्या दहरोऽस्मिन्नन्तरिति समाम्नाता ।
सा चाथ यदिदमस्मिन्ब्रह्मपुर इति प्रपञ्चिता भूयः ॥ १६० ॥
तत्प्रकरण एव ह्यथ या एता इत्यधीत्य तत्र पुनः ।
नाडीरश्मिपुरःसरसंबन्धं सप्रपञ्चमभिधाय ॥ १६१ ॥
यत्रैतदिति तथैव च तयोर्ध्वमित्यादिवाक्यमाम्नातम् ।
उत्क्रमणमेतदस्य प्रारब्धान्ते यदा भवेत्तर्हि ॥ १६२ ॥

नाडीगतरश्मिभिरेवैतैरुत्क्रामतीति तत्रोक्तम् ।
तस्मादत्र शताधिकनाड्या विद्वानसौ हि निष्क्रामन् ॥ १६३ ॥
रश्म्यनुसारेणैव हि निष्क्रामत्येष इति तु युक्तमिह ।
तत्किं रश्म्यनुसारित्वं रात्रावहनि चाविशेषेण ॥ १६४ ॥
म्रियमाणस्यास्य स्यात्किंवाऽहन्येव तदिति संदेहे ।
अविशेषश्रवणात्खल्वविशेषेणैव वर्ण्यते तदिदम् ॥ १६५ ॥

निशि नेति चेन्न संबन्धस्य याव-
द्देहभावित्वाद्दर्शयति च ॥ १९ ॥

अहनि च नाडीरश्म्योः संबन्धोऽस्तीति युक्तमेतत्स्यात् ।
अहनि मृतस्य च रश्म्यनुसारित्वं न तु भवेदिदं रात्रौ ॥ १६६ ॥
विच्छिद्यते हि यस्मान्नाडीरश्म्योर्हि तत्र संबन्धः ।
रात्रौ मृतस्य तस्मान्न हि रश्म्यनुसारितेति चेन्नैवम् ॥ १६७ ॥
भवति हि यावद्देहं नाडीरश्म्योः स एष संबन्धः ।
श्रुतिरेषाऽमुष्मादादित्यादित्येतमर्थमुपदिशति ॥ १६८ ॥
ये नाडीषु च सृप्ता रश्मय इह सन्ति ते किलाऽऽदित्यात् ।
अस्माल्लब्धविकासा आभ्यो नाडीभ्य एवमेवैते ॥ १६९ ॥
आदित्ये किल सृप्तास्तथा प्रतायन्त इति हि तत्रोक्तम् ।
उपलभ्यते निशास्वपि निदाघकाले च सूर्यकिरणानाम् ॥१७०॥
अनुवृत्तिस्तत्र यतो रात्रौ तापादि दृश्यते भूयः ।
स्तोकानुवृत्तितः स्याद्दुर्लक्ष्यत्वं तदन्यरजनीषु ॥ १७१ ॥
शैशिरदिवसेष्विव दुर्दिनेषु दुर्लक्ष्यता भवेदत्र ।
अहरेवैतद्रात्रौ विदधातीति श्रुतिर्ब्रवीत्येवम् ॥ १७२ ॥
यदि रात्रिमृतो विद्वान्रश्म्यनुसरणं विना क्रमेदूर्ध्वम् ।
भवति हि रश्म्यनुसारानर्थक्यं तत्र तच्च दुर्वारम् ॥ १७३ ॥
न ह्यत्र यो दिवैव प्रैति स रश्मीनपेक्ष्य चाऽऽक्रमते ।
ऊर्ध्वं हि यस्तु रात्रौ प्रैत्यनपेक्ष्यैव स इति युक्तं स्यात् ॥ १७४ ॥
अथ विद्वानपि नोर्ध्वं यदि रात्रिप्रायणापराधेन ।
आक्रमते सा पाक्षिकफलेति तत्राप्रवृत्तिरेव स्यात् ॥ १७५ ॥
मृत्योरनियतकालत्वात्तस्य दिवैव मृत्युरित्यपि न ।
अथ विद्वान्रात्रावपि मृतोऽहरागममसावुदीक्षेत ॥ १७६ ॥

अहरागमेऽपि विदुषः शरीरमिह पावकादिसंस्कारात् ।
न भवति हि रश्मिसंबन्धार्हमतो नाऽऽक्रमेदसावूर्ध्वम् ॥ १७७ ॥
किंच स यावत्क्षिप्येन्मन इति दर्शयति तदनु दीक्षां हि ।
तस्मादविशेषेणाहनि रात्रौ वाऽस्य रश्मिसबन्धः ॥ १७८ ॥

अतश्चायनेऽपि दक्षिणे ॥ २० ॥

यत इह नैवोदीक्षा न पाक्षिकफला च भवति विद्येयम् ।
मृत्युर्न नियतकालस्तस्मादयनेऽपि दक्षिणे विद्वान् ॥ १७९ ॥
म्रियमाणः स कदाचिद्विद्याफलमखिलमपि समाप्नोति ।
या चोत्तरायणमृतिप्राशस्त्यप्रथितिरपि च भीष्मस्य ॥ १८० ॥
यच्चोत्तरायणस्य प्रतीक्षणं नैजतनुविसर्गार्थम् ।
आपूर्यमाणपक्षाद्यानित्याद्या श्रुतिश्च येयमिह ॥ १८१ ॥
एतेभ्यो हेतुभ्यस्तनुपाते चोत्तरायणं हीदम् ।
आवश्यकमिति शङ्का सूत्रेण निरस्यते हि सूत्रकृता ॥ १८२ ॥
या चोत्तरायणमृतिप्राशस्त्यस्य प्रसिद्धिरिह कथिता ।
सा चाविद्वद्विषया भीष्मस्य च यत्प्रतीक्षणं तदपि ॥ १८३ ॥
आचारप्रतिपालनरूपफलार्थं पितृप्रसादेन ।
लब्धस्वेच्छामृत्युं प्रख्यापयितुं च भवति नान्यार्थम् ॥ १८४ ॥
यच्चोत्तरायणे स्यान्मरणं तच्च प्रशस्तमज्ञानाम् ।
इत्यभिवदनं प्राज्ञानामाचारोऽत्र भवति न तदन्यः ॥ १८५ ॥
श्रुतिरपि च देवताभिप्राया सा नेह कालमात्रपरा ।
इत्यातिवाहिका इति सूत्रे वक्ष्यति च सूत्रकारोऽयम् ॥ १८६ ॥
ननु यत्र काल इत्यादिस्मृतिवाक्येषु काल एवायम् ।
अहरादिकः प्रधानत्वेनानावृत्तये विनिर्दिष्टः ॥ १८७ ॥
कथमिह विद्वान्रात्रौ किंवाऽसौ दक्षिणायने वाऽपि ।
प्रेतोऽनाऽवृत्तिमिमां यायादित्यत इदं पठत्यत्र ॥ १८८ ॥

योगिनः प्रति[च]स्मर्यते स्मार्ते चैते ॥ २१ ॥

अहरादिकालनियमो योऽयमनावृत्तये स्मृतौ दृष्टः ।
स च योगिनः प्रति स्यात्स्मार्ते चैते हि योगसाख्ये द्वे ॥ १८९ ॥
न श्रौते तेनात्र प्रमाणभेदाच्च विषयभेदाच्च ।
विज्ञानेषु श्रौतेष्ववतारो नास्य भवति कथमपि च ॥ १९० ॥

नन्वग्निर्ज्योतिरहर्धूमो रात्रिरिति चैवमाद्ये हि ।
इह देवयानपितृयाणे श्रौते एव हि प्रतीयेते ॥ १९१ ॥
स्मृतिवाक्येऽपीत्येवं नाऽऽशङ्क्यं येन तत्र तं कालम् ।
वक्ष्यामीति च कालप्रतिज्ञया किल विरोधमाशङ्क्य ॥ १९२ ॥
परिहारोऽयं कथितो यदा पुनः स्मृतिषु देवता एव ।
अग्न्याद्यभिमानिन्यो गृह्यन्ते न हि विरोध इह कश्चित् ॥१९३॥
शारीरकमीमांसा मुनिना व्यासेन विरचिता सेयम् ।
चतुरध्यायी तस्यां चतुर्थसंज्ञश्च योऽयमध्यायः ॥ १९४ ॥
तत्र द्वितीयपादे सूत्रार्थो यश्च भाष्यकारोक्तः ।
आर्यावृत्तैरमलैः प्रकाशितो भवतु सोऽयमनवद्यः ॥ १९५ ॥

इति श्रीभाष्यार्थरत्नमालायां चतुर्थाध्यायस्य
द्वितीयः पादः समाप्तः ॥ २ ॥

---

अथ तृतीयपादः ॥

---

## अर्चिरादिना तत्प्रथितेः ॥ १ ॥

एवं हि पूर्वपादे निरूपितोत्क्रान्तिरत्र तत्साध्यम् ।
गन्तव्यं किल मार्गं दर्शयितुं पादमेतमारभते ॥ १ ॥
आसृत्युपक्रमादियमुत्क्रान्तिर्विद्वदविदुषोस्तुल्या ।
इत्युक्तमासृतिः सा ह्यनेकधा श्रूयते श्रुतिष्वासु ॥ २ ॥
नाडी रश्मियुतैकाऽथैतैरेवेतिवाक्यनिर्दिष्टा ।
अपराऽर्चिरादिकाऽपि हि तेऽर्चिषमित्यादिवाक्यविख्याता ॥ ३ ॥
भवतीह देवयानं पन्थानमिति श्रुतिप्रसिद्धैका ।
अन्या त्वस्माल्लोकात्प्रैति स वायुमिति वाक्यतो दृष्टा ॥ ४ ॥
अपरा सूर्यद्वारेणेत्यादिश्रुतिनिरूपिता तत्र ।
किमिह परस्परभिन्ना एताः सृतयो भवन्ति किंवाऽत्र ॥ ५ ॥
एकैवानेकविशेषणाऽऽसृतिरितीह संशयो भवति ।
तत्रैतत्स्यात्सृतयो भिन्ना एवेति यत इमाः स्मृतयः ॥ ६ ॥
भिन्नोपासनशेषा भिन्नप्रकरणगताश्च लक्ष्यन्ते ।
अपि चाथैतैरेवेत्यवधारणमर्चिराद्यपेक्षायाम् ॥ ७ ॥

उपमृद्येत तथैव त्वरावचनमेतदपि च पीड्येत ।
इह च स यावत्क्षिप्येन्मन इत्यादित्वरावचो दृष्टम् ॥ ८ ॥
तस्मादेताः सृतयो भिन्ना एवेत्यतस्त्विदं पठति ।
ब्रह्म प्रेप्सुः सर्वोऽर्चिरादिनैवाध्वनोर्ध्वमाक्रमते ॥ ९ ॥
इति तु प्रतिजानीते तत्प्रथितेरिति च भवति हेतुरिह ।
सर्वेषामपि विदुषां प्रथितोऽसावर्चिरादिको मार्गः ॥ १० ॥
ये चेमेऽरण्य इति श्रुतौ हि विद्यान्तरावलम्बानाम् ।
पञ्चाग्न्युपासकानामिवार्चिराद्या गतिः समाम्नाता ॥ ११ ॥
स्यादेतदत्र यासु च विद्यासु न काचिदपि गतिः पठिता ।
तास्वर्चिरादिकैव हि गतिरियमुपतिष्ठतां हि यासु पुनः ॥ १२ ॥
श्रूयत एवान्या विद्यासु किमित्यर्चिरादिकाश्रयणम् ।
इति चेद्भवेदिहैवं सृतय इमा यदि परस्परं भिन्नाः ॥ १३ ॥
एकैवानेकविशेषणाऽऽसृतिर्ब्रह्मलोकपदवीयम् ।
क्वचिदिह केनचिदेव हि विशेषणेनोपलक्षिता भवति ॥ १४ ॥
सर्वत्र चैकदेशाभिज्ञानाद्बहुविशेषणा सेयम् ।
भवतीयमेकरूपाऽऽसृतिर्विशेषणविशेष्यभावेन ॥ १५ ॥
प्रकरणभेदेऽपि यथा विद्यैकत्वाद्गुणोपसंहारः ।
भवति हि तद्वत्प्रकृते स्यादेवं विशेषणोपसंहारः ॥ १६ ॥
विद्याभेदेऽपि यतोऽभिन्ना सर्वत्र चैकदेशस्य ।
गन्तव्याभेदादपि भवति परं गत्यभेद एवात्र ॥ १७ ॥
या ब्रह्मणो जितिर्या व्युष्टिस्तां जितिमिति श्रुतिश्चापि ।
विद्याफलं तदेकं ब्रह्मप्राप्तिस्वरूपमुपदिशति ॥ १८ ॥
यच्चाथैतैरेवेत्यवधारणमत्र दर्शितं तदपि ।
रात्रौ मृतस्य विदुषो रश्म्यप्राप्तौ हि तन्निरासार्थम् ॥ १९ ॥
तत्रापि रश्मियोगं प्रपञ्चयितुमेव न पुनरन्यस्य ।
व्यावृत्त्यर्थं तत्स्यान्न च सकृदुक्तोऽयमेवकारोऽत्र ॥ २० ॥
रश्मींश्च प्रापयितुं निवर्तयितुमर्चिरादिकांश्च तथा ।
अर्हति तस्मादत्रावधार्यते स खलु रश्मिसंबन्धः ॥ २१ ॥
यत्तु स यावत्क्षिप्येन्मन इत्यादित्वरावचस्तदपि ।
गतिषु यथैव हि लोके भवति विलम्बो य एष लोककृतः ॥२२॥

नैवार्चिरादिकेऽध्वनि भवति स एष इति बोधनार्थं स्यात् ।
लोके निमेषमात्रेणाऽऽगच्छन्तीति वाक्यविन्यासे ॥ २३ ॥
नैव हि निमेषमात्रेणाऽऽगमने तत्र भवति तात्पर्यम् ।
किंतु विलम्बाभावे तद्वदिहापीति तदिदमविरुद्धम् ॥ २४ ॥
इह खल्वथैतयोरित्याद्या मार्गद्वयच्युतानां हि ।
कष्टं तृतीयमेषा स्थानं संकीर्त्य देवयानमिमम् ॥ २५ ॥
पितृयाणव्यतिरिक्तं पन्थानं ह्यर्चिरादिपर्वाणम् ।
प्रथयति तमेकमेव श्रुतिस्मृतीयानुवर्णनेनेह ॥ २६ ॥
अपि चार्चिरादिविषयसृतौ हि भूयांसि मार्गपर्वाणि ।
श्रूयन्ते पुनरन्यत्राल्पीयास्येव तानि पर्वाणि ॥ २७ ॥
भवतीह भूयसामनुगुणभावेनैव नयनमन्येषाम् ।
न्याय्यतरं तस्मादिह युक्तं स्यादर्चिरादिनेत्यादि ॥ २८ ॥

वायुमब्दादविशेषविशेषाभ्याम् ॥ २ ॥

केनेह संनिवेशविशेषेण च गतिविशेषणानां हि ।
स्यादन्योन्यविशेषणविशेष्यभाव इति तदिदमाचार्यः ॥ २९ ॥
ग्रथयति हि वायुमब्दादितिसूत्रेण स्वयं सुहृद्भूत्वा ।
इह पठ्यते हि पन्थाः स एतमिति देवयानसंज्ञोऽसौ ॥ ३० ॥
कौषीतकिनां तत्र हि स चाग्निलोकं स वायुलोकमिति ।
स वरुणलोकं च तथेन्द्रलोकमपि स प्रजापतेर्लोकम् ॥ ३१ ॥
स ब्रह्मलोकमिति च क्रमोऽयमुपलभ्यते हि तत्र किल ।
यावर्चिरग्निशब्दौ तुल्यार्थौ ज्वलनवाचकौ तौ हि ॥ ३२ ॥
नैवेह संनिवेशक्रमोऽयमन्विष्यते क्वचित्कश्चित् ।
वायुस्त्विहार्चिरादौ वर्त्मनि न श्रूयते स कस्मिन्वा ॥ ३३ ॥
स्थाने निवेशनीयः स्यादित्यत उक्तमत्र सूत्रकृता ।
तेऽर्चिषमेवेत्यस्मिन्नर्चिरनन्तरमहर्विनिर्दिश्य ॥ ३४ ॥
आपूर्यमाणपक्षं तत उदगयनादिकांश्च षण्मासान् ।
तेभ्यः संवत्सरमपि तत आदित्यमिति दृश्यते तत्र ॥ ३५ ॥
आदित्यादर्वाञ्चं तथैव संवत्सरात्पराञ्चमिमम् ।
वायुमभिसंभवतीत्येवं वायोर्हि संनिवेश इह ॥ ३६ ॥
क्वचिदविशेषविशेषावुपलभ्येते यतस्तयोः श्रुत्योः ।
कौषीतकिवाक्ये किल स वायुलोकमिति चाविशेषेण ॥ ३७ ॥

उपदर्शितस्य वायोर्विशेष उपलभ्यते हि वाक्येऽस्मिन् ।
तदिह यदा वै पुरुषोऽस्माल्लोकात्प्रैति स इति तत्र किल ॥ ३८ ॥
स उपासको हि देहाद्यदि निर्गच्छति स वायुमेति तदा ।
वायुरसावपि तस्मै विजिहीते छिद्रमेष संतनुते ॥ ३९ ॥
रथचक्रबिलसमानं तच्छिद्रं तेन वायुदत्तेन ।
द्वारेण स खलु विद्वानाक्रम्योर्ध्वं तमेतमादित्यम् ॥ ४० ॥
आगच्छतीति दर्शितमत आदित्यात्प्रतीयते वायोः ।
पूर्वत्वमेव तस्मादब्दादित्यन्तराल एवासौ ॥ ४१ ॥
वायुर्निवेशनीयः स्यादिति युक्तमिह सूत्रकारोक्तम् ।
नन्वस्य पुनरिहाग्नेः परत्वदर्शनविशेषतः कस्मात् ॥ ४२ ॥
अचिरनन्तरमेव हि न निविश्यत एष वायुरिति चेन्न ।
नासौ भवति विशेषः स एतमित्यादिके यतो वाक्ये ॥ ४३ ॥
केवल एव हि पाठः स चाग्निलोकं स वायुलोकमिति ।
क्रमवाचको हि शब्दो न कश्चिदिह किल यतः पदार्थानाम् ॥ ४४ ॥
उपलभ्यतेऽनुकीर्तनमात्रं तं तं च गच्छतीत्येवम् ।
रथचक्रबिलसमेन च्छिद्रेण हि वायुना प्रवृत्तेन ॥ ४५ ॥
स च खल्वाक्रम्योर्ध्वं तत आगच्छति तमेतमादित्यम् ।
इत्यवगम्यत एव क्रमोऽयमत इह भवेद्विशेषोऽसौ ॥ ४६ ॥
तस्मादविशेषविशेषाभ्यामिति युक्तमेव सूत्रोक्तम् ।
वाजसनेयिन इह किल मासेभ्यो देवलोकमित्युक्त्वा ॥ ४७ ॥
तस्माच्च देवलोकादादित्यमिमं समामनन्त्यत्र ।
तत्राऽऽदित्यानन्तर्याय पुनर्देवलोकतो वायुम् ॥ ४८ ॥
अभिसंभवेयुरिति वाजसनेयश्रुत्यपेक्षया वाच्यम् ।
यच्चेह वायुमब्दादिति तच्छन्दोगवाक्यमालम्ब्य ॥ ४९ ॥
छन्दोगश्रुतिवाक्ये न देवलोकोऽस्ति वाजिवाक्ये तु ।
संवत्सरो न दृष्टः श्रुतिद्वयप्रत्ययादुभावपि हि ॥ ५० ॥
उभयत्रैव ग्राह्यौ तत्र च मासाब्दयोर्हि संबन्धात् ।
संवत्सरो हि पूर्वस्ततो भवेद्देवलोक इति बोध्यम् ॥ ५१ ॥

तडितोऽधि वरुणः संबन्धात् ॥ ३ ॥

आदित्याच्चन्द्रमसं चन्द्रमसो विद्युतं च निर्दिश्य ।
पश्चाद्ब्रह्मप्राप्तिं प्रथयत्येषा श्रुतिस्तथाऽन्या तु ॥ ५२ ॥

वरुणादिप्राप्तिमपि प्रदर्शयति तत्र तदनुसारेण ।
विद्युत उपरिष्टात्किल वरुणः संबध्यते यतश्च तयोः ॥ ५३ ॥
स्यान्नियतः संबन्धो यदैव हि विशालविद्युतो मेघाः ।
सस्तनितगर्जिता अपि सम्यङ्नृत्यन्ति देवलोकेषु ॥ ५४ ॥
आपः प्रपतन्ति तदेत्येतत्सर्वानुभूतिसिद्धं हि ।
विद्योतते स्तनयतीत्येषा श्रुतिरपि तथैव दर्शयति ॥ ५५ ॥
वरुणश्चापामधिपतिरिति श्रुतिस्मृतिषु सुप्रसिद्धं हि ।
इन्द्रप्रजापती किल वरुणादूर्ध्वं हि संनिवेश्येते ॥ ५६ ॥
स्थानान्तरविरहादपि पाठस्य तथैव दर्शनादपि च ।
आगन्तुकभावादपि वरुणादन्ते हि संनिवेश्यौ तौ ॥ ५७ ॥

आतिवाहिकास्तल्लिङ्गात् ॥ ४ ॥

तेष्वेव चार्चिरादिषु संदेहः पुनरिहैवमवतरति ।
किमिमानि मार्गचिह्नान्याहोस्विद्भोगभूमयः किंवा ॥ ५८ ॥
नेतारो गन्तॄणामित्येवं तत्र युक्तमेतत्स्यात् ।
एते हि मार्गलक्षणभूता एवार्चिरादयः स्युरिति ॥ ५९ ॥
यस्मादुपदेशोऽयं दृश्यत इह तत्स्वरूपपर एव ।
प्रस्थातुकाम इह किल लोके ग्रामं च नगरमपि कश्चित् ॥ ६० ॥
अनुशिष्यते त्वमेतं गच्छ महापर्वतं पुरस्तस्य ।
न्यग्रोधमपि महान्तं ततो नदीं निकट एव तत्परतः ॥ ६१ ॥
ग्रामं च नगरमपि वा स्वाभिमतं प्राप्स्यसीति तद्वदिह ।
तेऽर्चिषमिति हि ततोऽहस्ततः किलाऽऽपूर्यमाणपक्षमिति ॥६२॥
अथवाऽत्र भोगभूमय एवैते स्युरिति युक्तमाभाति ।
यस्माच्च लोकशब्देनैते ह्यग्न्यादयोऽनुबध्यन्ते ॥ ६३ ॥
अत्राग्निमागच्छतीति वाक्ये हि लोकशब्दोऽयम् ।
भोगायतनेष्वेव प्राणिनिकायस्य भाष्यते हि परम् ॥ ६४ ॥
वेदे मनुष्यलोकः पितृलोको देवलोक इत्यादौ ।
अन्यत्राहोरात्रेष्वित्यादौ दृश्यते तथैवायम् ॥ ६५ ॥
तस्मादिहार्चिरादय एते नैवाऽऽतिवाहिकाः किंच ।
तेषामचेतनत्वादपि नैवात्राऽऽतिवाहिकत्वं स्यात् ॥ ६६ ॥
लोके हि चेतनाः किल राजनियुक्ता भवन्ति ये शूराः ।
मार्गेषु दुर्गमेष्वतिवाह्यानतिवाहयन्ति ते नान्ये ॥ ६७ ॥

एवं प्राप्ते ब्रूते ते खल्वत्राऽऽतिवाहिकाः स्युरिति ।
अत्र च तल्लिङ्गादिति यथोपदिष्टार्थसाधको हेतुः ॥ ६८ ॥
इह चन्द्रमसो विद्युतमित्येतदनन्तरं समाम्नातम् ।
तत्पुरुषोऽमानव इति वाक्यं हि ब्रह्म गमयतीत्यन्तम् ॥ ६९ ॥
तेन प्रतीयते खल्वमानवस्योत्तरत्र गमयितृता ।
गमयितृतानिर्देशात्सिद्धं तस्याऽऽतिवाहिकत्वमपि ॥ ७० ॥
तत्सामान्यादग्न्यादयो भवन्त्यातिवाहिकाः पूर्वम् ।
ननु तत्पुरुषोऽमानव इति वचनममानवस्य पुरुषस्य ॥ ७१ ॥
गमयितृतापरमेव हि नाग्न्यादीनां तथेति चेन्मैवम् ।
संप्राप्तमानवत्वनिवृत्तिपरत्वाद्विशेषणस्यास्य ॥ ७२ ॥
यद्यर्चिरादिपर्वसु पुरुषा एतेषु गमयितारः स्युः ।
ते मानवास्तदेवाऽऽवश्यकमेतद्धि तन्निवृत्त्यर्थम् ॥ ७३ ॥
यदिदममानव इति किल पुरुषविशेषणमिहोपदिष्टं हि ।
ननु न हि लिङ्गं गमकं न्यायाभावादतस्त्विदं पठति ॥ ७४ ॥

उभयव्यामोहात्तत्सिद्धेः॥ ५ ॥

ये त्वर्चिरादिमार्गोपगतास्ते किल शरीरविगमेन ।
मुकुलितकरणग्रामा न च स्वतन्त्रा भवन्ति गत्यादौ ॥ ७५ ॥
ये त्वर्चिरादयस्तेऽप्यचेतना एव न स्वतन्त्राः स्युः ।
तस्मादिहार्चिराद्यभिमानिन एते हि चेतना देवाः ॥ ७६ ॥
अतियात्रायामस्यां नियोजिता इति भवेद्यवस्थेह ।
इह मत्तमूर्च्छिताद्या अपि लोके विकलकरणपरिवाराः ॥७७॥
केवलपरप्रयुक्ताध्वानो दृष्टाः परत्र किमुतैते ।
न हि मार्गलक्षणत्वं कथमप्यत्रार्चिरादिकानां स्यात् ॥ ७८ ॥
अनवस्थिता यतस्ते रात्रौ प्रेतस्य न हि कथंचिदपि ।
भवति ह्यहःस्वरूपप्राप्तिर्न च तत्प्रतीक्षणं वाऽस्ति ॥ ७९ ॥
इत्येतदुक्तमेव न दोषोऽयं भवति देवतापक्षे ।
यस्माद्ध्रुवा हि देवास्त एव चेहार्चिरादिपदवाच्याः ॥ ८० ॥
तेषां च तदभिमानात्तच्छब्दार्थत्वमुचितमेवेह ।
किंचार्चिषोऽहरिति निर्देशः खल्वातिवाहिकत्वेऽपि ॥ ८१ ॥
न विरुध्यते कथंचित्तच्छब्दात्तदभिमानिनो ग्रहणे ।
लोकेऽपि दृश्यते हि प्रख्यातेष्वातिवाहिकेषु पुनः ॥ ८२ ॥

एवंविध उपदेशो गच्छ त्वमितश्च कृष्णगुप्तमिति ।
गच्छ ततो जय सिंहं बलवर्माणं ततश्च गच्छेति ॥ ८३ ॥
अपि चोपक्रमवाक्ये तेऽर्चिषमित्यादिना समाम्नातः ।
संबन्धमात्रमेव हि न तद्विशेषोऽत्र कश्चिदुपदिष्टः ॥ ८४ ॥
उपसंहारे तु स एतानित्यादौ विशेष इह दृष्टः ।
गमयितृशब्दबलेन च स चातिवाह्यातिवहनरूपः स्यात् ॥ ८५ ॥
तेन ह्युपक्रमेऽपि च स एव निर्णीयते न चान्योऽपि ।
उपसंहृतकरणत्वान्न तत्र भोगो भवेत्किलैतेषाम् ॥ ८६ ॥
तत्रानुपभुञ्जानेष्वपि गन्तृषु गमयितुं भवेच्छक्यः ।
सोऽयं हि लोकशब्दस्तत्रान्येषां यतश्च भोगः स्यात् ॥ ८७ ॥
एवं चाग्निस्वामिकलोकं गत्वाऽग्निनाऽतिवाह्येत ।
वायुस्वामिकलोकं गत्वैवं वायुनेति योज्यमिह ॥ ८८ ॥
नन्वातिवाहिकत्वं यद्येतेषां तदा हि वरुणादौ ।
तत्कथमुपपन्नं स्याद्वरुणादन्यो यतोऽत्र निर्दिष्टः ॥ ८९ ॥
आ ब्रह्मप्राप्तेः किल विद्युदनन्तरममानवः पुरुषः ।
तस्यैव गमयितृत्वं श्रुतमित्यत एतदुत्तरं पठति ॥ ९० ॥

वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ६ ॥

विद्युत्प्राप्तेरूर्ध्वं विद्युदनन्तरमवस्थितेन पुनः ।
केनाप्यमानवेनातिवाह्यमाना हि वरुणलोकाद्यौ ॥ ९१ ॥
ते ब्रह्मलोकमेतं गच्छन्तीत्येवमत्र निष्कर्षः ।
विद्युल्लोकप्राप्तो वैद्युत इति गृह्यते हि सूत्रेऽस्मिन् ॥ ९२ ॥
तान्वैद्युतादिति श्रुतिवाक्ये वैद्युतपदं हि लोकपरम् ।
तान्वैद्युताद्धि लोकादमानवोऽभ्येत्य गमयति ब्रह्म ॥ ९३ ॥
इत्येतच्छ्रुतिवाक्यादमानवस्यैव गमयितृत्वमिह ।
वरुणादयस्तु तस्यैवानुपरोधेन वा सहायेन ॥ ९४ ॥
केनापि हेतुना ते भवन्त्यनुग्राहका इति ज्ञेयम् ।
तस्मादिहार्चिरादय एते खल्वातिवाहिका एव ॥ ९५ ॥

कार्यं बादरिरस्य गत्युपपत्तेः ॥ ७ ॥

एवं निरूप्य मार्गं गन्तव्यं ब्रह्म चिन्तयत्यधुना ।
श्रुतिवाक्येन स एतान्ब्रह्म गमयतीति दर्शितं तत्र ॥ ९६ ॥

किं कार्यमपरमेव ब्रह्म गमयतीह किं परं ब्रह्म ।
यच्चाविकृतं सर्वोपनिषत्प्रतिपाद्यमिति तु संदेहः ॥ ९७ ॥
स्याद्ब्रह्मशब्दयोगाद्गतिश्रुतेर्दर्शनाच्च तत्र किल ।
कार्यं सगुणं ब्रह्मैवैनान्गमयत्यमानवः पुरुषः ॥ ९८ ॥
इति मन्यते हि बादरिराचार्यो युक्तमेतदेव यतः ।
गन्तव्यत्वमिहोक्तं तदिदं कार्यस्य नेतरस्य स्यात् ॥ ९९ ॥
तस्य प्रदेशवत्त्वात्सर्वगतत्वात्परात्मनो नेयम् ।
गन्तव्यता गतिर्वा गन्तॄणां प्रत्यगात्मरूपत्वात् ॥ १०० ॥

विशेषितत्वाच्च ॥ ८ ॥

ब्रह्माधिष्ठितलोकान्गमयत्येतानमानवः पुरुषः ।
इति निर्दिश्य च लोकाञ्श्रुतिरपरा ब्रह्मणोऽस्य लोकेषु ॥ १०१ ॥
ते शाश्वतीः समा निवसन्तीति यतो विशेषमुपदिशति ।
अत इह या गतिरुक्ता सा कार्यब्रह्मगोचरैव स्यात् ॥ १०२ ॥
बहुवचनलोकशब्दस्तथैव चाऽऽधारसप्तमीश्रवणम् ।
नैव परस्मिन्ब्रह्मणि कथमप्यवकल्पते हि कार्ये तु ॥ १०३ ॥
तदवस्थाभेदेन च भेदात्संभवति सर्वमेवैतत् ।
या चेह संनिवेशविशिष्टा सविकारभोगभूमिः स्यात् ॥ १०४ ॥
लोकश्रुतिरप्येषा तस्यामेवाऽऽञ्जसी न चान्यत्र ।
ब्रह्मैव लोक इति किल गौणी ह्यन्यत्र तदिदमन्याय्यम् ॥ १०५ ॥
किंच परस्मिन्ब्रह्मण्याधाराधेयभावनिर्देशः ।
असमञ्जस एवातो गमनमिदं कार्यविषयमेव स्यात् ॥ १०६ ॥
ननु नायं कार्यपरो नपुंसकब्रह्मशब्द इह भवति ।
कारणपर एव यतः समन्वये दर्शितोऽयमिति चेन्न ॥ १०७ ॥

सामीप्यात्तु तद्व्यपदेशः ॥ ९ ॥

अत्र तुशब्दो योऽसावुक्ताशङ्कानिवर्तनार्थः स्यात् ।
कार्यस्यापि ब्रह्मण इह च परब्रह्मसंनिधानेन ॥ १०८ ॥
स्याद्ब्रह्मशब्दयोगो नात्र विरोधो भवेत्कुतश्चिदपि ।
गन्तव्यत्वन्यायादाधाराधेयभावनिर्देशात् ॥ १०९ ॥
लोकबहुत्वश्रुत्या लक्षणया स खलु कार्यपर एव ।
ब्रह्म परं यच्छुद्धं तदिह किलोपाधियोगमात्रेण ॥ ११० ॥

धर्मैर्मनोमयत्वप्रभृतिभिरुपदिश्यमानमेतैर्हि ।
अपरं ब्रह्मेदमिति व्यपदिश्यत एव केवलं शास्त्रे ॥ १११ ॥
नन्वत्र कार्यमेव ब्रह्म प्राप्यं यदा भवेत्तेषाम् ।
यदनावृत्तिश्रवणं तत्कथमेषामिहोपपद्येत ॥ ११२ ॥
न ह्यन्यत्र परस्माद्ब्रह्मण एषां भवेदनावृत्तिः ।
श्रुतयोऽत्र दर्शयन्त्यर्चिरादिमार्गेण निर्गतानां हि ॥ ११३ ॥
एतेनेति च तेषामिति च तयोर्ध्वमिति चाप्यनावृत्तिः ।
तस्माद्ब्रह्मपदेन हि कार्यग्रहणं न युक्तमिति चेन्न ॥ ११४ ॥

कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥ १० ॥

कार्यब्रह्मपदेऽस्मिँल्लयोन्मुखे तत्पदं गता एते ।
तत्रोत्पन्नज्ञाना हिरण्यगर्भेण तदधिनाथेन ॥ ११५ ॥
प्रतिपद्यन्ते शुद्धं विष्णोः परं पदं हि तेन सह ।
एवं क्रममुक्तिरनावृत्तिश्रुतिवाक्यदर्शिता भवति ॥ ११६ ॥

स्मृतेश्च ॥ ११ ॥

या ब्रह्मणा सहेति स्मृतिरिह साऽप्येतमर्थमुपदिशति ।
तस्मात्कार्यब्रह्मप्राप्तिपरैव हि गतिश्रुतिः सर्वा ॥ ११७ ॥
आशङ्क्य पूर्वपक्ष यमत्र सिद्धान्त एष निर्दिष्टः ।
कार्यं बादरिरित्येतत्सूत्रेण प्रदर्श्यते सपदि ॥ ११८ ॥

परं जैमिनिर्मुख्यत्वात् ॥ १२ ॥

इह जैमिनिराचार्यः परमेव ब्रह्म गमयतीत्येवम् ।
ब्रह्मपदस्य परस्मिन्मुख्यत्वान्मन्यते हि सिद्धान्तम् ॥ ११९ ॥
ब्रह्मपदस्य च मुख्यालम्बनमेतद्भवेत्परं ब्रह्म ।
अपरं गौणं तत्र च मुख्ये संप्रत्ययो भवेन्न्याय्यः ॥ १२० ॥

दर्शनाच्च ॥ १३ ॥

गतिपूर्वकममृतत्वं तयोर्ध्वमायन्निति श्रुतिर्ब्रूते ।
अमृतत्वं च परस्मिन्ब्रह्मण्युपपद्यते न कार्येऽस्मिन् ॥ १२१ ॥
कार्यस्य भवति नाशो यतः श्रुतिर्मर्त्यमल्पमुपदिशति ।
परविषयैवैतेषां कठवल्लीषूपदिश्यते हि गतिः ॥ १२२ ॥
न हि विद्यान्तरपरता कठवल्लीषूपलभ्यते क्वापि ।
अन्यत्रेति च तत्र प्रक्रान्तं ब्रह्म भवति परमेव ॥ १२३ ॥

ब्रह्मश्रुतेः प्रकरणादपि तद्वदिहामृतत्वलिङ्गाच्च ।
गतिरेषा परविषया स्यान्नापरगोचरा कथंचिदपि ॥ १२४ ॥

न च कार्ये प्रतिपत्त्यभिसंधिः ॥ १४ ॥

अपि च प्रजापतेरिदमहं सभां वेश्म तत्प्रपद्य इति ।
प्राणवियोगावसरे संकल्पः स्यादुपासकस्येति ॥ १२५ ॥
कार्यप्राप्त्यभिसंधिश्रुतेर्न गन्तव्यमत्र परमिति चेत् ।
आकाशो हेत्यादौ प्रकृतत्वाद्ब्रह्मणः परस्यैव ॥ १२६ ॥
तद्वद्यशोऽहमित्यादिभिश्च सर्वात्मकत्वनिर्देशात् ।
यस्य च नाम महद्यश इति हि यशोनामताप्रसिद्धेश्च ॥ १२७ ॥
वेश्मप्राप्तिश्चेयं भवति परप्राप्तिलक्षणैवात्र ।
वेश्मप्रतिपत्तिरियं कथमिह गतिपूर्विका भवेदिति चेत् ॥ १२८ ॥
अपरब्रह्मणि वेश्मप्रतिपत्तिरियं हि हार्दविद्यायाम् ।
श्रुत्यैव समुपदिष्टा सेयं किल तदपराजितेत्येवम् ॥ १२९ ॥
तत्र च विद्याहीनैर्ब्रह्मण एषाऽपराजिता हि पुरी ।
प्रभुणा हिरण्यगर्भेणैव च रचितं हिरण्मयं वेश्म ॥ १३० ॥
इत्यादि दर्शितं तत्प्राप्तिरियं दर्शिता हि गतिपूर्वा ।
परविषयेऽपि च वेश्मप्रतिपत्तिश्रुतिरियं समाना हि ॥ १३१ ॥
तस्मादिहापि तस्या गतिपूर्वकतैव भवति युक्ततमा ।
किंचात्र पद गतावित्यस्मादपि धातुपाठसामर्थ्यात् ॥ १३२ ॥
मार्गापेक्षा वेश्मप्रतिपत्तावत्र भवति युक्तैव ।
तस्मादत्र गतिश्रुतयः सर्वा अपि भवन्ति परविषयाः ॥ १३३ ॥
इति पक्षान्तरमेतौ द्वावाचार्येण सूत्रितौ पक्षौ ।
एको गत्युपपत्त्यादिभिरपरो मुख्यतादिभिश्चेह ॥ १३४ ॥
मुख्यत्वादीनामासयितुं गत्यादयः समर्थाः स्युः ।
न तु गत्यादीन्मुख्यत्वादय इत्याद्य एव सिद्धान्तः ॥ १३५ ॥
व्याख्यातोऽस्माभिरसौ द्वितीय इह पूर्वपक्ष एव स्यात् ।
मुख्यस्यार्थस्यैव ग्रहणमसत्यपि च संभवे कर्तुम् ॥ १३६ ॥
उचितमिति कश्चिदाज्ञापयिता नेहोपलभ्यते क्वापि ।
उपपद्यते तदेतत्परविद्याप्रकरणोपदिष्टमपि ॥ १३७ ॥
विद्यान्तरानुशीलितगत्यभिधानं स्तुतिप्रकर्षार्थम् ।
विद्यासंबद्धसुषुम्नास्तुत्यर्थं यथैव विष्वगिति ॥ १३८ ॥

नाड्यन्तरसंकीर्तनमिह परविद्यास्तुतिप्रकर्षार्थम् ।
तत्प्रकरणेऽपि चापरविद्याश्रयगतिकथेयमुचितैव ॥ १३९ ॥
निरतिशयफला हीयं परविद्यागतिमिहान्तरेणापि ।
गतिसाध्यमपरविद्याफलमस्याश्चान्तरेव भवतीति ॥ १४० ॥
स्तुतिलाभार्थं तत्स्यान्न तु परविद्यावलम्बि तद्भवति ।
गन्तव्यस्य तथा बहुवचनान्तस्यापि लोकशब्दस्य ॥ १४१ ॥
अपि दिव्यगन्धभोगश्रुतेश्च संकल्पतोऽपि परविषये ।
मुख्यार्थस्यैतस्यायोगाद्गतिरपरगोचरैव स्यात् ॥ १४२ ॥
या च सभा वेश्म प्रतिपद्य इति श्रुतिरिहोपदिष्टाऽसौ ।
कार्यपराऽत्र श्रुत्या वाक्येन प्रकरणमिह बाध्यम् ॥ १४३ ॥
सार्वात्म्यमपि यदुक्तं यशोऽहमित्यादिना हि तदपीह ।
ब्रह्मण्यपरस्मिन्नप्युपासनार्थं हि युक्तमेव स्यात् ॥ १४४ ॥
यद्वच्च सर्वकर्मत्वादिनिदेशा भवेयुरन्यत्र ।
तस्मादत्र गतिश्रुतयः सर्वा अपरगोचरा एव ॥ १४५ ॥
केचित्तु पूर्वसूत्राणि स्युः किल पूर्वपक्षसूत्राणि ।
उत्तरसूत्राणि पुनर्भवन्ति सिद्धान्तविषयसूत्राणि ॥ १४६ ॥
इति खल्विह व्यवस्थामनुरुध्य गतिश्रुतीर्हि परविषयाः ।
सर्वा अपि प्रतिष्ठापयन्ति तच्चेदमनुपपन्नमिह ॥ १४७ ॥
सर्वगतं सर्वान्तरमपि यत्सर्वात्मकं परब्रह्म ।
यत्साक्षादपरोक्षाद्ब्रह्म य आत्मेतिवाक्यनिर्दिष्टम् ॥ १४८ ॥
आकाशवदितिवाक्यैर्ब्रह्मैवेदमितिनिगमवाक्यैश्च ।
निर्धारितस्वरूपं ब्रह्म कथं वेह भवति गन्तव्यम् ॥ १४९ ॥
ननु गतमपि गन्तव्यं भवति हि देशान्तरादियोगेन ।
पृथिवीस्थ एव पृथिवीं देशान्तरयोगतो यथा व्रजति ॥ १५० ॥
एवं बालः कालान्तरयोगादात्मभूतमेवैतत् ।
वार्धकमनन्य एव व्रजति तथा ब्रह्मणोऽप्यनन्यस्य ॥ १५१ ॥
तस्य गतस्यापि च गन्तव्यत्वं सर्वशक्तियोगेन ।
इति चेन्नैवं ब्रह्म प्रतिषिद्धाखिलविशेषमिह यस्मात् ॥ १५२ ॥
निष्कलमेतन्निष्क्रियमपि शान्तं तच्च भवति निरवद्यम् ।
अस्थूलमनण्वित्यादिश्रुतिगेयं स्मृतिष्वपि प्रथितम् ॥ १५३ ॥

कथमीदृशे परस्मिन्कल्पयितुं शक्यते विशेषोऽयम् ।
नैतच्च भूप्रदेशवयोन्यायेनात्र भवति गन्तव्यम् ॥ १५४ ॥
भूवयसोः किल देशविशेषावस्था विशेषयोगेण ।
गन्तव्यतोपपन्ना भवति प्रादेशिकत्वसंपत्त्या ॥ १५५ ॥
ननु जगतो जन्मस्थितिलयहेतुत्वश्रुतेः परं ब्रह्म ।
स्यात्सकलशक्तियुक्तं प्रभवति गन्तव्यमेतदिति चेन्न ॥ १५६ ॥
इह च विशेषनिराकरणश्रुतिवचनानि निरवकाशानि ।
जगदुत्पत्त्यादिश्रुतिवाक्यान्यपि खलु तथेति चेन्नैवम् ॥ १५७ ॥
एकत्वप्रतिपादनपराणि सर्वाणि सृष्टिवाक्यानि ।
यस्मान्मृदादिदृष्टान्तैरेतैर्ब्रह्मणोऽस्य सत्यत्वम् ॥ १५८ ॥
एवं सर्वस्यैव हि विकारजातस्य चानृतत्वमपि ।
प्रतिपादयच्च शास्त्रं कथमुत्पत्त्यादिपरमिह प्रभवेत् ॥ १५९ ॥
नन्वत्र निर्विशेषश्रुतिशेषत्वं कुतो भवेदेषाम् ।
उत्पत्तिश्रुतिवचसां व्यत्यासो नेह भवति कुत इति चेत् ॥ १६० ॥
इह च विशेषनिराकरणश्रुतयः खलु परं निराकाङ्क्षाः ।
एकत्वमात्मनोऽस्य च नित्यत्वमजत्वमपि च शुद्धत्वम् ॥ १६१ ॥
यद्यवगतं तदा खलु नैवाऽऽकाङ्क्षोपजायते भूयः ।
पुरुषार्थपरिसमाप्त्यवधृतिरेव किलोपजायते तत्र ॥ १६२ ॥
श्रुतयोऽपि तत्र को मोहः कः शोक इति बोधयन्त्येतम् ।
सार्वात्म्यभावमेव हि विदुषोऽप्यु(षस्तु)ष्ट्यनुभवादिकं च तथा ॥
मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यतीत्यादेः ।
श्रुतिवाक्याच्च विकारानृताभिसंधी च निन्दितौ भवतः ॥ १६४ ॥
तेन विशेषनिराकरणश्रुतिवचसां न चान्यशेषत्वम् ।
उत्पत्त्यादिपराणि श्रुतिवचनानीह यानि तेषां तु ॥ १६५ ॥
न निराकाङ्क्षार्थप्रतिपादनसामर्थ्यमिह कथंचिदपि
किंतु निषेध्यार्पकताद्वारेण निषेधवाक्यशेषत्वम् ॥ १६६ ॥
फलवत्संनिध्ये नाफलं तदङ्गमिति दृश्यते न्यायः ।
न्यायाच्च केवलादिह न हि तच्छेषत्वमुच्यते किंतु ॥ १६७ ॥
तच्छुङ्गमुत्पतितमित्यादिश्रुतिवाक्यतोऽपि तद्दृष्टम् ।
तस्मिन्कारणरूपे ब्रह्मणि हि तदेतदिह शुङ्गम् ॥ १६८ ॥

जगदात्मकमुत्पन्नं नेदममूलमिति तदिदमारभ्य ।
अन्विच्छतेन शुङ्गेनैव च सन्मूलमित्युदर्के हि ॥ १६९ ॥
विज्ञेयत्वं सत एकस्य जगत्कारणस्य दर्शयति ।
अन्यत्रापि यतो वेत्यादौ जन्मादिकारणस्यास्य ॥ १७० ॥
ब्रह्मण एकस्यैव हि विज्ञेयत्व प्रदर्शितं तस्मात् ।
उत्पत्तिश्रुतिवचसामैकात्म्यावगममात्रपरतैव ॥ १७१ ॥
नानेकशक्तियोगो ब्रह्मणि परमार्थतः कथंचिदपि ।
गन्तव्यता परस्य ब्रह्मण इह नोपपद्यते तस्मात् ॥ १७२ ॥
अपि च न तस्य प्राणा उत्क्रामन्तीति या श्रुतिः सा हि ।
उत्क्रान्तिं प्रतिषिध्य परस्मिन्ब्रह्माणि गतिं निवारयति ॥ १७३ ॥
स्पष्टो ह्येकेषामित्यत्र व्याख्यातमेतदखिलमपि ।
गतिरत्र कल्प्यते यदि गन्ता जीवः परात्मनस्तस्य ॥ १७४ ॥
गन्तव्यस्यावयवोऽथवा विकारोऽथवा भवेदन्यः ।
आत्यन्तिकतादात्म्ये न हि गमनं भवति कुत्रचिल्लोके ॥ १७५ ॥
यद्येकदेश एव हि जीवस्तर्ह्येकदेशिनस्तेन ।
नित्याप्तत्वात्पुनरिह गमनं नैवोपपद्यते तदिदम् ॥ १७६ ॥
ब्रह्मण्यपि च परस्मिन्यदेकदेशैकदेशिता तर्हि ।
निरवयवत्वं तस्य व्याहन्येत श्रुतिस्तदर्थपरा ॥ १७७ ॥
तुल्यं विकारपक्षेऽप्येतन्न घटो मृदात्मतां हित्वा ।
अवतिष्ठते कदाचित्त्यागे वा तस्य शून्यतापत्तिः ॥ १७८ ॥
यदि च विकारोऽवयवो वा जीवस्तर्हि तद्विशिष्टस्य ।
परमात्मनः स्थिरत्वात्संसारगतिश्च न सुलभा तस्य ॥ १७९ ॥
न ह्यचलबृहदुपलयोर्मण्डूकबृहच्छिलान्तरवयवयोः ।
चलनं कदाचिदपि वा स्यादस्माक त्वनाद्यविद्यातः ॥ १८० ॥
नानोपाधिवशेन हि गत्यागतिविभ्रमोऽयमा मोक्षात् ।
यदि च परस्मादस्माज्जीवोऽसावन्य एव भवति तदा ॥ १८१ ॥
सोऽणुर्व्यापी मध्यमपरिमाणो वा यदा भवेद्व्यापी ।
आकाशादीनामिव गमनमसंभावितं तदा तस्य ॥ १८२ ॥
यदि मध्यमपरिमाणस्तस्यानित्यत्वमपरिहार्यं स्यात् ।
यदि चाणुर्जीवः स्यात्कृत्स्नशरीरगतवेदना न स्यात् ॥ १८३ ॥

तस्य च मध्यमपरिमाणत्वमणुत्वं च परिहृतं पूर्वम् ।
तस्य परस्मादन्यत्वे तत्त्वमसीति शास्त्रबाधश्च ॥ १८४ ॥
योऽसौ दोषस्तुल्यः स विकारावयवपक्षयोरपि च ।
तद्वदनन्यौ हि विकारावयवौ तेन नैष दोषः स्यात् ॥ १८५ ॥
इति चेत्तथाऽपि मुख्यैकत्वानुपपत्तिरत्र दुर्वारा ।
त्रिष्वपि पक्षेष्वस्यानिर्मोक्षापत्तिरपि च दुर्वारा ॥ १८६ ॥
संसार्यात्मत्वापरिहारात्तत्परिहृतौ च तस्य पुनः ।
स्याच्च स्वरूपनाशस्तात्त्विकजीवात्मभावनाशेन ॥ १८७ ॥
ब्रह्मात्मत्वं तात्त्विकमस्माभिरिव त्वया हि जीवस्य ।
अभ्युपगतं भवेद्यदि संसृतिनाशेऽपि नो विनश्येत्सः ॥ १८८ ॥
ननु किं ब्रह्मात्मतया संसाराभाव एव मोक्षः स्यात् ।
स च खलु कर्माभावात्सेत्स्यति किमनेन तत्त्वबोधेन ॥ १८९ ॥
इति किल कर्मजडानामाशङ्का सा निरस्यते सपदि ।
कर्माणीहानुष्ठीयन्ते नैमित्तिकानि नित्यानि ॥ १९० ॥
दुरितक्षयाय काम्यानि निषिद्धानि च परिह्रियन्ते हि ।
स्वर्गस्य च नरकस्यानवाप्तये प्रकृतदेहभोग्यानि ॥ १९१ ॥
कर्माण्युपभोगेन क्षप्यन्ते ब्रह्मतां विनैवास्य ।
प्रकृते देहे पतिते देहान्तरयोगकारणाभावात् ॥ १९२ ॥
स्वात्मावस्थितिलक्षणकैवल्यं सेत्स्यतीदृशस्येति ।
यज्जल्पितं हि कैश्चित्तदसद्यस्मात्प्रमाणमिह नास्ति ॥ १९३ ॥
न ह्येतत्केनापि च शास्त्रेण निरूपितं हि मोक्षार्थी ।
इत्थं समाचरेदिति बुद्ध्यैव हि तर्कितं भवेदेतत् ॥ १९४ ॥
येन च कर्मनिमित्तः संसारोऽतो निमित्तविरहेण ।
न भविष्यतीति नैतत्तर्कयितुं शक्यते हि केनापि ॥ १९५ ॥
यस्मान्निमित्तविरहो न शक्यते ज्ञातुमत्र केनापि ।
इष्टानिष्टफलानि हि जात्यन्तरसंचितानि कर्माणि ॥ १९६ ॥
एकैकस्य च जन्तोः संभाव्यन्ते बहुप्रकाराणि ।
इह च विरुद्धफलानां तेषां युगपत्फलोपभोगस्य ॥ १९७ ॥
अत्यन्तदुर्लभत्वाल्लब्धावसराणि कानिचिच्चेदम् ।
जन्म किल निर्मिमते पराणि कालान्तरं प्रतीक्षन्ते ॥ १९८ ॥

तेषामवशिष्टानां सांप्रतभोगेन यापनायोगात् ।
न यथावर्णितचरितस्यापि शरीरे हि सांप्रते पतिते ॥ १९९ ॥
देहान्तरयोगनिमित्ताभावः शक्यते विनिश्चेतुम् ।
तद्य इहेति श्रुतयः प्रथयन्ति हि कर्मशेषसद्भावम् ॥ २०० ॥
स्मृतयोऽपि ततः शेषेणेत्याद्यास्तद्वदेव नन्वत्र ।
तत्क्षेपकाणि नित्यान्यपि किल नैमित्तिकानि कर्माणि ॥ २०१ ॥
मेवं विरोधविरहात्सति च विरोधे परस्परं तेषाम् ।
क्षेप्यक्षेपकभावो भवेन्न चेहास्ति स च विरोधोऽत्र ॥ २०२ ॥
न हि संचितसुकृतानां नित्यैर्नैमित्तिकैर्विरोधोऽस्ति ।
तेषा परस्परं किल विशुद्धिरूपत्वमवगतं शास्त्रात् ॥ २०३ ॥
दुरिताना क्षपणं स्यादविशुद्धितया ततो विरोधेन ।
देहान्तरयोगनिमित्ताभावस्तावता कथं सिध्येत् ॥ २०४ ॥
देहान्तरस्य संचितसुकृतनिमित्तस्य संभवात्तत्र ।
निःशेषतश्च दुरितस्यापि क्षपणं हि दुरवगममेव ॥ २०५ ॥
संचितपुण्यापुण्याभ्यां पुनरेतस्य जन्म दुर्वारम् ।
न च नित्यानुष्ठानाद्दुरितानुत्पत्तिमात्रमेव स्यात् ॥ २०६ ॥
न पुनः कालान्तरफलमिति निश्चेतुं प्रमाणमिह किंचित् ।
दुरितक्षपणार्थेऽपि च नित्ये पश्चात्फलान्तरं भवति ॥ २०७ ॥
इति तु स्मरति यथाऽऽम्रे निमित्त इत्यादिनैतमेवार्थम् ।
आपस्तम्बस्तत्र च फलार्थमारोपिते यथैवाऽऽम्रे ॥ २०८ ॥
छायागन्धावुत्पद्येते ह्यनु तद्वदेव धर्ममिमम् ।
क्रियमाणमर्थकामावुत्पद्येते किलान्विति प्रोक्तम् ॥ २०९ ॥
असति च सम्यग्ज्ञाने काम्यप्रतिषिद्धवर्जनं तदिदम् ।
सर्वात्मना भवेदिति न केनचिच्छक्यते प्रतिज्ञातुम् ॥ २१० ॥
यस्मादतिकुशलानामपि सूक्ष्मो दृश्यतेऽपराधोऽत्र ।
काम्यादिकर्मणा स्यान्निश्चयविरहेऽपि संशयस्तत्र ॥ २११ ॥
तेन निमित्ताभावो न केनचिच्छक्यतेऽत्र निश्चेतुम् ।
श्रुत्यभिगम्यं ब्रह्मात्मत्वं यदि नाभ्युपेयते तर्हि ॥ २१२ ॥
कर्तृत्वभोक्तृतादिस्वभावकस्याऽऽत्मनोऽस्य कैवल्यम् ।
कथमिह यथोक्तचरितस्याप्याकाङ्क्षितुमिदं भवेच्छक्यम् ॥ २१३ ॥

अग्न्यौष्ण्यवत्स्वभावः परिहर्तुं शक्यते न केनापि ।
कर्तृत्वभोक्तृतादेः कार्यमनर्थो न शक्तिमात्रं स्यात् ॥ २१४ ॥
इह शक्तिमात्रसद्भावेऽपि च कार्यस्य तस्य परिहारात् ।
उपपन्नो मोक्षोऽसावित्यपि नैवेह शङ्कितुं शक्यम् ॥ २१५ ॥
शक्त्यवशेषे कार्यप्रसवो लोके यतश्च दुर्वारः ।
ननु शक्तिरिह निमित्तान्तरनिरपेक्षा न कार्यमारभते ॥ २१६ ॥
अत एकाकिन्येषा स्थिताऽपि नैवापराध्यतीत्यपि न ।
शक्त्यात्मना निमित्तानामपि सर्वत्र नित्यसंबन्धात् ॥ २१७ ॥
तस्मादात्मनि कर्तृत्वादौ स्वाभाविके सति ह्यसति ।
विद्यैकसमधिगम्ये ब्रह्मात्मत्वे कदाचिदप्यस्य ॥ २१८ ॥
मोक्षं प्रत्याशाऽपि हि भवति परं दुर्लभैव न हि सुलभा ।
श्रुतिरपि नान्यः पन्था विद्यत इत्यादिका हि दर्शयति ॥ २१९ ॥
ज्ञानादन्यस्त्वपरो विमोक्षमार्गो न कश्चिदित्येवम् ।
ननु जीवस्य परस्मादनन्यता यदि तदा विलुप्येत ॥ २२० ॥
व्यवहारोऽयं प्रत्यक्षादीनामप्रवृत्तिरिति चेन्न ।
प्रागात्मतत्त्वबोधात्स्वप्नव्यवहारवद्भवेदेषः ॥ २२१ ॥
शास्त्रमपि यत्र हि द्वैतमिवेत्याद्यप्रबुद्धविषये हि ।
प्रायः प्रत्यक्षादिव्यवहारं सकलमेतमनुवर्ण्य ॥ २२२ ॥
यत्र त्वन्येति पुनः प्रबुद्धविषये प्रवक्ति तदभावम् ।
तस्मादत्र परब्रह्मविदो गन्तव्यतादिविज्ञानम् ॥ २२३ ॥
बाधितमेवेत्यत इह न केनचिद्गतिरियं समर्थ्येत ।
तर्हि गतिश्रुतय इमाः किंविषया इति न शङ्कनीयमिह ॥२२४॥
या सगुणपरब्रह्मपरा विद्यागतिरपि च भवति तद्विषया ।
क्वचिदिह पञ्चाग्निपरां विद्यां प्रक्रम्य गतिरुपन्यस्ता ॥ २२५ ॥
क्वचिदपि पर्यङ्कपरां वैश्वानरगोचरां क्वचिद्विद्याम् ।
यत्र पुनर्ब्रह्मैव प्रकृत्य गतिरियमुदाहृता वाक्ये ॥ २२६ ॥
प्राणो ब्रह्मेत्यादौ तथाऽथ यदिदमिति दहरवाक्येऽपि ।
तत्रापि वामनीत्वादिभिस्तथा सत्यकामताद्यैश्च ॥ २२७ ॥
तैस्तैर्गुणैर्हि सगुणस्यैवोपास्यत्वमिति गतिर्युक्ता ।
एवं न परब्रह्मणि गतिरेषा श्राव्यते क्वचिच्चापि ॥ २२८ ॥

किंतु गतिप्रतिषेधः श्रूयत इह केवलं न तस्येति।
ब्रह्मविदाप्नोतीत्यत्राऽऽप्तिर्यद्यपीह गत्यर्था ॥ २२९ ॥
एवमपि वर्णितेन न्यायेन गतेरसंभवादत्र।
यदनाद्यविद्यया परिकल्पितमेतद्धि नामरूपादि ॥ २३० ॥
तत्प्रविलयात्स्वरूपप्रतिपत्त्यर्था भवेदिहाऽऽप्तिः।
ब्रह्मैव सन्निति श्रुतिवाक्य इवाऽऽप्तिरीदृशी भवति ॥ २३१ ॥
अपि च गतिः परविषया निरूप्यमाणा प्ररोचनाय स्यात्।
अनुचिन्तनाय वा स्यान्न ब्रह्मविदः प्ररोचनं त्विह ॥ २३२ ॥
गतिवाक्येनाभिहितं यस्माद्विद्यासमर्पितेनैव।
स्वगतेनैव स्वास्थ्येनाव्यवधानेन तस्य संसिद्धेः ॥ २३३ ॥
इह नित्यसिद्धनिःश्रेयससंस्फुरणाद्य एष सिद्धफलः।
आत्मावगमस्तत्र च गत्यनुचिन्ताफलं न किंचिदपि ॥ २३४ ॥
तेनापरविषयैव हि गतिः परापरविवेचनाभावात्।
आरोप्यते परस्मिन्गतिरेषा निर्विशेषचिन्मात्रे ॥ २३५ ॥
द्वे ब्रह्मणी किमेते परमपरं चेति बाढमेवं हि।
श्रुत्यैव दर्शितं खल्वेतद्द्वै सत्यकाम इत्यत्र ॥ २३६ ॥
उपदिश्यते हि यच्चाविद्याकृतनामरूपनिर्मुक्तम्।
तद्धि परं ब्रह्म स्यात्तदेव किल नामरूपभेदेन ॥ २३७ ॥
उपदिश्यते यदा पुनरुपासनाय हि मनोमयादिपदैः।
तद्ध्यपरं ब्रह्म स्यान्न चाद्वितीयश्रुतेर्विरोध इह ॥ २३८ ॥
येनाविद्याकल्पितनानोपाधिभिरिह प्रसक्तमिदम्।
अपरब्रह्मोपासनमित्यविरोधः प्रपञ्चितः पूर्वम् ॥ २३९ ॥
तत्संनिधौ श्रुतं यज्जगदैश्वर्यादिलक्षणं च फलम्।
संसारगोचरं तद्येनाविद्या हि तत्र न निवृत्ता ॥ २४० ॥
देशविशेषकृतं तत्तत्प्राप्त्यर्थं हि गमनमविरुद्धम्।
सर्वगतत्वेऽप्यात्मन आकाशस्येव करकगमनेन ॥ २४१ ॥
बुध्याद्युपाधिगमनेनास्य च गमनोपपत्तिरुक्तैव।
तद्गुणसारत्वादित्यादिषु सूत्रेष्वतोऽत्र न विरोधः ॥ २४२ ॥
तस्मात्कार्यं बादरिरित्ययमेवेह भवति सिद्धान्तः।
पक्षान्तरं परं जैमिनिरिति मेधाविकासनायैव ॥ २४३ ॥

अप्रतीकालम्बनान्नयतीति बादरायण
उभयथाऽदोषात्तत्क्रतुश्च ॥ १५ ॥

मथतीयमपरविषया गतिर्न चैषा कदाऽपि परविषया ।
एतावदत्र वर्णितमिह किल संदिह्यते हि पुनरपरम् ॥ २४४ ॥
प्रापयति किमिह सर्वान्कार्यालम्बानमानवः पुरुषः ।
तं ब्रह्मलोकमविशेषेणाथ स कांश्चिदेव नयतीति ॥ २४५ ॥
अत्रैतदेव युक्तं विदुषामविशेषतो हि सर्वेषाम् ।
स्यादन्यत्र परस्माद्गतिरिति यस्मात्प्रपञ्चितं पूर्वम् ॥ २४६ ॥
अनियमसूत्रे विद्यान्तरेष्वपीयं गतिः समानेति ।
इत्याशङ्कां निरसितुमत्र विशेषं तमेतमुपदिशति ॥ २४७ ॥
ये च प्रतीकदृष्टय इह तान्हित्वा त्वमानवः पुरुषः ।
अन्यानेव विकारालम्बान्सर्वान्स एष लोकमिमम् ॥ २४८ ॥
नयतीति बादरायण आचार्यो मन्यते न चैवमिह ।
मार्गोऽयमप्रतीकोपासकविषयो न सर्वविषय इति ॥ २४९ ॥
दोषो य उभयथाभावः स्यात्सोऽनियमसूत्र इति वाच्यम् ।
अनियमनयः प्रतीकव्यतिरिक्तोपासनेषु भवति परम् ॥ २५० ॥
यो यध्यायति स हि खलु तत्प्राप्नोतीति तत्क्रतुन्यायः ।
स ह्यत्रोभयथाभावस्य च हेतुः समर्पको भवति ॥ २५१ ॥
ब्रह्मक्रतुरासीदित्यैश्वर्यं ब्राह्ममिति हि युक्तमिदम् ।
दर्शयति च श्रुतिस्तं यथा यथोपासते तथैवेति ॥ २५२ ॥
ब्रह्मक्रतुत्वमिह न प्रतीकविषयेऽस्त्युपासने क्वापि ।
नन्वब्रह्मक्रतुरपि योऽति(हि)ब्रह्मेति दर्शयत्येषा ॥ २५३ ॥
पञ्चाग्न्युपासनायां श्रुतिरेनान्ब्रह्म गमयतीत्याद्या ।
इति चेत्तथाऽपि तत्र प्रत्यक्षश्रुतिबलेन बाधोऽस्य ॥ २५४ ॥
यत्र प्रत्यक्षश्रुतिरेवं नैवोपलभ्यते तत्र ।
औत्सर्गिकेन तत्क्रतुनयेन निर्णीयते हि तत्प्राप्तिः ॥ २५५ ॥
ये च ब्रह्मक्रतवस्तेषामेवेति नेति चान्येषाम् ।

विशेषं च दर्शयति ॥ १६ ॥

शर्दयति किंच नामाद्युपासनेषु प्रतीकविषयेषु २५६ ॥

पूर्वस्माच्च परस्मिन्नुपासने फलविशेषमेवं हि ।
यावन्नाम्नो गतमित्याद्या श्रुतिरत्र फलविशेषोऽयम् ॥ २५७ ॥
उपपद्यते किलोपास्तीनामासां प्रतीकतन्त्रत्वात् ।
न ब्रह्मतन्त्रतायां फलभेदो ब्रह्मणोऽविशिष्टत्वात् ॥ २५८ ॥
तस्मादिह प्रतीकालम्बानां नेतरैः फलं तुल्यम् ।
गमनमपि भवति तेषां विद्युल्लोकावसानमिति सिद्धम् ॥ २५९ ॥
शारीरकमीमांसा मुनिना व्यासेन विरचिता सेयम् ।
चतुरध्यायी तस्यां चतुर्थसंज्ञश्च योऽयमध्यायः ॥ २६० ॥
तत्र हि तृतीयपादे सूत्रार्थो यश्च भाष्यकारोक्तः ।
आर्यावृत्तैरमलैः प्रकाशितो भवतु सोऽयमनवद्यः ॥ २६१ ॥

इति श्रीभाष्यार्थरत्नमालायां चतुर्थाध्यायस्य
तृतीयः पादः ॥ ३ ॥

---

अथ चतुर्थपादः ॥

---

ब्रह्मोपास्तिपराणां कार्यब्रह्माप्तिरभिहिता पूर्वम् ।
संप्रत्यैश्वर्यविशेषं तेषां ब्रह्मलोकसंभूतम् ॥ १ ॥
पादोत्तरभागेण प्रदर्शयिष्यंस्तमेतमादौ हि ।
अभ्यर्हितपरविद्याफलभूतं ब्रह्मभावमुपदिशति ॥ २ ॥

संपद्याऽऽविर्भावः स्वेन शब्दात् ॥ १ ॥

श्रुतिरियमाम्नायत इह किलैवमेवैष संप्रसाद इति ।
तत्र किल संप्रसादो जीवः संसारकलुषितः पूर्वम् ॥ ३ ॥
देहेन्द्रियसंघातादस्मात्प्रविविच्य तमिममात्मानम् ।
साक्षात्कृत्यानन्तरमपास्तसंसारदुःखपरितापः ॥ ४ ॥
प्रद्योतमानपूर्णानन्दात्मैवावतिष्ठते स इति ।
उपदिष्टमत्र च स्वपदस्य स्वस्वीयबोधकत्वेन ॥ ५ ॥
किंवाऽत्र देवलोकादिष्वयमागन्तुकेन केनापि ।
रूपविशेषेण पुनर्यथाऽभिनिष्पद्यते तथा किंवा ॥ ६ ॥
आत्मस्वरूपमात्रेणैवायमितीह भवति संदेहः ।
युक्तं तत्र स्थानान्तरेष्विवाऽऽगन्तुकेन केनापि ॥ ७ ॥

रूपेण स्यादभिनिष्पत्तिरितीदं यतोऽस्य मोक्षस्य ।
फलताप्रसिद्धिरभिनिष्पत्तिरपीयं भवेदिहोत्पत्तिः ॥ ८ ॥
यदि चेत्स्वरूपमात्रेणैवैषा स्यादिहाभिनिष्पत्तिः ।
न विभाव्यते कुतस्तत्पूर्वदशासु स्वरूपसद्भावात् ॥ ९ ॥
तस्मादभिनिष्पद्यत इह केनचिदपि विशेषरूपेण ।
एवं प्राप्ते ब्रूते स केवलेन स्वरूपमात्रेण ॥ १० ॥
आविर्भवतीति यतः स्वेनेति हि दृश्यते स्वशब्दोऽत्र ।
आगन्तुकेन चेदभिनिष्पत्तिस्तत्र हि स्वशब्देन ॥ ११ ॥
रूपविशेषणमेतद्भवेदयुक्तं ननु स्वकीयपरः ।
सोऽयं स्वशब्द इति चेन्न तस्य वचनाभिधेयताविरहात् ॥ १२ ॥
येन च रूपेणासावभिनिष्पद्येत भवति तस्यैव ।
आत्मीयत्वं तत्र स्वेनेति विशेषणं भवेद्विफलम् ॥ १३ ॥
स्यादात्मवचनतायामर्थवदेतद्विशेषणं तेन ।
स्वेनाऽऽत्मना विभाव्यत एष न चाऽऽगन्तुकेन रूपेण ॥ १४ ॥
अभिनिष्पद्यत इति ननु विशेष इह नोपलभ्यते कोऽपि ।
पूर्वावस्थास्विह च स्वरूपसाम्यादतो ब्रवीतीदम् ॥ १५ ॥

मुक्तः प्रतिज्ञानात् ॥ २ ॥

योऽसावभिनिष्पद्यत इत्युक्तः स्वरूपबन्धनिर्मुक्तः ।
स च खलु शुद्धेनैवाऽऽत्मनाऽवतिष्ठत इतीह निर्दिष्टम् ॥ १६ ॥
पूर्वासु खल्ववस्थास्वन्धो भवतीति रोदितीवेति ।
एवं विनाशमेवापीतो भवतीति सोऽयमात्मा हि ॥ १७ ॥
तत्तदवस्थाकलुषितरूपेणैवेति खलु विशेष इह ।
ननु मुक्तोऽयमिदानीमिति तु कथं वा त्वयाऽवगतमिति चेत् ॥ १८ ॥
अवगम्यतेऽयमात्मा मुक्त इदानीमिति प्रतिज्ञानात् ।
प्राजापत्ये वाक्ये ह्येतं त्वेव त इति प्रतिज्ञाय ॥ १९ ॥
जाग्रत्स्वप्नसुषुप्तावस्थात्रयदोषजालनिर्मुक्तम् ।
आत्मानमिमं व्याख्येयत्वेन पुनः पुनः प्रतिज्ञाय ॥ २० ॥
अशरीर वेत्याद्यैः स उत्तमः पुरुष एवमन्तैर्हि ।
उपसंहृतमिह मुक्तात्ममात्रगोचरमिदं प्रतिज्ञानम् ॥ २१ ॥
किंच य आत्मेत्याद्या या चेहाऽऽख्यायिका समाम्नाता ।
तदुपक्रमवाक्ये खल्वपहतपाप्मेति यत्समाम्नातम् ॥ २२ ॥

मुक्तात्ममात्रगोचरमेव तदेतत्प्रतीयते सकलम्।
या मोक्षस्य फलत्वप्रसिद्धिरत्रोपदर्शिता साऽपि ॥ २३ ॥
नापूर्ववस्तुजननापेक्षा स्याद्बन्धनिरसनापेक्षा।
अभिनिष्पद्यत इत्युत्पत्तेः पर्याय इति तु यच्चोक्तम् ॥ २४ ॥
तदपि च पूर्वावस्थापेक्षं स्याद्गौणमेव न तु मुख्यम्।
रोगनिवृत्तिमपेक्ष्यारोगो निष्पन्न एष इति हि यथा ॥ २५ ॥

आत्मा प्रकरणात् ॥ ३ ॥

कथमयमिह मुक्तोऽस्य च संपत्तव्यं यतः परं ज्योतिः।
ज्योतिःशब्दश्चायं भौतिकवचनो हि दृश्यते लोके ॥ २६ ॥
यो न हि विकारविषयाद्व्यावृत्तः स च कथं भवेन्मुक्तः।
यस्माद्विकारजातं सकलं चाऽऽर्तमिति शास्त्रमुपदिशति ॥ २७ ॥
तस्माज्ज्योतिः संपन्नोऽसौ कथमत्र मुक्त इति चेन्न।
प्रकरणबलाद्यतोऽत्र ज्योतिःशब्देन गृह्यते ह्यात्मा ॥ २८ ॥
अपहतपाप्मा विजरो विमृत्युरित्यादिनोपदिष्टेऽस्मिन्।
प्रकृते परात्मनि कथं कार्यं ज्योतिर्ग्रहीतुमिह शक्यम् ॥ २९ ॥
प्रकृतत्यागाप्रकृतग्रहणादसमञ्जसं तथा चेत्स्यात्।
ज्योतिःशब्दस्त्वात्मन्यपि तद्देवा इति श्रुतौ दृष्टः ॥ ३० ॥

अविभागेन दृष्टत्वात् ॥ ४ ॥

ज्योतिः संपद्य परं विभाव्यते स्वेन यः स पृथगेव।
किमिह परस्मादात्मन उताविभक्तोऽवतिष्ठते स इति ॥ ३१ ॥
चिन्तायामेतस्यां सत्यामत्र च स तत्र पर्येति।
इत्यादिवाक्यजातेनाऽऽधाराधेयभावनिर्देशात् ॥ ३२ ॥
उपसंपद्येत्यत इह तयोः पुनः कर्तृकर्मभावोक्तेः।
भेदेनैव न्याय्यं तस्यावस्थानमिति तु यस्य मतिः ॥ ३३ ॥
तं व्युत्पादयतीहाविभक्त एवावतिष्ठते स इति।
मुक्तोऽवतिष्ठते खलु परात्मना परमिहाविभक्ततया ॥ ३४ ॥
परमात्मनाऽविभक्तं मुक्तं यस्मात्प्रदर्शयन्त्येताः।
तत्त्वमसीति च नान्यत्पश्यति न तु तद्द्वितीयमस्तीति ॥ ३५ ॥

एवमहं ब्रह्मास्मीत्याद्याः श्रुतयो न वैपरीत्येन ।
दर्शनमत्र यथा स्यात्फलमपि च तथैव तत्क्रतुन्यायात् ॥ ३६ ॥
श्रुत्यन्तरं यथोदकमित्याद्यप्येवमेव दर्शयति ।
शुद्धे जले हि शुद्धं जलमासिक्तं यथैव तादृक्स्यात् ॥ ३७ ॥
एवं मुनेर्विजानत आत्मा भवतीति तद्वदन्यदपि ।
श्रुत्यन्तरं यथा नद्य इति तथा चेह भेदनिर्देशः ॥ ३८ ॥
स्यादौपचारिकः सत्यपि चाभेदे यथा स भगव इति ।
आत्मरतिरेवमादावपि भेदस्त्वौपचारिको दृष्टः ॥ ३९ ॥

ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ५ ॥

मुक्तोऽयमात्मरूपेणैव हि नाऽऽगन्तुकेन रूपेण ।
अभिनिष्पद्यत इति तु स्वशब्दयोगेन दर्शितं पूर्वम् ॥ ४० ॥
मुक्तोऽयमत्र किं सत्येन हि सर्वज्ञतादिधर्मेण ।
अवतिष्ठते स किंवा धर्मस्य च शशविषाणतुल्यत्वात् ॥ ४१ ॥
चिन्मात्रेणैवासाववतिष्ठत इत्यथैष चिन्मात्रः ।
सन्नपि मुक्तात्मा खल्वन्येषां बद्धजीवसंघानाम् ॥ ४२ ॥
अन्योन्यव्यवहारात्कल्पितसर्वज्ञतादिमानिति वा ।
मुनिविप्रतिपत्तिबलात्संदेहे तद्विशेषजिज्ञासा ॥ ४३ ॥
तामनुरुध्यैवाऽऽदौ तदेतदभिधीयते हि सूत्रकृता ।
यदिदं हि सत्यसंकल्पत्वान्त श्रुतिवचो विनिर्दिष्टम् ॥ ४४ ॥
ब्राह्मं रूपं सर्वज्ञत्वं सर्वेश्वरत्वमित्येतत् ।
तेन च रूपेण स्वेनाऽऽविर्भवति हि स एष मुक्त इति ॥ ४५ ॥
इह मन्यते हि जैमिनिराचार्यस्तत्र हेतुरयमेव ।
योऽयमुपन्यासादिः स तत्परो दृश्यते यतो ह्यस्मिन् ॥ ४६ ॥
अपहतपाप्मेत्यादौ सोऽन्वेष्टव्य इति विधिमुपाश्रित्य ।
विध्यर्थोद्देश्याय य आत्मेत्यादिर्भवेदुपन्यासः ॥ ४७ ॥
आदिपदेन विधिव्यपदेशोऽयं गृह्यते हि तावेतौ ।
सर्वज्ञत्वाद्यन्वितमात्मानं दर्शयत इहेदमपि ॥ ४८ ॥
जक्षन्क्रीडन्रममाण इति ह्यैश्वर्यमुपदिशत्यस्य ।
श्रुत्यन्तरं तथैव व्यपदेशोऽन्यत्र दृश्यते वाक्ये ॥ ४९ ॥

लोकेषु कामचारो भवतीत्यादिस्तथाऽयमपरोऽपि ।
सर्वज्ञ एष सर्वेश्वर इत्यादिः स चोपपन्नः स्यात् ॥ ५० ॥

चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ॥ ६ ॥

यद्यप्यपहतपाप्मत्वादय इह ये प्रपञ्चितास्ते हि ।
भेदेनैव हि धर्मा निर्दिश्यन्ते तथाऽपि खल्वेते ॥ ५१ ॥
शब्दविकल्पनिमित्ताः स्युः पाप्मनिवृत्तिमात्रमेवात्र ।
अवगम्यते स्वरूपं तदस्य चैतन्यमात्रमेवेति ॥ ५२ ॥
अभिनिष्पत्तिः सेयं चितिमात्रेणैव तस्य युक्ततमा ।
इत्यौडुलोमिराचार्यो मन्यत इह भवेच्छ्रुतिश्चापि ॥ ५३ ॥
अयमात्माऽनन्तर इत्याद्या प्रज्ञानघनमिमं ब्रूते ।
इह सत्यकामताद्या यद्यपि वस्तुस्वरूपमात्रेण ॥ ५४ ॥
निर्दिश्यन्ते सत्याः कामा अस्येत्यथापि ते धर्माः ।
केवलमुपाधिसंबन्धाधीना एव न हि भवेदेषाम् ॥ ५५ ॥
चैतन्यवत्स्वरूपान्तर्भाव उपाधिमूलकत्वेन ।
सत्यत्वायोगेनानेकाकारत्वनिरसनादपि च ॥ ५६ ॥
न हि सत्या न स्थानत इति सूत्रे तदिदमखिलमुपदिष्टम् ।
जक्षन्क्रीडन्नित्यादिश्रुत्या जक्षणादिकथनमपि ॥ ५७ ॥
दुःखात्यन्तायोगाभिप्रायं स्यादिहाऽऽत्मरतिरितिवत् ।
आत्मनिमित्तानि रतिक्रीडामिथुनानि नेह मुख्यानि ॥ ५८ ॥
शक्यन्ते वर्णयितुं द्वितीयसापेक्षता यतस्तेषाम् ।
तस्मान्निरस्तकृत्स्नप्रपञ्चजालेन सुप्रसन्नेन ॥ ५९ ॥
परिपूर्णसत्स्वरूपप्रज्ञानघनेन निर्विशेषेण ।
बोधात्मनाऽभिनिष्पद्यत इति खल्वौडुलोमिमतमेतत् ॥ ६० ॥

एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः ॥ ७ ॥

चैतन्यमात्रमस्य स्वरूपमभ्युपगतं हि मुक्तस्य ।
अभ्युपगतेऽपि तस्मिन्व्यवहारापेक्षया हि पूर्वस्य ॥ ६१ ॥
ब्राह्मस्यैश्वर्यस्योपन्यासाद्यवगतस्य पुनरत्र ।
अनिषेधादविरोधं स मन्यते बादरायणाचार्यः ॥ ६२ ॥

संकल्पादेव तु तच्छ्रुतेः ॥ ८ ॥

स यदि पितृलोककामो भवतीत्याद्यं हि हार्दविद्यायाम् ।
वाक्यं तदिदं दृष्टं संदेहस्तत्र चायमवतरति ॥ ६३ ॥
इह पित्रादिसमुत्थाने केवल एव भवति संकल्पः ।
हेतुः किंवा स निमित्तान्तरसापेक्ष एव हेतुरिति ॥ ६४ ॥
संकल्पादेवेति श्रवणे सत्यपि च लोकवत्तत्र ।
युक्तैव खलु निमित्तान्तरसापेक्षा यथा भवेल्लोके ॥ ६५ ॥
संकल्पादपि च तथा गमनादिभ्योऽस्मदादिकानां हि ।
भवति तु पित्रादीनां संपत्तिस्तद्वदेव मुक्तस्य ॥ ६६ ॥
स्यादेवं चेत्तत्र च न दृष्टविपरीतकल्पना भवति ।
संकल्पादेवेत्यपि राज्ञः संकल्पितार्थसिद्धिकरीम् ॥ ६७ ॥
साधनसामग्रीं किल सुलभां दृष्ट्वा यथा तथेहापि ।
संकल्पकृतसमुत्थानाः पित्राद्या न पुष्कलं भोगम् ॥ ६८ ॥
अर्पयितुं हि समर्था मनोरथस्थमिव चञ्चलत्वेन ।
एवं प्राप्ते ब्रूते संकल्पादेव केवलादत्र ॥ ६९ ॥
स्यात्पित्रादिसमुत्थानमिति तथा दृश्यते श्रुतिर्यस्मात् ।
संकल्पादेवेति श्रुतिर्निमित्तान्तरप्रतीक्षायाम् ॥ ७० ॥
पीड्येत यदि च संकल्पानुविधाय्येव तन्निमित्तमपि ।
भवतु तदा तन्नैव हि यत्नान्तरमत्र भवति संपाद्यम् ॥ ७१ ॥
स्यादेव वन्ध्यसंकल्पताऽस्य यदि किंचिदत्र संपाद्यम् ।
प्राक्संपत्तेः श्रुत्यवगम्येऽर्थे लोकवदिति यच्चोक्तम् ॥ ७२ ॥
सामान्यतो हि दृष्ट तदिदं प्रकृते निदर्शनं न भवेत् ।
संकल्पाद्यत एषा प्रयोजनस्थैर्यमखिलमुद्भवति ॥ ७३ ॥
प्राकृतसंकल्पविलक्षण एव हि भवति मुक्तसंकल्पः ।
विद्याबलेन केवलसंकल्पो भोगसाधनं तेषाम् ॥ ७४ ॥

अत एव चानन्याधिपतिः ॥ ९ ॥

यत एव हि विद्वानयमवन्ध्यसंकल्प एव भवतीह ।
अत एवान्योऽधिपतिर्नास्यानन्याधिपतिरसौ भवति ॥ ७५ ॥

सत्यां गताविहान्यस्वामिकतामात्मनो न कश्चिदपि ।
संकल्पयति हि लोके तमेतमर्थं श्रुतिः प्रदर्शयति ॥ ७६ ॥
अनुविद्याऽऽत्मानमिमं सत्यान्कामांश्च ये व्रजन्तीतः ।
तेषां तु सर्वलोकेष्वपि भवति हि कामचार इत्येवम् ॥ ७७ ॥

अभावं बादरिराह ह्येवम् ॥ १० ॥

संकल्पादेवेतिश्रुत्या संकल्पमात्रकथनेऽपि ।
संकल्पमुख्यसाधनभूतं यत्तन्मनोऽत्र सिद्धं स्यात् ॥ ७८ ॥
विदुषः प्राप्तैश्वर्यस्यास्य शरीरेन्द्रियाणि सन्ति पुनः ।
किंवा न सन्ति तस्येत्येवं चिन्ता समुत्थितेह पुनः ॥ ७९ ॥
इह मन्यते हि बादरिराचार्योऽसौ महीयमानस्य ।
विदुषस्तस्य च देहेन्द्रियविरहमिह श्रुतिर्यतो ब्रूते ॥ ८० ॥
मनसैतान्कामानित्याद्या तत्र च यदा त्वसौ विद्वान् ।
मनसा तथा शरीरेन्द्रियैश्च विहरेत्तदा हि मनसेति ॥ ८१ ॥
यच्च विशेषणमिह मनसैतान्कामानिति श्रुतिप्रथितम् ।
तदयुक्तं स्यात्तस्मान्मोक्षे देहेन्द्रियाणि न स्युरिति ॥ ८२ ॥

भावं जैमिनिर्विकल्पामननात् ॥ ११ ॥

देहादयो हि मुक्तौ सदा न सन्तीति बादरेः पक्षः ।
देहादयः सदैव हि मुक्तौ सन्तीति जैमिनेः पक्षः ॥ ८३ ॥
बादरिपक्षश्चोक्तो जैमिनिपक्षं प्रदर्शयत्यधुना ।
जैमिनिराचार्यस्त्विह मुक्तिं प्रति सेन्द्रियस्य देहस्य ॥ ८४ ॥
भावं हि मन्यते किल मनोवदत्र श्रुतिश्च भवतीयम् ।
सा खलु स एकधा भवतीत्याद्याऽनेकधा ह्यनेकविधतेयम् ॥ ८५ ॥
सेन्द्रियशरीरभेदं विना भवेदाञ्जसी कथंचिदपि ।
इह यद्यपि निर्गुणपरविद्याया भूमविषयकायां हि ॥ ८६ ॥
स च खल्वनेकधाभावविकल्पः पठ्यते तथाऽपीदम् ।
इह सगुणावस्थायामैश्वर्यं विद्यमानमेव पुनः ॥ ८७ ॥
परमात्मभूमविद्यास्तुतये संकीर्त्यते ततश्चायम् ।
सगुणपरमात्मविद्याफलभावेनोपवर्णितो भवति ॥ ८८ ॥

इच्छामात्रेणैते सन्ति कदाचित्कदाचिदिह नेति ।
दर्शयति बादरायणपक्षमसावेव भवति सिद्धान्तः ॥ ८९ ॥

द्वादशाहवदुभयविधं बादरायणोऽतः ॥ १२ ॥

इह बादरायणाचार्योऽसावत एव मन्यते तदिदम् ।
उभयविधत्वं साध्वित्युभयश्रुतिलिङ्गदर्शनादेव ॥ ९० ॥
सकल्पयति यदाऽसौ सशरीरत्वं भवेत्सशारीरः ।
अशरीरतां यदाऽसावशरीरो येन सत्यसंकल्पः ॥ ९१ ॥
इति संकल्पविशेषादुभयविधत्वं तदेतदिह युक्तम् ।
भवति निदर्शनमेतद्यच्च किल द्वादशाहवदितीह ॥ ९२ ॥
तत्र य एवं विद्वांसः सत्रमिहोपयन्ति हीत्येवम् ।
एवं हि सत्रमासत इति वा खलु चोदना भवेद्यत्र ॥ ९३ ॥
तद्भवति सत्रसंज्ञं यत्र पुनर्द्वादशाहसंज्ञेन ।
क्रतुनाऽनेन तमेतं यजमानं याजयेत्प्रजाकामम् ॥ ९४ ॥
इति यजतिचोदना वा तथा भवेन्नियतकर्तृकत्वमपि ।
तस्य त्वहीनता स्यात्तथा द्विरह्नाध्वरादिकानां सा ॥ ९५ ॥

तन्वभावे संध्यवदुपपत्तेः ॥ १३ ॥

सेन्द्रियदेहस्य तनोः स्याद्यदि विरहस्तदा यथा संध्ये ।
देहेन्द्रियविषयादिष्वविद्यमानेषु ते हि पित्राद्याः ॥ ९६ ॥
उपलब्धिमात्ररूपा एव हि कामा भवन्ति सर्वेऽपि ।
एवं मोक्षेऽपि स्युः कामा इति सकलमेतदुपपन्नम् ॥ ९७ ॥

भावे जाग्रद्वत् ॥ १४ ॥

अभ्युपगम्यत इह यदि भावः किल सेन्द्रियस्य देहस्य ।
तर्हि यथा जागरिते भवन्ति कामास्तथैव मोक्षेऽपि ॥ ९८ ॥

प्रदीपवदावेशस्तथा हि दर्शयति ॥ १५ ॥

भावं जैमिनिरिति किल मुक्तौ सशरीरता विनिर्दिष्टा ।
तत्र त्रिधाविकल्पादिषु बहुधा स्युर्यदा शरीराणि ॥ ९९ ॥
किं तानि दारुयन्त्राणीव भवन्ति हि निरात्मकान्येव ।
किंवेह सात्मकान्येव हि सृज्यन्तेऽस्मदादिवदितीह ॥ १०० ॥

जिज्ञासा स्यात्तत्राऽऽत्ममनोभेदो यतो न संभवति ।
एकशरीरेण तयोर्योगेन निरात्मकानि चान्यानि ॥ १०१ ॥
निरसितुमाक्षेपमिमं पठति हि सूत्रं प्रदीपवदितीह ।
एको यथा प्रदीपो युगपदनेकप्रदीपभावमिह ॥ १०२ ॥
प्रतिपद्यते हि लोके स्वयमेव विकारशक्तियोगेन ।
एकोऽपि संस्तथैव हि विद्वानैश्वर्ययोगमात्रेण ॥ १०३ ॥
आलम्ब्य बहुतनुत्वं गात्राण्याविशति तानि सर्वाणि ।
दर्शयति चैवमेव ह्येकस्यानेकदेहसंपत्तिम् ॥ १०४ ॥
शास्त्र स एकधा भवतीति तथा पञ्चधेति नवधेति ।
नैतद्धि दारुयन्त्रोपमाभ्युपगमे समञ्जसं भवति ॥ १०५ ॥
नापि स्वेतरजीवावेशेन स्यात्प्रवृत्तिरिह तेषाम् ।
यच्चोक्तमात्ममनसोर्भेदाभावादनेकतनुयोगः ॥ १०६ ॥
विदुषो न समवेदिति नासौ दोषो यतो ह्यसौ विद्वान् ।
समनस्कान्येव मनोनुगतान्यपराणि किल शरीराणि ॥ १०७ ॥
स्रक्ष्यति हि सत्यसंकल्पत्वात्सृष्ट्वा ह्युपाधियोगेन ।
तत्राऽऽत्मनोऽपि भेदेनाधिष्ठातृत्वमुचितमेवास्य ॥ १०८ ॥
अयमेव योगिनां बहुशरीरयोगप्रकार उपदिष्टः ।
शास्त्रेषु योगविषयेष्वत्र कथं नान्विहास्य मुक्तस्य ॥ १०९ ॥
अङ्गी क्रियते तदनेकशरीरावेशरूपमैश्वर्यम् ।
तत्केन कं विजानीयादिति न तु तद्द्वितीयमस्तीति ॥ ११० ॥
एवं हि सलिल एको द्रष्टेत्यादीनि यानि वाक्यानि ।
तानि विशेषज्ञानं निवारयन्तीत्यतस्त्विदं पठति ॥ १११ ॥

स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ १६ ॥

स्वाप्यय इह च सुषुप्तं स्वयमपीत इति श्रुतेस्तथाऽन्यत्र ।
तस्मादेनं स्वपितीत्याचक्षत इति तदन्तरादपि च ॥ ११२ ॥
ब्रह्मैव सन्निति श्रुतिवाक्यात्संपत्तिरत्र कैवल्यम् ।
उक्तान्यतरावस्थामपेक्ष्य चात्रोपदिश्यते तदिदम् ॥ ११३ ॥
यच्च विशेषज्ञानाभावप्रतिपादनार्थकं वाक्यम् ।
कैवल्यावस्थामपि सुषुप्त्यवस्थामपेक्ष्य कथितमिति ॥ ११४ ॥

तत्तत्प्रकरणबलतोऽवगम्यते तेषु तेषु वाक्येषु ।
आविष्कृतमेतेभ्यो भूतेभ्य इति श्रुतेस्तथाऽन्यस्मात् ॥ ११५ ॥
यत्र त्वस्येत्यादिश्रुतिवचनात्प्रकटितं भवेदेतत् ।
क्वचिदपि च यत्र सुप्तो न कंचनेत्यादिवेदवाक्येभ्यः ॥ ११६ ॥
एतच्च सगुणविद्याफलभोगस्थानमपरसायुज्यम् ।
स्वर्गादिवत्तदेतद्यत्रैश्वर्यं प्रपञ्चितं विदुषः ॥ ११७ ॥

जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वाच्च ॥ १७ ॥

सगुणब्रह्मोपासनया ये विदुषः प्रयान्ति सह मनसा ।
परमेश्वरसायुज्यं तेषामुपवर्णितं यदैश्वर्यम् ॥ ११८ ॥
तत्किं निरवग्रहमुत सावग्रहमिति तु संशयस्तत्र ।
निरवग्रहमेवैषामैश्वर्यमितीह युक्तमाश्रयितुम् ॥ ११९ ॥
यस्माच्छ्रुतयः सर्वाः प्रथयन्त्यैश्वर्यमीदृशं तस्य ।
आप्नोति स्वाराज्यं सर्वे देवा बलिं प्रयच्छन्ति ॥ १२० ॥
अस्मै महीयमानायाऽऽत्मन इत्येवमेव चान्यत्र ।
लोकेषु कामचारस्तेषां भवतीत्यतस्त्विदं पठति ॥ १२१ ॥
ऐश्वर्यस्य च संकल्पादेवेतिश्रुतिप्रतीतस्य ।
जगदुत्पत्तिलयादिव्यापारादिह विलक्षणत्वेन ॥ १२२ ॥
सेतच्छ्रुत्या विदुषः सृष्टिव्यापारकल्पनाऽनुचिता ।
तस्माज्जगदुदयादिव्यापारमिमं च वर्जयित्वैव ॥ १२३ ॥
अणिमाद्यात्मकमेव ह्यैश्वर्यं केवलं भवेत्तेषाम् ।
यस्तु जगद्व्यापारः स हीश्वरस्यैव नित्यसिद्धस्य ॥ १२४ ॥
स्रष्टृत्वं तस्यैवेक्षणपूर्वं सृष्ट्युपक्रमे हीदम् ।
प्रकृतं न हि मुक्तानां तदा न देहो न चेक्षणं भवति ॥ १२५ ॥
तेनासंनिहितास्ते पर एव ह्यधिकृतो भवेत्तत्र ।
यस्मादुत्पत्त्यादिव्यपदेशः श्रूयते हि तस्यैव ॥ १२६ ॥
सोऽयं हि नित्यसिद्धो भवति हि शब्दे हि समधिगम्यश्च ।
तस्मात्स्रष्टृत्वादिकमखिलं स्यादीश्वरस्य नान्यस्य ॥ १२७ ॥
अन्येषां तु तदन्वेषणजिज्ञासनपुरःसरं भवति ।
अणिमादिकमैश्वर्यं तेन न तेषामिहाधिकारः स्यात् ॥ १२८ ॥

समनस्कत्वेनापि च तत्रानैकान्त्यमपि भवेत्तेषाम् ।
एकस्य हि स्थितौ स्यादपरस्य च संहृतावभिप्रायः ॥ १२९ ॥
इत्यन्योन्यविरोधे स्रष्टृत्वं वा कथं भवेत्तेषाम् ।
एकं प्रत्यन्येषां गुणभावाभ्युपगमेन यदि चेह ॥ १३०
विनिवार्यते विरोधः स चेह परमेश्वरो न चान्यः स्यात् ।
परमेश्वरसंकल्पानुगुणं सकलं भवेदिहान्येषाम् ॥ १३१ ॥

प्रत्यक्षोपदेशादिति चेन्नाऽऽधिकारिकमण्डलस्थोक्तेः ॥१८॥

आप्नोति स्वाराज्यमिति प्रत्यक्षोपदेशतो विदुषाम् ।
निरवग्रहमेव स्यादैश्वर्यमितीह न पुनराशङ्क्यम् ॥ १३२ ॥
यस्मादिहाऽऽधिकारिकमण्डलगत एव स खलु परमात्मा ।
निर्दिश्यते स चान्यानधिकारेषु हि नियोजयत्यनिशम् ॥ १३३ ॥
तेनाऽऽधिकारिकोऽसौ स एव किल सवितृमण्डलस्थश्च ।
तदनुग्रहैकलभ्या स्वाराज्यप्राप्तिरिह भवेद्विदुषः ॥ १३४ ॥
येनानन्तरवाक्यं मनसस्पतिमिति तमीश्वरं ब्रूते ।
स च भवति सर्वमनसां पतिस्तमाप्नोति पूर्वसिद्धमिति ॥ १३५ ॥
व क्पतिरित्यादिकमपि यथोपदिष्टार्थपरतया योज्यम् ।
अन्यत्रापि च विदुषामैश्वर्यं हीशतन्त्रमिति योज्यम् ॥ १३६ ॥

विकारावर्ति च तथा हि स्थितिमाह ॥ १९ ॥

य इह जगद्व्यापारः स भवेदेव ह्युपासकप्राप्यः ।
संकल्पितार्थसिद्ध्यादिवदेव हि परमुपास्यनिष्ठत्वात् ॥ १३७ ॥
इत्याशङ्कां निरसितुमुपास्यगतनिर्विशेषरूपे हि ।
व्यभिचारमिह विकारावर्तीत्येतेन दर्शयत्यधुना ॥ १३८ ॥
तच्च विकारावर्त्यपि यदेतदिह पारमेश्वरं रूपम् ।
न विकारमात्रगोचरमेतत्किल सवितृमण्डलस्थानम् ॥ १३९ ॥
यस्मादाम्नायोऽसौ स्थितिं द्विरूपां प्रदर्शयत्यस्य ।
तावानस्येत्यादिर्जगद्विभूतिं स दर्शयित्वाऽऽदौ ॥ १४० ॥
ज्यायांश्च पुरुष इति पुनरस्य ज्यायस्त्वमेतदुपदिश्य ।
तच्च किल ज्यायस्त्वं परात्मनस्तस्य वर्णितं भूयः ॥ १४१ ॥
कृत्स्नं विकारजातं तदस्य परमात्मनो भवेत्पादः ।
यच्च विकारास्पृष्टं तदेतदमृतं त्रिपाद्दिवीत्येवम् ॥ १४२ ॥

तन्निर्विकाररूपं सविशेषालम्बनाः कथंचिदपि ।
न प्राप्नुवन्ति यस्माद्भवन्त्यतत्क्रतव एव ते सर्वे ॥ १४३ ॥
तस्माद्यथा द्विरूपे परात्मनि हि निर्विशेषरूपमिदम् ।
अनवाप्य सगुण एव हि वर्तन्ते ते तथैव सगुणेऽपि ॥ १४४ ॥
परमेश्वरप्रसादात्सावग्रहमेव तदिदमैश्वर्यम् ।
लब्ध्वाऽनवाप्य निरवग्रहमैश्वर्यं किलावतिष्ठन्ते ॥ १४५ ॥

दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ २० ॥

दर्शयतश्च विकारावर्तित्वं हि श्रुतिस्मृती तस्य ।
या च न तत्रेत्याद्या या च न तद्भासयत इति प्रथिता ॥ १४६ ॥

भोगमात्रसाम्यलिङ्गाच्च ॥ २१ ॥

निरवग्रहमैश्वर्यं नैषां सविशेषतत्पराणां स्यात् ।
परमेश्वरेण यस्मात्तेषां किल भोगमात्रमेव समम् ॥ १४७ ॥
दर्शयतीह तमापो वै खल्वित्यादिका श्रुतिश्चेयम् ।
तं ब्रह्मलोकमागतमुपासकमिमं हिरण्यगर्भोऽयम् ॥ १४८ ॥
इत्याहामृतरूपा आपो भुज्यन्त इह मया किंच ।
लोकोऽसावमृतोदकलक्षण एवमिति सा निरूपयति ॥ १४९ ॥
अन्याऽपि किल यथैतामित्याम्नाता श्रुतिस्तदेतदिह ।
परमेश्वरेण तस्य च सायुज्यसलोकतादि दर्शयति ॥ १५० ॥
नन्विह सातिशयत्वादैश्वर्यस्यान्तवत्त्वमपि च स्यात् ।
एवं चेदावृत्तिस्तेषां पुनरत्र दुर्निवारैव ॥ १५१ ॥
इत्याक्षेपं सकलं निरस्य शास्त्रं हि परिसमापयितुम् ।
सूत्रं पठति तदेतद्भगवाञ्श्रीबादरायणाचार्यः ॥ १५२ ॥

अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ २२ ॥

सर्वज्ञत्वादस्य च भगवत्त्वं युक्तमेव सूत्रकृतः ।
सूत्रद्वारा शिष्याणामाचारे प्रवर्तनादस्य ॥ १५३ ॥
आचार्यत्वं युक्तं तथैव किल बादरायणेतिपदात् ।
पुनरस्य बदरिकाश्रमवासोक्त्या तत्र समवतीर्णस्य ॥ १५४ ॥
नारायणस्य परमेश्वरलोकगुरोः प्रसादसूचनतः ।
शास्त्रस्य तत्प्रणीतस्य च सूचितमिह किलानवद्यत्वम् ॥ १५५ ॥

नाडीरश्म्यन्वितमिह पन्थानं ह्यर्चिरादिपर्वाणम् ।
अनुचिन्त्य देवयान व्रजन्ति ये तेन देवयानेन ॥ १५६ ॥
शास्त्रोपदिष्टनानाविशेषणं ब्रह्मलोकसंज्ञमिमम् ।
यश्च तृतीयस्यां दिवि पृथिवीलोकात्प्रदर्शितः श्रुत्या ॥ १५७ ॥
तस्मिल्लोके र इति ण्यश्चेत्यप्याख्ययाऽतिविख्यातौ ।
अर्णवतुल्यौ भवतः सुधाह्रदौ द्वौ तथैव चान्यदपि ॥ १५८ ॥
ऐरंमदीयमित्यपि सरश्च तन्मदकरं तथाऽन्नमयम् ।
किंचाश्वत्थस्तत्रामृतवर्षी मुक्तलोकसंसेव्यः ॥ १५९ ॥
तत्राजितात्मभिः खल्वप्राप्या ब्रह्मणः पुरी काऽपि ।
प्रभुणैव तेन विरचितमपि वेश्म हिरण्मयं च तत्रास्ति ॥ १६० ॥
मन्त्रार्थवादवाक्यैः पुराणवाक्यैः प्रपञ्चितो बहुधा ।
तमिमं लोकं प्राप्य च तत्र स्वच्छन्दभोगकृतकृत्याः ॥ १६१ ॥
ते चन्द्रमण्डलादिव नाऽऽवर्तन्ते पुनः कदाचिदपि ।
यस्मात्तयोर्ध्वमायन्नित्यादिश्रुतय उपदिशन्त्येवम् ॥ १६२ ॥
ये च शताधिकनाड्या व्रजन्ति यान्त्येव तेऽमृतत्वमिति ।
श्रुतिरन्या तेषामिह न हि पुनरावृत्तिरिति किल ब्रूते ॥ १६३ ॥
एतेन देवयानेन पथा ये ब्रह्मलोकमुपयाताः ।
मानवमावर्तं ते नाऽऽवर्तन्त इति दर्शयत्यन्या ॥ १६४ ॥
न च पुनरावर्तत इत्यन्याऽपि ब्रह्मलोकसंस्थानाम् ।
पुनरावृत्तिविवर्जितमेव पदं शाश्वतं प्रदर्शयति ॥ १६५ ॥
अन्तवदेव हि यद्यप्यैश्वर्यमिदं प्रतीयतेऽथापि ।
भवति यथाऽनावृत्तिस्तथोपवर्णितमिदं हि पूर्वत्र ॥ १६६ ॥
कार्यात्यय इति सूत्रे कार्यपदस्य च लये समुत्पन्ने ।
उत्पन्नतत्त्वसाक्षात्कारास्तत्रैव तदधिनाथेन ॥ १६७ ॥
सह कैवल्यं प्रभुणा हिरण्यगर्भेण ते प्रयान्तीति ।
साधनवीर्याद्ये पुनरत्रैवोत्पन्नतत्त्वविज्ञानाः ॥ १६८ ॥
विध्वस्तानाद्यज्ञानावरणा नित्यसिद्धपरिनिष्ठाः ।
तेषां चानावृत्तिः सिद्धैवाऽऽवृत्तिकारणाभावात् ॥ १६९ ॥
सविशेषब्रह्मपराणामपि विदुषां तदाश्रयेणैव ।
सेयमनावृत्तिः स्यान्न चान्यथा भवति तत्क्रतुन्यायात् ॥ १७० ॥
पञ्चाग्न्युपासकानां यद्यपि सविशेषनिष्ठता नास्ति ।
श्रुत्या चानावृत्तिर्ब्रह्मप्राप्तिश्च दर्शिता तेषाम् ॥ १७१ ॥

सत्यं तथाऽपि तत्र च तेषामिह न पुनरिति समाम्नातम् ।
तेन त्वस्मिन्कल्पे तेषामावृत्त्यभावबोधेन ॥ १७२ ॥
कल्पान्तरे हि तेषामावृत्तिरियं पुनर्भवत्येव ।
दहराद्युपासकानामेवानावृत्तिपरमिदं सूत्रम् ॥ १७३ ॥
सूत्रपदाभ्यासः खल्वध्यायसमाप्तिमेव सूचयति ।
शास्त्रस्य परिसमाप्तिं सूत्राभ्यासोऽयमत्र सूचयति ॥ १७४ ॥
शारीरकमीमांसा मुनिना व्यासेन विरचिता सेयम् ।
चतुरध्यायी तस्यां चतुर्थसंज्ञश्च योऽयमध्यायः ॥ १७५ ॥
तत्र चतुर्थे पादे सूत्रार्थो यश्च भाष्यकारोक्तः ।
आर्यावृत्तैरमलैः प्रकाशितो भवतु सोऽयमनवद्यः ॥ १७६ ॥
भाष्यार्थरत्नमाला वैयासिकसूत्रजालसंग्रथिता ।
भगवति करुणासिन्धौ समर्पिता जयतु जगति निरवद्या ॥१७७॥
स जयति मुनिकुलमान्यो भगवाञ्श्रीबादरायणाचार्यः ।
यत्सूत्रालम्बनतो लोकः संसारसागरं तरति ॥ १७८ ॥
श्रीबादरायणोदितसूत्रार्थं भाष्यरत्नदीपेन ।
प्रकटी चकार योऽसौ स हि भगवाञ्जयति शंकराचार्यः ॥ १७९॥
भगवत्पादीयमिदं भाष्यं येनानभिज्ञदुर्बोधम् ।
बोधाय तेन तेषां रचिता भाष्यार्थरत्नमालेयम् ॥ १८० ॥
एतां विलोक्य सुधियस्तुष्यन्तु हसन्तु वाऽत्र न विषादः ।
सर्वज्ञविरचितेष्वपि महानिबन्धेषु येन तौ दृष्टौ ॥ १८१ ॥
तुष्यन्तु वा न वाऽन्ये भक्त्या परया समर्पितामेताम् ।
मालां विलोक्य कृपया तुष्यति भक्तार्तिभञ्जनो भगवान् ॥१८२॥
भाष्योपदिष्टमर्थं संगृह्य कृताऽपि भवति रम्येयम् ।
उपवनतरुसमुपचितैर्ग्रथिता कुसुमैः प्रसूनमालेव ॥ १८३ ॥
सेयं हि रत्नमाला सुब्रह्मण्येन विरचिता कृच्छ्रात् ।
नायकमणिसहकाराद्दिशि दिशि विशदं प्रकाशमुपयातु ॥१८४॥

इति श्रीभाष्यार्थरत्नमालायां चतुर्थाध्यायस्य
चतुर्थपादः समाप्तः ॥ ४ ॥

इति चतुर्थोऽध्यायः समाप्तः ।

---

समाप्तेयं भाष्यार्थरत्नमाला ।